संयोगपरे सर्व्वत्र पूर्व्वस्याचो लोपः ॥ क्वचिन्नित्यं क्वचिदन्यदेव बहुलग्रहणात्, तेनान्यदपि लाक्षणिककार्य्यं भवति ॥*

उदुम्बरे दोर्लोपः ॥ २

उदुम्बरशब्दे दु इत्येतस्य लोपो भवति ॥ उंबरम् ॥

कालायसे यस्य वा ॥ ३

कालायसशब्दे यस्य वा लोपो भवति ॥ कालासं, कालाअसम् ॥

भाजने जस्य ॥ ४

भाजनशब्दे जकारस्य लोपो वा भवति ॥ भाणं, भाअणं ॥

यावदादिषु वस्य ॥ ५

† यावदित्येवमादिषु वकारस्य वा लोपो भवति ॥ जा, जाव; ता ताव ॥ पाराओ, पारावओ; अणुत्तंत, अणुवत्तंत; जीअं जीविअं; एअं एव्वं, एअ एव्व. कुअलअं कुवलअं यावत्, तावत्, पारावत्, अनुवर्त्तमान, जीवित, एवं, एव, कुवलय ॥

अन्त्यहलः ॥ ६

वेति निवृत्तम् ॥ शब्दानां योऽन्त्यो हल् तस्य लोपो भवति ॥ जसो, पअम, सरो, कम्मो, जाव, ताव; यशस्, नभस्, सरस्, कर्म्मन्, यावत्, तावत् ॥

स्त्रियामात् ॥ ७

स्त्रियां वर्त्तमानस्यान्त्यहल आकारो भवति सरिआ, पडिवआ वाआ सरित् प्रतिपत् वाच ॥*

रोरा ॥ ८

स्त्रियामन्त्यस्य हलो रेफस्य रा इत्ययमादेशो भवति । पुरा, गिरा; पुर्, गिर् ॥

---

* यथि संकंती णिकंती अभी अहिक्क अभिक्रान्त कुसुमथाम एव कुसुमसमय मर्तिति । संक्रान्त निष्क्रान्त । आर्षं ।

† विरलस्तावन्नाटकादिषु वकारलोपः प्रयोगः । वकारप्रयोगस्तु बहुधा । तावच्च सम्भावेमि । एत्यदाव मादाव । एवं वादिनी । एव राअव पुरस्सरी । इत्यादि ।

* वाआ सेपेग अत्रा बोध्याः ।

न विद्युति ॥ ९

विद्युच्छब्दे आकारो न भवति, विज्जू ॥

शरदो दः ॥ १०

शरच्छब्दस्यान्त्यहलो दो भवति सरदो ॥

दिक् प्रावृषोः सः ॥ ११

दिक् शब्दस्यान्त्यहलः प्रावृट शब्दस्यापि सकारो भवति ॥ दिसा पाउसो ॥

मो बिन्दुः ॥ १२

अन्त्यस्य हलो मकारस्य बिन्दुर्भवति रच्छं, अच्छं, भद्दं, अग्गिं, दट्ठं, [illegible]ं, धणं, अच्छम, वक्षम, भद्रम, [illegible]ग्निम, दृष्टम (वा दृष्टम) वर्णम, धनम ॥

अचि मश्च ॥ १३

अचि परतो मो भवति वा ॥ केचित्तु मकारस्य मकारो भवति चकाराद्बिन्दुरपि ॥ फलमवहरइ, फलं, अवहरइ, फलमवहरति ॥

नञोर्हलि ॥ १४

नकारञकारयोर्हलि परतो बिन्दुर्भवति मकारः वा ॥ नस्य—अंसो अम्सो, कंसो कम्सो ॥ ञस्य—चंचणीअं चञ्चणीअं ॥ बिंभो, विम्भो ॥ अन्स कन्स, चञ्चनीयम विन्ध्यः इतिसं ॥ कचित् अंधो अम्धो, कंधो, कमधो इत्यादि ॥

वक्रादिषु ॥ १५

वक्रादिषु शब्देषु बिन्दुरागमो भवति ॥ वंकं, तंसं, छंसो, अंसु, मंसू, गुंठो, अंसं, मणंसिणी, दंसणं, कंसो, वंसो, पडिंसुदं, अंसो, अहिमुंको वक्र त्र्यस्र ऋक्ष अश्रु श्मश्रु, ऋष्टिमत्त मनस्विनी दर्शन स्पर्श वर्ण प्रतिश्रुत अश्व अभिमुक्त इत्यादयः ॥

मांसादिषु वा ॥ १६

मांसादिषु शब्देषु वा बिन्दुः प्रयोक्तव्यः ॥ मंसं मासं, कहं कह, णणं णणं, तहिं तहि, असुं असु, मांसं, कथं, ननं, तहिं असु, तद्यमपठितो मांसादिगणः अत्र

क्वचिद्वृत्तभङ्गभयात् त्यज्यमानः क्रियमाणश्च विन्दुर्भवति स मांसादिषु द्रष्टव्यः ॥

ययि तद्वर्गान्तः ॥ १७

ययिपरतो विन्दुस्तद्वर्गान्तो वा भवति ॥ सङ्का सङ्खो अङ्को अङ्कं सञ्चरइ सण्ठो सन्तरइ सम्पत्ती । ययीति किम् ॥ अंसो वाधिकारात् पंकं विंदु संका संखो । शंका शङ्ख अङ्क सञ्चरति षण्ढ सन्तरति सम्पत्ति ॥

नमान्तप्राहृट्शरदः पुंसि ॥ १८

नकारान्ताः मकारान्ताश्च प्राहृट् शरदौ च पुंसि प्रयोक्तव्याः ॥ कम्मो जम्मो चम्मो, सान्ताः —जसो तमो सरो पाउसो सरदो॰ कर्म्म जन्म चर्म्म यशस् तमस् सरस् प्राहृष् शरत् ॥

न शिरोनभसी ॥ १९

शिरस् नभस् इत्येतौ न पुंसि प्रयोक्तव्यौ ॥ सिरम् णहम् ॥

पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २०

एते स्त्रियां वा प्रयोक्तव्याः । पुट्ठी पुट्ठं, अच्छी अच्छं, पण्हा पण्हो पृष्ठ अक्षि प्रश्नः ॥*

ओदवापयोः ॥ २१

अव अप इत्येतयोरुपसर्गयोर्वा ओत्वं भवति ॥ ओहासो अवहासं ओसारिअं अवसारिअं अवहास अपसारित ॥ †

तलत्वयोर्दात्तणौ ॥ २२

तल त्व इत्येतयोः प्रत्यययोः यथा सङ्ख्यं दा त्तण इत्येतावादेशौ स्तः । पीणदा मूढदा॰ पीणत्तणं मूढत्तणं । पीनता मूढता, पीनत्वं मूढत्वं ॥

क्त्व ऊणः ॥ २३

क्त्वाप्रत्ययस्य ऊण इत्ययमादेशो भवति ॥ घेत्तूण सोऊण काऊण दाऊण ॥ गृहीत्वा श्रुत्वा कृत्वा दत्वा ॥

---

* अन्य ग्रन्थे पण्हो प्राकृतो भवति [illegible]

† ओसारिअ पाठस्तु [illegible]

[illegible] निरवलम्बं ।

लण्डूरः शीले ॥ २४

शीले वर्त्तमान् प्रत्ययो विहितस्तस्य डूर इत्ययमादेशो भवति, भ्रमण शीलो भसिरो, हमनशीलो हसिरो॥



॥ प्राचीनभूगोलवर्णनम् ॥

महाभारतसम्मत-

तीर्थनामकीर्त्तनम्।

"पुलस्त्य उवाच।

तदेकाग्रमनाः पुत्र !

शृणु तीर्थेषु यत् फलम् ॥

यस्य हस्तौ च पादौ च

मनश्चैव सुसंयतम्।

विद्या तपश्च कीर्त्तिश्च

स तीर्थफलमश्नुते ॥

प्रतिग्रहादपावृत्तः

सन्तुष्टो येन केनचित्।

अहङ्कारनिवृत्तश्च

सतीर्थफलमश्नुते ॥

अकल्कको निरारम्भो

लघ्वाहारो जितेन्द्रियः।

विमुक्तः सर्वपापेभ्यः

सतीर्थफलमश्नुते।

ऋषिभिः क्रतवः प्रोक्ता

वेदेष्वपि यथाक्रमम्।

फलञ्चैव यथा तत्त्वं

प्रेत्य चेह च सर्व्वशः॥

न ते शक्या दरिद्रेण

यज्ञाः प्राप्तुं महीपते !

बहूपकरणा यज्ञाः

नानासम्भारविस्तराः॥

प्राप्यन्ते पार्थिवैरेतैः

समृद्धैर्वा नरैः क्वचित्।

नार्थन्यूनैर्नावगणै-

रेकात्मभिरसाधनैः॥

यो दरिद्रैरपि विधिः

शक्यः प्राप्तुं नरेश्वर।

तुल्याश्वमेधफलैः पुण्यै-
स्तन्निबोधयुधाम्बर ॥
नृलोके देवदेवस्य
तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं तीर्थमासाद्य
देवदेवसमो भवेत् ॥
दशकोटिसहस्राणि
तीर्थानां वै महामते !
सान्निध्यं पुष्करे येषां
त्रिसन्ध्यं कुरुनन्दन ! ॥
आदित्या वसवो रुद्राः
साध्याश्च समरुद्गणाः ।
गन्धर्व्वाप्सरसश्चैव
नित्यं सन्निहिता विभो ! ॥
अप्येकं भोजयेद्विप्रं
पुष्करारण्यमाश्रितः ।
तेनासौ कर्म्मणा भीष्म !
प्रेत्य चेह च मोदते ॥
कार्त्तिकीन्तु विशेषेण
योऽभिगच्छति पुष्करम् ।
प्राप्नुयात् स नरो लोकान्
ब्राह्मणः सदनेऽक्षयान् ॥
यथासुराणां सर्व्वेषा-
मादिस्तु मधुसूदनः ।
तथैव पुष्करं राजन्
तीर्थानामादिरुच्यते ॥
उष्ट्वा द्वादश वर्षाणि
पुष्करे नियतः शुचिः ।
क्रतून् सर्व्वानवाप्नोति
ब्रह्मलोके स गच्छति ॥
यस्तु वर्षशतं पूर्णं
अग्निहोत्रमुपासते ।
कार्त्तिकीं वा वसेदेकां
पुष्करे सममेव तत् ॥
दुष्करं पुष्करं गन्तुं,
दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं
वस्तुञ्चैव सुदुष्करम् ॥
उष्ट्वा द्वादशरात्रन्तु
नियतो नियताशनः ।

प्रदक्षिणमुपावृत्तो
जम्बुमार्गं समाविशेत् ॥
जम्बुमार्गं समाविश्य
देवर्षिपितृसेवितम् ।
अश्वमेध मवाप्नोति
सर्व्वकामसमन्वितः ॥
तत्रोष्य रजनीः पञ्च
पूतात्मा जायते नरः ।
न दुर्गति मवाप्नोति
सिद्धिं प्राप्नोति चोत्तमाम् ॥
जम्बुमार्गादुपावृत्तो
गच्छेत्तण्डुलिकाश्रमम् ।
न दुर्गति मवाप्नोति
ब्रह्मलोकञ्च गच्छति ॥
अगस्त्यं सर आसाद्य
पितृदेवार्च्चने रतः ।
त्रिरात्रोपोषितो राजन् !
अग्निष्टोमफलं लभेत् ॥
कण्वाश्रमं ततो गच्छेत्
श्रीजुष्टं लोकपूजितम् ।

धर्म्मारण्यं हि तं पुण्य
माद्यञ्च भरतर्षभ ॥
प्रदक्षिणं ततः कृत्वा
ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य
फलंप्राप्नोति तत्र वै ॥
महाकालं ततो गच्छे
न्नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य
हयमेधफलं लभेत् ॥
ततो गच्छेत धर्म्मज्ञः
स्थानं पुण्य मुमापतेः ।
नाम्ना भद्रवटं नाम
त्रिषु लोकेषु विश्रुतम् ॥
तत्राभिगम्य चेशान
गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च
गाणपत्यञ्च विन्दति ॥
नर्म्मदान्तु समासाद्य
नदीं त्रैलोक्य विश्रुताम् ॥

तर्पयन्ति पितॄन् देवा-
नग्निष्टोमफलं लभेत् ।
दक्षिणं सिन्धुमासाद्य
ब्रह्मचारी जितेन्द्रियः ॥
अग्निष्टोममवाप्नोति
विमानञ्चाधिरोहति ।
चर्म्मण्वतीं समासाद्य
नियतो नियताशनः ।
रन्तिदेवाभ्यनुज्ञातो
अग्निष्टोमफलं लभेत्
ततो गच्छेत धर्मज्ञ
हिमवत् सुतमर्ब्बुदम् ।
पृथिव्यां यत्र वै छिद्रं
पूर्व्वमासीद्युधिष्ठिर ॥
तत्राश्रमो वशिष्ठस्य
त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां
गोसहस्र फलं लभेत् ॥
पिङ्गातीर्थं उपस्पृश्य
ब्रह्मचारी नराधिपः ।

कपिलानां नरव्याघ्र
शतस्य फलमश्नुते ॥
ततो गच्छेत राजेन्द्र
प्रभासं तीर्थमुत्तमम् ।
तत्र सन्निहितो नित्यं
स्वयमेव हुताशनः ॥
ततो गत्वा सरस्वत्याः
सागरस्य च सङ्गमम् ।
गोसहस्र फलं प्राप्य
स्वर्गलोके महीयते ॥
वरदानं ततो गच्छेत्
तीर्थं भरत सत्तम् ।
विष्णोर्दुर्व्वाससा यत्र
वरो दत्तो युधिष्ठिर ।
वरदाने नरः स्नात्वा
गोसहस्र फलं लभेत् ॥
ततो द्वारवतीं गच्छेत्
नियतो नियताशनः ।
पिण्डारके नरः स्नात्वा
लभेद्बहुसुवर्णकम् ॥

तस्मिंस्तीर्थे महाभाग
पन्नगनगान्विता: ।
अद्यापि मुद्रा दृश्यन्ते
तदद्भुतमरिन्दम ॥
सागरस्य च सिन्धोश्च
सङ्गमं प्राप्य भारत ।
तीर्थे सलिलराजस्य
स्नात्वा प्रयतमानस: ।
तर्पयित्वा पितॄन् देवा-
नृषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं
दीप्यमान: स्वतेजसा ॥
शङ्कुकर्णेश्वरं देव-
मर्च्चयित्वा युधिष्ठिर ।
अश्वमेधाद्दशगुणं
प्रवदन्ति मनीषिण: ॥
प्रदक्षिणमुपावृत्य
गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ
त्रिषु लोकेषु विश्रुतम् ॥

द्रुमीति नाम्ना विख्यातं
सर्व्वपापप्रमोचनम् ।
यत्र ब्रह्मादयो देवा
उपासन्ते महेश्वरम् ॥
गत्वा यत्र महाप्राज्ञ
विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन्
हत्वा दैतेयदानवान् ॥
ततो गच्छेत धर्म्मज्ञ
वसुधारां सुसंस्तुताम् ।
गमनादेव तस्यां हि
हयमेधमवाप्नुयात् ॥
तीर्थं चात्र नर: पुण्यं
वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च
वसूनां सम्मतो भवेत् ॥
भद्रतुङ्गं समासाद्य
शुचि: शीलसमन्वित: ।
ब्रह्मलोकमवाप्नोति
गतिञ्च परमां व्रजेत् ॥

कुमारिकाणां शक्रस्य
तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरश्रेष्ठ
शक्रलोकमवाप्नुयात् ॥
रेणुकायाश्च तत्रैव
तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा भवेद्विप्रो
निर्म्मलश्चन्द्रमा यथा ॥
अथ पञ्चनदं गत्वा
नियतो नियताशनः ।
पञ्चयज्ञानवाप्नोति
क्रमशो येन कीर्त्तिताः ॥
ततो गच्छेत राजेन्द्र
भीमायाः स्थानमुत्तमम् ।
तत्र स्नात्वा तु योन्यां वै
नरो भरतसत्तम ।
देव्याः पुत्रो भवेद्राजन्
रत्नकुण्डलविग्रहः ।
गवां शतसहस्रस्य
फलं प्राप्नोति मानवः ॥

श्रीकण्ठन्तु समासाद्य
त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य
गो सहस्रफलं लभेत् ॥
ततो गच्छेत धर्म्मज्ञ
त्रिकलं तीर्थमुत्तमम् ।
यत्रापि तत्र दृश्यन्ते
बाह्याः सौवर्णराजताः ॥
तत्र स्नात्वा नरः शिवं
शाश्वतं लोकमाप्नुयात् ।
सर्व्वपापविशुद्धात्मा
गच्छेत परमां गतिम् ॥
वितस्ताञ्च समासाद्य
सन्तर्प्य पितृदेवताः ।
नरः फलमवाप्नोति
वाजपेयस्य भारत ॥
काश्मीरेष्वेव नागस्य
भवनं तक्षकस्य च ।
वितस्ताख्यमिति ख्यातं
सर्व्वपापप्रमोचनम् ॥

तत्र स्नात्वा नरो नूनं
वाजपेयमवाप्नुयात् ।
सर्व्वपापविशुद्धात्मा
गच्छेच्च परमां गतिम् ॥
ततो गच्छेत वडवां
त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायान्तु सन्ध्याया
मुपस्पृश्य यथाविधि ।
चरुं सप्तार्च्चिषे राजन्
यथाशक्ति निवेदयेत् ॥
ततो निवृत्तो राजेन्द्र
रौद्रं पदमथाविशेत् ।
अभिगम्य महादेव
मश्वमेधफलं लभेत् ॥
मणिमन्तं समासाद्य
ब्रह्मचारी समाहितः ।
एकरात्रोषितो राज
न्नग्निष्टोमफलं लभेत् ॥
अथ गच्छेत राजेन्द्र
देविकां लोकविश्रुताम् ।

प्रसूतिर्यत्र विप्राणां
श्रूयते भरतर्षभ ॥
कामाख्यं तत्र रुद्रस्य
तीर्थं देवर्षिसेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं
सिद्धिं प्राप्नोति मानवः ॥
अर्द्धयोजनविस्तारां
पञ्चयोजनमायताम् ।
एतावद्देविकामाहुः
पुण्यां देवर्षिसेविताम् ॥
ततो गच्छेत राजेन्द्र
दीर्घसत्रं यथाक्रमम् ।
तत्र ब्रह्मादयो देवाः
सिद्धाश्च परमर्षयः ।
दीर्घसत्रमुपासन्ते
दीक्षिता नियतव्रताः ।
ततो विनशनं गच्छे
न्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्र
मेरुपृष्ठे सरस्वती ।

चमसे च शिवोद्भेदे
नागोद्भेदे च दृश्यते ।
स्नात्वा तु चमसोद्भेदे
अग्निष्टोमफलं लभेत् ॥
शिवोद्भेदे नरः स्नात्वा
गोसहस्रफलं लभेत् ।
नागोद्भेदे नरः स्नात्वा
नागलोकमवाप्नुयात् ॥
शशयानञ्च राजेन्द्र
तीर्थमासाद्य दुर्लभम् ।
शशरूपप्रतिच्छन्नाः
पुष्करा यत्र भारत ॥
सरस्वत्यां महाभाग
अनुसंवत्सरं हि ते
स्नायन्ते भरतश्रेष्ठ
वृत्तां वै कार्त्तिकीं सदा ॥
कुमारकोटीमासाद्य
नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्व्वीत
पितृदेवार्च्चने रतः ।
ततो गच्छेत धर्म्मज्ञ
रुद्रकोटीं समाहितः ॥
पुरा यत्र महाराज
मुनिकोटिः समागताः ।
हर्षेण महताविष्टा
रुद्रदर्शनकाङ्क्षया ॥
अहंपूर्व्वमहंपूर्व्वं
द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्
नृषयः किल भारत ॥
ततो योगेश्वरेणापि
योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थं
ऋषीणां भावितात्मनाम् ॥
सृष्टा कोटीति रुद्राणा
मृषीणामग्रतः स्थिता ।
तत्र स्नात्वा नरव्याघ्र
रुद्रकोट्यां नरः शुचिः ॥
अश्वमेधमवाप्नोति
कुलञ्चैव समुद्धरेत् ।

ततो गच्छेत राजेन्द्र
सङ्गमं लोकविश्रुतम्।
सरस्वत्या महापुण्यं
केशवं समुपासते॥
यत्र ब्रह्मादयो देवा
ऋषयश्च तपोधनाः।
अभिगच्छन्ति राजेन्द्र
चैत्रशुक्लाचतुर्द्दशीम॥
ऋषीणां यत्र सत्राणि
समाप्तानि नराधिप।
सत्रावसानमासाद्य
गोसहस्रफलं लभेत॥
ततो गच्छेत राजेन्द्र
कुरुक्षेत्रमभिष्टुतम्।
पापेभ्यो यत्र मुच्यन्ते
दर्शनात सर्व्वजन्तवः॥
कुरुक्षेत्रं गमिष्यामि
कुरुक्षेत्रे वसाम्यहम्।
यएवं सततं ब्रूयात
सोऽपि पापैः प्रमुच्यते॥

पांशवोऽपि कुरुक्षेत्रे
वायुना समुदीरिताः।
अपि दुष्कृतकर्म्माणां
नयन्ति परमां गतिम॥
दक्षिणेन सरस्वत्या
दृषद्वत्युत्तरेण च।
ये वसन्ति कुरुक्षेत्रे
ते वसन्ति त्रिपिष्टपे॥
तत्र मासं वसेद्वीर
सरस्वत्यां युधिष्ठिर।
यत्र ब्रह्मादयो देवा
ऋषयः सिद्धचारणाः।
गन्धर्व्वाप्सरसो यक्षाः
पन्नगाश्च महीपते।
ब्रह्मक्षेत्रं महापुण्य
अभिगच्छन्ति भारत।
ततो मङ्कणकं नाम
द्वारपालं महाबलम्।
यक्षं समभिवाद्यैव
गोसहस्रफलं लभेत।

ततो गच्छेत धर्मज्ञ
विष्णोः स्थानमनुत्तमं ।
सततं नाम राजेन्द्र
यत्र सन्निहितो हरिः ॥

ततः पारिप्लवं गच्छेत्
तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां
फलं प्राप्नोति भारत ॥"



॥ लण्डनदेशजनाविकानां सङ्गीतम् ॥

( १ )

प्रायासएषोऽम्बुनिधे ! कथं ते
तरङ्गमालां तरलीकरोषि ।
ज्ञातं न किं प्रत्यह मस्मदीया
स्त्वां लीलया गोष्पदवत् तरन्ति ॥

( २ )

न दृश्यते किं बलमस्मदीयं
वीर्य्यं विचित्रं त्वयि सज्जनोति ।
समुद्रयुद्धे विजितं समस्तं
नित्यं जगन्नो नमतीह भीतम् ॥

ततो गच्छेत धर्मज्ञ
विष्णोः स्थानमनुत्तमं ।
सततं नाम राजेन्द्र
यत्र सन्निहितो हरिः ॥

ततः पारिप्लवं गच्छेत्
तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां
फलं प्राप्नोति भारत ॥"



॥ लण्डनदेशजनाधिकानां सङ्गीतम् ॥

( १ )

प्रायासपयोऽम्बुनिधे ! कथं ते
तरङ्गमालां तरलीकरोषि ।
ज्ञातं न किं प्रत्यह मस्मदीया
स्त्वां लीलया गोष्पदवत् तरन्ति ॥

( २ )

न दृश्यते किं बलमस्मदीयं
वीर्य्यं विचित्रं त्वयि सन्ननोति ।
समुद्रयुद्धे विजितं समस्तं
नित्यं जगन्नो नमतीह भीतम् ॥

( ३ )

श्रुतं न किंवा ब्रिटिशास्मदीयै
रत्नप्रसूरितभूरिदानीम्।
हिमालयाद्याः गिरयः सगर्व्वं
प्रतिक्षणमस्याश्चरणं वहन्ति ॥

( ४ )

कश्चिन्नृसिंहाङ्कितबाहुवीर्य्यं
श्चेदस्मदीयो ननु तत्र दृष्टः।
ते भारतीयाः शतशोऽतिभीताः
पलायमाना दिशमाश्रयन्ति ॥

( ५ )

विपक्षवक्षःस्थलरक्तमुग्रं
पीतोऽस्मदीयं न कुतो बिभेति।
विनासिभङ्गीं तरलायताक्षा
रक्तं मुखं वा हरिणाङ्कजाता ॥

( ६ )

कलास्वनन्तासु विचक्षणानां
समस्तविद्याविदुषां न नोऽस्ति।
सुदुष्करं कार्य्यमिहाद्य किञ्चि
स्वनार्य्यदक्षिन्वरतान्न काले ॥

( ७ )

अभोज्यमन्नं न च जातिभेदो
न कोऽपि देशो गमने निषिद्धः ।
ईशाश्रयं नोऽस्ति पवित्ररूपं
प्रलोपयेत् कः शिवमस्मदीयम् ॥

( ८ )

जयतु सा विजयिनी
नृपसुता* हितकरी ।
अवतु तामनुदिनं
स परमेश्वर इह ॥

॥ इति श्रीहृषीकेश-कृतं नाविक-सङ्कीर्तनम् ॥

* अस्माकं राज्ञी लण्डनेश्वर दुहिता ।




॥ मूल्यादीनां नियमः ॥

वार्षिक मूल्यं प्रथमदेयम्— — — — — २।/०

" पश्चाद्देयम्— — — — — ३/०

प्रत्येकखण्डं ।०) परिमित-मूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येक पंक्तिः /० परिमित-मूल्येन मुद्रिता भविष्यति ॥

॥ कलिकाता सत्ययन्त्रे श्रीमहेन्द्रनाथसरकारेण मुद्रितः । काशीरस्थ श्रीमतिलालघोषेण प्रकाशितः ॥

भवति। पुप्फं, सप्फं, णिप्फाओ। संस्कृतरूपाणि क्रमेण यथा— पुष्पं, शष्पं, निष्पाव।

स्पस्य सर्वत्र स्थितस्य । ३६ ।

स्प इत्येतस्य सर्वत्र स्थितस्य फ इत्ययमादेशो भवति । फंसो, फन्दणं । स्पर्शः, स्पन्दनं ।

सिच । ३७ ।

स्पस्य क्वचित् सि इत्ययमादेशो भवति। पाडिसिद्धी। प्रतिस्पर्द्धिन्।

बाष्पेऽश्रुणि हः । ३८

बाष्पशब्दे ष्प इत्येतस्य हकारो भवति अश्रुणि वाच्ये। बाहो, अश्रुणि किं वप्फो। बाष्प उष्मन्।

कार्षापणे । ३९ ।

कार्षापणशब्दे युक्तस्य हकारो भवति । काहावणो । कहावणो— इत्यपि दृश्यते ।

श्चत्सप्सां छः । ४० ।

एतेषां छकारो भवति । श्च ; पच्छिमं, अच्छेरं । त्स ; वच्छो, वच्छरो, प्स ; लिच्छा, जुगुच्छा । संस्कृतरूपाणि यथा— पश्चिम, आश्चर्य, वत्स, वत्सर, लिप्सा, जुगुप्सा; क्वचित् अच्छरा (अप्सरा) इत्यादि पाठो दृश्यते ।

वृश्चिके ञ्चुः । ४१ ।

वृश्चिकशब्दे श्चकारस्य ञ्चु इत्ययमादेशो भवति । विञ्चुओ ।

नोत्सुकोत्सवयोः । ४२

उत्सुक उत्सव इत्येतयोः त्स इत्येतस्य छकारो न भवति । श्चत्सप्सां छ इति प्राप्ते प्रतिषिध्यते ॥ उस्सुओ, उस्सवो; क्वचित् उत्सुक स्थाने ओसुओ, ऊसुओ । तथा उत्सव स्थाने उस्सओ, ऊसवो, ओसवो, उच्छओ । इत्यादि रूपाणि दृश्यन्ते ।

न्मो म्मः ॥ ४३

न्म इत्येतस्य म्म इत्ययमादेशो भवति, अधो लोपे प्राप्ते । जम्मो, मम्महो; जन्म मन्मथ ।

ज्ञपञ्चाशत्पञ्चदशेषु णः । ४४

ञ्च-ज्ञ इत्येतयोः पञ्चाशत्-पञ्च-

देव्वं दइवं । धम्मिल्लं धम्मिलं । तेल्लोक्कं तेलोक्कं । चिह्नं चिण्हं । णिहिओ । तुण्हिक्को तुण्हिक्को । कण्णि-आरो कणिआरो । दिग्घं दीहं । रत्ती राई । दुक्खिओ । दुहिओ । अक्खो धम्मो । इस्सरो । ईसरो । विस्सासो । वीसासो । णिस्सासो णीसासो । रस्सी रसी । मित्तो मित्रो । पुस्सो पुसो । एतेषां क्रमेण संस्कृतरूपाणि—यथा । एक । नख । दैव । धम्मिल । त्रैलोक्य । निह्नुत । तूष्णीक । कर्णिकार । दीर्घं । रात्रि । दुःखित । धर्म । ईश्वर । विश्वास । निश्वास । रश्मि । मित्र । पुष्य ॥

उभयत्र विभाषेयं सेवादीनाम प्राप्ते । दीर्घादीनाञ्च प्राप्ते ॥

विप्रकर्षः ॥ ५८ ॥

अधिकारोऽयम् । आपरिच्छेद-समाप्तेः संयुक्तस्य विप्रकर्षो भवति ॥

क्लिष्ट श्लिष्ट रत्न क्रिया शार्ङ्गेषु तत्स्वरवत् पूर्वस्य ॥ ६०

क्लिष्टादिषु युक्तस्य विप्रकर्षो भवति । विप्रकृष्टस्य च यः पूर्वो वर्णो निरर्थकस्तस्य तत्स्वरता भवति ॥ तेनैव पूर्वेण स्वरेण पूर्वो वर्णः स्वार्थो भवति इत्यर्थः । किलिट्ठं सिलिट्ठं रअणं किरिआ सारंगो । अत्र संस्कृतरूपाणि तेषां सन्तीति न दर्शितानि ॥

कृष्णे वा ॥ ६१ ॥

कृष्ण शब्दे युक्तस्य वा विप्रकर्षो भवति । पूर्वस्य च तत्स्वरता ॥ व्यवस्थितविभाषेयम् । तत्र वर्णे नित्यं विप्रकर्षः । विष्णौ तु न भवत्येव । कसणो कण्हो ॥

इः श्री ह्री क्रीत क्लान्त क्लेश म्लान स्वप्न स्पर्श हर्षार्ह गर्हेषु ॥ ६२

एषु युक्तस्य विप्रकर्षो भवति ॥ पूर्वस्य इकारः तत्स्वरता च भवति । सिरी । हिरी । किरीतो । किलन्तो । किलेसो । मिलाणं ।

सिविणो । फरिसो । हरिसो । अरिहो । गरिहो ॥ एतेषां क्रमेण संस्कृतरूपाणि यथा—श्री । ह्री । क्रीत । क्लान्त । क्लेश । म्लान । स्वप्न । स्पर्श । हर्ष । अर्ह । गर्ह ॥

ष्मः क्ष्मा श्लाघयाः ॥ ६२ ॥

क्ष्मा श्लाघा इत्येतयो युक्तस्य विप्रकर्षो भवति पूर्वस्य अकारान्तता स्वरता च भवति । खमा सलाहा । स्नेह शब्दे युक्तस्य विप्रकर्षो वा भवति ॥ पूर्वस्य च अकारान्तता स्वरता च भवति ॥ सणेहो । णेहो ।

ऊः पद्मतन्वी समेषु ॥ ४८ ॥

पद्म शब्दे तन्वी इत्येवं समेषु च युक्तस्य विप्रकर्षो भवति ॥ पउमं । तणुई । लहुई ॥

ज्यायामीत् ॥ ४९ ॥

ज्या शब्दे युक्तस्य विप्रकर्षो भवति । पूर्वस्य च इकार स्वस्वरता च ॥ जीआ ॥

इति वररुचिकृते प्राकृत प्रकाशे युक्तवर्णविधिर्नाम तृतीय परिच्छेदः ॥*



## ॥ चित्तविभिन्नता ॥

"भिन्नरुचिर्हि लोकः"

एवं

"विभिन्नरूपा खलु चित्तवृत्तयः"

—इति च

अस्यां सागरान्तायां अवन्यां यावन्तो मनुष्याः सन्ति तेषां मेकैकस्यैव चित्तं विभिन्नरूपं । केचि देहिकामेव सौख्यसाधनपटीयांसमर्थमेव बहुमन्यमानो निरन्तरं प्राणान्

---

* सूत्राणां विशदोदाहरणानि सुदुर्लभानि तद्धन्थपाठे समधिकाधी भवतीति वयं मायालतो मूलमात्रं सुरक्षितुं प्रयत्नाः समये सोदाहरण ग्रन्थप्रकाशेऽभिलाषो वर्त्तते । सं० ।

पणीकृत्य वर्त्तमानाम्ब मधि निर्भयचित्ता: कदा समुद्रस्य पारे, कदाऽगम्यभीषणवन्यजीवसङ्कु-लारण्य मध्ये, कदा वा नैकमार्गा-तिगात्युच्चभूधरशिरःसु परि भ्रा-म्यन्ति। केचिच्चैतमेवार्थं बहुलानर्थ-करं विचिन्त्य संसारसुखञ्च पवान कम्पित-नलिनीदल-गत-जलबद-चिरस्थायि विभाव्य मानवसम्बन्ध शून्ये गिरिवरकन्दरे समुपविश्य परमेशचरणचिन्तायां निमज्जन्ति। अपरे विविध-सदुपदेश-विनीता अपि न निषिद्धाचरणाद्विरमन्ति। अन्ये च परोपकार-बद्ध-परिकराः सततं शुभ मनुतिष्ठन्ति। एको यमाकृत्यमय मनुचिन्तयति तद-न्यस्मै न रोचते तथान्यस्य रुचि-करं वस्त्वपरस्य हेयभूमिर्भवतीति विभिन्नचित्तवृत्ति पर्य्यालोचनेन विचित्ररङ्गभूमिरिव परितो वि-भाति सर्व्वमेतज्जगन्मण्डलम्॥

अथैतद्विभिन्नतायाः कथङ्कार मुत्पत्तिरिति जिज्ञासायां सुचार पश्चे चित्तवृत्तेरिव विभिन्नमत बाहुल्यं दृश्यते। तत्सर्व्वं प्रकटी-करणेऽसमर्थोऽपि सम्प्रायस्य विश्वो-द्ध: स्वसामर्थ्यानुरूपं किञ्चिन्मात्र मुदाहरति॥

केचिदत्र जन्मान्तरीणसदसत् कर्म्मसमवायपरिणामरूप दृष्ट वशे नैव जनानां सदसत्कार्य्येषु प्रवृत्तिनिवृत्ती उत्पद्येते। यस्य प्राक्तनजन्मकृतशुभपरिणामो भवति स सदनुष्ठान माचरति यस्य न तथा सोऽन्यथा चरतीत्य-दृष्टवाद विवृत्य बाहास्फोटनेन दिगन्तं प्रतिध्वनयन्ति॥

अन्ये देश कालविभेदेन खरा वयवसंस्थानवैजात्यवत् कामादि वशेन मनसो विभेदो भवतीति कथयन्ति, अपरे तु "संसर्गजा दोष गुणा भवन्ति" दृश्यते च लोकानां साधुसङ्गेन तत्कारित्वमसाधुसह वासेनासत्कृतिस्तथा जन्मसाम्

पथगामिना मप्यसतां संसर्गेण
चिरोचितपथस्खलन मसताञ्च
साधुसहवासेन सुपथावलम्बन
मिति सोदाहरणं भिन्नप्रकृति
कारण माजगुः।

तथापगानां महोदधिरिवादृष्ट-
वाद एव सर्व्वेषां विश्रामभूमिः।
अथ साधुसङ्गेन साधुताऽसाधु-
सङ्गेनान्यथा त्वत्र प्रश्नस्य
साधोः साधुताया स्तथाभूतस्या
साधोरसाधुताया उत्पत्ति रिति
प्रश्नेऽदृष्टाश्रयणं विना न कि
मप्युत्तरपथं वर्त्तते॥

एव मदृष्टवादे बद्धमूले सतां
शुभकारित्वस्यासतां मशुभकारि-
त्वस्य च नित्यत्व मेवावगम्यते।
अतएव—
"सती च योषित् प्रकृतिश्च निश्चला
पुमांस मभ्येति भवान्तरेष्वपि॥"

एवं—

"अतीत्यहि गुणान् सर्व्वान्
स्वभावोमूर्ध्नि वर्त्तते॥"

—इत्यादिवचनाना मव्याहत
एव प्रचारः।

गड्डलिकाप्रवाहवदपरानुगमन
पराङ्मुखैरप्याभिरन्ये इदमभि-
नवं मत मुपन्यस्यते॥

वस्तुतस्तु, भूकम्प-दार्शनिक-
मनसोः स्वभावत एकरूपत्वेऽपि
शिक्षाभ्यासवशेनैव तयो रत्यन्त
मन्तरं प्रतिपद्यते। यस्य यादृशी
शिक्षा तस्य निपुणता प्रवृत्तिश्च
तादृशी। अतएव सुष्ठु कथितम्—
"ज्ञानेन हीनाः पशुभिः समानाः"
—इति॥

यथा तरसंस्कारेण रत्नाना मौज्ज्वल्य
मिव यथाचार्य्यशिक्षया मनसः
प्रवृत्युत्कर्षः। तेनैव विदुषा-
मर्णोदेवदत्तो भूकम्पक-यज्ञदत्त
यदिन्द्रिय प्राधान्यसत्त्वेऽपि न तद
दनिष्टकर्म्माणि कुर्व्वन्ति। प्रति-
पुरुषं शिक्षाया भिन्नरूपत्वेन
मनसोऽपि भिन्नता भवतीति न
किञ्चिद्विचित्र मित्यलम्॥

| संस्कृतम् | प्राकृतम् | हिन्दी | बङ्गाली | महाराष्ट्री |
| --- | --- | --- | --- | --- |
| घृतम् | घिअं | घीउ | घी | घी |
| दधि | दहीं, दहिं | दही | दइ | दहीं |
| मुख | मुहम् | मुँह | मुख | मुख |
| बधिर | बहिर | बहिरा | बधिर | बहिरा |
| मेघ | मेहो | मेंह | मेघ | मेघ (ढग) |
| वधू | वहू | बहू | वउ | वायक, बाइ |
| साधु | साहु साहू | साहू | साध | साहू सावकार |
| गर्भिन् | गब्भिण् | गभ्भिन् | गाभिन् | गाभन् |
| योग्यम् | जोग्गं | जोग | जुगि | जोगा |
| राज्य | रज्ज | राज | राज्य | राज्य |
| अद्य | अज्ज | आज | आज | आज |
| वाद्यमान | वज्जन्त | बजाना | बाजना | वजावि |
| अर्द्धम् | अद्धं | आधा | अर्द्ध | आधा |
| खर्ज्जूर | खज्जूर | खजूर | खेजुर | खजूर |
| चर्म्मकार | चम्मारओ | चमार | चामार | चम्हारी |
| कुम्भकार | कुम्भारो | कुम्हार | कुमोर | कुम्भारा |
| सर्व्वम् | सव्वं | सब | सब | |
| सुवर्ण | सोवण्ण | सोना | सोना | सोनें |

| संस्कृतम् | प्राकृतम् | हिन्दी | बङ्गालि | महाराष्ट्री |
|---|---|---|---|---|
| सत्यम् | साच | सच | सत्यि | साच |
| चन्द्रः | चंदो | चान्द | चाँद | चाँद |
| मध्य | मज्झो | मंझला । मझोला | माझ | माझ |
| हस्तः | हत्थो | हाथ | हात | हात |
| वृद्ध | वुड्ढ | बूढ़ा | बुड़ो | |
| वृद्धा | वुड्ढि | बुढ़िया | बुड़ि | |
| पुष्प | पुप्फं | पुहप | | |
| मयूर | मोरो | मोर | मोर | |
| लवण | लोण | लोन | नुन वा 'नून' (ग्राम्य) | |
| भगिनी | बहिणी | बहिन | बुन | बहीन |
| शूकर | शूअलो | सूअर | शोर | |
| शृगाल | शिआलो | सिआल | शिआल | |
| बीज | बीअ | बीआ | बीज | बीअ वा बी |
| वणिक् | वाणिओ | बनिया | बेणे | वाणी |
| देवालयः | देउल । देवल | देवल | देवालय* | देवळ, देउळ |

* बङ्गभाषायां देउल शब्दो दृश्यते स तु देवपूजके व्यवह्रियते ।

| संस्कृतम् | प्राकृतम् | हिन्दी | बङ्गालि | महाराष्ट्री |
|---|---|---|---|---|
| गभीर | गहिर | गहरा | गहिर | गहिरा |
| मलिन | मइल | मैला | मयला | |
| चतुर्थी | चउत्थी<br>चोत्थी | चौथी | चतुर्थी | चौथा |
| चतुर्दशी | चउद्दही<br>चोद्दही | चौदहवीं | चोद्द | चौदा |
| पञ्चदश | पण्णारहो | पंद्रहवां | पोनेर | पंधरा |
| एकादश | एआरह | इगारह | एगार | |
| द्वादश | बारह | बारह | बार | बारा |
| त्रयोदश | तेरह | तेरह | तेर | तेरा |
| त्रीणि | तिण्णि | तीन | तिन | तीन |
| षट् | छ | छः | छय | सहा |
| विंशति | वीसई | बीस | बिस | बीस |
| त्रिंशत् | तीसण | तीस | त्रिश | तीस |
| सूची | सूइ | सूई | छुँच | सुई |



## ॥ मूल्यप्राप्तिस्वीकारः ॥

श्रीयुक्त लाला बद्री प्रसाद बि ए — २, रु०
सहकारी अध्यापक
चरिएएटन लाहोर
पण्डित श्रीविहारी लाल — २, रु०
असिष्टाण्ट कमिसनर
अमृतसरोवर



## ॥ विज्ञापनम् ॥

कुमारागमनं नाम संस्कृतभाषया रचितं खण्डकाव्य मचिरे णैवप्रकाश मेष्यति। मूल्यं ।ꠓ मात्रम् अत्र समुद्रात् पञ्चनदपर्य्यन्तं प्रसिद्धस्थानानां सुगमसंस्कृतभाषया सविशेषं वर्णन मस्ति ग्रहणे-च्छुभिर्मत्समीपे पत्रं प्रेषणीयम् ॥

श्रीमतिलाल घोषः
विद्योदयप्रकाशकः।

---

## ॥ मूल्यादीनां नियमः ॥

वार्षिक मूल्यं प्रथमदेयम्— — — — — २।/०
" पश्चाद्देयम्— — — — — — ३।/०
प्रत्येकखण्डं।०) परिमित मूल्येन प्राप्तव्यम्।
विज्ञापनस्य प्रत्येक पंक्तिः /० परिमित-मूल्येन मुद्रिता भविष्यति ॥

# ॥ विक्रय्य-पुस्तकानि ॥

नीचैर्लिखितपुस्तकानि आस्यायितिक-सोसाइटी प्रकाश्यमान-'बिबलोथिका इण्डिका' नाम पत्रिकायाः 'प्रत्नकम्रनन्दिनी' पत्रस्य च सम्पादकेन काशीधौत वेदादि-श्रीमत्सत्यव्रतसामश्रमिणा कानिचित् सटीकान्यन्यच्च कतिधा शोधयित्वैव कानि पुनर्निर्माय्यापि प्रकाशितानि । तानीमानि यथानिर्दिष्टमौल्यप्रेरणेन कलिकातायाम् — कर्नेज ष्ट्रीट् ५४-सङ्ख्याक-भवनस्थ सत्ययन्त्रालये संस्कृतयन्त्रालयीय पुस्तकालये च प्राप्तव्यानि ॥

## ॥ सामवेदः ॥

( भाष्यादि-समेतः )

| | |
|---|---|
| सामवेद-संहिता आदिभागः | ८) |
| — — मध्यभागः | १) |
| — — शेषभागः | ३० |
| सामवेद-ब्राह्मणम् आद्यम्* | १०) |
| — — द्वितीयम् | ४) |
| — — तृतीयम् | ८) |
| — — चतुर्थम् | २) |
| — — पञ्चमम् | १) |
| — — षष्ठम्, — — सप्तमम्, — — अन्तिमम् | १) |
| सामवेदीयाग्निष्टोमपद्धतिः | ४) |

## ॥ दर्शनम् ॥

| | |
|---|---|
| मीमांसा परिभाषा | ॥० |
| मीमांसा अर्थसङ्ग्रहः (लौगाक्षिः) | ॥० |
| कारण्डव्यूहः ( बौद्धशास्त्रम् ) | १॥० |
| विवेकविलासः (जैनशास्त्रम्) | १॥० |
| ब्राह्मधर्म्मः (काण्डद्वयात्मकः) | ३) |
| पूर्णप्रज्ञदर्शनम् (मध्वशास्त्रम्) | १) |

## ॥ अलङ्कारः ॥

| | |
|---|---|
| कुवलयानन्दः (सटीकः) | २॥० |
| कविकल्पलता (सटीका) | ३) |

## ॥ সামবেদ ॥

(ভাষ্যাদি ও বাঙ্গলা অনুবাদের সহিত

| | |
|---|---|
| সামবেদ সংহিতা আদিভাগ | ৮) |
| „ মধ্যভাগ | ১) |
| „ শেষভাগ | ৩০ |
| সামবেদ ব্রাহ্মণ আদিভাগ | ১০) |
| „ ২য় | ৪) |
| „ ৩য় | ৮৫ |
| „ ৪র্থ | ২৫ |
| „ ৫ম | ১৫ |
| „ ৬ষ্ঠ, ৭ম | ৫ |
| শেষভাগ একত্র | ১৫ |
| সামবেদীয় যাগ পদ্ধতি — | ৪৫ |

## ॥ काव्यम् ॥

| | |
|---|---|
| चन्द्रशेखरचम्पूः (आदिभागः) | १॥० |
| — — (उत्तरभागः) | १) |
| विद्वन्मोदतरङ्गिणी | ।= |
| माधवचम्पूः | ।० |
| धूर्त्तसमागमः (प्रहसनम्) | ॥० |
| प्रस्थानभेदः (शास्त्रसूचिः) | ।० |
| बहुगणधातुरूपम् | ।० |
| विद्धशालभञ्जिका (सटीका) | ॥० |
| न्यायावलिः (सोदाहरणा) | ।०, |
| प्रत्नकम्रनन्दिनी | ७०) |

कलिकाता सत्ययन्त्रे श्रीमहेन्द्रनाथसरकारेण मुद्रितः । लाहोरस्थ श्रीमतिलालघोषेण प्रकाशितः ।

Registered No. 62



# विद्योदयः ।

सन्नगुच्छकसद्गससमाख्यकी पण्डितादिद्विजगातिमुदे कृतः
लौकिकाखिलवृत्तसमाश्रितः सर्वगिरा सततं स्थितः ।
विद्याविषये जनताभिरामः सर्वार्थसम्बन्धिप्रदीपकारी
गैरावतीतीरसुकण्टकिन्ध विद्योदयोऽयं भवतिप्रसिद्धः ॥ १ ॥

खण्ड ५ ] अक्टोबर १८७५ ई० [ संख्या १०

## ॥ प्राचीनभूगोलवर्णनम् ॥

### ॥ गङ्गामाहात्म्यम् ॥

"अग्निरुवाच —

गङ्गामाहात्म्यमाख्यास्ये
सेव्या सा भुक्तिमुक्तिदा ।
येषां मध्ये याति गङ्गा
ते देशाः पावना वराः ॥
गतिर्गङ्गा तु भूतानां
गति सन्वेषतां सदा ।
गङ्गा तारयते चोभौ
वंशौ नित्यं हि सेविता ॥
चान्द्रायण-सहस्राच्च
गङ्गाम्भःपानमुत्तमम् ।
गङ्गां मासन्तु संसेव्य
सर्वयज्ञफलं लभेत् ॥
सकलाघहरी देवी
स्वर्गलोकप्रदायिनी ।
यावदस्थि च गङ्गायां
तावत् स्वर्गे स तिष्ठति ॥

अन्धादयस्तु तां सेव्य
देवैर्गच्छन्ति तुल्यताम् ।
गंगातीर्थसमुद्भूत-
मृद्धारी सोऽघहार्कवत् ॥
दर्शनात् स्पर्शनात् पानात्
तथा गङ्गेति कीर्त्तनात् ।
पुनाति पुण्यपुरुषान्
शतशोऽथ सहस्रशः ॥"

॥ प्रयाग-माहात्म्यम् ॥

वक्ष्ये प्रयागमाहात्म्यम्
भुक्तिमुक्तिप्रदं परम् ।
प्रयागे ब्रह्मविष्ण्वाद्या
देवा मुनिवराः स्थिताः ॥
सरितः सागराः सिद्धा
गन्धर्वाप्सरसस्तथा ।
तत्र त्रीण्यग्निकुण्डानि
तेषां मध्ये तु जाह्नवी ॥
वेगेन समतिक्रान्ता
सर्वतीर्थपुरस्कृता ।
तपनस्य सुता* तत्र
त्रिषु लोकेषु विश्रुता ॥
गंगायमुनयोर्मध्यं
पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्त
रूपस्य ऋषयो विदुः ॥
प्रयागं सप्रतिष्ठानं
कम्बलाश्वतरावुभौ ।
तीर्थं भोगवती चैव
वेदी प्रोक्ता प्रजापतेः ॥
तत्र वेदाश्च यज्ञाश्च
मूर्त्तिमन्तः प्रयागके ।
स्तवनादस्य तीर्थस्य
नामसङ्कीर्त्तनादपि ॥
मृत्तिकालम्भनाद्वापि
सर्वपापैः प्रमुच्यते ।
न वेदवचनाद्विप्र
न लोकवचनादपि ॥
मतिरुत्क्रमणीयान्ते
प्रयागे मरणं प्रति ।

* तपनस्य सुता – यमुना ।

दशतीर्थसहस्राणि
षष्ठिकोट्यस्तथापराः ॥
तेषां सान्निध्य मत्रैव
प्रयागं परमन्ततः ।
गवां कोटिप्रदानात् यत्
त्र्यहं स्नानस्य तत् फलम् ॥
प्रयागे माघमासे तु
एव माङ्गर्मनीषिणः ।
सर्वत्र सुलभा गंगा
त्रिषु स्थानेषु दुर्लभा ।
गंगाद्वारे* प्रयागे च
गंगासागरसंगमे ।
अत्र दानाद्दिवं याति
राजेन्द्रो जायते ऽत्र च ।
वटमूले संगमादौ
मृतोविष्णु पुरीं व्रजेत् ।
कोटीतीर्थन्त्वाश्वमेधं
गंगायमुन मुत्तमम् ।

* गङ्गाद्वारे — हरिद्वारे ।

मानसं रजसा हीनं
तीर्थन्त्वामरकं परम् ॥

॥ वाराणसी-माहात्म्यम् ॥

वाराणसी परं तीर्थम्
गौर्य्यै प्राह महेश्वरः ।
भुक्तिमुक्तिपदं पुंसां
वसतां गृणतां हरिम् ॥
गौरीक्षेत्रं न मुक्तं वै
अविमुक्तं ततः स्मृतम् ।
जप्तं तप्तं कृतं दत्त
मविमुक्ते किलाक्षयम् ॥
अश्मना चरणौ हत्वा
वसेत्काशीं न हि त्यजेत् ।
हरिश्चन्द्रं परं गुह्यम्
गुह्य माम्रातकेश्वरम् ॥
जप्येश्वरं परं गुह्यं
गुह्यं श्रीपर्वतं तथा ।
महालयं परं गुह्यं
भृगुचण्डेश्वरं तथा ॥
केदारं परमं गुह्य
मष्टौ सन्त्यविमुक्तके ॥

वरणा च नदी चासी
तयोर्मध्ये वाराणसी ।
अत्र स्नानं जपो होमो
मरणं शिवपूजनम् ॥
श्राद्धं दानं निवासश्च
यद्यत्स्याद्भुक्तिमुक्तिदम् ।
नर्म्मदादिकमाहात्म्यम्
वक्ष्येऽहं सर्व्वदं परम् ॥
सद्यः पुनाति गाङ्गेयं
दर्शनाद्वारि नार्म्मदम् ।
विस्तराद् योजनशतम्
योजनद्वयमायता ॥
षष्टितीर्थसहस्राणि
षष्टिकोट्यस्तथापराः ।
पर्व्वतस्य समन्तात्तु
तिष्ठन्त्यमरकण्टके ।
कावेरीसङ्गमं पुण्यं
श्रीपर्व्वतमतः शृणु ॥
गौरी श्रीरूपिणी तेपे
तपस्तां अब्रवीद्धरिः ।
अवाप्स्यसि त्वमध्यात्मं
नाम्ना श्रीपर्व्वतस्तव ॥
समन्ताद् योजनशतं
महापुण्यं भविष्यति ।
अत्र दानं तपो जप्यम्
श्राद्धं सर्व्वमथाक्षयम् ॥
मरणं शिवलोकाय
सर्व्वदं तीर्थमुत्तमम् ॥
हरोऽत्र क्रीडते देव्या
हिरण्यकशिपुस्तथा ।
तपस्तप्त्वा बली चाभून्
मुनयः सिद्धिमाप्नुवन् ॥

॥ गयामाहात्म्यम् ॥

गयामाहात्म्यमाख्यास्ये
गया तीर्थोत्तमोत्तमः ।
गयासुरस्तपस्तेपे
तत्तपस्तापिभिः सुरैः ॥
उक्तः क्षीराब्धिगो विष्णुः
पालयास्मान् गयासुरात् ।

तथेत्युक्त्वा हरिर्दैत्यम्
वरं ब्रूहीति चाब्रवीत्।
दैत्योऽब्रवीत्पवित्रोऽहं
भवेयं सर्वतीर्थतः॥
तथेत्युक्त्वा गतो विष्णु
दैत्यं दृष्ट्वा न चा हरिम्।
गताः शून्या मही स्वर्गं
देवा ब्रह्मादयः सुराः॥
गता ऊचुर्हरिं देवाः
शून्या भूक्तिदिवं हरे।
दैत्यस्य दर्शनादेव
ब्रह्माणञ्चाब्रवीद्धरिः।
यागार्थं दैत्यदेहं त्वम्
प्रार्थय निर्दयैः सह।
तच्छ्रुत्वा ससुरो ब्रह्मा
गयासुरमथाब्रवीत्॥
अतिथिः प्रार्थयामि त्वां
देहं यागाय पावनम्।
गयासुरस्तथेत्युक्त्वा
पतत्यस्य शिरस्यथ॥

यागं चकार चलिते
देहे पूर्णाहुतिं विभुः।
पुनर्ब्रह्माऽब्रवीद्वाक्यम्
पूर्णाकालेऽसुरोऽचलत्॥
विष्णुर्धर्मं समाहूय
प्राह देवमयीं शिलाम्।
धारयध्वं सुराः स्वर्गं
यस्या उपरि सन्तु ते॥
गदाधरो मदीयाथ
मूर्तिः स्थास्यति मामरैः।
धर्मः शिलां देवमयीं
तच्छ्रुत्वा धारयत्पराम्॥
या धर्माद्धर्मवत्याञ्च
जाता धर्मव्रतासुता।
मरीचिर्ब्रह्मणः पुत्र
स्तां सुवाह तपोऽन्विताम्॥
यथा हरिः श्रिया रेमे
गौर्य्या शम्भुस्तथा तया।
कुशपुष्पाद्यरण्यात्तु
आनीयातिश्रमान्वितः।

भुक्त्वा धर्म्मव्रतां प्राह
पादसंवाहनं कुरु।
विश्रान्तस्य मुनेः पादौ
तथेत्युक्त्वा प्रिया करोत्॥
एतस्मिन्नन्तरे ब्रह्मा
मुनौ सुप्ते तथागतः।
धर्म्मव्रताऽचिन्तयच्च
किं ब्रह्माणां समर्च्चये॥
पादसंवाहनं कुर्वे
ब्रह्मा पूज्यो गुरोर्गुरुः।
विचिन्त्य पूजयामास
ब्रह्माणं चार्हणादिभिः॥
मरीचिस्तां सपश्यत्स
शशापोक्तिव्यतिक्रमात्।
शिला भविष्यसि क्रोधात्
धर्म्मव्रताऽब्रवीन्न तम्॥
पादाभ्यङ्गं परित्यज्य
त्वद्गुरुः पूजितो मया।
अदोषाहं यतस्त्वं हि
शापं प्राप्स्यसि शङ्करात्॥

धर्म्मव्रता पृथक् शापं
धारयित्वाग्निमध्यगात्॥
तपश्चचार वर्षाणां
सहस्राण्ययुतानि च।
ततो विष्णवादयो देवा
वरं ब्रूहीति चाब्रुवन्।
धर्म्मव्रताऽब्रवीद्देवान्
शापं निवर्त्तयन्तु मे॥

देवा ऊचुः—

दत्तोमरीचिना शापो
भविष्यति न चान्यथा।
शिला पवित्रा देवाङ्घ्रि-
लाञ्छिता त्वं भविष्यसि॥
देवव्रता देवशिला
सर्व्वदेवादिरूपिणी
सर्व्वदेवमयी पुण्या
निश्चलायासुरस्य हि॥

देवव्रतोवाच—

यदि तुष्टा स्थ मे सर्व्वे
मयि तिष्ठन्तु सर्व्वदा।

ब्रह्मा विष्णुश्च रुद्राद्या
गौरी लक्ष्मीमुखाः सुराः ॥
देवव्रता वचः श्रुत्वा
तथेत्युक्त्वा दिवङ्गताः ।
सा धर्म्मणासुरस्यास्य
धृता देवमयी शिला ।
सशिलश्चलितो दैत्यः
स्थिता रुद्रादयस्ततः ।
सदेवैश्चलितो दैत्यः
ततो देवैः प्रसादितः ॥
क्षीराब्धिगो हरिः प्रादात्
स्वमूर्त्तिं श्रीगदाधरम् ।
गच्छन्तु भोः स्वयं यास्ये
मूर्त्या वै देवगव्यया ।
स्थितो गदाधरो देवो ॥
व्यक्ताव्यक्तोभयात्मकः ॥
निश्चलार्थं स्वयं देवः
स्थितश्चादिगदाधरः ॥
गदो नामासुरो दैत्यः
स हतो विष्णुना पुरा ।

तदस्थिनिर्म्मिता चाद्या
गदा या विश्वकर्म्मणा ।
आद्यया गदया हेति-
प्रमुखा राक्षसा हताः ॥
गदाधरेण विधिवत्
तस्मादादिगदाधरः ।
देवमय्यां शिलायाञ्च
स्थिते चादिगदाधरे ।
गयासुरे निश्चलेऽथ
ब्रह्मा पूर्णाहुतिं ददौ
यागं कृत्वा ददौ ब्रह्मा
ऋत्विग्भ्यो दक्षिणां तदा ।
पञ्चक्रोशं गयाक्षेत्रं
पञ्चाशत् पञ्च चार्पयेत् ॥
ग्रामान् स्वर्णगिरीन् कृत्वा
नदीर्दुग्धमधुस्रवाः
सरोवराणि दध्याज्यै
र्बहूनन्नादिपर्वतान् ।
गयोऽपि चाकरोद्यागं
बह्वन्नस्वर्णदक्षिणम् ।

गया पुरी तेन नाम्ना
पाण्डवा पूजिरे हरिम्॥



## ॥ प्राकृतप्रकाशः ॥

## ॥ अथ तृतीयः परिच्छेदः ॥

उपरिलोपः कगडतदपषसाम्*॥

कादीनां मष्टानां युक्तस्योपरि स्थितानां लोपो भवति। भक्त, सित्थओ॥ गस्य। मुद्धो, सिणिद्धो। डस्य। खग्गो, सज्जो॥ तस्य। उप्पलं, उप्पाओ॥ दस्य। मुग्गो, मुग्गरो॥ पस्य। सुत्तो। पज्जत्तो॥ षस्य। गोट्ठो, निट्ठुरो। सस्य। खलिअं। णेहो॥ क्रमेणेषां संस्कृतरूपाणि—भक्त। सिक्थ। दुग्ध। स्निग्ध। खड्ग। षड्ज। उत्पल। उत्पात। मुद्ग। मुद्गर। सुप्त। पर्य्याप्त। गोष्ठी। निष्ठुर। स्खलित। स्नेह॥

अधो मनयां*॥ २

मकार-नकार-यकाराणां युक्तस्याधःस्थितानां लोपो भवति॥ मस्य। सोम्मं। रस्सी। जुग्गं। वाग्गो॥ नस्य। णग्गो॥ यस्य। सोम्मो। योग्गो। सोम्मं, रश्मि, युग्मं। वाग्मी। नग्न। सौम्यं, योग्यम्॥ सं॥

* कस्य। सङ्घिण जुत्तं अच्छसमत्तासिणो समक्ख अकिदसक्कार। एवं युत्ति—युक्ति। सत्ति—सक्ति। भुत्त—भुक्त प्रभृतयः॥

गस्य। मा दावदुपदेसमुद्धा णमिध्धामि। सिणिद्धजन संविभत्तं हि दुःखं।

पस्य। भञ्ज स परदत्तस्सयणता। सत्तवत्थवेदि भाए। ससमत्त पडिणामरेग।

षस्य। अनुट्ठीयता। चिट्ठदि। कदा मण्डवं पविट्ठो। खचदिमिट्ठी। तिषाइ दुक्खस॥

पयथोः। इदिपरिसमत्तोये॥

सयथोः। खलादि विपमेट्ठिदो॥

* मस्य। सङ्घदरसि संमुखो। दसव्वि कलिसे उद्देशे भसणो विमणदो मनोरहो॥

नस्य। अण्णाक्करे पविसद पुनमा॥

यस्य। भणोए सिंहनाद् विमिद सामण्ण व्वावादिदो। निपुणकसाणो तुम्ह सुमच सयागुण। कलिरहसिणादि॥

सर्व्वत्र लवरां* ॥ ३

लकार-वकार-रेफाणां युक्तस्योपर्य्यधःस्थितानां लोपो भवति ॥ लस्य । उक्का । वक्कलं । विक्कवो ॥ वस्य । लोद्धओ । पिक्कं ॥ रस्य । अक्को, सक्को ॥ क्रमेण संस्कृतरूपाणि—उल्का । वल्कलं । विक्लव । लुब्धक । पक्व । अर्क । शक्र ॥

द्रे रो वा ॥ ४

द्रशब्दे रेफस्य वा लोपो भवति । दोहो । द्रोहो ॥ चन्दो चन्द्रो ॥ रुद्दो रुद्रो ॥

सर्व्वज्ञतुल्येषु ञः ॥ ५

सर्व्वज्ञतुल्येषु (सर्व्वज्ञशब्दसदृशेषु शब्देष्वित्यर्थः) ञकारस्य लोपो भवति ॥ सव्वण्णो । इङ्गिअण्णो । सर्व्वज्ञः । इङ्गितज्ञः ॥ जानातेर्यान्येवं रूपाणि तत्र ञ लोपः ॥ मणोण्णो । मनोज्ञः ;

श्मश्रु-श्मशानयोरादेः ॥ ६

श्मश्रु-श्मशानयोरादेर्व्वर्णस्य लोपो भवति । मस्सू ॥ मसाणं ।

मध्याह्ने हस्य । ७

मध्याह्नशब्दे हकारस्य लोपो भवति । मज्झण्णो ।

ह्न-ह्ल-ह्मेषु नलमां स्थितिरूर्द्ध्वं ॥ ८

ह्न ह्ल ह्म इत्येतेष्वधःस्थितानां नकार-लकार-मकाराणां स्थितिरूर्द्धमुपरिष्टाद्भवति ॥ ह्नस्य । पुव्वण्हो । अवरण्हो । ह्लस्य । कल्हारं । पल्हादो ॥ ह्मस्य । बम्हणो* ॥

युक्तस्य । ९ ।

अधिकारोऽयम् । आ परिच्छेद समाप्तेर्यदितऊर्द्ध्वमनुक्रमिष्यामो युक्तस्येतीयं वेदितव्यम् । वक्ष्यति

* लक्ष्य । वक्कल परिहाणाए' तावसाणं उक्कोसि । तदो तेण मप्पवणं । यस्य । महा [illegible] विद्धा भविष । कज्जताणं । रस्य । [illegible] परिक्खे ताक्का । चक्कावक्का । परिमद्द [illegible] अगढ्ढयादो । पमाद् [illegible] [illegible] परिक्खादव्वहारस्स ।

* ब्बदाणं बम्हाणं आसिया ।

आश्विनि अष्टीत्यादि। युक्त-ग्रहणं हलोऽन्तस्य माभूत्।

ष्टस्य ठः* । १० ।

ष्ट इत्येतस्य युक्तस्य ठकारो भवति ॥ लट्ठी । दिठ्ठो ।

अस्थिनि ॥ ११ ॥

अस्थिशब्दे युक्तस्य ठकारो भवति अट्ठी ॥

स्तस्य थः† ॥ १२ ॥

स्तशब्दस्य थकारो भवति उपरि लोपापवादः ॥

हत्थो । समत्थो । थुइ । थवश्रो । कोत्थुहो ॥ क्रमेण संस्कृतरूपाणि— हस्त, समस्त, स्तुति, स्तवक, कौस्तुभ ।

न स्तम्बे । १३ ।

स्तम्ब शब्दे स्तकारस्य थकारो न भवति ॥ तंबो ॥

स्तम्भे खः । १४ ।

स्तम्भशब्दे स्तकारस्य खकारो भवति खंभो ।

स्थाणावहरे ॥ १५ ॥

स्थाणुशब्दे युक्तस्य खकारो भवति अहरे । हराभिधेये न भवति । खाणू । अहर इति किम् । थाणू हरो ॥

स्फोटके* ॥ १ ॥

स्फोटकशब्दे युक्तस्य खकारो भवति । खोड़ओ ॥

र्य शय्याभिमन्यु जः ॥ १७ ॥

र्य इतिरूपस्य शय्याभिमन्युशब्दयोश्च युक्तस्य जकारो भवति ।

कज्जं† । सेज्जा । अहिमज्जू ॥ कार्यम्, शय्या, अभिमन्युः ॥

---

* एस्स । इट्ठि । परिमट्ठं । दिसदिट्ठी । खलदि विषमैदिट्ठी चिट्ठसि । उपविट्ठं ।

† सस्स । अत्थि मे तत्थो । अव्वत्थादी । हत्थि-खित्तक वसोत्था होदि ।

* एतद्व्यवहारापि दृश्यते यथा – 'वच्छ च उवरि विण्फीडओ' शकु० ।

† कज्जम् नाम एवं अं तव दा चवकार' ।

तूर्य्यधैर्य्यसौन्दर्य्याश्चर्य्यपर्य्यन्तेषु ॥ १८

एतेषु शब्देषु र्यस्य रेफो भवति ॥ तूरं। धीरं। सुंदेरम्। अच्छेरम्। पेरन्तम् ॥

सूर्य्ये वा ॥ १९ ॥

सूर्य्यशब्दे र्यकारस्य रेफो भवति वा॥ सूरो सुज्जो। वा ग्रहणात् "र्य्य शय्यादि सूत्रसामान्येन जकारः ॥

चौर्य्यसमेषु र्यस्य रिअ ॥ २० ॥

चौर्य्यसमेषु शब्देषु र्यस्य रिअं इत्यादेशो भवति ॥ चोरिअं। सोरिअं। वीरिअं ॥ क्रमेण चौर्य्यं, शौर्य्यम्, वीर्य्यम् ॥ समग्रहणादा-कृति गणोयम् ॥

पर्य्यस्तपर्य्याणसौकुमार्य्येषु लः ॥ २१

एषु शब्देषु र्यस्य लकारो भवति पल्लत्थं पल्लाणं। सोअमल्लं ॥

र्त्तस्य टः* ॥ २२ ॥

र्त्त इत्येतस्य टकारो भवति ॥ केवट्टो। नट्टओ। णट्टइ। वट्टइ॥ क्रमेण संस्कृतरूपाणि—कैवर्त्तः, नर्त्तकः, नृत्यति, वर्त्तनं ॥

पत्तने ॥ २३ ॥

पत्तनशब्दे त्तस्य टकारो भवति ॥ पट्टणं ॥

न धूर्त्तादिषु ॥ २४ ॥

धूर्त्त इत्येवमादिषु र्त्त इत्येतस्य टकारो न भवति॥ धुत्तो। कित्ती। वत्तमाणं। वत्ता। आवत्तो। संवत्तओ। निवत्तओ। वत्तिआ। अत्तो। कत्तरी। मुत्ती ॥ धूर्त्त। कीर्त्ति। वर्त्तमान। वार्त्ता। आवर्त्तक। संवर्त्तक। निवर्त्तक। वर्त्तिका। आर्त्त। कर्त्तरी। मूर्त्ति ॥

गर्त्ते डः ॥ २५ ॥

गर्त्तशब्दे र्त्तस्य डकारो भवति। गड्डो।

गर्द्दभ-संमर्द्द-वितर्द्दि-विच्छर्द्दिषु र्द्दस्य ॥ २६ ॥

* कोवट्ट, उवट्ट प्रभृति शब्दिगुलि [illegible] शब्देर परिचायक।

एतेषु र्दस्य ड्डो भवति । गड्डहो । संमड्डो । विअड्डो । विछड्डो ॥

त्यथ्यद्यां चछजाः* ॥ २७ ॥

त्य-थ्य-द्य-इत्येतेषां च-छ-ज — इत्येते यथासङ्ख्यं भवति ॥ त्यस्य । णिच्चं । पच्चच्छं । थ्यस्य । मिच्छा । पच्छं ॥ द्यस्य । विज्जा । वेज्जं ॥ क्रमेण संस्कृतरूपाणि यथा — नित्यं । प्रत्यक्षम् । मिथ्या । पथ्यम् । विद्या । वैद्य ।

ध्यह्योर्झः । २८ ।

ध्य — ह्य — इत्येतयोः झकारो भवति ध्यस्य । मज्झं । अज्झाओ ॥ ह्यस्य । वज्झओ गुज्झओ ॥ मध्यम् । अध्यायः । वाह्यकः । गुह्यकः । इति क्रमेण संस्कृतरूपाणि ।

ष्कस्कक्षां खः ॥ २९ ॥

ष्क स्क क्षां खकारो भवति । ष्कस्य । मुक्खं । पोक्खरो । स्कस्य । खंदो । खंधो ॥ क्षस्य । खदो । जक्खो । एषां क्रमेण संस्कृतरूपाणि — मुष्कर । पुष्क । स्कन्द । स्कन्ध । क्षत । यक्ष ।

अक्ष्यादिषु छः ॥ ३० ॥

अक्षि इत्येवमादिषु क्षकारस्य छकारो भवति । अच्छी । लच्छी छणो । छीरं । छुहा । उच्छित्तं । सरिच्छं । उच्छू । उच्छा । छारं । रिच्छो । मच्छिआ । छदं । छुरं । छेत्तं । वच्छो । दच्छो । कुच्छी ॥ क्रमेण संस्कृतरूपाणि — अक्षि । लक्ष्मी । क्षण । क्षीर । क्षुधा । उत्क्षिप्त । सदृक्ष । इक्षु । उक्षन् । क्षार । ऋक्ष । मक्षिका । क्षत । क्षुर । क्षेत्र । वक्षस् । दक्षस् । कुक्षि ॥

क्षमावृक्षक्षणेषु वा ॥ ३१ ॥

एतेषु क्षकारस्य छकारो भवति । छमा खमा । वच्छो रुक्खं वा ।

* सत्यं । सहि सच्चं सच्चं ।

खण्ड॥ छष शब्दे खकारस्याकारे छते षणशब्दे चोऋवाभिधायिनि छत्व मिष्यते॥



## स्वमल्लभविष्यपुराणम्॥

व्यास उवाच—

पुरा स ऋषिभिः पृष्टः
पिता ब्रह्मर्षिसत्तमः।
उवाच वचनं ब्रह्मन्!
शास्त्राणां सार मुत्तमम॥

पराशर उवाच—

शृणुताद्य महाभागा
सर्वे वेदविदुत्तमाः।
स्वरूपं कलिकालस्य
यदुक्तं शिवया पुरा॥

"आयाते पापिनि कलौ
सर्वधर्म्मविलोपिनि।
दुराचारे दुष्प्रपञ्चे
दुष्टकर्म्मप्रवर्त्तके॥
न वेदाः प्रभवस्तत्र
स्मृतीनां स्मरणं कुतः।
नानेतिहासयुक्तानां
नानामार्गप्रदर्शिनाम्॥
बहूनां पुराणानां
विनाशो भविता विभो।
तदा लोका भविष्यन्ति
धर्म्मकर्म्मबहिर्मुखाः॥
उच्छृङ्खला मदोन्मत्ताः
पापकर्म्मरताः सदा।
कामुका लोलुपाः क्रूराः
निष्ठुरा दुर्मुखाः शठाः।
स्वल्पायुर्मन्दमतयो
रोगशोकसमाकुलाः।
निःश्रीका निर्बला नीचाः

नीचाचारपरायणाः ।।
नीचसंसर्गनिरताः
परवित्तापहारकाः ।
परनिन्दा-परद्रोह-
परीवादपराः खलाः ।
परस्त्री-हरणे पाप-
शङ्काभयविवर्जिताः ।
निर्द्धना मलिना दीना
दरिद्राश्चिररोगिणः ।
विप्राः शूद्रसमाचाराः
सन्ध्यावन्दनवर्जिताः ।
अयाज्ययाजका लुब्धा
दुर्वृत्ताः पापकारिणः ।
असत्यभाषिणो मूर्खा
दाम्भिका दुष्टपञ्चकाः ।
कन्याविक्रयिणो व्रात्या
तपोव्रतपराङ्मुखाः ।
लोकप्रतारणार्थाय
जपपूजापरायणाः ।
पाषण्डाः पण्डितम्मन्याः
श्रद्धाभक्तिविवर्जिताः ।
कदाहाराः कदाचाराः
भृतकाः शूद्रसेवकाः ।
शूद्रान्नभोजिनः क्रूराः
वृषलीरतिकामुकाः ।
दास्यन्ति धनलोभेन
स्वदारान्नीचजातिषु ।
ब्राह्मण्यचिह्नमेतावत्
केवलं सूत्रधारणम् ।
नैव पानादिनियमो
भक्ष्याभक्ष्यविवेचनम् ।
धर्मशास्त्रे सदा निन्दा
साधुद्रोहनिरन्तरम् ॥"*
देवो देवेन च पुनः
कथितं मुनिसत्तमाः ।
कलिस्वरूप माद्यायै
तदद्यापि च कथ्यते ॥

* महानिर्व्वाणतन्त्रे पूर्व्वकाण्डे प्रथमोल्लासे हरपार्व्वतीसंवादे च वचनान्यमूनि दृश्यन्ते, भविष्यत् पुराणकारैस्तु किं सत्यानीमानि गृहीतानि ।

“यदा तु वैदिकी दीक्षा
दीक्षा पौराणिकी तथा ।
न स्थास्यति वरारोहे
तदैव प्रबलः कलिः ॥
यदा तु पुण्यपापानां
परीक्षा वेदसम्भवा ।
न स्थास्यति शिवे शान्ते
तदैव प्रबलः कलिः ॥
क्वचिच्छिन्ना क्वचिद्भिन्ना
यदा सुरतरङ्गिणी ।
भविष्यति कुलेशानि
तदैव प्रबलः कलिः ॥
यदा तु म्लेच्छजातीयाः
राजानो धनलोलुपाः ।
भविष्यन्ति महाप्राज्ञे
तदैव प्रबलः कलिः
यदा स्त्रियोऽतिदुर्द्दान्ताः
कर्कशा कलहे रताः ।
गर्हिष्यन्ति च भर्त्तारं
तदैव प्रबलः कलिः ॥
यदा तु मानवा भूमौ
स्त्रीजिताः कामकिङ्कराः ।
द्रुह्यन्ति गुरुमित्रादीन्
तदैव प्रबलः कलिः ॥
यदा क्षौणी स्वल्पफला
तोयदाः स्तोकवर्षिणः ।
असम्यक् फलिनो वृक्षा
स्तदैव प्रबलः कलिः ॥
भ्रातरः स्वजनामात्या
यदा धनकणेच्छया ।
मिथो सम्भारिष्यन्ति
तदैव प्रबलः कलिः ॥”*
एवं तातवचः श्रुत्वा
हृष्टास्ते मुनिसत्तमाः ।
जग्मुः स्वं निलयं सर्वे
प्रणिपत्य च तं मुने ।

इति स्वप्नलब्धभविष्यपुराणे
उत्तरखण्डे तृतीयोऽध्यायः ॥

* एतानि वचनान्यपि [illegible] ।

भविष्यत्युत्तमे मिना सह धातोः परः स्संशब्दः प्रयोक्तव्यो वा ॥ होस्सं । पक्षे, होस्सामि । होहामि । होहिमि ॥

मोमुमैर्हिस्सा-हित्था ॥ १५

भविष्यति काले उत्तमे बहुवचनादेशस्य मो मु म इत्येतैः सह हिस्सा हित्था इत्येतौ वादेशौ भवतः ॥ होहिस्सा होहित्था । हसिहिस्सा हसिहित्था ॥ भविष्यामः । हसिष्यामः ॥ पक्षे होहिमो । होस्सामो । होहामो । हसिहिमो । हसिस्सामो । हसिहामो । एवं मुमयोरपि इत्यादि ॥

कृ, दा, श्रु, वचि, गमि, रुदि, दृशि, विदि रूपाणां काहं, दाहं, सोच्छं, वोच्छं, गच्छं, रोच्छं, दच्छं, वेच्छं ॥ १६

भविष्यति काले उत्तमैकवचने कृञादीनां स्थाने यथासंख्यं काहं प्रभृतय आदेशा भवन्ति ॥ काहं—करिष्यामि । दाहं =दास्यामि ॥ सोच्छं =श्रोष्यामि । वोच्छं =वक्ष्यामि । गच्छं =गमिष्यामि । रोच्छं =रोदिष्यामि । दच्छं =द्रक्ष्यामि ॥ वेच्छं—वेदिष्यामि ॥ इत्यादि ॥

श्रवादीनां तिबाद्यनुस्वारवर्जं हिलोपश्च वा ॥ १७

श्रु इत्यं श्रवादीनां प्रथममध्यमोत्तमेषु तिबादिषु परतो भविष्यति काले सोच्छं इत्यादय आदेशा भवन्ति ॥ अनुस्वारं विहाय हिलोपश्च वा ॥ सोच्छिइ सोच्छिहिइ । श्रोष्यति ॥ सोच्छंति सोच्छिहिंति । श्रोष्यन्ति ॥ सोच्छिसि सोच्छिहिसि । श्रोष्यसि ॥ सोच्छित्था सोच्छिहित्था । श्रोष्यथ ॥ सोच्छिमि सोच्छिहिमि । श्रोष्यामि ॥ सोच्छिमो सोच्छिहिमो । सोच्छिमु

सोच्छिहिसु। सोच्छिम। सोच्छिहिम। सोच्छस्सामा। सो-
च्छिस्सामु। सोच्छिहामो। सोच्छिस्साम। एवं वोच्छादिरपि ॥

उ, सु, मु, विध्यादिष्वेकस्मिन् ॥ १८

विध्यादिष्वेकस्मिन् उत्पन्नस्य प्रत्ययस्य यथासङ्ख्यं उ, सु, मु, इत्येत आदेशा भवन्ति ॥ हसउ, हससु, हसमु। हसतु हस। हसानि ॥ होउ, भवतु। होहि, भव। होमु, भवानि ॥

न्तु-ह-मो बहुषु ॥ १९

विध्यादिषु बहुषूत्पन्नस्य प्रत्ययस्य यथासङ्ख्यं न्तु ह मो इत्येत आदेशा भवन्ति ॥ हसन्तु। हसह। हसामो ॥

वर्त्तमानभविष्यदनद्यतनयोर्ज्ज ज्जा वा ॥ २०

वर्त्तमाने भविष्यदनद्यतने विध्यादिषु चोत्पन्नस्य प्रत्ययस्य ज्ज ज्जा इत्येतावादेशौ वा भवतः। पक्षे यथा प्राप्तं। वर्त्तमाने तावत्—होज्ज होज्जा हसेज्ज हसेज्जा। पक्षे होइ हसइ ॥ केचित्तु एवं पुरुषत्रयेऽपि एकवचन बहुवचन रूपाणि बोद्धव्यानि ॥ भविष्यदनद्यतने। होज्ज होज्जा। पक्षे होहिइ इत्यादि विध्यादिष्वेवं। केचित्तु होज्ज होज्जा, करेज्ज करेज्जा इत्यादि पदानां भवेत्, कुर्यात्, कुर्वीत, भवतु, भवतात्, करोतु कुरुतात् अभवत्, अकरोत्, अकुरुत, बभूव, चकार चक्रे। इत्यादिरूपं संस्कृतानुवादं कुर्वन्ति ॥*

* हेमचन्द्रमतानुसारिणैव तदेवं ज्ञातं भवेत् यथा तत्र "अन्ये तु अन्ये कालमपीच्छन्ति होज्ज भवति, भवेत्, भवतु, अभवत्, अभूत्, बभूव, भूयात्, भविता, भविष्यति अभविष्यत् इत्यर्थः।

मध्ये च॥ २१

वर्त्तमानभविष्यदनद्यतनयोर्विध्यादिषु च धातुप्रत्यययोर्मध्ये ज्ज ज्जा इत्येतावादेशौ वा भवतः। वर्त्तमाने—होज्जइ, होज्जाइ। पक्षे यथाप्राप्तम्। विध्यादिषु होज्जउ, होज्जाउ। भवेदित्यादि॥

नानेकाचः॥ २२

वर्त्तमानभविष्यदनद्यतनयोर्विध्यादिषु चानेकाचो धातोः प्रत्यये परे मध्ये ज्ज ज्जा इत्येतावादेशौ न भवतः किन्त्वन्त एव भवतः। हसइ, तुवरइ। अन्ते यथा हसेज्ज, हसेज्जा, तुवरेज्ज, तुवरेज्जा। एवमन्येऽप्युदाहर्त्तव्याः॥

ईअ भूते॥ २३

भूते काले धातोः प्रत्ययस्य ईअ इत्ययमादेशो भवति। हवीअ, हसीअ, आसीअ, गेहीअ, पढीअ। अभवत्, अहसत्, आसीत्, अग्रहीत्, अपठत्॥

एकाचो हीअ॥ २४

भूते काले एकाचो धातोः प्रत्ययस्य हीअ इत्ययमादेशो भवति। होहीअ। अभूत्॥

अस्तेरासिः॥ २५

अस्तेर्भूते काल एकस्मिन्नर्थे आसि इति निपात्यते। आसि राआ। आसि वहू। आसीद्राजा। आसीद्वधूः॥

णिच एदादेरत आत्॥ २६

णिच् प्रत्ययस्य एकारादेशो भवति। धातोरादेरकारस्य

च भाल्' भवति। कारेइ। हावेइ। पाढेइ॥ कारयति। हासयति। पाठयति॥

आवे च॥ २७

णिच आवे इत्ययमादेशो भवति चकारात् पूर्व्वोक्तच। कराविइ। हसावेइ। पढावेइ। कारावेइ इत्यादि॥

आविः क्त-कर्म्म-भावेषु वा॥ २८

णिच आविरादेशो भवति वा क्त प्रत्यये परतो भावकर्म्मणी च। कराविअं हसाविअं पढ़ाविअं कारिअं हासिअं पाढिअं। भावकर्म्मणोश्च कराविज्जइ। हसाविज्जइ। पढाविज्जइ। कारिज्जइ। हासिज्जइ॥ कारितं। हासितं। पाठितं। कार्य्यते, हास्यते, पाठ्यते॥

नैदावे॥ २९

क्त-भावकर्म्मसु णिच् प्रत्ययस्य एत् आवे इत्येता वादेशौ न भवतः। कारिअं। कराविअं। कारिज्जइ। कराविज्जइ॥ कारितं। कार्य्यते॥

अत आ मिपि वा॥ ३०

अकारान्तस्याङ्गातो मिपि परत आकारादेशो भवति वा। हसामि। हसमि॥

इच्च बहुषु॥ ३१

मिपो बहुषु परतोऽत इकारादेशो भवति। चकारादाकारश्च। हसिमो। हसामो। हसिमु हसामु॥

क्ते॥ ३२

तस्सिं एव्व देसे जणाणं पत्ति-स्सम कारिदा लक्खीअदि। पत्ति-स्समेण एव्व विज्जादिलाहो। अदो साधु कहिदं मए॥

—इत्यलं पल्लविदेण॥



## ॥ महानन्दोपाख्यानम् ॥

अस्ति दक्षिणारण्ये माल्यवान् नाम कश्चिद् भूधरराजः। तस्यो पत्यका भूमिषु भिल्ल पुलिन्दादि-पार्व्वतीय जनावास समाकीर्णा बह्वः पल्ल्यः सन्ति। तास्वनु गोदावरि कमलपत्तनाभिधोऽतीव सुरम्यो ग्राम आसीत्। तत्र बहवः ग्रस्य सम्पसम्पन्ना भिन्ना निवसन्ति स्म। महानन्दो नाम सदानन्दहृदयः कश्चिच्छिशोऽपि स-परिवार स्तस्मिन्नवात्सीत् स महा-नन्दः पञ्चविंशद्वर्षवयस्कोऽपि बाल इव नियतं क्रीड़ा परायण आसीत्। स "कानु" नामक मेकं प्रिय कुक्कुरं भाजनः सहचरं विधाय वंशीहस्तश्च सर्व्वदैव ग्रामा न्तर्गृहेषु बभ्राम। सर्वेषाञ्च प्रति-वासि जनानां घटहेषु तस्य प्रवे-शोऽबाधित एवासीत्। नियत मतिथक्रमाद् ग्रामस्थिता स्त्रियो नवोढ़ा वा वध्व स्तस्मात् साध्वस मपत्रपां वा नापुः। बालकवृन्दाः सन्तु केऽपि तस्य निर्मथ्यादं नाम चक्रपाणकः। सोऽपि सर्व्वदा स्व-ग्राम वासिना मवश्य कर्त्तव्य-सम्पादने सहायता मनु तिष्ठन् निज नित्य नैमित्तिक विधिजात निर्वर्त्तितुं नाक्षमभवत्। स प्रति-दिनं भोजनवेलायां [illegible]

देशे जनानां परिश्रमकारिता लक्ष्यते। परि-श्रमेणैव विद्यालाभः। अतः साधु कथितं मया। इत्यलं पल्लवितेन॥

यत्) ममानुचरो पथि न किञ्चित् द्रष्टव्यम्"— इति स च सर्वं प्रतिश्रुत्य ब्रह्मचारिणमनुजगाम । ततः स ब्रह्मचारी गुहामार्गपरम्परया गच्छन्नेकां परिव्राजकतिं वारिनिर्झरिणी मुत्तीर्य्य च विविध वन्य लता तरु राजि विराजितं प्रफुल्लकुसुमावलुपशोभितं कोकिलकलरवाकुलित अलिकुल गुञ्जन मुखरित कुञ्जवन विभूषित मद्रि राजस्य शिखरमेकमभिगतः ॥

॥ इति प्रथमोऽध्यायः ॥



## ॥ मातृस्तोत्रम् ॥

### ॥ द्वितीय उच्छ्वासः ॥

( १ )

स्निग्धं सुधाञ्चितमनःपरिमोहनाङ्क<br>
मानाख्य माकुल मनोऽभयदं प्रणम्यम् ।<br>
नामाक्षरं मधुर मुच्चरतो जनन्याः<br>
स्मित्ते ममोद्गत इवाखिलबाल्यभावः ॥

( २ )

अङ्के निधाय विहितार्त्तरवं विमुग्धं
मान्द्यापहं शमयितुं करमुन्नमय्य ।
जाता नवोदितविधुग्रहणमयासा
साऽद्य स्थिता स्मितमुखी मम सम्मुखीना ॥

( ३ )

निद्राऽतिकातरतनुं श्रममाकुलं न
मारोप्य मां स्वहृदय मधुरस्वरेण ।
धिन्नत्कराहति समूत्थित ताल मानं
गायन्त्यसौ मम पुरो जननी स्थिता सा ॥

( ४ )

सुप्तोत्थितस्य सहसा मम या निशम्य
बालस्य रोदनरवं, जननी विहाय ।
अहाय कार्य्यमपरं त्वरयाऽभ्यधावत्
स्नेहार्द्रभावमधुरा पुरतः स्थिता सा ।

( ५ )

पीडाभिभूतमलसाकुलिताङ्गमङ्ग
मालोक्य मां परिहृताशनपाननिद्रा ।
या रोदिति स्म ननु गद्गदमाकुला च
तामश्रुबिन्दुकलुषां जननीं समीक्षे ॥

( ६ )

बालं विचिन्त्य ननु मा मतुलाभिरूपं
लोकेषु वत्सलरसप्लुतमानसा या ।
आश्लिष्य गाढमुरसा परिचुम्बति स्म
स्नेहाभिषिक्तहृदया पुरतोऽद्य सा मे ॥



## ॥ प्राचीन-भूगोलवर्णनम् ॥

( पर्व्वप्रकाशितानन्तरम् )

पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभं ।
ईप्सितञ्च मनः कामं स्वर्गलोकञ्च शाश्वतं ॥
एवं दत्वा वरान् राजन् रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्तर्हितास्ततः ॥
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ॥
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः ।
राम मभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकं ॥
वंशमूलक मासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन् स्नात्वा वै वंशमूलके ॥
कायशोधन मासाद्य तीर्थं भरतसत्तम ।
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ॥
शुद्धदेहश्च संयाति शुभांल्लोकाननुत्तमान् ॥

ततो गच्छेत धर्म्मज्ञ तीर्थं त्रैलोक्यविश्रुतं ।
लोका यत्रोद्धृताः पूर्व्वं विष्णुना प्रभविष्णुना ॥
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यपूजितं ।
स्नात्वा तीर्थवरे राजन् लोकानुद्धरते स्वकान् ॥
श्रीतीर्थञ्च समासाद्य स्नात्वा नियतमानसः ।
अर्च्चयित्वा पितॄन् देवान् विन्दते श्रियमुत्तमां ॥
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वार्च्चयित्वा च पितॄन् स्वान् दैवतान्यपि ।
कपिलानां सहस्रस्य फलं विन्दति मानवः ॥
सूर्य्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्च्चयित्वा पितॄन् देवानुपवासपरायणः ।
अग्निष्टोममवाप्नोति सूर्य्यलोकञ्च गच्छति ॥
गवां भवनमासाद्य तीर्थसेवी यथाक्रमं ।
तत्राभिषेकं कुर्व्वाणो गोसहस्रफलं लभेत् ॥
शङ्खिनीतीर्थमासाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते वीर्य्यमुत्तमं ॥
ततो गच्छेत राजेन्द्र द्वारपालं तरन्तुकं ।
तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥

(क्रमशः)

कलिकाता सत्यधर्म्म श्रीरामनारायण [illegible]
[illegible]-श्रीवीरराजविप्रोपाध्याय प्रकाशित

संस्कृत भाषायां बहवो नाट्य ग्रन्थाः सन्ति। † तत्र धनञ्जय कृत दशरूपक मेवातिप्रसिद्धम्। वयमप्यत्र दशरूप मतानि तथा विश्वनाथ कविराज कृत साहित्य दर्पण ग्रन्थोक्त नाट्यशास्त्रमतानि च संक्षिप्य सहृदय पाठकेभ्य उपहरामः।

## ग्रन्थारम्भः।

संस्कृतालङ्कार शास्त्र पण्डिता हि प्रथमं काव्यं श्रव्य दृश्यत्व भेदेन द्विधा विभज्य स लक्षण भेद परम्परां दर्शयामासुः। तत्र श्रव्यस्य लक्षणं श्रोतव्य मात्रम् यथा रघुवंश, कुमारसम्भव, शिशुपालवधादयः। अप्रासङ्गिकत्वा दस्यात्र विस्तर कथनं परिहृत्य दृश्यस्यैव काव्यस्य सलक्षण भेदा नभिहितुं प्रवृत्ति रस्मत्स्य-स्माकं। दृश्यस्य लक्षणं यथा साहित्यदर्पणे—

"दृश्यं तत्राभिनेयं
तद्रूपारोपात्तु रूपकम्॥"

तत्र निरुक्त द्विविधे काव्य-भेदे दृश्यं (दृश्य नामको भेदः) अभिनेयं अभिनय योग्य मिति यावत्। अभिनयोहि—

रसभावादि व्यञ्जक चेष्टा

---

यात्मकं रसाश्रयम्। नृत्यं भावाश्रय माङ्गिकाभिनय प्रधानं। नृत्तन्तु तालख्याश्रय मात्र मभिनय शून्यमित्यर्थः। नृत्तस्य द्वौ भेदौ ताण्डवं लास्यञ्च तत्र उद्धतं नृत्तं ताण्डवं मधुर नृत्तं लास्यम्।

† नाट्य शास्त्रीय ग्रन्थानां नामानि— भरत कृतं नाट्यशास्त्रम्। सुन्दर मिश्रकृतो नाट्यप्रदीपः। रङ्गनाथस्य [illegible] नाट्यदर्पण, नाट्यालोचन, [illegible] ग्रन्थश्चास्ति [illegible]। नारायणदीक्षितकृत त्रिदशाभिनयिका व्याख्यायां नाट्यशेखर नाम नाट्य ग्रन्थस्याभिधानमस्ति। सदानन्द मिश्र कृत हनुमान नाटक व्याख्यायां नाट्यप्रदीपाक-नाम ग्रन्थस्य कथनमस्ति। रायमुकुट-भुजिङ्ग दीक्षित-वेद्यानि महादेवा नाटक रत्न कोष-श्चोक्तं च मनुर्वम्। मतिमादेन शूद्रकस्य वृत्तविलासचौर्यम् च कृतः।

विशेषः नायकादीनामवस्थानुकार इति वा। स च चतुर्व्विधः। आङ्गिको वाचिक आहार्य्यः सात्विकश्चेति। तत्र आङ्गिकः यथासमयं तत्तदवयवसञ्चालनरूप चेष्टाविशेषैर्नायकादीनामनुकारः, वाग्भिः क्रोधशोक हर्षाद्यवस्थोचितोच्चरिताभिर्य काव्यानुकरणं वाचिकोऽभिनयः, आहार्य्यो वेश भूषादिभि रनुकरणं, सात्विकस्तु मनसा स्वानुकार्य्य ( नायकादि ) स्वरूपेणात्मनि सम्भावनं। यत्रैवं चतुर्व्विधाभिनयानुष्ठानं भवति तदेव दृश्य काव्यं। इदं हि दृश्यकाव्यं रूपारोपात् नायकानां स्वरूपारोपात् रूपक मिति च कथ्यते॥

अस्य रूपकस्य दश भेदाः।

यथा दशरूपे—

"नाटकं सप्रकरणं
भाणः प्रहसनं डिमः॥
व्यायोग समवकारौ
वीथ्यङ्केहामृगाइति॥"

किञ्चान्येऽप्युपरूपकनाम विश्रुता अष्टादश भेदा दृश्यन्ते॥

यथा साहित्यदर्पणे—

"नाटिका त्रोटकं गोष्ठी,
सट्टकं नाट्यरासकं।
प्रस्थानोल्लापकाव्यानि
प्रेङ्खणं रासकन्तथा॥
संलापकं श्रीगदितं
शिल्पकञ्च विलासिका।
दुर्म्मल्लिका प्रकरणी
हल्लीशो भाणिकेति च।
अष्टादश प्राहुरुप
रूपकाणि मनीषिणः।
विना विशेषं सर्व्वेषां
लक्ष्म नाटकवन्मतम्॥*

केचित्तु—"डोम्बी श्रीगदितं भाणो भाणी प्रस्थान रासकाः।

* [illegible] नाटक [illegible] तोटके
नाम [illegible] भेदो दृश्यते यथा—
"दिव्य मानुष संयोगो यत्राङ्के [illegible] विदूषकः।
तोटकं नाम तत्प्राहु र्नियमो नाटकस्य तु।"
न ज्ञायते किमर्थं तोटके [illegible]

कठोराणि विधाय पुत्रस्य परिणा-
मातुलसुखसम्पद्धेतूनकल्पयत्।
तथैव सूर्य्यकिरणान् दुःसहताप-
करान् कृत्वापि सुशीतलजलधारा
वर्षणकारणं कृतवानिति न किम-
प्याश्चर्य्यम्। अथ कथं सूर्य्यकिरणा
जलधारापतनकारणमिति जिज्ञा-
सायां नवीनतत्त्वदर्शिन एकतान
मवलम्ब्य कुतर्कखण्डं कथयन्ति—
"दृष्टमेतद्बहुशो बहुभिः कदापि
तैजसाधारं जलपूर्णं कृत्वा यदि
कश्चित् सूर्य्यस्याधः स्थापयेत् तदा-
ऽसौ जलाधारो यथासमयं नीरसता-
मेति। रात्रौ तु न तथा भवतीति
एतेनैव तादृशाधारस्य नीरसता-
भवनं प्रति दिवाकरकर निकर-
स्यैव साक्षात्कारणता प्रतिपद्यते
नान्यस्य। यतो रात्रौ सूर्य्यं वि-
हायापरे वाय्वादयो वर्त्तन्ते।
भास्कर प्रभोत्तापेनैव तदाधार-
स्थितं जलं सञ्चितवक्रगत्याकृति-
वाष्परूपमालम्ब्य गगनमण्डले समु-
ड्डीनं भवति। इदानीं विचा-
र्य्यतां तावत् येनैव कारणेन सूर्य्य-
किरणैस्तदाधारस्थितं जलं शुष्क-
तामापन्नं तेनैव कारणेन प्रत्यहं
प्रतिक्षणं तपनतापेन महासागरो-
पसागर नदनदी ह्रद तड़ागादि-
जलाशयेभ्यो जलान्याकृष्टानि
भवन्ति ततस्तान्यत्यल्पाकृतिवाष्पी-
भूतानि जलानि पवनवेग सञ्चा-
लितानि दिवः कस्मिन्नपि भागे एव
पुनरेव जलरूपेण परिणमन्ति॥
अथ तानि जलानि क्रमेण वाष्पी-
भूतानि नीरदनामधेयरूपेण लक्ष्य-
न्ते। या हि जलदसमये गगन-
मण्डलव्यापिनी दूर्वादलश्यामल-
कालिमावली दृश्यते सा केवलं
पुनर्जलभवतापितानां वाष्पाणां
कदम्बकम् नान्यत्किमपि। अत-
एव "धूमज्योतिः सलिलमरुतां
सन्निपातः क्व मेघः"—इत्यादु-
क्तिरिदानीं भ्रमपूर्णेति प्रति-
भाति॥

भवतु तानि च वाष्पीभूतानि जलानि स्वगौरववशात् मध्याकर्षणनियमवशेन पुनरेव वृष्टिरूपेण धरातले निपतन्ति । अत एव साधूक्तम् ।

"सहस्रगुणमुत्स्रष्टु
माद्त्ते हि रसान्रविः ।,,
( रघुवंशः )

॥ इति संक्षेपः ॥

---

## ॥ परिहासः ॥

एकदा कश्चिन्मूर्खो गुरुः ( मन्त्रदाता ) शिष्यभवने समुपस्थितः । अथ शिष्यस्तं बहुसम्मानपूर्वकं साष्टाङ्गं प्रणिपत्यास्मै पाद्यार्घादिकं यथाक्रम मर्पयित्वा च कुशलवार्त्तां पप्रच्छ । ततः क्रमेण विविध कथा प्रसङ्गेन गुरुसमीपे कुशलप्रश्नः शिष्येणोपस्थापितः। गुरुजन कुशल विषयक प्रश्नस्य संस्कृतभाषयैवोत्तरं वक्तव्यमिति निश्चित्य स गुरुरुवाच 'किं कथयामि सा हि मे माता हृद्धविस्वा तपस्विनी' वतीव दुःखा जातेति गुरोरभिप्रायः ! ! !

अन्येद्युरपरः कश्चित् तादृशो गुरुः शिष्यभवने समागतः शिष्यं चरण लुण्ठित कलेवरं दृष्ट्वा दक्षिण हस्तमुद्यम्य "पुत्रवान् भवेति" शुभाशिषमदात् । एतद् वसरे शिष्यपत्नी गुरुपदे प्रणामं कृतवती। सोऽपि गुरुस्तस्यै च 'पुत्रवान् भवेति,, पूर्वकथिताशिषमदात्, अथ शिष्यो बद्धाञ्जलिरुवाच 'प्रभो ! श्रुतं मया बहुशः स्त्रीलिङ्गस्थले वतीति पदं '

गुरुः । वत्स ! विस्मृतं मया "वती पुत्रवान् भव,, ।

शिष्यः । अन्ते वतीति पदं प्रयोगो भवति ।

गुरुः । सत्यं सत्यं "पुत्रवान् वती भव,, ।

शिष्यः । पुत्रस्यान्ते वतीप्रयोगः ।

गुरुः । 'पुत्रवतीवान् भव,, ।

अथ शिष्यस्तूष्णीम्बभूव॥ इति॥

## ॥ प्राप्तपत्रम् ॥

॥ कायस्थानां प्रमादः ॥

सम्प्रति कियत्कालादारभ्य वङ्गाधिवासी ब्रह्मावर्तादिदेशनिवासिभिः कायस्थ सन्तानैरेकमत्यमवलम्ब्यात्मनां क्षत्रियवीनित्वं प्रतिपादयितुं बद्धपरिकराः पद्मस्कन्दादि विविध पुराणेभ्यः स्वमतसमर्थकानि

'द्विजातीनां यथा दानं
यजनाध्ययनं तथा ।
वैश्यादुक्ता तु तद्वृत्ति
र्ब्राह्मणक्षत्रियादधः ॥',
"माहिष्य वनिता सूनुं
वैदेहाख्यं प्रसूयते ।
स कायस्थ इति प्रोक्त
स्तस्य कर्म्म विधीयते ॥
लिपीनां देशजातानां
लेखनं ससमाचरेत् ।
गणकत्वं विचित्रञ्च
वीजपाठो प्रभेदतः ॥,

—इत्यादि वचनान्युद्धृत्य पुस्तकाकारेण प्रकाशयन्तः उच्चनिनदेन दिगन्तं प्रतिध्वनयन्ति । वयं हि मध्यस्थाः कायस्थानां क्षत्रियवीनित्वस्य सिद्धावसिद्धौ वास्माकं क्षति र्वृद्धिर्वा न स्तः । परन्त्विदानीं विचार्य्यतान्तावत् द्विजातिगौरववर्द्धनकरान् तत्तत्पूर्व्वं समवान् तूष्णीभावेनातिवाह्य वर्णभेदमर्य्यादाक्षयकरे वर्त्तमान समये कायस्थानां क्षत्रियवीनित्वसिद्धावपि तेषां सम्मानादिवृद्धिलाभो भविष्यति वा नेति । एतद्विचारात् पूर्व्वं वर्त्तमान समये कायस्थानां कुत्र कुत्र प्रदेशे कियत्परिमाणं सम्मानमस्तीति समालोचनं न तावदनुचितम् । प्रथमं तावत् वङ्गं प्रति दृष्टिर्निधीयताम् । अत्रेदानीं कायस्थ ब्राह्मणयोः केवलमुपवीतधारणगत वैषम्यं लभ्यते ब्राह्मणा उपवीतधारिणः कायस्थास्तु निरुपवीता इति । एतत्कालवैषम्येण कायस्थानां राज-

समाज सम्मान लाभादौ न कापि हानिर्भवति। तेहि ब्राह्मणाना मपि श्लाघनीया भूत्वा सभायां पूजामाप्नुवन्ति तथा ब्राह्मणवदुच्च-राज पदान्यपि लभन्ते। अतो न ज्ञायते कथं ते वङ्गीय कायस्था इदानीं ब्राह्मणतुल्यमर्य्यादानुन्ना अपि, हीन क्षत्रिय पदलाभाय समुत्सुकाः संवृत्ताः। तेषां क्षत्रियत्वलाभः केवलं यज्ञोपवीत-विधिसम्पादनव्ययभारायैव नतु विशेषसम्मान लाभायेत्यनुमीयते। वङ्गदेश निवासिभिः क्षत्रनाम्ना चिरपरिचितैरपि राजभिः सम सुत्तर पश्चिमाञ्चलदेशवासिनः क्षत्रिया न विवाहादि व्यवहारं कुर्वन्ति तद्देशस्तु तावदेषाम-चिर जातानां क्षत्रियाणां कथा। क्षत्रियो भूत्वा क्षत्रियजातीयैः सह व्यवहारं कर्त्तुमसमर्थस्य क्षत्रियत्व लाभो विडम्बनामात्रम्।

उत्तरपश्चिमाञ्चलेप्येतादृशी गतिः तत्रतु बहुकालस्थायियवन-प्रभुत्वबला द्धितः पूर्व्वमपि ब्राह्मणाः निःसङ्कोचं मद्यम्लेच्छै-रपि सार्द्ध मेकत्रासने समुपविश्य ताम्बुलभोजनादिकं कुर्व्वन्तिस्म तथा तान् विविधसम्मानं दर्शय-न्तिस्म तत्का कथा स्वधर्म्मानुगा-मिनां भद्रकायस्थानां विशेषतः सम्प्रति पूर्व्वभाव परिवर्त्तने समये तत्र ब्राह्मण कायस्थयो र्निकतोप-वीतिगत वैषम्यं विना नान्यत् किमपि लक्ष्यते इत्यादि।

इत्यञ्च निखिलदेशदेशिना साम-जिकावस्थादि पर्य्यालोचनेन कायस्थ सन्तानानां शूद्रयोनित्व निबन्धना न कापि हानिर्भवति यत्किञ्चित् न्यूनता दिश्यते च साऽचिरा-देव सर्व्वपरिवर्त्तन कारिणा कालेनैवापनीता भविष्यति तद्र्थं वैतादृशायासः। ब्राह्मणादिद्विजा-तीना मुपवीत परित्याग कारिणि समये कायस्थसन्तानानां तद्

ग्रहणे योऽभिलाषः स एव हि तेषां चिरहिजाल्युच्छिष्टग्रहीतॄणां श्रद्धयोनित्व-परिचायकः—इत्यलं पल्लवितेन ।

कस्यचिदुदासीनस्य ॥

—— ० ——

## ॥ छन्दःशास्त्ररहस्यम् ॥

॥ वा पादान्ते ॥ (पिङ्गलसूत्रम्)

पादान्ते स्थितस्य लघोर्गुरुसञ्ज्ञा-विकल्पेन गुरोर्वा लघुसंज्ञा विभाषेति तदर्थः ॥ इदमनावगन्तव्यम्—यद्वंशस्थादौ पादान्ते लघोर्गुरुत्वं न भवतीति । यदाह—

"वंशस्थकादिचर-
णान्तनिवेशितस्य ।
गत्वं लघोर्नहि तथा
श्रुतिगम्भीरदायि ।
श्रोतुर्वसन्ततिल-
कादिपदान्तवर्त्ति ।
लो गत्वमत्र विहितं
विबुधैर्यथा तत् ॥"

केचित्तु प्राकृते—इं, हिं, उं, हुं, हं, इंहकाराणां तथैकारौकारयोर्वा पादान्ते लत्वं वदन्ति । अपभ्रंशेच । पादान्तयोरपि वर्णयोरैकारौकारयोरुच्चारणवशात्-लाघवं वदन्ति ॥

## ॥ प्राकृतप्रकाशः ॥

ङौ तुमम्मि ॥२८

युष्मदः पदस्य ङौपरतः तुमम्मि इत्यादेशो भवति । तुमम्मि ठ्ठिअं । त्वयि स्थितं । पूर्वोक्ताः तइ, इत्यादयश्चत्वा-रोऽप्यादेशा भवन्ति ॥

तुज्झेसु तुम्हेसु सुपि ॥ २९

युष्मदः पदस्य सप्तमीबहुवचने तुज्झेसु तुम्हेसु इत्येता

वादेशौ भवतः। तुम्हेसु ठिअं तुम्भेसु ठिअं। युष्मासु स्थितम्॥

अस्मदो हं अहं अहअं सौ ॥ ४०

अस्मदः पदस्य सौ परतो हं अहं अहअं इत्येत आदेशा भवन्ति॥ हं अहं अहअं करोमि। अहं करोमि॥

अह्मिरमि च ॥ ४१

अमि परतोऽस्मदः पदस्य अह्मि इत्यय आदेशो भवति। सौ च। अह्मि पेक्ख। अह्मि करोमि। मां प्रेक्षस्व। अहं करोमि॥

मं ममं ॥ ४२

अमीति वर्त्तते। अस्मदः पदस्य अमि परतो मं ममं इत्येता वादेशौ भवतः। मं ममं पेक्ख मां प्रेक्षस्व।

अह्मे जश्शसोः ॥ ४३

अस्मदः पदस्य जश्शसोः परतः अह्मे इत्ययमादेशो भवति। अह्मे आगदा। अह्मे पेक्ख वयमागताः। अस्मान् प्रेक्षस्व॥

णो शसि ॥ ४४

अस्मदः पदस्य शसि परतो णो इत्ययमादेशो भवति णो पेक्ख। अस्मान् प्रेक्षस्व॥

आङि मे ममाइ ॥ ४५

अस्मदः पदस्य आङि परतो मे ममाइ इत्येता वादेशौ भवतः। मे कअं ममाइ कअं। मया कृतम्।

ङौ च मइ मए ॥ ४६

अस्मदः पदस्य ङौ परतो मइ मए इत्येता वादेशौ भवतः। चकारात् तृतीयैकवचने च। मइ मए ठिअं। मइ मए कअं। मयि स्थितं। मया कृतम्॥

अह्मेहिं भिसि ॥ ४७

अस्मदः पदस्य भिसि अह्मेहिं इत्ययमादेशो भवति। अह्मेहिं कअं। अस्माभिः कृतम्॥

मत्तो, मइत्तो, ममादो, ममादु, ममाहि ङसौ ॥ ४८

अस्मदः पदस्य ङसौ परत एत आदेशा भवन्ति । मत्तो गदो । मइत्तो ममादो ममादु ममाहि गदो । मत्गतः ॥

अम्हाहिंतो अम्हासुंतो भ्यसि ॥ ४९

अस्मदः पदस्य भ्यसि परत अम्हाहिंतो अम्हासुंतो इत्येतावादेशौ भवतः । अम्हाहिंतो अम्हासुंतो गदो । अस्मत्गतः ॥

मे मम मह मज्झ ङसि ॥ ५०

अस्मदः पदस्य ङसि परत एत आदेशा भवन्ति । मे धणं मम, मह, मज्झ धणं । मम धनं ॥

मज्झ णो अम्ह अम्हाण अम्हे आमि ॥ ५१

अस्मदः पदस्य आमि परत एत आदेशा भवन्ति । मज्झ, णो, अम्ह, अम्हाणं, अम्हे धणं ॥ अस्माकं धनं ॥

ममम्मि ङौ ॥ ५२

अस्मदः पदस्य ङौ परतो ममम्मि इत्यादेशो भवति । ममम्मि ट्ठिअं मयि स्थितं । पूर्वोक्तौ मइ मए इत्येतौ च ॥

अम्हेसु सुपि ॥ ५३

अस्मदः पदस्य सप्तमी बहुवचने सुपि परतः अम्हेसु इत्ययमादेशो भवति । अम्हेसु ट्ठिअं ॥*

हे दो ॥ ५४

पदस्येति निवृत्तं सुपोऽपि वर्तते । [illegible]

---

युष्मच्छब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | तुमं ( तं ) | तुम्हे, तुज्झे |
| २या | ( तं तुं ) तुमं | तुम्हे, तुज्झे वो |
| ३या | तइ, तुए, तुमए तुमे ( तुमाइ ) तेद्दे | तुम्हेहिं तुज्झेहिं तुम्भेहिं |
| ५मी | तत्तो ( तइत्तो, तुमादो, दुहि ) | तुम्हाहिंतो |
| ६ठी | तइ, तुज्झ, तुम्ह, तुह, तेद्दे | वो, भे, तुम्हाणं तुज्झाणं |
| ७मी | तइ ( तए, तुमए, तुमे, तुमम्मि ) | तुम्हेसु, तुज्झेसु |

अस्मच्छब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | अहं, ( हं, अहअं अहम्मि ) | अम्हे वयं |
| २या | मं, ममं ( अहम्मि ) | अम्हे, णो ([illegible]) |
| ३या | मे, मए ( मइ ममाइ ) | अम्हेहिं |
| ५मी | मत्तो ( मइत्तो ममादो ) | अम्हाहिंतो |
| ६ठी | मे, मम, मज्झ, मह | अम्हाणं, अम्ह |
| ७मी | मइ ( मए ) ममम्मि | अम्हेसु |

आदेशो भवति सुपि परतः। दोहिं। दोसु। द्वाभ्यां। द्वयोः॥

ते स्तिः॥ ५५

त्रिशब्दस्य सुपि परतः ति इत्यादेशो भवति। तीहिं तीसु। त्रिभिः। त्रिषु॥

तिण्णि जश्शस्भ्यां॥ ५६

त्रिशब्दस्य जश्शस्भ्यां सह तिण्णि इत्यादेशो भवति। तिण्णि आगदा। तिण्णि पेक्ख। त्रय आगताः। त्रीन् प्रेक्षस्व॥

द्वेर्दुवे दोण्णि वा॥ ५७

द्विशब्दस्य जश्शस्भ्यां सह दुवे दोण्णि इत्येता वादेशौ भवतः। दुवे कुणन्ति। दोण्णि कुणन्ति पक्षे दो कुणन्ति। द्वौ कुरुतः। दुवे पेक्ख। दोण्णि पेक्ख। पक्षे दो पेक्ख। द्वौ प्रेक्षस्व॥

चतुरश्चत्तारोचत्तारि॥ ५८

चतुर्शब्दस्य जश्शस्भ्यां सह चत्तारो चत्तारि इत्येता वादेशौ भवतः। चत्तारो चत्तारि पुरिसा कुणंति। चत्वारो पुरुषा कुर्वन्ति। चत्तारो चत्तारि पुरिसे पेक्ख। चतुरः पुरुषान् प्रेक्षस्व॥

एषा मामोण्हं॥ ५९

एषां द्वि त्रि चतुः शब्दाना मामः स्थाने ण्हं इत्ययमादेशो भवति। दोण्हं धणं। तिण्हं धणं। चतुण्हं धणं। द्वयोर्धनं त्रयाणां वा तिसृणां धनं। चतुर्णां वा चतसृणां धनं॥

शेषोऽदन्तवत्॥ ६१

शेषः सुब्विधिरदन्तवद्भवति। अकारान्तादभिसो हिं इत्यय मादेश उक्त इकारोकारान्तादपि भवति। अग्गीहिं, वाऊहिं, मालाहिं णईहिं। अग्गिस्स, वाउस्स, अग्गिदो वाउदो। एवं

दोहिं तीहिं चउहिं । अग्निभिः वायुभिः मालाभिः, नदीभिः । अग्नेः वायोः । अग्न्योः वाय्योः । द्वाभ्यां त्रिभिः वा तिसृभिः । चतुर्भिः, वा चतसृभिः ॥

न ङिङस्योरेदातौ ॥ ६१

इकारोकारान्तौ ङिङस्योरदन्तवत् एकारोकारौ न भवतः । अग्गिम्मि, वाउम्मि, अग्गिदो वाउदो । अग्गीहि, वाऊहि । अग्नौ । अग्नेः । वायौ, वायोः ॥

ए भ्यसि ॥ ६२

नेत्यनुवर्त्तते । भ्यसि परत इकारोकारान्तयोरदन्तवदेत्वं न भवति । अग्गीहिंतो । वाऊहिंतो । अग्निभ्यः । वायुभ्यः ॥

द्विवचनस्य बहुवचनं ॥ ६३

सर्व्वासां विभक्तीनां सुपां तिङां च द्विवचनस्य बहुवचनं प्रयोक्तव्यं । वृक्षौ = वच्छा । वृक्षाभ्यां = वच्छेहिं वा वच्छाहिंतो । वृक्षयोः = वच्छाणं वा वच्छेसु । तिङो यथा तिष्ठतः = चिट्ठंति ॥

चतुर्थ्याः षष्ठी ॥ ६४

चतुर्थी विभक्तेः स्थाने षष्ठी विभक्ति र्भवति । बह्मणस्स देहि । बह्माणं देहि । ब्राह्मणाय देहि । ब्राह्मणेभ्यो देहि ॥

॥ इति वररुचिकृते प्राकृतप्रकाशे सर्व्वनाम परिच्छेदः षष्ठः ॥



## ॥ भाषाविचारः ॥

| संस्कृत | प्राकृत | हिन्दी | बङ्गाली | महरट्टी |
|---|---|---|---|---|
| वार्त्ता | वत्ता | बात् | बात्ता | |
| अहम् | अहं हं हम्मि | मैं | आमि | मी |

| संस्कृत | प्राकृत | हिन्दी | वङ्गाली | महरट्ठी |
| --- | --- | --- | --- | --- |
| वयं | अह्मे, वअं | हम् | आमरा | आम्ही |
| मम | मुह,* मज्झ | मुझ | आमार (मोर ग्राम्य) | माझा |
| अस्माकं | अम्हाणं | हमरा † | आमादेर मोदेर (ग्राम्य) आमादिगेर (साधु) | आह्माला आह्माण |
| तव | तुह, तुज्झ | तुझ | तोमार तोर | तुझा |
| म्रियते | मरइ | मरताहै | मरितेछे | |
| भविष्यति | हुविस्सदि | होगा | हबे | होईल |
| भविष्यामि | होस्सामि, होस्सं, होहामि | हूंगा | हबो | |
| अभवत् | हुवीअ, होहीअ, | भया, हुआथा। | हइयाछे हयेचे ( ग्राम्य ) | होता |
| भवतु | होज्जउ, होज्जाउ | हूजिए | होक्, होक | |
| ज्वालय | जालेहि | जलाना | जालाओ | |
| कृत्वा | करिअ | करके | करिया | |
| ददामि | देमि | देताहूं | दितेछि | |
| ददाति | देदि | देताहै | दितेछे | |
| दत्तम् | दिण्णं | दिआ, दीन‡ | देओआ वा दत्त (साधु) | |
| मार्गयति | मग्गेदि | मांगताहै | माङ्गे | मागतो |

* प्राचीन वङ्गभाषायां षष्ठ्यां मुइ, मुह पदानां व्यवहारो दृश्यते।

† वङ्गीय कीर्तने हमारा इति पदस्य बहुलतरः प्रयोगोऽस्ति।

‡ रामदीन, कालीदीनाद्यभिधेया बहवो पश्चिमोत्तरप्रदेशे निवसन्ति मनुष्याः।

| संस्कृत | प्राकृत | हिन्दी | वङ्गाली | महरट्ठी |
|---|---|---|---|---|
| ज्ञात्वा | जाणिअ | जानकर | जानिया | |
| शृणोमि | शुणामि | सुन्ताहु' | शुनितेछि | |
| श्रुत्वा | शुणिअ | सुनकर | शुनिया | |
| शृणु | सुण, सुणाहि | सुन | शोन | |
| धाव | धोवेहि | धोना | धोअ | |
| कथयति | कहइ | कहताहै | कहितेछे | कथगी |
| कथय | कहेहि, कधेहि | कहो | कओ | |
| रक्षामि | रक्खामि | राखताहु' | राखछि वा राखितेछि | |
| अस्ति, | अत्ति, अच्छि | | आछे | आहि |
| सन्ति | अच्छन्ति | | आछेन | |
| स्थ | अच्छध | | आछ | |
| वदति | बोल्लइ, वोलइ | बोलताहै | बलितेछे | |
| लभते | लहदि | लहते, लेते | लइतेछे | |
| गतः | गओ | गया | गेछे | |
| पठति | पढ़इ | पढ़ताहै | पड़ितेछे | |
| पतामि | पड़ेमि | पढ़ताहु' | पड़ितेछि | |
| पतितः | पड़िदो | पड़ा | पड़ा * | |
| वर्द्धते | वड्ढदि | बाढ़ताहै | बाड़ितेछे | |
| वर्द्धतां | वड्ढइ | | वाड़ुक | |
| पश्यामि | देक्खामि | दिखताहु' | देखितेछि | |
| दर्शय | देक्खावहि | दिखाना | दाखाओ | दाकाओ |

* बहुषु वङ्गीयप्रदेशेषु पतितशब्दस्य अद्यापि "पड़ा" इत्युच्चारिणः ।

| संस्कृत | प्राकृत | हिन्दी | बङ्गाली | महरट्ठी |
|---|---|---|---|---|
| । | । | । | । | । |
| युध्यते | जुज्झइ | जुझताहै | जोजचे | |
| बुध्यते | बुज्झइ | बुझता | बुजचे | |
| म्लायति | मलइ | मलताहै | मलितेछे | |
| स्फुटति | प्फुट्टइ | फुटताहै | फुटितेछे | |
| पारयामि | पारेमि | | पारि | |
| पादम् | गोड़ | गोड़ | गोड़ | |
| उदर | पोट, पोट्ट | पेट, पोटा | पेट, पोंटा | पोट |
| पुंश्चली | छिणालिआ | छिनाल | छेनाल | छिनाल |
| स्तम्भ | खुण्ट | खोंटा | खोंटा | खुंटा |
| पिधेहि | ढक्केहि | ढाको | ढाको | ढांक |



## ॥ मूल्यप्राप्तिस्वीकारः ॥

श्रील श्रीयुक्त पाकुड़ाधिपतिः

(१८७३, १८७४, १८७५ ई०) बङ्गदेशः १०)

श्रीयुक्त बाबु शम्भचन्द्र चक्रवर्त्ती

(१८७६) राजसाही बङ्गदेशः २।/

कलिकाता-सत्ययन्त्रे श्रीमहेन्द्रनाथसरकारेणमुद्रितः। लाहोरस्थ-श्रीहीरालालचट्टोपाध्यायेनप्रकाशितः॥

Regisetred N0. I2

ॐ

# विद्योदयः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयतु सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारस्यीलीकृतशानुशीलनः। विद्योदयोनिराकुर्य्यादविद्यातिमिरम्भुवि॥

खण्ड ६ ] जुन १८७६। ई० [ संख्या ६

## ॥ विदूषकः ॥

॥ पृथिवी महानगरी ॥

भो हदोह्मि इमस्सिं कलिराअ वासभूमीए कलिअत्ता णअरे आअदो णिच्चमेव इदो तदो परि-ब्भमन्तो पडिक्खणं अच्चरीअ पदत्थ दंसण जादकुदूहलो सज्झा-समएवि ण भोअणं पावामि। तिह्मया सुक्ककण्ठं अणाहं विअ रास्रमग्गे भमन्तं मं ण कोवि भोअ णव्वावारं सुमरेदि। अथवा एदे णाअरिआ सव्वदेव णए साहूं परि भमन्ति ण पाण भोअणाइं अणु चिट्ठन्दि। अहं जस्सिं जस्सिं मग्गे जस्सिं समए गच्छेमि तस्सिं समए तं जेव्व मग्गं णअरवासिहिं आउलीकिदं पेक्खामि, किं एदाणं

---

भो हतोऽस्मि अस्मिन् कलिराज वासभूमौ कलिकातानगरे आगतो नित्यमेव इतस्ततः परि भ्रमन् प्रतिक्षणं आश्चर्यपदार्थदर्शनजातकुतूहलः सन्ध्यासमयेऽपि न भोजनं प्राप्नोमि। तृष्णया शुष्ककण्ठं अनाथमिव राजमार्गे भ्रमन्तं मां न कोऽपि भोजनव्यापारं स्मारयति। अथवा

वासभवणे उववेसणट्ठाणं णत्थि। किं एदे ण भोअणं अणुचिट्ठन्दि। अथवा सुदं मए एदेहि णाअरिआ विलसणणामअस्स कस्सवि घरे दाहिणहत्थव्वावारं अणुचिट्ठन्दि। भो का गदी, एत्थ मुद्दाव्वअं विणा ण कोवि वाकालावं करेदि। अहं णअरस्स समन्तादो परिक्कमणं कदुअ णिवासट्ठाणलाहे हदासो केणावि वुड्ढमोदअआरेण मग्गे दिट्ठो। सोवि वुड्ढो मं पेक्खिअ दआक्कान्तहिअओ मए सह णिअमं किदवन्तो। स मं भोअणं पाणं अ दास्सादि। अहं रत्तिं तस्स पण्णवत्थुस्स रक्खां करिस्सं त्ति॥

तदो पहुदि अहं दिअहे राअभवण, मुद्दाघर, विआरालअ, विज्जालअ, णअरदंसणत्थम्भ, गंगासेदु सुट्ठे दंसणीअपदत्थे पेक्खिअ आअदो रत्तिं मोदअआरस्स घरे सुवेमि। अहो दिअहपरिक्कमेण कादरीभूतस्स मे रत्तिं वि ण प्पकामं णिद्दा वट्टइ। पढमं मे हिअअं महएक्कमित्त सद्दध्म

एते नागरिकाः सर्वदैव मया सार्द्धं परिभ्रमन्ति न पानभोजनान्यनुतिष्ठन्ति। अहं यस्मिन् यस्मिन् मार्गे यस्मिन् समये गच्छामि तस्मिन् समये तस्मिन्नेव मार्गे नगरवासिभिराकुलीकृतं प्रेक्षे किमेषां वासभवने उपवेशनस्थानं नास्ति, किमेते भोजनं नानुतिष्ठन्ति अथवा श्रुतं मया एते हि नागरिका विलसन नामकस्य कस्यापि गृहे दक्षिणहस्तव्यापारमनुतिष्ठन्ति। भो का गतिः। अत्र मुद्राव्ययं विना न कोपि वाकालापं करोति। अहं नगरस्य समन्तात् परिभ्रमणं कृत्वा निवासस्थानलाभे हताशः केनापि वृद्धमोदककारेण मार्गे दृष्टः। सोऽपि वृद्धो मां प्रेक्ष्य दयाक्रान्तहृदयो मया सह नियमं कृतवान्। स मां भोजनं पानञ्च दास्यति, अहं रात्रौ तस्य पण्यद्रव्यस्य रक्षां करिष्यामीति॥

ततः प्रभृति अहं दिवसे राजभवन-मुद्रा-गृह-विचारालय-विद्यालय-नगरदर्शनस्तम्भ-गङ्गा-सेतु-सुस्थान् दर्शनीयपदार्थान् प्रेक्ष्य आगतो रात्रौ मोदककारस्य गृहे स्वपिमि। अहो दिवस-परिभ्रमेण कातरीभूतस्य मे रात्रावपि न

आरिणीए बह्मणीए सुहसरोज
सुमरणेण आउलीभूदं णिरन्तरं
विउलदर दुःखं अणुभोदि। तदो
गण्डस्सोवरि विप्फोडओ विअ
दंस मसआ कण्णोवघादि संगीदं
कदुअ सव्वांगं कुट्टन्ति, अथ ओह्ल-
दपलिदंसणआरिणो विअ मूसिआ
कोलाहलं कदुअ सव्वाइं जेव्व
भाअणाइं एक्कक्केण उग्घाडेंदि
सअणीअं विमे मणुस्स सोणिद
लुद्धेहिं च्छुद्दकीड़कुलेहिं अहिकिदं
दाणं पहावेण ण मे एत्थ क्खणं
उववेसणे सत्ती का कधा सअणे।
एवं णिद्दा विग्घआरिहिं परि
हुदस्स मे अक्खीसु जेव्व रअणी
पहादा भोदि। किं कादव्वं त्ति॥

एवं अणिद्दाकादरीभूदोऽहं
एकस्सिं रत्तिं सअणीअमत्तए
उवविसिअ चिंतिदवन्तो। अम्हो
अम्हे णिअदणअण सम्मुह ट्ठिदे
पइद सुंदरपदत्थे उवेक्खिअ
कित्तिमसुन्दर पदत्थस्स बहुमाणं
करेम्ह, दाणीं हि सव्वे राअ-
णअरीं कलिअत्तां पेक्खिअ विम्ह
अंति मिट्ठलोअणा होन्दि। किन्दु

प्रकामं निद्रा वर्तते। प्रथमं मे हृदयं मम
एकमात्र सहधर्मचारिण्या ब्राह्मण्या सुख-
सरोजस्मरणेन निरन्तरं विपुलतरदुःखमनु
भवति। ततो गण्डस्योपरि विस्फोटक इव दंश-
मशकाः कर्णोपघाति सङ्गीतं कृत्वा सर्वाङ्गं
कुट्टयन्ति। अथापहृतपरिदर्शनकारिण इव
मूषिकाः कोलाहलं कृत्वा सर्वाण्येव भाजनानि
एकैकेन उद्घाटयन्ति। शयनीयमपि मे मनुष्य-
शोणितलुब्धैः क्षुद्रकीटैः अधिकृतम्; तेषां
प्रभावेन न मेऽत्र क्षणमुपवेष्टुं शक्तिः का
कथा शयने। एवं निद्राविघ्नकारिभिः परिभूतस्य
मे अक्ष्णोरेव प्रभाता रजनी। किं कर्तव्यम्-
अनिद्राकातरीभूतोऽहमेकस्मिन् रात्रौ शय
नीयमस्तके उपविश्य चिन्तितवान्—अहो!
[illegible]ा वयं नियत नयन सम्मुख स्थितान्
प्रकृत सुन्दर पदार्थानुपेक्ष्य कृत्रिमसुन्दरपदार्थस्य
बहुमानं कुर्मः। इदानीं सर्वे राजनगरीं कलि-
कातां प्रेक्ष्य विस्मय स्तिमित लोचनाः भवन्ति
किन्तु संप्रति पापमयं पदार्थं प्रसवितुं निरतं

सअल अच्चरीअ पदत्थ पसविणीं णिअदूं णअण पहवत्तिणिं पहिवीं पड़ि ण कस्सु वि दिट्ठी णिपडेदि। रण्णो पलिवत्तणेण णअण अराणं विहाण पलिव-त्तणं होदि किन्दु पहिवी महाणअरी ण कस्सिं वि समए णिदिट्ठट्ठाणादो चलेदि, सुणीअदि अ सिट्ठिआलादो आरब्भिअ कोवि पुलिस विसेसो से राआ ण दस्स मलणं पलिवत्तणं वा त्थित्ति।

इअरस्सिं णअरे जणा कोस वि णिद्दिट्ठट्ठाणादो आअच्छन्दि तथा णअरादो कस्सिं वि लक्खिदट्ठाणे पचलदि, पहिवीए दु आअदाणं णिग्गदाणं अ पुव्वावरट्ठाणाइं ण लक्खीअन्दि परन्दु पवहं अग-णिदा जीआ इमाए आअच्छन्दि अगणिदा इमाए णिग्गच्छन्दि अ।

अण्णस्सिं णअरे एक्को अवरं पअत्तिअ धणाइं घेत्तुण पविट्ठन्दि, पहिवीए सव्वे सव्वं पअत्तिअ धणाइं गेहन्दि किन्दु पआणा समए धणाणं का कथा सरीरं वि पलिचजिअ गच्छन्दि।

अवरस्सिं णअरे वाणिज्जआरिणो धणव्वअं कदुअ धणाइं लहंदि,

---

नयन पथवर्तिनीं पृथिवीं प्रति न कस्यापि दृष्टि निपतति। राज्ञां परिवर्तनेन राजनग-राणां परिवर्तनं भवति किन्तु पृथिवी महा-नगरी न कस्मिन्नपि समये निर्दिष्टस्थानाच्चलति श्रूयते च "सृष्टिकालादारभ्य कोऽपि पुरुष-विशेषोऽस्या राजा न तस्य मरणं परिवर्तनं वास्तीति"॥ इतरस्मिन्नगरे जनाः कस्मादपि निर्दिष्टस्थानादागच्छन्ति तथा नगरात् कस्मि-न्नपि लक्षित स्थाने प्रचलन्ति। पृथिव्यास्तु आगतानां निर्गतानां पूर्वापरस्थानानि न लक्ष्यन्ते किन्तु प्रवहमगणिता जीवा अस्यामाग-च्छन्ति अगणिता अस्या निर्गच्छन्ति। अन्यस्मि-न्नगरे एकोऽपरं प्रवर्त्य धनानि गृहीत्वा प्रविशन्ति पृथिव्यां सर्वे सर्वं प्रवर्त्य धनानि गृह्णन्ति किन्तु प्रयाणसमये धनानां का कथा शरीरमपि परि-त्यज्य गच्छन्ति। अपरस्मिन्नगरे वाणिज्य-

पहिवीए वाणिज्ज आरिणी धणव्वअं कदुअ ण किम्पि दिट्ठफलं लहंदि ब्रुवीअदि अ 'अदिट्ठफललाहाअ एदे पउत्ता त्ति'। भोदु जाणं धणं ताणं अदिट्ठफललाहो होदु अह्माणं दु उअल पूलणं जेव्व फलम्। वत्तमाण समए गंभीरहस्सरसे अभिलासो वट्टइ अदो मए बहुपरिस्समेण अअं पबन्धो लिहिदो ॥

---

कारिणी धनव्ययं कृत्वा न किमपि दृष्टफलं लभन्ते ब्रूयते च "अदृष्टफललाभायैते प्रवृत्ता इति"। भवतु येषां धनं तेषां अदृष्टफललाभो भवतु अस्माकं तूदरपूरणमेव फलं। वर्त्तमान-समये गम्भीरहास्यरसे अभिलाषो वर्त्तते अतो मया बहुपरिश्रमेणायं प्रबन्धो लिखितः ॥



## ॥ संस्कृतभाषा ॥

इयं हि भाषा पूर्व भारतभूमि-निवासिभि रार्य्यसन्तानैः स्नान-भोजन-शयनाध्ययन-सङ्गीतालयेषु सरणि-विपणि-हट्ट-समाज प्रमुख जन-समागम-स्थलेषु सर्वदा सञ्चारिता विरराजतराम्। किम्बहुना सर्व्वेष्वेव नित्यनैमित्तिक-पितृ-देवार्च्चन-प्रभृतिकृत्यनिचयेषु ह्यस्या एव भाषाया व्यवहारोऽभवत्। हन्त ! इदानीन्तनार्य्य-सन्तानाः सैव भारतभूमि र्न च सा भाषा, प्राणितत्त्वशास्त्रलिखित जीवविशेष इव बह्वीः देशभाषाः प्रसूय सा मृतैव।

अत्र केचिदिदानीन्तनाः सम्पूर्वकस्य कृ-धातोः कर्म्मणि क्त-प्रत्यय-सिद्ध संस्कृतशब्दस्य संस्कार-विषयीभूतत्वरूप मर्थमादाय पूर्व-मस्याः साधारणजनव्यवहृतत्वं सन्दिहानाः कथयन्ति— 'नेयं

कदापि देशभाषावत् सर्वत्र प्रचलिताऽसीत् किन्तु विद्वत्कुलेषु पण्डिता हि देशभाषां संस्कृत्य-नामुत्पाद्य मिथः सम्भाषणसमये पुस्तकादिरचनावसरे धर्मसाधन समये च भाषामिमां व्यवहृतवन्तो न तु सर्वदा सर्वे'—इति।

ते स्वमतसमर्थनाय नाटकादि-दृश्यकाव्येषु स्त्रीतरविदूषकादि-कथनेषु भाषान्तरव्यवहारव्यवस्था मुदाहरन्ति ; तथा—

"संस्कृतनाम दैवी वा-
गन्वाख्याता महर्षिभिः"

—इत्यादि वचनान्याकलयन्ति च। इयं हि दैवी वाणी देवकार्य्यादौ व्यवहृता बभूव। देशभाषा त्वन्यैवासीदिति तेषामभिप्रायः। एतच्चिन्त्यं—संस्कृतस्य संस्कारविषयीभूतस्वरूपेऽर्थे तादृशसंस्कारात् प्रागस्या एतदभिधान मसङ्गतं स्यात्। एवञ्च संस्कारो हि कस्यचित् पूर्वावस्थितस्य वस्तुनः समुत्कर्षसाधनव्यापारविशेषः सुतरा मस्याः संस्कारविषयीभूतस्वरूपेऽर्थे कापि देशभाषाऽस्या भित्ति रिति स्वीकार्य्यम्। पृच्छाम इदानीं का सा मूलभाषा? । महाराष्ट्रीया, बङ्गीया, पञ्चनदीया वा? । सर्वा एव देशभाषास्तस्या भित्ति-रिति चेत् महाराष्ट्र-पञ्चनद-बङ्गादिदेशेषु नैसर्गिकनियमानु-रोधेन देशिकभाषाणां भिन्नरूप-त्वेऽपि ताभ्यः संस्कृताया भाषायाः देशभेदेन कथं न भिन्नरूपत्वम्। एवञ्च यदि दैशिक भाषाणां क्रमशः संस्कारेणैवास्या उत्पत्ति स्तत् कथमिदानीं संस्काराधिक्यं न विधीयते प्रत्युत तन्निवृत्तिरेव।

अपि चार्य्यावर्त्त-महाराष्ट्र-बङ्गादिदेशेष्वधुना प्रचलितदैशिक-भाषासु प्रायश एकरूपशब्द-बाहुल्य मवलोक्य तासा मेकप्रभ-वत्वमनुमीयते। तथा तेषा मपि शब्दानां संस्कृतरूपत्व मनुचिन्त्य

संस्कृतभाषायाः पूर्व्वं साधारणव्यवहृतत्वं, तथाधुनातनदेशिकभाषाणां प्रसवभूमित्वं निर्धार्यतेऽस्माभिः। न केवलमस्माकं निश्चिति हेमचन्द्रेणापि प्राकृतपदस्य 'प्रकृत' प्रकृतिः संस्कृतं, तत्र भवं तत आगतं वा'—इति व्युत्पत्तिः कृता ॥

'संस्कृतं दैवता वाणी कथिता मुनिपुङ्गवैः'— इत्यादिवचनैस्तु संस्कृतस्य देवलोकप्रचलितत्वमेवाभिव्यज्यते, "न तु कस्मिन्नपि लोके प्रचलितत्वम्—एतच्चाग्रे स्फुटीभविष्यति ॥ 'संस्कृतादेव क्रमेण देशिकभाषाणा समुत्पत्तिः'—इति दर्शयितुमत्र कानिचिद्धातुरूपाण्युदाहरामः—

| संस्कृतं | प्राकृतं | हिन्दी | बंग |
|---|---|---|---|
| भवामि | होमि | हूं | हइ |
| भवन्ति | होन्ति | हैं | |
| उत्तिष्ठ | उट्ठेहि | उठ | ओठ |
| शृणोमि | सुनामि | सुनताहूं | शुनितेछि |
| नृत्यति | नच्चइ | नाचता | नाचितेछे |

एवमन्यान्यूह्यानि ॥

बौद्धास्तु स्वधर्म्मपुस्तकादिव्यवहृतपालीतिप्रसिद्धां मागधीभाषां संस्कृतादपि पूर्व्ववर्त्तिनीं सर्वान्यभाषा-प्रसवभूमिञ्च कथयन्ति तेषां प्रमाणं यथा—

"सा मागधी मूलभासा नरा ये यादि कप्पिका ब्रह्मानो चस्सुता सम्बुद्धा चापि भासरे"

—इति कच्चायन व्याकरणं, इयं हि मागधी भाषा सर्व-

भाषाणां मूलं, सृष्टेरादौ कल्पिता, एतत् पूर्वं मनुष्या ब्रह्माणश्च नान्यविधं वचन मुच्चरन्ति स्म। बोधिसत्वैरपीयं भाषा व्यवहृता बभूव।

बौद्धमतमिदं "तुरनौर" साहेब महोदयेन प्रागेव निरस्तम् तस्य युक्तिस्तु, बौद्धधर्म्मपुस्तकानि विहाय अपराणि ज्योतिषप्रभृति-शास्त्राणि संस्कृतभाषया लिखितानि दृश्यन्ते सुतरां संस्कृत-भाषायाः प्राचीनत्व मवश्यमङ्गी कार्य्यम्॥

लौसेन महोदयेन स्व-पाली-भाषाविषयकप्रस्तावे लिखितं— 'पालीभाषा संस्कृतादुत्पन्ना' इति— भाषातत्वशास्त्रीयैर्नियमकतिपयै-रेव स्फुटं प्रतीयते।

अपिच पालीभाषा व्याकरणे न कश्चिदेवं नियमोऽस्ति यो न संस्कृत मनुवर्त्तते।

(क्रमशः)



## ॥ प्राकृतप्रकाशः ॥

### ॥ अथ षष्ठ परिच्छेदः ॥

सर्व्वादेर्जस एत्वम्॥ १

सर्व्वादेरन्तस्य जस एत्वं भवति। सव्वे, जे, ते, के, कदरे। सर्व्वे, ये, ते, के, कतरे॥

ङेः स्सिं म्मित्थाः॥ २

ङिः सप्तम्येकवचनस्य सर्व्वादिपरस्थितस्य स्थाने स्सिं म्मि थ

इत्येते आदेशा भवन्ति। सवस्सिं सव्वम्मि सव्वत्थ। इअरस्सिं इअरम्मि इअरत्थ। सर्वस्मिन्। इतरस्मिन्॥*

इदमेतत्किंयत्तद्भ्यष्टो डिणा वा ॥ ३

इदं, एतत्, किं, यत्, तत्—इत्येतेभ्यः टा इत्यस्य इणादेशो भवति वा। इमिणा एदिणा। किणा। तिणा। पक्षे इमेण, एदेण, केण, जेण, तेण। अनेन, एतेन, केन, येन, तेन॥

आम एसिं ॥ ४

इदमादिभ्य उत्तरस्य आम एसिं इत्ययमादेशो वा भवति। इमेसिं इमाण, एदेसिं एदाण, केसिं काण, जेसिं जाण, तेसिं ताण॥

किंयत्तद्भ्यो ङस आसः ॥ ५

किं, यत्, तत्, एभ्य उत्तरस्य ङस आस इत्ययमादेशो भवति वा। कास, कस्स। जास, जस्स। तास, तस्स। कस्य, यस्य, तस्य॥

इद्भ्यः स्सा से ॥ ६

इकारान्तेभ्यः किमादिभ्यः† उत्तरस्य ङसः स्सा से इत्येतावादेशौ भवतः। किस्सा, कीसे, कीआ, कीए, कीअ, कीइ। जिस्सा, जीसे, जीआ, जीए, जीअ,

---

* सर्वादीनामाकृतिगणः सर्व, विश्व, उभ, उभय डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, (त्व) त्व, नेम, सम, सिम। त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम् इति॥

† किमादिपदेनात्र किंयत्तच्छब्दानां परिग्रहः।

जीइ। तिस्सा, तीवे, तीश्रा, तीए, तीअ, तीइ। कस्याः। यस्याः, तस्याः॥

ङेर्हिं॥ ७

किमादिभ्य उत्तरस्य ङेः हिं इत्ययमादेशो भवति वा॥ कहिं। कस्सिं। कम्मि। कत्थ॥ जहिं। जस्सिं। जम्मि। जत्थ तहिं। तस्सिं। तम्मि। तत्थ॥ कस्मिन्। यस्मिन्। तस्मिन्॥

आहे इआ काले॥ ८

किंयत्तद्भ्यो ङः काले आहे इआ इत्यादेशौ वा भवतः॥ काहे। जाहे। ताहे॥ कइआ। जइआ। तइआ॥ कहिं इत्यादयोऽपि॥ कदा। यदा। तदा॥

त्तोदो ङसेः॥ ९

किंयत्तद्भ्यो ङसेः त्तो दो इत्येतावादेशौ भवतः॥ कत्तो, कदो। जत्तो, जदो॥ तत्तो। तदो॥ कस्मात्। यस्मात् तस्मात् *।

तदश्रोश्च॥ १०

तद उत्तरस्य ङसेरोकारादेशो भवति वा। तो। तत्तो। तदो॥ तस्मात्॥

ङसा से॥ ११

वेति वर्त्तते। तदो ङसा सह सेइत्ययमादेशो भवति। पक्षे यथाप्राप्तं॥ से। तास॥ तस्स। तस्य॥

* किम् शब्दस्य पञ्चम्येकवचने 'कीस' इति रूपञ्च दृश्यते यथा—'कीसदाणी महाराश्री' वेणी०।

आमा सिं ॥ १२

तद आमा सह सिं इत्ययमादेशो वा भवति ॥ सिं । ताण । तेषां । तासां ॥

किम कः ॥ १३

किं शब्दस्य सुपि-परतः क इत्ययमादेशो भवति । को । के । केण । केहिं ॥

इदमः इमः ॥ १४

सुपि परतः इदम इम इत्ययमादेशो भवति ॥ इमो । इमे । इमं । इमेण । इमेहिं ॥ अयं । इमे । इमं । अनेन । एभिः ॥ *

स्सस्मिमोर्वा ॥ १५

स्सस्मिमोः परत इदमो ऽदादेशो वा भवति ॥ अस्स । इमस्स । अस्सिं इमस्सिं ॥ अस्य । अस्मिन् ॥

ङेर्देन हः ॥ १६

इदमो दकारेण सह ङेः स्थाने हकारादेशो वा भवति ॥ इह ॥ पक्षे । अस्सिं इमस्सिं इमम्मि ॥ अस्मिन् ॥

नत्थः ॥ १७ †

---

* अत्र 'इदम्' शब्दस्य प्रथमैकवचने स्त्रीलिङ्गे 'इमं' पुंलिङ्गे 'अयं' इति रूपद्वयं भूयो [illegible] नाटकादौ, यथा—'इमम्हि आसणे, अभि० "[illegible] [illegible] तुमं आसदा [illegible] [illegible]" [illegible] 'अयं [illegible]' अभि० ।

† अत्र प्राकृतकाव्यादिषु 'एत्थ'—इति रूपस्य प्रायः टीकायां [illegible] [illegible] 'दि[illegible] ण एत्थ' । 'एत्थ [illegible] कि [illegible] [illegible]' इत्यादि ।

इदमः परस्य ङेः स्य इत्ययमादेशो न भवति ॥ ङे स्सिं स्सि त्था इति प्राप्ते प्रतिषिध्यते॥ इह । अस्सिं । इमस्सिं । इमम्मि ॥

नपुंसके स्वमो रिदमिणमिणमो ॥ १८

नपुंसकलिङ्गे इदमः स्वमोः परतः सविभक्तिकस्य इदं, इणं, इणमो इत्येते त्रय आदेशा भवन्ति । इदं । इणं । इणमो धणं ॥ इदं धनम् ॥

एतदः सावोत्वं वा ॥ १९

एतच्छब्दस्य सौपरत ओत्वं वा भवति । नित्ये प्राप्ते विकल्प्यते । एस । एसो । एषः ।

त्तो ङसेः ॥ २०

एतदः परस्य ङसेः त्तो इत्ययमादेशो भवति ॥ एत्तो । एदादो । एदादु । एदाहि ॥ एतस्मात् ॥

त्तोत्थयोस्तलोपः ॥ २१

एतदस्तकारस्य त्तोत्थयोः परतो लोपो भवति ॥ एत्तो । एत्थ ॥

तदेतदोः सः सावनपुंसके ॥ २२

तच्छब्दस्य एतच्छब्दस्य यस्तकारः तस्य सकारादेशो भवति अनपुंसे सौ परतः। सो पुरिसो सा महिला । एस । एसो । एसा । साविति किं । एदे । ते । एदं । तं । अन-पुंस इति किं । तं एदं धणम् ॥

अदसो दोमुः ॥ २३

अदसोदकारस्य सुपि परतो 'मु इत्ययमादेशो भवति। अमू पुरिसो। अमू महिला। अमूओ पुरिसा। अमूओ महिलाओ। अमुं वणं अमूइं वणाइं। असौ पुमान्। असौ स्त्री। अमी पुरुषाः। अमूः स्त्रियः। अदो वनं अमूनि वनानि॥

**ह्य सौ॥ २४**

अदसो दकारस्य सौ परतो हकारादेशो भवति। अह पुरिसा, अह महिला, अह वाणं। हादेशोऽयमोत्वात्वनि-न्दून् त्रिष्वपि लिङ्गेषु परत्वाद्बाधते॥

सव्वशब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | सव्वो | सव्वे |
| २या | सव्वं | सव्वे |
| ३या | सव्वेण | सव्वेहिं |
| ५मी | सव्वादो | सव्वेहिंतो |
| ६ठी | सव्वस्स | सव्वाणं |
| ७मी | सव्वस्सिं, सव्वम्मि, सव्वत्थ | सव्वेसु |

यच्छब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | जो | जे |
| २या | जं | जे |
| ३या | जेण, जिणा | जेहिं |
| ५मी | जत्तो, जदो | जाहिंतो, जासुंतो |
| ६ठी | जस्स, जास | जाणं, जेसिं |
| ७मी | जस्सिं, जम्मि, जहिं, जत्थ | जेसु |

तच्छब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | सो | ते, ते |
| २या | तं | ते, ते |
| ३या | तेण, तिणा | तेहिं |
| ५मी | तत्तो, तदो, तो | ताहिंतो |
| ६ठी | तास, तस्स। | तेसिं, सिं, ताणं, दाणं |
| ७मी | तस्सिं तम्मि, तत्थ, तहिं | तेसु, देसु |

एवमेतच्छब्दादिरूपाणि। एतच्छब्दस्य प्रथमैकवचने तु रूपद्वयं भवति—एस, एसो।

किंशब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | को | के |
| २या | कं | के |
| ३या | केण | केहिं |
| ५मी | कत्तो, कदो | काहिंतो |

पदस्य ॥ २५

अधिकारोऽयं । आदिशब्दविधानात् । यदित ऊर्द्ध्व मनुक्रमिष्यामः पदस्य तद्भवतीत्येवं वेदितव्यं । तत्र तत्रैवो दाहरिष्यामः ।

युष्मदस्तं तुमं ॥ २६

सावित्येव । युष्मदः पदस्य सौपरतः तं तुमं इत्येतावादेशौ भवतः । तं आगदो । तुमं आगदो । त्वं आगतः ।*

तुं चामि ॥ २७

युष्मदः पदस्य अमि परतः तुं इत्यादेशो वा भवति । पक्षे तुमं च । तुं पेक्खामि । तुमं† पेक्खामि । त्वां प्रेक्षे ।

तुज्झे तुम्हे जसि ॥ २८

युष्मदः पदस्य जसि परतः तुज्झे तुम्हे इत्येतावादेशौ भवतः । तुज्झे आगदा । तुम्हे‡ आगदा । यूयं आगताः ॥

| | | |
|---|---|---|
| ६ष्ठी | कस्स, कास | केसिं, काणं |
| ७मी | कस्सि, कम्मिं, कत्थ, कहिं | केसु |

इदंशब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | इमो (अयं) | इमे |
| २या | इमं | इमे |
| ३या | इमिणा, इमेण | इमेहिं |
| ५मी | (इदो) इमादो | इमाहिंतो |
| ६ष्ठी | इमस्स, अस्स | इमाणं |
| ७मी | इह, अस्सिं, इमस्सि | एसु |

* 'तुमं दाव दासीए पुत्तो' । 'तेणाहि तुमं चिरञ्जीव' । अभि० ।

† 'इअं णो तुमं ज्जेव उद्दिसिअ' अभि० ।

‡ 'तुम्हे ज्जेव पमाणं जाणध' । 'तुम्हे वि मं परिदेविदुं परित्तायध' ।

वो च शसि ॥ २९

शसि युष्मदः पदस्य वो इत्यादेशो भवति। चकारात् तुज्झे तुम्हे च। वो पेक्खामि। तुज्झे तुम्हे पेक्खामि। युष्मान् प्रेक्षे ॥

टाङ्योः तइ तए तुमए तुमे ॥ ३०

युष्मदुत्तरयोः टाङि इत्येतयोः तइ, तए, तुमए, तुमे इत्येत आदेशा भवन्ति। टा—तइ, तए, तुमए, तुमे कअं*। त्वया कृतम् ॥ ङि—तइ, तए, तुमए, तुमे चिअं। त्वयि स्थितम् ॥

ङसि तुमो तुह तुज्झ तुम्ह तुम्माः ॥ ३१

युष्मदः पदस्य ङसि तुमो, तुह, तुज्झ, तुम्ह, तुम्म इत्येत आदेशा भवन्ति। तुमो पदं। तुह, तुज्झ, तुम्ह, तुम्म पदं। तव पदं ॥ †

आङि च ते दे ॥ ३२

आङि तृतीयैकवचने चकाराद् ङसिच परतो युष्मदः पदस्य ते दे इत्येता वादेशौ भवतः। ते कअं। दे कअं ॥ त्वया कृतं। ते धणं, दे धणं‡। ते धनं ॥

तुमाइ च ॥ ३३

---

* 'किदं तुए णिब्भच्छिदं' । 'तुए परिकुविदेण' ।

† 'तुज्झ ण आणे हिअअं' । 'तुह दंसणाणन्दाइं तुह कज्जाण सूअअ' ।

‡ 'दिअंमदे णिवेदेमि' । 'अवरज्झदि दे महुः कुमारी' ।

आङि युष्मदः पदस्य तुमाइ इत्ययमादेशो भवति। तुमाइ कअं। त्वया कृतं॥

तुज्झेहिं तुम्हेहिं तुम्भेहिं भिसि॥ ३४

भिसि परतो युष्मदः पदस्य तुज्झेहिं तुम्हेहिं तुम्भेहिं इत्येत आदेशा भवन्ति। तुज्झेहिं तुम्हेहिं* तुम्भेहिं कअं। युष्माभिः कृतम्॥

ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि॥ ३५

ङसौ परतो युष्मदः पदस्य तत्तो† तइत्तो तुमादो तुमादु तुमाहि इत्येत आदेशा भवन्ति। तत्तो आगदो। तइत्तो, तुमादो, तुमादु, तुमाहि आगदो। त्वदागतः॥

तुम्हाहिंतो, तुम्हासुंतो भ्यसि॥ ३६

युष्मदः पदस्य पञ्चमीबहुवचने भ्यसि तुह्माहिंतो तुह्मासुंतो इत्येतावादेशौ भवतः। तुह्माहिंतो, तुह्मासुंतो आगदो। युष्मदागतः॥

वो भे तुज्झाणं तुह्माण मामि॥ ३७

आमि परतो युष्मदः पदस्य वो, भे, तुज्झाणं, तुह्माणं इत्येत आदेशा भवन्ति। वो धणं, भे धणं, तुज्झाणं धणं। तुह्माणं धणं॥ युष्माकं धनम्॥

(क्रमशः)

---

* 'णाह तुम्हेहिं पुणो वि समरादो णाअच्छिअ अह' आश्वासइदव्वा'।

† 'तत्तो वि दाव कधम्म पञ्चमकखवा'।

कलिकातासव्ययन्त्रे-श्रीमहेन्द्रनाथसरकारेणमुद्रितः। लाहौरस्थ-श्रीहीरालालचट्टोपाध्यायेनप्रकाशित

Regisetred No. 12



# विद्योदयः ।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयतु सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्यौ लोकवृत्तानुशीलनः । विद्योदयो निराकुर्य्यादविद्यातिमिरम्भुवि ॥

खण्ड ६ ] मे १८७६ । ई० [ संख्या ५

## ॥ प्राकृतप्रकाशः ॥



ऋत आरः सुपि ॥ ३१

ऋकारान्तस्य सुपि परत आर इत्यादेशो भवति । भत्तारो सोहइ । भत्तारं पेक्खसु । भत्तारेण कअं । भर्त्ता शोभते । भर्त्तारं प्रेक्षस्व । भर्त्रा कृतम् ॥ *

मातुरात् ॥ ३२

मातृसम्बन्धिन ऋकारस्याकारो भवति । माआ सोहइ । माअं पेक्खसु । माआइ कअं । माआए । माता शोभते । मातरं प्रेक्षस्व । मात्रा कृतम् । मात्रा ॥ †

* भर्तृशब्द प्रथमैकवचने रूपान्तरं दृश्यते च 'भेदु भेदु भट्टा' अभिज्ञानशकु० ।

† मातृशब्दस्य अन्यविधरूपाणि भवन्ति यथा 'आसादुवो लिम्बुराथस्स मादा' वेणी० 'मादरं अवेक्खदि' अभिज्ञान० ।

उर्जस्शस्टाङस्सुप्सु वा ॥ ३३

जस् शस् टा ङस् सुप्सु परत ऋकारस्य स्थाने उकारादेशो भवति वा । जस् भत्तुणो * भत्तारा । शस् भत्तुणो भत्तारे । टा भत्तुणा भत्तारेण । ङस् भत्तुणो भत्तारस्स । सुप् भत्तुसु भत्तारेसु । आरादिः पूर्व्ववत् ॥†

पितृभ्रातृजामातॄणामरः ॥ ३४

पित्रादीनां सुपि परत ऋतोऽरो भवति । आरापवादः । पिअरं पिअरेण । भाअरं भाअरेण । जामाअरं जामाअरेण । पितरं पित्रा । भ्रातरं भ्रात्रा । जामातरं जामात्रा ॥

आच्च सौ । ३५

पित्रादीनामाकारो भवति सौ परतः । चकारादरश्च । पिआ, पिअरो । भाआ भाअरो । जामाआ जामाअरो ।

पिता । भ्राता । जामाता ॥ ¶

---

* 'भत्तुणो विजयप्पआणं' अभिज्ञान० ।

† भर्तृशब्दस्य तृतीयैकवचने रूपान्तरं यथा – 'भट्टिणाहत्यावलम्बिदा' रत्नावली ।
भर्तृशब्दस्य षष्ठ्येकवचने रूपान्तरं यथा – 'भट्टिणोप्पसाएण' रत्नावली ।
अन्येषां षष्ठ्येकवचनरूपाणि यथा—भ्रातृ, 'जेट्ठस्स भादुणो' वेणी० ।
जामातृ – 'जामादुणो सिन्धुराअस्स' वेणी० पितृ—'पिदुणो विदारइ' वेणी० ।

‡ पितृशब्दस्य द्वितीयैकवचने रूपान्तरं यथा—'अभिजुत्त पिदरं पेक्खिस्स' वेणी० ।

¶ पितृशब्दस्य प्रथमैकवचने रूपान्तरं यथा——
'जाद सोक्खु तुम्हाणं पिदा' 'ताद कस्सो वि पदाए पिदा' अभि० ।
भ्रातृशब्दस्य प्रथमाबहुवचने रूपान्तरं यथा – 'अणुगेण्हन्तु एदं ववसिदं दे भादरो' अभि० ॥

राज्ञश्च ॥ ३६

राजन् शब्दस्य आ-इत्ययमादेशो भवति सौ परतः। राआ राजा ॥

आमन्त्रणे वा बिन्दुः ॥ ३७

राजन् शब्दस्य आमन्त्रणे वा बिन्दुः स्यात्। हे राअं हे राअ ॥

जश्‌शस्‌ङसां णो ॥ ३८

राज्ञ उत्तरेषां जस् शस् ङस् इत्येतेषां णो-इत्ययमादेशो भवति ॥ राआणो पेक्खंति। राआणो पेक्ख। राइणो धनं वसोधनं। राजानः प्रेक्षन्ते। राज्ञः प्रेक्षस्व। राज्ञो धनम् ॥ *

शस एत् ॥ ३९

राज्ञः परस्य शस ए-इत्ययमादेशो भवति। राए पेक्ख, राआणो पेक्ख। राज्ञः प्रेक्षस्व ॥

आमोणं ॥ ४०

राज्ञ उत्तरस्यामः षष्ठी-बहुवचनस्य णं इत्ययमादेशो भवति। राआणं ॥ राज्ञाम्।

टाणा ॥ ४१

राज्ञ उत्तरस्याः टा विभक्तेः णा इत्ययमादेशः स्यात् ॥ राइणा। राज्ञा ॥

* 'रक्खौ वयधमासावेण निहिमं' अभि०।

ङमस्य द्वित्वं वान्त्यलोपश्च ॥ ४२

राज्ञ उत्तरस्य ङमादेशस्य टादेशस्य च वा विकल्पेन द्वित्वं भवति। अन्त्यस्य च लोपः । रणो राइणो धणं। राइणा रणा कयं ॥ राज्ञो धनं । राज्ञा कृतम् ॥ *

इद्द्वित्वे ॥ ४३

वेति निवृत्तम् । ङसादेशस्य टादेशस्य अकृते द्वित्वे राज्ञ इत्वं भवति। राइणो राइणा । कृते द्वित्वे त्वित्वं न भवति । रण्णो रण्णा ॥

आ णो णमो रङसि ॥ ४४

णो णमोः परयोः राज्ञो जकारस्य आकारादेशः स्यात् अङसि—षष्ठ्येकवचने न भवति । राआणो पेक्खंति । राआणो पेक्ख । राआणं धणं । राजानः प्रेक्षन्ते । राज्ञः प्रेक्षस्व। राज्ञां धनम् । अङसीति किं राइणो रण्णो धनं। शेषमदन्तवत् । राअं । राएहिं । राआ राआदो राआदु, राआहिंतो राआसुंतो । राअम्मि राए राएसु । राजानं राजभिः । राज्ञः राजभ्यः । राज्ञि राजसु ॥

आत्मनोऽप्पाणो वा ॥ ४

आत्मनोऽप्पाण—इत्यादेशो भवति वा । अप्पा अप्पाणो ॥

इत्वद्वित्ववर्जं राजवद्नादेशे ॥ ४६

आत्मनोऽनादेशे राजवत् कार्य्यं स्यादित्वद्वित्वे वर्जयित्वा।

* "आद्य वासियो रणा अतिहरेण हीदव्वं" अभि० ।

अप्पा । अप्पाणो । अप्पणा । अप्पणो । आत्मा आत्मानः आत्मना आत्मनः ॥ *

ब्रह्माद्या आत्मवत् ॥ ४१

ब्रह्माद्याः शब्दा लक्ष्यानुसारेणात्मवत् साधवो भवन्ति ॥

बह्मा बह्माणो ॥ जुवा जुवाणो ॥ अद्धा अद्धाणो ॥

ब्रह्मन् । युवन् । अध्वन् ॥ एवमादयोलक्ष्यानुसारेणानुगन्तव्याः ॥

क्वचित् आणड्वा, आणड्डाणो ॥ अनड्वान् इति पाठो दृश्यते ।

इति वररुचिकृते प्राकृतप्रकाशे लिङ्गविभक्त्यादेशः

॥ पञ्चमः परिच्छेदः ॥



* 'तवोवण गमण परिस्समस्स अप्पापदं उवणीदो' अभि०। आत्मशब्दस्य षष्ठ्येकवचने रूपान्तरं यथा—'अत्तणो अणुरूवं वरं' 'अत्तणो चित्तगदो मणोरहो' अभि०।

द्वितीयैकवचनं यथा—'अत्ताणं वि सुमरिस्स' अभि०।

एतदुक्तलक्षणानुसारतः भर्तृशब्दरूपाणि —

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | भत्तारो | भत्तुणो भत्तारा: |
| २या | भत्तारं | भत्तुणो भत्तारे |
| ३या | भत्तुणा, भत्तारेण | भत्तारेहिं |
| ५मी | भत्तारादो | भत्तारेहिंतो |
| ६ष्ठी | भत्तुणो, भत्तारस्स | भत्तूणं |
| ७मी | भत्तारम्मि | भत्तुसु, भत्तारेसु |

पितृशब्दरूपाणि —

| | एकवचनं | बहुवचनं |
|---|---|---|
| १मा | पिआ | पिअरा |
| २या | पिअरं | पिअरे पिदुणो |
| ३या | पिअरेण, पिदुणा | पिअरेहिं |
| ५मी | पिअरादो | पिअरेहिंतो |
| ६ष्ठी | पिअरस्स, पिदुणो | पिअराणं |
| ७मी | पिअरे | पिदुसु, पिअरेसु |

एवं भ्रातृ-जामातृ-शब्दरूपाणि ।

# ॥ सुलोचनोपाख्यान-काव्यम् ॥

( प्राकृतम् )

( १ )

गुणविहीनजनस्य महत्तया
भवतु मे भवसागरतारकः ।
ससुखमप्यसुखं निजविक्रमै-
रदितिजं दितिजञ्चकार यः ॥

मातृशब्दरूपाणि –

| | | |
|---|---|---|
| १मा | माआ, | माआः |
| २या | माअं | माए |
| ३या | माआइ, मआए | माएहिं |
| ५मी | माआए | माआहिंतो |
| ६ष्ठी | माआए | माआणं |
| ७मी | माआए | माआसु |

राजन्-शब्द रूपाणि –

| | | |
|---|---|---|
| १मा | राआ | राआणो |
| २या | राअं | राए, राआणो |
| ३या | रण्णा, राइणा | राएहिं |
| ५मी | राआदो, राआदु | राआहिंतो |
| ६ष्ठी | रण्णो, राइणो | राआणं |
| ७मी | राअम्मि, राए | राएसु |

आत्मन्-शब्द-रूपाणि —

| | | |
|---|---|---|
| १मा | अप्पा | अप्पाणो |
| २या | अप्पं | अप्पणो |
| ३या | अप्पणा | अप्पेहिं |

—इत्यादि । इत्व-हित्वं वर्जयित्वा राजवद्रूपाणि ॥

( १ ) यो निजविक्रमैरदितिजं ससुखं सुखेन आनन्देन सह वर्तमानं, अथवा शोभनानि खानि इन्द्रियाणि यस्मिन् तत् सुखं सुन्दरदेहस्तेन सह वर्तते ससुखस्तम् । एवं दितिजं असुखं दुःखभागिनं वा विकृतदेहधारिणं चकार इत्यन्वयः ॥

( २ )

नतसमस्तनरेशशिरःस्थितै-

र्मणिभिरुज्ज्वलपादतलद्युतिः ।

समुदितः किमभूत् वसुधापतिः

शशकलः सकलः पृथिवीतले ॥

( ३ )

सकलमानवमङ्गलचारिणम्

गुरुजनः सुरनाथमिव क्षितौ ।

नृपतिमाहूतमाधवइत्यमुं

तमभिधामभिधाय गुणान्वितम् ॥

( ४ )

उपनिषत्परिपाठजड़ाशयं

किमु विधिं परिहाय सरस्वती

तमधिगम्य परं बुभुजे सुखम्

सुचतुराचतुराननधारिणम् ॥

---

( २ ) चन्द्रस्य शशरूपकलाद्या अप्रसिद्धिः शशकलइत्यत्र शशं कलयति धारयति इति व्युत्पत्तिः कार्या ॥

(३) माधवइत्यभिधामभिधाय तं गुणान्वितमाहूत ॥

(४) वयं प्राप्तपद्यानां किमपि परिवर्त्तनमविधायैव प्रकाशयामः । सुतरामेतत् पद्यान्तर्गताः कति श्लोका अस्मदनभिमता अपि यथावत् प्रकाशिताः । यथा—

( ५ )

मुररिपुं परिहृत्य पतिं तदा
वसुमती पतिरेष उपास्यत ।
निजगुणोचितमत्र विचिन्त्य किं
कमलयाऽमलयापि दिवा निशम् ॥

( ६ )

नरपतिं तमवाप्य यदद्भुतं
सुखमियं बुभुजे सरित्पतिः ।
न तदवाप न वाप्स्यति कर्हिचित्
वसुमती सुमतीश समागमात् ॥

---

उपनिषत्परिपाठजडाशयमिति पदमतीवासङ्गतं प्रतिभाति । यतः उपनिषत्परिपाठेन ज्ञानस्यैवोदय भवति, नतु जडाशयता । सत्यं वचनमिदं श्रीहर्षेण वेदजडपदस्यानुवादः किन्तु यथानुसन्धानसमये ब्राह्मणभूदयीरिवैतदभणीरन्तरं दृश्यते यत्रो वेदजडपदस्यार्थः वेदे एव जडः नियतं वेदाभ्यासनिरतः वेदं विहाय नान्यत्र गतिरस्ति यस्येति एतेन ब्रह्मपरतत्त्वज्ञानवत्त्वं ध्वन्यते न तु जडाशयता । सुतरामत्र "उपनिषत्परिपाठजडं सदा"—एवं सति न दोषलेशः । एवं चतुराननधारिणमिति पदं ब्रह्मणो विशेषणं यतोऽतीव दुरन्वितम् तथापि यमकस्थले नास्य दुष्टता ॥ सम्पादकः ॥

( ५ ) अमलयापि पतिव्रतयापि कमलया एव दिवानिशम् उपास्यत इत्यन्वयः ॥

( ६ ) सुमतीशसमागमात् श्रीमन्महिमशिष्टपतिसमागमात् ॥

( ७ )

निरभिलाषमनुष्ठितकर्मणा
नृपतिनात्तकरेण यथाविधि।
सममसेव्यतवर्गचतुष्टयम्
विहरताहरता सुखमध्वरान् ॥

( ८ )

वसुमतीपतिरृद्धिसमन्वितम्
वितनुते स्म समस्तगुणाकरः।
विधिवद्वेष विकृष्टकरं न किं
जगदसौ गदसौष्ठवमलभत् ॥

( ९ )

विदधतासुपणं समुपस्थिते
युधि जयं लभते स्म महीपतिः।

---

( ७ ) यथाविधि आत्तकरेण गृहीतकरेण सुखं विहरता, अध्वरान् यज्ञान् आहरता अनुष्ठितवता नृपतिना वर्गचतुष्टयं असेव्यतेत्यन्वयः ॥

( ८ ) समस्तगुणाकरः वसुमतीपतिः, ऋद्धिसमन्वितं जगत् किं विधिवद्वेष *विकृष्टकरम् न वितनुते स्म । इत्यन्वयः । [illegible] ॥

गदसौष्ठवमलभत् इति राज्ञो विशेषणम् ॥

( ९ ) अन्तिके समीपे निवसता सुतेन पुत्रेणेव समयमभिगच्छता रिपुसुतेन, असु ( प्राणं ) पणं विदधता युधि स जयं लभते स्म इत्यन्वयः ॥

रिपुसुतेन सुतेन यथाऽन्तिके
निवसता वशतामधिगच्छता ॥

( १० )

सकल दीन जनाय यथेप्सितम्
निज वसूनि वितीर्य्य सुरद्रुमम् ।
विजयतिस्म वदान्यतया नृपः
परिगतोऽरिगतो दधिकन्यकाम् ॥



॥ प्रिन्स आफ वेल्सएडवार्डस्य शार्दूलाष्टकमिदम् ॥

[ प्रथमम् ]

(१)

वातो वाति भयेन यस्य, स्रुत पुष्णाति सर्व्वौपधी-
र्मोक्तरडस्तपति त्यजत्यतितरां नो स्वावधिं वारिधिः ।
हेमाद्रिप्रमुखाधरां गुरुभरां बिभ्रत्यगात् सर्वदा
तस्यापाप्यविनाधि किञ्चनमहः पृथ्वीन्द्रचूडामणे ! ॥

( १० ) अपरिगतोदधिकन्यकाम् । यत् उदधिसुतलक्ष्मीं परिगतः स निजवसूनि वितीर्य सकलदीनजनाय सुरद्रुमं विजयति स्म ॥

( २ )

हे भूपेन्द्र ! महेन्द्रतोऽपि भवतः श्रीरस्ति दिष्टयाधिका
सर्वे भूपतयोऽप्यर्पयन्ति सनतिं दिष्टया बलिं ते मुदा ।
श्रीमत्सन्मतिभृद्वदपुरिदं दिष्टया समालोकितं
दिष्टया त्वत्करुणादृशी समुदिता स्वस्यां प्रजायां प्रभो! ॥

( ३ )

शीतांशोरिव कैरवाणि सरसीजन्मानि वाह्नपते !
क्षुत्क्षामा अमृतोपमातिरुचिरस्वच्छान्नराशेरिव ।
उद्विग्नाश्च पिपासयेव सरसो निस्स्वादुवोम्बैविधे-
र्लाभादेव ह्यतान्नृपेन्द्र ! भवतस्तुष्टानि चेतांसि नः ॥

( ४ )

शौर्य्यौदार्य्यगभीरतादिसुगुणग्रामाभिरामः पति-
र्लब्धोऽस्माभिरयेन यादृगधुना वंशावतंसोभवान्
पूर्वैः पूर्वतरैरपीह मनुजैः किम्मापि तादृक् पति-
र्भव्याभव्यविभागतो हि नियतैस्सुर्व्वैस्सु संप्राप्यते ॥

( ५ )

सर्वेलाचक्रशक्रप्रमुदितमनसस्तव यं वीक्षणीया
आशीर्वागस्मदीया कलयतु भवति मोक्षसद्भव्यरात्रिं ।
प्रत्यर्थिस्तोमदावप्रशमननवघनेखाण्डवाथाब्धिसोमे
सोमेशाद्याः श्रियंस्वामपि च विदधतु त्वत्कृपास्तत्प्रजासु ॥

( ६ )

स्वस्तिश्रीमद्भवत्सु प्रथितगुणगणैः शोभिता भूमिरेषा
मूर्द्धानो मन्दमन्दं विकसितमनसां श्रीमतां सञ्चलन्ति।
मोदन्ते बन्धुवर्गास्त्वखिलजननिवहः श्लाघते भाग्यवत्तां
विद्वांसस्त्वं श्रयन्ते प्रमदभरभृतः प्राज्यदानादृतं त्वाम् ॥

( ७ )

साकं सम्मन्त्रिवर्गैरथ च बहुविधैः शौर्य्यधन्यैः स्वसैन्यै-
रेतस्यालोत्सवानामनुभवमुदितस्तत्कृतः सर्वभूपैः ।
एतासां स्वप्रजानामयचयमभितो वर्द्धयित्वावलोकैः
श्रीराज्ञीदृक्सरोजप्रविकसनकृते नूतनोऽर्कौ भवास्तु ॥

( ८ )

लक्ष्मीनारायणकविविरचितमष्टकमिदं यथा धीषणां
सादरमवलोक्य परं मुदितो भूयान्नृपप्रवरः ॥

( ९ )

दृग्वन्ह्यङ्कमहीमाने वत्सरे वैक्रमे शुभे ।
पौषे मासि सिते पक्षे भौमेऽष्टम्यामिदं कृतम् ॥

इति श्रीमत्कविलक्ष्मीनारायण विरचितं
श्रीमदेडवर्डप्रिन्सअफवेल्साष्टकं सम्पूर्णम् ॥



## ॥ मातृस्तोत्रम् ॥

( १ )

श्रान्तम्मनोऽद्य समयेन्दुवसन्तशीत-
वर्षाखलादिचरितं परिगीय पूर्व्वम् ।
पश्चान्नृपागमनवृत्तमुखञ्च गीतम्
विश्राम्यति क्षणमिदं जननीपदाब्जे ॥

( २ )

या गौरवैर्गुरुगणाधिकमाननीया,
स्वर्गादपीह सुखदा कथितागमाद्यौ ॥
स्नेहार्द्रभावमधुरान्ननु तां विहाय
कोवा क्षमोभुवि सुकातरहृद्विनोदे ॥

( ३ )

वाक्येऽपि चार्थरहितेऽस्फुटवर्णसङ्घे
बालस्य मे मधुरतैव ययाऽन्वभावि ।
चिन्ता कथं भवति ते हृदयाद्य तस्याः
नामाभिधानसमये मधुरोक्तियुक्तौ ॥

( ४ )

हस्ताविमौ चरणयुग्ममिदं यदान्ये
चासन् रमाङ्ग-निचया बलवीर्य्यहीनाः ।

नासीद्यदङ्कमपहाय तदाश्रयोऽन्य
स्तन्नामकीर्त्तनविधौ जड़ताऽद्य कस्मात् ॥

( ५ )

किं विस्मृतासि रसने नहि ते यदासी
दास्वादने मनुजभोज्यचयस्य शक्तिः ।
यापीप्यदात्महृदयादमृतं पयस्त्वां
तन्नामकीर्त्तनविधौ यदिहास्यतुष्णीम् ॥

( ६ )

मातः ! प्रसीद चरणाब्जयुगन्त्वदीय-
माप्तो दृया-भ्रमणकातरचित्तभृङ्गः ।
नित्यं हितार्पणपरा च समानरूपा
मन्ये ततोऽसि जननि ! प्रकृतिस्त्वमाद्या ॥

॥ इति हृषीकेशकृतौ मातृस्तोत्रे प्रथमउच्छ्वासः ॥



( प्राप्तग्रन्थसंक्षिप्तसमालोचनम् )

## ॥ उपनिषत्सारः ॥

### ॥ प्रकृतवेदान्तः ॥

( श्री नवीन चन्द्र रायेण संगृहीतः )

वयमतीवकृतज्ञहृदयेनपुस्तकस्यास्य प्राप्तिं स्वीकुर्म्मः। अस्मिन् ग्रन्थे श्रीयुक्तबाबुनवीनचन्द्ररायमहोदयस्यानन्यसुलभबुद्धिशालिता तथाऽसीमविद्यावत्ता च प्रदर्शिता। किन्त्वस्माकमधन्यतया ग्रन्थोऽयं धर्म्मविषयकः विद्योदयश्चायं धर्म्मकथायां मूकः सुतरामेताहृशोत्कृष्टपुस्तकं भाग्यवशात् करतले संप्राप्यापि न वयं सम्यक् समालोचने समर्थाः। भवतु ग्रन्थोऽयं नूनं प्राचीनार्य्यधर्म्मावलम्बिना माधुनिक-ब्राह्मधर्म्मावलम्बिनाञ्च द्रष्टव्यो यतोऽत्र श्रुतीनां चिरप्रसिद्धार्थखण्डनपूर्व्वकं नवीनब्राह्ममतानुसारेणार्थः कृतः। यथा—

"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥

अर्थ। यह भगवान् परमात्मा न जन्म लेता है, न मरता है, न यह और किसीसे (उत्पन्न हुआ है) न आप और कुछ बन गयाहै। यह जन्म रहित नित्य शाश्वत, सनातन (पुरुषहै) शरीरके विनष्टहोनेसे इसका नाश नहि होता।

वक्तव्य। इस श्रुतिको बाजे लोग जीवात्माके वर्णनमे लगातेहैं क्योंकि यहां कहा गया शरीरके विनष्ट होनेसे उसका विनाशनहीहोता शरीरस्थजीवात्मा अविनाशी है इस्मे संदेह नहि, पर जन्म मरण रहित नहि है* अतएव यह जीवात्मामे

* अगर हमारे बाबु साहेब यहां विनाश और मरणका भेद स्पष्ट परिभाषाकरके देख-

नहि घटती परमात्मा मे यह सम्पूर्ण घटती है क्योंकि वह जन्म मरण से रहित है, शरीर व्यापी है अथच शरीरके विनाशमे उस्का विनाश नहि होता। जीवात्मा अनादि नहि है† उस्की उत्पत्ति है उस्का जन्म है परन्तु परमात्मा ऐसा नहि वह पुराण है अर्थात् अनादि है। भ्रान्तलोग कहते हैं कि परमात्माहि अविद्या द्वारा जीव हो गया है, वहि जड़ जगत् हो गया है अथवा जीव और जगत् रूपसे भासता हैं, यह उनकी महाभ्रान्ति है इस श्रुति मे स्पष्ट उक्त हुआ कि परमात्मा जैसाथा वैसाहि है, वह और कुछ नहि होगया ॥'

विद्योदयस्याल्पकायत्वादुदाहरण-बाहुल्यप्रदर्शनेऽसमर्था वयमत्रैव निवृत्ताः ॥

---

खाते तो अच्छा होता क्योंकि आजे लोग ऐसे भ्रान्त हैं कि इन दोनों का भेद नहि जानते हैं ॥ विद्योदय-सम्पादकः ॥

† हमारे नैयायिक पाठक लोग 'जीवात्मा अनादि नहि है उस्का उत्पत्ति है और 'जीवात्मा अविनाशी है इस्मे संन्देह नहि' इन बातोंपर निःसन्देह हसेंगे मालुम होताहै। लेकिन् उनको जानना चाहिए कि पद्म पुराण मे न्यायको भी तामस शास्त्रोंके बीच गिना है।

यथा इस ग्रन्थके भूमिका मे –

'गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै'

—इत्यादि।



## ॥ मूल्यप्राप्तिस्वीकारः ॥

| | | | |
|---|---|---|---|
| श्रीयुक्त लाला मथुरा दास | गवर्णमेण्टकलेज लाहोर | — | १, |
| श्रीयुक्त बाबु भागवत् चरण सेन | मालदह मुलुक बाङ्गला | — | २।৶ |
| पण्डित श्रीयुक्त बाङ्केलाल | पूर्णियाफ्कुल | — | २।৶ |

कलिकाता सत्यस्वे-श्रीमहेन्द्रनाथसरकारेण मुद्रितः। कांशीरस्य-श्रीहीरालालचट्टोपाध्यायेनप्रकाशितः ॥

Regisetred N0. 12



# विद्योदयः ।

घरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयतु सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्यो गीर्वाणानुशीलनः । विद्योदयो निराकुर्य्यादविद्यातिमिरं भुवि ॥

खण्ड ६ ] एप्रेल १८७६ । ई० [ संख्या ४

## ॥ विदूषकः ॥

( कस्यचिदङ्गरेजीयस्य प्रकृतभाषा अनुवादः )

एक्कस्सिं दिअहे अहं क्खु बुभुक्खाए मारिदो कलिअत्ता णअरे इदो तदो परिब्भमन्तो कस्स वि विसालघरस्स समीवं उवाअदो । अध तं घरं भद्दमुह मनु-स्सेहिं आउलीकिदं पेक्खिअ चिन्तिदं मए किं एत्थ बह्मण भोअणं वट्टदि ? तदो उक्काड-वखलिदाए गदीए तस्स अब्भन्तरे पविसिअ सव्वधा हदासो संवुत्तो , जदो ण तस्सिं बह्मण भोअणस्स कधा लेसोवि, एक्को ओसा भमुअ विअ लम्बुदस्सूहारी वुड्ढो लण्ड-

---

एकस्मिन् दिवसे अहं खलु बुभुक्षया मारितः कलिकाता नगरे इतस्ततः परिभ्रमन् कस्यापि विशाल गृहस्य ( टौन हल ? ) समीपं मुपागतः । अथ तद्गृहं भद्रमुखमनुष्यैराकुलीकृतं प्रेक्ष्य चिन्तितं मया किमत्र ब्राह्मण भोजनं वर्त्तते इति । तत उत्कण्ठ स्खलितया गत्या [illegible] अभ्यन्तरं प्रविश्य सर्वथा हताशः संवृत्तः, [illegible] न ब्राह्मण भोजनस्य कथालेशोऽपि; एको

णीग्रो वत्तुत्तुणं करेदि—आगदो—हो हो हो भग्रप्पहणो विग्र मे वुद्धी कुसाग्गतीक्खा !!! जदो कलिअत्ता णग्रले आग्रच्छिग्र जेव्व मए लक्खणीआणं भासासिक्खिदा अहं एदाणं वग्रणं ओगच्छेमि ण कहिदुं पारेमि अदो मए जं सुदं तं मम वग्रणेहिं कधेमि, सुणाध—

'अइ समाअद भद्दमुहा ! मए सव्वासुं एव्व पारसीग्र, अरब्व, संकिद प्पमुहासुं भारद प्पचलिद भासासुं परिस्समो किदो । अहं तुह्माणं वग्रणाइं, णहि कहिदुं पारेमि भोदु सुणीग्रदु दाव—

"मए तुह्माणं पुराणाइं पेक्खिदाइं तेसु रामाग्रण णामहेए पुराणे दुष्षन्त कधाए सउन्तलाए भरदेण पाणिग्गहणं अदि णिउणत्तणेण वण्णिदं । अज्जावि तं अवरीग्र कवित्तणं मे हिग्रए जाग्रत्ति सुदञ्च मए दिवाणे हफिज् णामहेओ कोवि कोइ तस्स प्पणेदात्ति ।

अयो अकहाणं अणवदाए तुह्माणं पुराणाणं मदस्सण एकत्तणं पडिवज्जइ सव्वस्सजेव्व मदाइं भिण्ण

---

नीचं मशक इव लम्बश्मश्रुधारी ततो लखनौयी वक्तृत्वं करोति। आगतः हो हो हो भगवतेरिव मे बुद्धिः कुशाग्रतीक्ष्णा यतः कलिकता नगरे आगत्यैव मया लखनौयानां भाषा शिक्षिता अहं एतेषां वचनान्यवगच्छामि न पुनः कथितुं पारयामि अतो मया यत् श्रुतं तन्मम वचनैः कथयामि शृणुत ।

अहं समागत भद्रमुखाः ! सर्वास्वेव पारसी आरब्यसंस्कृतप्रमुखासु भारत प्रचलित भाषासु परिश्रमः कृतः । अहं युष्माकं वचनान्यवगच्छामि नहि कथितुं पारयामि भवतु श्रूयतां तावत्—

मया युष्माकं पुराणानि प्रेक्षितानि तेषु रामायण नामधेये पुराणे दुष्मन्त कथायाः शकुन्तलाया भरतेन पाणिग्रहणं अति निपुणत्वेन वर्णितम् । अद्यापि तदाश्चर्यकवित्वं मे हृदये जागर्ति । श्रुतञ्च मया दिवाने हफिज् नामधेयः कोऽपि कविस्तस्य प्रणेतेति * ।

अहो अस्माकमनवधानतया युष्माकं पुराणानां मतस्य नैकत्वं प्रतिपद्यते । सर्वेषामेव

---

* टड साहेब विरचितं राजस्थान नामकग्रन्थ मवलोक्यैव साहेबेनैवं कथितं भवेत् ।

भणाइ' [illegible]दो साहु भणिदं केणावि—

( संस्कृत माध्यिल्य )

"वेदा विभिन्नाः स्मृतयो विभिन्नाः नैकोमुनिर्यस्य मतं न भिन्नम् ॥"

अदो एआरिस हिंतो परप्पर' विअअमाणहिंतो पुराण हिंतो ण कोवि पइदेदिहासो लभीअदि। विसेसदो पुराण कत्तूणं अत्तुत्ति दोस महासाअरे णिमग्गो इदिहास वुत्तन्तो। एदेण एव्वं कारणेण पइद वुत्तन्त जिण्णासूणं अम्हाणं ण पुराण वअणे सद्धा वट्टइ। सुणीअदिअ तुम्हाणं कि दविज्जआ वि पुराण वअणाइं न विस्ससंदि।

मए रहुवंस णाम पुराणं पढिदं

---

मतानि भिन्नप्रकाराणि अतः साधु भणितं केनापि अतएवैताद्दशेभ्यः परस्परं विवदमानेभ्यः पुराणेभ्यो न कोऽपि प्रकृतेतिहासो लभ्यते। विशेषतः पुराणकर्तृणां मतुरुक्तिदोष महासागरे निमग्न इतिहासवृत्तान्त एतेनैव कारणेन प्रकृतवृत्तान्तजिज्ञासूना मस्माकं पुराणवचने न

तहिं पाण्डआणं जम्म वुत्तन्तो एव्वं वण्णिदो—

हरिवंस सम्भूदस्स सान्तणुणो धीअरकण्णाए जोअणअन्धाए व्वासो त्ति पुत्तो जादो। सोहि व्वासो भादुणो विइत्तविरीअस्स सग्गारोहणादो अणन्तरं तस्स तिण्णाण कण्णाआणं पडिआलओ संवुत्तो। अध कम्मिए समए गदे सो ताणं एक्काए [illegible] आणामहे आए पाणिग्गहणं किदवन्तो। तदो ताणं संगमादो पाण्डआणं जम्म। महाभारदस्स एकम्मिं अज्झाए हरिउलस्स वित्थरेण कधणं अत्थि, एदंवि अणुमीअदि जुणान देसो एहिं हरिउलस्स जेव्व हरउलेस् नामहेअं किदं।

---

श्रद्धा वर्तते श्रूयते च युष्मासु कृतविद्या अपि पुराणवचनानि न विश्वसन्ति।

हरिवंशसम्भूतस्य शान्तनो धीवरकन्यायां योजनगन्धायां व्यास इति पुत्रो जातः। सहि व्यासो भ्रातुर्विचित्रवीर्यस्य स्वर्गारोहणादनन्तरं तस्य तिसृणां कन्यानां प्रतिपालको बभूव।

भोदु सुणाध दाव तुह्माणं वण्ण मालाए किम्पि वत्तुकामोह्मि । तुह्माणं वण्णमालाए वग्गेसु जो तुरीअवग्गो कहिदो स तु तिदीअ वग्गाभिण्णो अहं बहुपरिस्स- मेणावि ण दाणं भिण्णविहो- ञ्चारणं किदवन्तो ।

ण जाणीअदि केण उण कारणेण महम्महूलरमहीदअस्स इच्चावि इमम्मि विसए दिट्ठी ण णिप- डिदा। तुह्माणं संक्किदभासा महादलिद्दा, इमस्सिं गवण्णमेण्ट, वक्स, टेब्ल, चेअर, चिमणि, इंजनीअर, कोच प्पभिदि वाअआ सद्दा ण लब्भीअन्दि एदेसा इदं वि अणुणीअदी तुह्माणं पुव्व- पुलिसा [illegible]सब्भावत्थाए ट्ठिदा

अथ किञ्चित समये गते स तदा केकायाः कन्यायाः पाण्डुरानामधेयायाः पाणिग्रहणं कृत- वान् । ततस्तयोः उद्भवात् ( पाण्डवाणं ) पाण्डवानां जन्म । महाभारते तस्यैकादशा- ध्याये ( पर्वणि ? ) हरिकुलस्य ( खिलहरिवंश पर्वणः ? ) विस्तरेण कथनमस्ति । एतदप्यनु- मीयते यूनानदेशीयैः हरिकुलस्यैव हरकुलेस- नामधेयं कृतम् ॥

भवतु शृणुत तावत् युष्माकं वर्णमालायाः किमपि वक्तुकामोऽस्मि । युष्माकं वर्णमालायां यस्तूर्यो वर्गः कथितः स तु तृतीयवर्गाभिन्नः । अहं बहुपरिश्रमेणापि न तयोर्भिन्नप्रकारमुच्चा- रणं कृतवान् । न ज्ञायते केन पुनः कारणेन महर्षीपाणिनिमहोदयस्यापि अस्मिन् विषये दृष्टिर्न निपतिता ।

युष्माकं संस्कृतभाषा महादरिद्रा यस्मा गवर्णमेण्ट, बक्स, टेबल, चेयार, चिमणि, इंजिनीयर, कोच प्रभृति वाचकाः शब्दाः न लभ्यन्ते एतेनेदमप्यनुमीयते युष्माकं पूर्वपुरुषा [illegible]सभ्यावस्थायां स्थिताः इत्येव निवसन्ति स्म ॥

इदानीं युष्माकं धन्यतया ह्याभिमारत मुनि[illegible] । पश्यत साम्प्रतं भारतभूमेः कीदृशी उन्नतिर्जाता । इदानीं सर्वस्मिन्नेव नगरे सुशोभितान्यपि विद्यालयानि सन्ति, सर्वस्मिन्नेव प्रदेशे सुलभा लक्ष्मीया विराजन्ति । जगदीशो युष्माकं कल्याणं करोतु तेन युष्माकमपि कल्याणं भविष्यतीत्यलं विस्तरेण ॥

दे उड़ुले एव्व विण्णसंदिद्ध। दाणीं तुम्हाणं धम्मदाए अम्हेहिं भारतभूमीअहिकिदा। पेक्खत साम्पदं भारतभूमीए कीरिसो उन्नदी जादा। दाणीं सव्वस्सिं जेव्व णअरे सुसोहिद घराइं विज्जालआअ लक्खीअदि सव्वस्सिं जेव्व प्पदेसे सुसब्वा लसणीआ विअरंदि जअदीसो अम्हाणां कल्लाणं करेदु तेण तुम्हाणं वि कल्लाणं हविस्सदि त्ति।

अलं वित्थरेण।



## ॥ पर्य्यटकलिंगत् * ॥

( ट्राबलर नाम काव्यादनूदितम् )

( १ )

दूरस्थितो बन्धुजनैर्विहीनः<br>
खिन्नान्तरात्मा म्रदुलो गतेषु।<br>
नदीञ्च सिलडामतिमन्दवेगां<br>
पोनामधेयां कुटिलान्तया वा ॥

---

* इदं ट्राबलर नाम काव्यं पन्दकवेः गोल्डस्मिथाख्यस्य प्रथमा कृतिः। सहि यथा-कृत यथाकालमध्ययनं समाप्य विविधेषु देशेषु पर्यटनं कुर्वाण यदा स्विटजरलण्ड नामके स्थाने समुपागतस्तदा स्वभातरं हेनरिनामकमुद्दिश्य काव्यमिदं लिलेखेति श्रूयते।

( २ )

कस्मिन्प्रदेशन्ननु यत्र मूढो

जनो न दत्तेऽतिथये निवासम् ।

मे कान्तनियाच्चेवमतीव दुर्गम

प्रान्तप्रलीनाम्बर मातत वा ॥

( ३ )

यान् यान् प्रदेशानभितो भ्रमामि

भ्रातर्भवन्त प्रतियाति नित्यम् ।

अनन्तदुःखं प्रतिपादखिन्न

प्रेमप्रसिक्तान्जडचित्तमेतत् ॥

( ४ )

त्वय्येवमेवाप्तसुहृत्प्रधाने

सुखान्यसङ्ख्यानि लसन्तु नित्यम् ।

आवासभूमिस्तव सुप्रसन्ना

भ्रा तस्तथावन्तु सदैव देवाः ॥

( ५ )

निरापदा स्यान्ननु सैव पल्ली

समाप्तो नोदागतप्रान्यसार्थः ।

सायं सदाशीतनिपीडिताङ्गो

यत्राग्निसेकं कुरुते सहर्षम् ॥

( ६ )

स्थानं सदानन्दमयन्तदेव

क्लिष्टा दरिद्राश्च न सन्ति यत्र ।

अभ्यागताः स्वागतवादपूर्वं

पश्यन्ति यत्रासनमर्पितं स्वम् ॥

( ७ )

अयत्नलभ्यस्वजलञ्च भोज्य-

न्नयत्यजस्रं मधुरन्तदेव ।

यस्यान्तिकस्थाः शिशवो मनोज्ञा

अभ्यागतं सोत्सुकमभ्युपेत्य ॥

( ८ )

हसन्त्यनन्तैः परिहासवाक्यै

र्निशम्य दुःखानि च निश्वसन्ति ।

नियोजयन्त्येव च नम्रमेत

भोज्येऽनुतिष्ठन्त्यनिशंसुकार्य्यम् ॥

( ९ )

हन्तेदृशं सौख्यमहो मदीये

दिष्टं विधात्रा न च भागधेये ।

वयस्यमुष्मिन् प्रथमेऽहमेवं

भ्रमामि चिन्ताग्रतदुःखदग्धः ।

( १० )

संलक्ष्यते खं धरणीविलग्न-
न्दूरादथोत्तिष्ठति सन्निधिस्थे ।
जने, तथा धावति दूरलक्ष्यं
क्रमेण सौख्यन्मयि पार्श्वमाप्ते ।

( ११ )

अदृष्टदेशभ्रमणाय नित्य-
न्नियोजयत्येव हि मामदृष्टम् ।
अहो बतास्मिन् विततेऽपि विश्वे
पश्यामि तावन्नच देशमिष्टम् ॥

( १२ )

चिराय चिन्तानलदग्धमेत-
मात्मानमानन्दयितुं वनाद्रैः ।
अलङ्घनीयाल्पसटङ्कभागे
वसन्नधो विश्वमिदं समीक्षे ॥

( १३ )

सरोवरारण्यपुराण्यमूनि
क्षेत्राणि वातान्यतिविस्तृतानि ।
राज्ञः समृद्धेः परिवर्द्धकानि
दरिद्रहृत्तोषणतत्पराणि ॥

(१४)

निसर्गतो निर्म्मलकान्तिचित्ते-
ष्वेतेष्विदानीं परितः स्थितेषु ।
कोवास्त्यधन्यो भुवि गर्व्वितात्मा
दुःखाकरोत्यात्ममनोरथा यः ॥

(१५)

पृथग्जनो गच्छति येन तोषं
कार्य्या घृणा किं विदुषाममुष्मिन् ।
किं वेदवैर्ज्ञानमदान्धचित्तैः
पृथग्जनानामधिकान्यमूनि ॥

(१६)

ज्ञानी मतो मे भुवने स एव
भूतेषु नित्यं समदर्शि यस्य ।
चेतो जनानां शुभमाचिकीर्षु
प्रभूतमानन्दमिहाभ्युपैति ॥

(१७)

अरे ! समृद्धा रमणीयपुर्व्यः
क्षेत्राणि शस्यैर्हरितानि तानि ।
हृदा मरुत्कम्पितनीरलोला
भूर्षकाः पुष्पितकन्दरस्थाः ॥

(१८)

सर्वे भवन्तो निजरूपकान्तिं
प्रकाशयन्त्वर्गमदन्तिकेऽद्य ।
भोक्ताहमेको जगतां सुखस्य
मदर्थमेतत् किल विश्वराज्यम् ॥

(१९)

यथैव कश्चित् कृपणः स्वकोषं
दृष्ट्वा रहो हृष्टमना धनानि ।
सङ्गत्यथाल्पं स्व-धनं विविच्य
विनिश्वसत्येव हि दीर्घमुष्णम् ॥

(२०)

तथैव मे चित्तमवेक्ष्य हृष्टं
सुखं जनानां जगदीशदत्तम् ।
अथाल्पभावं प्रसमीक्ष्य तस्य
दुःखाब्धिमध्ये भवति प्रमग्नम् ॥

(२१)

द्रष्टुं सदैवातिविचित्ररूपे
विश्वे परानन्दमयं प्रदेशम् ।
भ्रमामि यत्रायमतीव खिन्न
आत्मा सुखी स्यादपरस्य सौख्यैः ॥

(२२)

कुतेक्षणीयो ननु स प्रदेशो
जाने न मान्नेष्यति तत्र कोवा।
सर्वे विमुग्धा मनुजा हि नित्यं
स्वमेव तत्राधिवाससमनन्ति॥

(२३)

हिमप्रधानोत्तरदेशवासाः
प्रकम्पमाना हिमवायुनाऽपि।
जनाः परानन्दमयं स्वदेशं
विमुक्तकण्ठं कथयन्ति नित्यम्॥

(२४)

अकालमेघोदयदुर्निरीक्ष्य
स्व-सागरान्तं किल मत्स्यजातम्।
सदा प्रशंसत्यथ दीवरांश्च-
न्नयन्ति ते हर्षजगीतवाद्यैः॥

(२५)

निरक्षरे खातलतापदग्धा
नग्नास्तथाफ्रिकदेशवासाः।
सुवर्णवर्णानि च सैकतानि
तानीरसं स्वस्वकमन्यमानाः॥

( २६ )

प्रचण्डरौद्रेष्वभितश्चरन्तः
कोष्णे जले वा नियतं तरन्तः ।
इष्टप्रदान् स्वान् किल भक्तिनम्रा
अभीष्टदेवान् प्रणमन्ति मुग्धाः ॥

( २७ )

स्वदेशबन्धोरयमेव भावः
श्रेष्ठं स्वदेशम्मनुतेऽवनौ यः ।
अथोपमायाविषयीकृतेषु
देशेषु तेषां तुलिते च सौख्ये ॥

( २८ )

देशप्रियाणान्नियतं स्वदेश-
स्तुतौ स्थितायामपि दृश्यतेऽद्य ।
सर्वेषु देशेषु समानरूपं
मतं हितानां मनुजा भवन्ति ॥

( २९ )

स्वभावतो भिन्नविधैश्च शिल्पैः
पृथग्विधे सत्यपि सौख्यहेतौ ।
सुखानि तस्मादुदितानि यानि
तुल्यानि सर्वाणि जनेषु भान्ति ॥

( ३० )

कृपान्विता सा प्रकृतिः प्रजानां
मातेव साक्षाद्विहितश्रमाणाम् ।
हितं विधत्ते किल तुल्यरूपम्
सर्वेषु देशेष्विति निश्चितम्मे ॥

इति श्री[illegible]हृषीकेशभट्टाचार्य्येणानूदितं
पर्य्यटकत्रिंशत् समाप्तम् ॥



॥ प्राचीनभूगोलवर्णनम् ॥

( तीर्थनामसङ्कीर्त्तनम् )

ततो गच्छेत राजेन्द्र ! मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन् व्याधेन शरपीड़िताः ॥
विगाह्य तस्मिन् सरसि मानुषत्वमुपागता ।
तस्मिन् तीर्थे नरः स्नात्वा
ब्रह्मचारी समाहितः ।
सर्वपापविशुद्धात्मा
स्वर्गलोके महीयते ॥

मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते।
आपगा नाम विख्याता नदी सिद्धनिषेविता॥
श्यामाकं भोजनं तत्र यः प्रयच्छति मानवः।
देवान् पितॄन् समुद्दिश्य तस्य धर्म्मफलं महत्॥
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता॥
तत्र स्नात्वार्च्चयित्वा च पितॄन् दै[illegible] च।
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत्॥
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम्।
ब्रह्मोडुम्बरमित्येवं प्रकाशं भुवि भारत॥
तत्र सप्तर्षिकुण्डेषु स्नातस्य नरपुङ्गव।
केदारे चैव राजेन्द्र कपिष्ठलस्य महात्मनः॥
ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते॥
कपिष्टलस्य केदारं समासाद्य सुदुर्ल्लभम्।
अन्तर्द्धानमवाप्नोति तपसा दग्धकिल्विष॥
ततो गच्छेत राजेन्द्र सरकं लोकविश्रुतम्।
कृष्णपक्षे चतुर्द्दश्यामभिगम्य वृषध्वजम्॥
लभेत सर्वकामान् हि स्वर्गलोकञ्च गच्छति।
तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन॥
रुद्रकोट्यां तथा कूपेह्रदेषु च महीपते।

दृषद्वत्यञ्च तत्रैव तीर्थं भरतसत्तम ॥
तत्र स्नात्वार्च्चयित्वा च दैवतानि पितॄनथ ।
न दुर्गतिमवाप्नोति वाजपेयञ्च विन्दति ॥
किं दाने च नरः स्नात्वा किं जप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यञ्च भारत ॥
कलश्यां वार्य्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
सरकस्य तु पूर्वेण नारदस्य महात्मनः ।
कुरुश्रेष्ठ शुभं तीर्थमनाजन्मेति विश्रुतम् ॥
तत्र तीर्थे नरः स्नात्वा प्राणानुत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान् प्राप्नोत्यनुत्तमान् ॥
शुक्लपक्षे दशम्यां च पुण्डरीकं समाविशेत् ।
तत्र स्नात्वा नरो राजन् पुण्डरीकफलं लभेत् ॥
ततस्त्रिपिष्टपं गच्छेत्
त्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या
नदी पापप्रणाशिनी ॥
तत्र स्नात्वार्च्चयित्वा च
शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा
गच्छेत परमां गतिम् ॥

ततो गच्छेत राजेन्द्र
फल्कीवनमुत्तमम् ॥
तत्र देवा सदा राजन्
फल्कीवनमाश्रिता: ।
तपश्चरति विपुलं
बहुवर्षसहस्रकम् ॥



॥ मूल्यप्राप्तिस्वीकार ॥

महाराजाधिराजश्रीयुक्तवर्द्धमानाधिपतिबाहादुर:

( ई॰ १८७३—ई॰ १८७५ ) — — ८।०,

वर्द्धमान, बङ्गाल

श्रीमहाराणी श्रीमती स्वर्णमयी

बहरम्पुर, बङ्गाल ( ई॰१८७६ ) — — ३।=,

श्रीयुक्त बाबु आदित्यराम भट्टाचार्य्य एम. ए.

इलाहाबाद, ( ई॰ १८७४—७५ ) — — ५॥,

श्रीलाला मथुरादास ( ई॰ १८७६ ) — — १,

गवर्णमेण्ट कालेज, लाहोर

श्रीपण्डित ज्येष्ठाराम मुकुन्दजी—

मुम्बई ( ई॰ १८७५ ) — — २।=,

कलिकाता सत्यव्रत-श्रीमदिन्द्रनाथचक्रवर्तिना मुद्रित:। वाङ्गोरस्थ-श्रीहीरालालचट्टोपाध्यायेन प्रकाशित: ।

Regisetred No 12

ॐ

# विद्योदयः ।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयतु सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्यीलीकवृत्तानुशीलनः । विद्योदयो निराकुर्य्याद्विद्यातिमिरम्भुवि ॥

खण्ड ६ ] मार्च १८७६ ई० [ संख्या ३

## ॥ प्राकृतप्रकाशः ॥

### पञ्चमः परिच्छेदः ।

अत ओत्सोः । १

अकारान्ताच्छब्दात् परस्य सोः स्थाने ओत्वं भवति । वच्छो, वसहो, पुरिसो । वृक्षः*, वृषभः, पुरुषः ।

जश्शसोर्लोपः । २

अत इत्यनुवर्त्तते । अकारान्तस्यानन्तरं यौ जश्शसौ तयोर्लोपो भवति । वच्छा सोहन्ति । वृक्षाः शोभन्ते । जश्शसङ्स्यांसु दीर्घइति दीर्घे कृते पश्चाल्लोपो जसः ।

अदन्तशब्दप्रथमैकवचनोदाहरणानि —

अणाहि सन्धि गुरुणो, धम्मो, सदासणाधो, चित्तगदो, मणोरहो, रहिणरी, संवुत्तो, उष ओपक्खमो, सहयारो, मङ्गलरो, वंसो, देसो, जणो ।

अदन्त शब्द प्रथमा बहुवचनोदाहरणानि —

---

* अभिज्ञानशकुन्तल नाटके वृक्षशब्दस्य 'रुक्खअ' इति रूपमस्ति । बाहरे दिविस में चूप रुक्खओ ।

वच्छे णिअच्छइ। वच्छान्नि यच्छत। एच् सुपि इत्येत्वे कृते शसो लोपः।

अतोमः। ३

अकारान्तस्यानन्तरं योऽम् द्वितीयैकवचनं तदाकारस्य लोपो भवति। वच्छं पेक्खइ। मोबिन्दुरिति बिन्दुः।

टामोर्णः। ४

अतोऽनन्तरं टामोस्तृतीयैकवचन-षष्ठीबहुवचनयोर्णकारो भवति। वच्छेण वच्छाणं एचसुपीत्येत्वं। जश्शस्ङस्यांसु दीर्घइति दीर्घः।

भिसोहिं। ५

अतोऽनन्तरस्य भिसो हिं भवति। वच्छेहिं। एचसुपी इत्येत्वं।

ङसेरादोदुहयः। ६

अतोऽनन्तरस्य ङसेः पंचम्येकवचनस्य स्थाने आदो दु हि इत्येत आदेशा भवन्ति। वच्छा वच्छादो वच्छादु वच्छाहि। जश्शस्ङस्यांसु दीर्घत्वं।

भ्यसो हिन्तो सुन्तो। ७

अतोऽनन्तरस्य भ्यसो हिन्तो सुन्तो इत्येतावादेशौ भवतः। वच्छा-

---

अरस म ककुभा पिअदरा, परिवुड्ढी विदको बाणला, अनपेक्खिद सरीरा संचरिस्साव ॥

अदन्तशब्दद्वितीयैकवचनोदाहरणानि—

पओहर वित्थार हेतुअं, णोव्वणारम्भं उवावहस्स, दुस्सन्नं चकन्द, अक्स्सं पेक्खामि अग्घं उवहर वनं पेक्खिअ।

अदन्तशब्दद्वितीयाबहुवचनोदाहरणानि—

अदिक्कन्त-कुसुम समए वि रुक्खके सिंचअ।

अदन्तशब्दतृतीयैकवचनोदाहरणानि—

परिक्कवेण, सुभद्दाप्पमुहेण, सव्वाभरणेण परिउम्बिदेण संगीतसद्देण, गब्भेण, अग्घेण।

अदन्तशब्दषष्ठीबहुवचने प्रायः सानुस्वारो णकारो दृश्यते। यथा—वच्छाणां, संकप्पोङ्कित सन्निबन्धणाणं, अत्थो गत्ताणं। क्वचित् साकारोऽपि दृश्यते; यथा—तुरग गणाणां च सद्देण।

अदन्तशब्दतृतीयाबहुवचने यथा—भमरेहिं नातशंकेहिं [देवेहिं; दासीए [पुत्तेहिं, सोउवि अलुद्धेहिं] आपदाणुसरेहिं]।

ह्निन्तो। वच्छासुन्तो। एचसुपि इति चकारेण दीर्घत्वम्।

ङसोङस्सः। ८

अतोऽनन्तरस्य ङसः स्थाने स्स इत्यादेशो भवति। वच्छस्स।

ङेरेम्मी। ९

अतोऽनन्तरस्य ङेः ए, म्मि इत्यादेशौ भवतः। वच्छे। क्वचिद् ङसिङ्योर्लोपः। वच्छम्मि।

सुपः सु। १०

अतोऽनन्तरस्य सुपः सुइत्यादेशो भवति। वच्छेसु। एचसुपीति एत्वं।

जश्‌शस्ङस्यांसु दीर्घः। ११

जसादिषु परतोऽतोदीर्घोभवति वच्छा सोहन्ति। जश्‌शसोर्लोपः—इति जशोलोपः। वच्छादो आगदो। वच्छादु। वच्छाहि, ङसेरादो-दुहयः। वच्छाण टामोर्णः।

एच सुप्यङिङसोः। १२

अत अकारस्यैत्वं भवति सुपि परतो ङिङसौ वर्जयित्वा। चकाराद्दीर्घश्च। वच्छे पेक्खह। जश्‌शसोर्लोपः। वच्छेण। टामोर्णः। वच्छेहिं। वच्छेसु।

---

अदन्तशब्दपञ्चम्येकवचनोदाहरणानि—

समरादो आअच्छिअ; अज्जस्स वअणादो ज्जेव्व, णअरादो देवीणं पढमदंसणादो सारहिअ, तीत्थजात्तादो, अगाहत्थादो, आमूलादो।

अदन्तशब्दषष्ठ्येकवचनोदाहरणानि—

णाहस्स। सहस्स किरणस्स। परिअणस्स। हिअअस्स, मअणगदस्स, वुत्तन्तस्स। चिक्कणसीसस्स। मिअआसीलस्स।

सप्तम्येकवचनोदाहरणानि—

उड्‌अगमने, एआरिसे, असाहससंचारे आउलम्मि देसे रमणीए, समए, असमए।

अदन्तसप्तमीबहुवचनोदाहरणानि—

अवहीनेसु, एदिहासकहाणुवन्धेसु। क्वचित् सानुस्वारो दृश्यते।

एतद्व्याकरणानुसारिणाकारान्त जनशब्द रूपाणि लिख्यन्ते—

प्रथमा

| एकवचन | बहुवचन |
|---|---|
| जणो | जणा |

चकाराद्दीर्घश्चेति। वच्छाहिन्तो वच्छासुन्तो। भ्यसो हिन्तोसुन्तो। अङिङसो रिति किं। वच्छम्मि। वच्छस्स।

क्वचिद् ङसिङ्योर्लोपः। १३

अतो ङसिङि इत्येतयोः परतः क्वचिल्लोपो भवति। वच्छा आगदो वृक्षादागतः। ङसेरादोदुहय इति। वच्छे ठिअं। ङेरम्मि इत्यत्वं।

द्वितीया

| एकवचनं | बहुवचनं |
| --- | --- |
| जणं | जणे, जणा |

तृतीया

| एकवचनं | बहुवचनं |
| --- | --- |
| जणेण | जणेहिं |

चतुर्थी

न विशेषरूपम्।

पंचमी

| एकवचनं | बहुवचनं |
| --- | --- |
| जणादो | जणाहिन्तो |
| जणादु | जणेहिन्तो |
| जणाहि | जणासुन्तो |
| जणा | जणेसुन्तो |

इदुतोः शसो णो। १४

इदुदन्तयोः शसो णो भवति। अग्गिणो पेक्खह, वायुणो पेक्खह।

ङसो वा। १५

इदुदन्तयोः ङसो वा णो भवति। अग्गिणो। अग्गिस्स। वाउणो। वाउस्स।

जसश्च ओत्वं। १६

इदुदन्तयोर्जस ओकारादेशो भवति। इदुदोतोश्च ईऊत्वं वा।

षष्ठी

| एकवचनं | बहुवचनं |
| --- | --- |
| जणस्स | जणाण, जणाणं |

सप्तमी

| एकवचनं | बहुवचनं |
| --- | --- |
| जणे, जणम्मि | जणेसु जणेसुं |

सम्बोधनं

| एकवचनं | बहुवचनं |
| --- | --- |
| जण | जणा |

एतदुक्तलक्षणानुसारेण ऋषिशब्दरूपाणि—

| (१मा) एकवचनं | बहुवचनं |
| --- | --- |
| इसी=महाप्पहावोराएसी। | इसिणो संचरन्ति |
| (२या) इसिं | इसिणो |

चकाराद् णोच॥ अग्गीओ वाउओ। अग्गिणो वाउणो।

टाणा। १७

इदुदन्तयोष्टा विभक्तेः णा इत्यय मादेशो भवति। अग्गिणा वाउणा।

सुभिस्सुप्सु दीर्घः। १८

इदुदन्तयोः सु, भिस्, सुप् इत्येतेषु दीर्घो भवति। सु=अग्गी वाऊ। भिस्=अग्गीहिं वाऊहिं। सुप्=अग्गीसु वाऊसु।

स्त्रियां शस उदोतौ। १९

स्त्रियां वर्त्तमानस्य शस उत् ओत् इत्येतावादेशौ भवतः। मालाउ मालाओ। णईउ णईओ। बहूउ बहूओ।

जसो वा। २०

जसः स्त्रियां उत् ओत् इत्येतावादेशौ वा भवतः। पक्षे अदन्तवत्। मालाउ। मालाओ। माला।

अमि ह्रस्वः। २१

अमि परतः स्त्रियां ह्रस्वो भवति॥ मालं णइं बहुं।

टाङस्ङीनामिदेददातः। २२

टाङस्ङि इत्येतेषां स्त्रियां इत् एत् अत् आत् इत्येते आदेशा भवन्ति।

टा—णईइ, णईए, णईअ, णईआ कअं। ङस्—णईइ, णईए, णईअ, णईआ वणं। ङि—णईइ, णईए, णईअ, णईआ ठिअं।

नातोऽदातौ। २३

आत आकारान्तस्य स्त्रीलिङ्गस्यानन्तरं टाङस्ङीनां अत् आत् इत्येतावादेशौ न भवतः। पूर्व्वेण

---

(३या) इसिणा [अहवाराएसिणा] इसीहिं
इसिहिं विसज्जिदो

(५मी) इसिदो   इसिहिंतो, इसिसुंतो

(६ष्ठी) इसिणो=राएसिणो इसिणं इसिण
वा इसिस्स

(७मी) इसिम्मि   इसीसु, वा सुं

सम्बोधनं हे इसि

गुरुशब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | गुरु | गुरुणो |
| (२या) | गुरुं | गुरुणो |
| (३या) | गुरुणा | गुरुहिं |

प्राप्तो निषिध्यते। मालाइ,मालाए। कआं। धणं। ठिअं।

आदीतौ बहुलं। २४

स्त्रियां माकारान्तादातः स्थाने आत् ईत् इत्येतौ बहुलं प्रयोक्तव्यौ। सहमाणा, सहमाणी। हलद्दा, हलद्दी। सुप्पणहा, सुप्पणही। छाहा, छाही।

न नपुंसके। २५

प्रथमैकवचने नपुंसके दीर्घत्वं न भवति। सौ दीर्घः पूर्व्वस्येत्यनेन इदुदन्तयोः प्राप्तं पूर्व्वस्य दीर्घत्वं नपुंसके इत्यनेन बाध्यते। दहिं। महुं। हविं॥ दधि। मधु। हविः॥

इज्जश्शसोर्दीर्घश्च। २६

नपुंसके वर्त्तमानयोर्जश्शसोः स्थाने इदादेशो भवति पूर्व्वस्य च दीर्घः। वणइ। दहीइ। महूइ।

नामन्त्रणे सावोत्वदीर्घविन्दवः।२७

आमंत्रणे गम्यमाने सौ परत ओत्वदीर्घविन्दवो न भवन्ति। अत ओत्सो रित्योत्वं प्राप्तं। सुभिस्सुप्सु इति दीर्घः। सो विंन्दुर्नपुंसक इति विन्दुः प्राप्तः। हे वच्छ। हे अग्गि। हे वाउ। हे वण। हे दहि। हे महु।

स्त्रियां मात एत। २८

स्त्रियामामन्त्रणे आतः स्थाने एत्वं भवति सौ परतः। हे माले, हे साले, अन्त्यस्य हल इति सोर्लोपः।

---

| | | |
|---|---|---|
| (५मी) | गुरूदो | गुरूहिंतो, गुरूसुंतो |
| (६ष्ठी) | गुरूणो | गुरूणं |
| (७मी) | गुरूम्मि | गुरूसु, वा सुं |
| सम्बोधनं | हे गुरू | |

आकारान्त [ स्त्रीलिंग ] लता-शब्दरूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | लदा | लदाओ |
| (२या) | लदं | लदाओ |
| (३या) | लदाए | लदाहिं |
| (५मी) | लदादो | लदाहिंतो |

इदुतोर्ह्रस्वः। २९

आमन्त्रणे इदूतोर्ह्रस्वो भवति। हे णइ, हे वहु।

सोर्विन्दुर्नपुंसके। ३०

नपुंसके वर्त्तमानस्य सोः विन्दु र्भवति। वणं दहिं महुं।

(६ष्ठी) लदाए — लदाणं

(७मी) लदाए — लदासु वा सुं

सम्बोधन लदे — लदाओ

ईकारान्त [ स्त्रीलिंग ] नदीशब्दस्य रूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | णई | णईओ |
| (२या) | णइं | णईओ |
| (३या) | णईइ, णइए णईअ, णईआ | णईहिं |
| (५मी) | णईदो—दु—हि* | णईहिंतो वा सुंतो |
| (६ष्ठी) | णईए, णईइ | णईणं |
| (७मी) | णईए | णईसु वा सुं |

अकारान्त [क्लीवलिंग] वनशब्दस्य रूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | वणं | वणाइं, वणाणि |
| (२या) | वणं | वाणाइं, वणाणि |

टादौ पुंवत्॥

* अन्यत्रापि लक्षणानुसारतोरूपाणि प्रयोक्तव्यानि।

(१) सर्व्वेषामेव इकारान्त पुंलिङ्ग शब्दानां अग्नि शब्दवत् रूपाणि भवन्ति।

(२) सर्व्वेषामेव उकारान्त पुंलिङ्ग शब्दानां गुरु शब्दवत् रूपाणि भवन्ति।

(३) सर्व्वेषामेव आकारान्त

इकारान्त [ क्लीवलिङ्ग ] दधिशब्दस्य रूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | दहिं | दहीइं—इ |
| (२या) | दहिं | दहीइं—इ |

टादौ पुंवत्॥

उकारान्त [ क्लीवलिंग ] मधुशब्दस्य रूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | महुं | महूइं—इ |
| (२या) | महुं | महूइं—इ |

टादौ पुंवत्॥

ऊकारान्त [स्त्रीलिङ्ग] वधूशब्दस्य रूपाणि—

| | एकवचनं | बहुवचनं |
|---|---|---|
| (१मा) | वहू | वहूओ |
| (२या) | वहुं | वहूओ, वहूउ |
| (३या) | वहूए, | वहूहिं |

वहूइ इत्यादि [ पत्र:२२ ]

स्त्रीलिङ्ग शब्दानां लता शब्दवत् रूपाणि भवन्ति ।

(४) सर्व्वेषामेव ईकारान्त स्त्रीलिङ्गशब्दानां नदी शब्दवत् रूपाणि भवन्ति ।

(५) सर्व्वेषामेव अकारान्त क्लीव-लिङ्ग शब्दानां वन शब्दवत् रूपाणि भवन्ति ।

एवमन्यत्र(इकारान्तक्लीवलिङ्गादौ

(५मी) बहूदी बहूहिं—सुं ती

(६ष्ठी) बहुए, बहूइ इत्यादि बहूण

(७मी) बहूए, बहूइ इत्यादि । बहुसु—वा सुं

सम्बोधनं हे बहु



## ॥ विरहिणीसम्भाषणाष्टकम् ॥

सम्प्रति वसन्तागम जन्य दुःसह ताप मसहमानयोः कयोश्चित् विरहिण्योः सम्भाषणम् । अनयो रेका मुग्धापरा तु प्रगल्भा । पूर्व्वार्द्धेन मुग्धा पृच्छत्युत्तरार्द्धेनापरा प्रतिवक्ति ॥

(१)

अयि कथं वद ताप मनुत्तमं<br>
हृदय मद्य भजत्यतिदुःसहम् ?<br>
ऋतुपतिर्मधुरेण समागतो<br>
विरहिणी-हृदयं दलितुं स्वयम् ॥

(२)

विरहिणी-जन-नाशन-दारुणा

म्मधुमिमङ्कुश माह्वयसे वद ?

युवजनम्मदयन्मदिरेव य

न्नयति कापथ मेष सुलोचने ॥

(३)

अयि दलत्यनिशम्मधुरेकको

विरहिणी मथवा ससहायकः ?

विदधतीह सदास्य सहायता

म्पिकमरुन्मदनेन्दुकलादयः ॥

(४)

पिकवरस्य क्षतं विरहातुरैः

किमु सदा निनदैर्वद हन्ति तान् ?

विरहिणाम्मरणोऽस्य तु पोषक *

म्मृतवसारुधिरैर्विवर्द्धते ॥

(५)

दिगिह किं मलयप्रभवेण वा

दहति सा मरुता सखि दक्षिणा ?

---

* अस्य पोषकृत्=काकः ।

विरहिता रविणा ननु दुःखिनी
त्यजति सा मुहुरुष्णमुखानिलम् ॥ *

(६)

मनसिजो वद केन मनोऽद्य वा
ज्वलयतीह वियोगजुषां सदा ?
गिरिशदग्ध मिमं हृदयं यदा
सखि परिष्वजते ज्वलति स्वयम् ॥ †

(७)

विरहिणीगणनाशकलङ्कभाग्
भवति किं चतुरे भुवि चन्द्रमाः
ननु कलङ्कयुतं शशिनो वपु
र्हरति मानस मेव हि गीयते ॥ ‡

* दक्षिणा सती कथन्दहतीति प्रश्ने आह न तु दहति किन्तु सा स्वय मेव दुःखिनी भूत्वा कोष्णं निश्वसिति तेन जनानान्दाहः।

† मनसिजः केन हेतु मनः (स्वजनकं) ज्वलयतीति प्रश्ने उत्तर माह न तु स मनो ज्वलयति किन्तु यदा हृदयं (मनः) अपत्यस्नेहेन शिवदग्धं कन्दर्प मालिङ्गति तदा स्वय मेव ज्वलति।

‡ 'मलिन हिमांशोर्लक्ष्मश्रीन्तनोति' – इत्यादि वाक्यस्मरणात्।

(८)

अयि वसन्तज दारुणतापभाक्
क्वमिह यामि शुभे शरणं वद ?
हृदयवल्लभ मेव हताशता
यदि ततो मरणं शरणन्तव ॥ *

॥ इति श्रीहृषीकेशकृतं विरहिणीसम्भाषणाष्टकम् ॥



## ॥ होल्यष्टकम् ॥

फाल्गुन मासीय पूर्णिमातिथौ होली नामकः कश्चिदुत्सवो भारतवासिभिरनुष्ठीयते। वङ्गं विहाय प्रायः सर्व्वत्र भारतीय-प्रदेशे शुक्लाष्टम्या मारभ्य पौर्णमासीं यावदेत दुत्सवव्यापारेषु जना आत्मानं नियोजयन्ति। वङ्गे तु पौर्णमास्या मारभ्य कृष्णाष्टमीं यावदस्योत्सवस्यानुष्ठानं दृश्यते। भगवान् देवकीनन्दनो नन्द-गोपगृहावस्थानसमये होला नाम्नीं कामपि कंसासुरानु-चरीन्निहत्योत्सव मिमकृतवानिति पौराणिकी वार्त्ता। आगामि-सङ्ख्यायां वृत्तान्तोऽयं विस्तरेण लिखित भविष्यतीत्यभिलाषो

* प्रथमं हृदयवल्लभ मेव शरणं व्रज ततो हताशता चेत् मरण मेव तव शरणम्

ऽस्तीदानीन्तु पञ्चनदीयाना मेतत्कृतानन्दं प्रत्यक्षीकृत्य यादृशो भावो मनस्युद्गतः स एवानेनाष्टकेन प्रकाश्यते ॥

(१)

अरे कथं भारतभूमिवासा
भित्वाम्बरान्तं निनदन्त्यजस्रम् ।
हसन्त उच्चैर्मुख मावितृत्य
सङ्क्षोभयन्त्येव दिशः समस्ताः ॥

(२)

प्रचण्डनृत्यैः किमु मत्तचित्ताः
ससागराम्भारतभूमि मेताम् ।
अनुक्षणं वा परिकम्पयन्तो
रसातलन्नेतु मिव प्रवृत्ताः ॥

(३)

किं मद्य गीतं सुजनैर्विगीतं
ग्राम्योक्तिपूर्णं विगतत्रपा वा ।
कुर्व्वन्ति नानाविधदेहभङ्गीं
प्रकाशयन्तोऽपि च राजमार्गे ॥

(४)

क्रीड़न्ति नानाविधकौतुकेन
घ्नन्ति प्रहर्षञ्च मिथः किमद्य ।

जितं किमेभिः प्रतिपन्नराज्यं
किम्मोचिता वैरिकरात् स्वभूमिः ॥

(५)

क्षणाद्विरम्य क्षणमेव* मुग्धाः
सर्व्वान् प्रदेशान् परिपश्यताद्य ।
एवं वृथामोदरता मनुष्या
हृष्टा भवेयुर्न च कुत्र देशे ॥

(६)

अजस्रसत्कार्य्यकृतप्रयत्नैः
सर्व्वैर्जनैरुन्नमिताः स्वदेशाः ।
यूयं वृथामोदविलुब्धचित्ता
रसातलं प्रापयथात्मभूमिम् ॥

(७)

जाने न कालं कतमं भवन्त
इत्यञ्चरिष्यन्ति विमूढचित्ताः ।
त्यजन्त्विरे वाद्य वृथा विनोदं
यत्नो विधेयः किल पौरुषे स्वे ॥

(८)

धात्रा प्रसन्नेन किलार्पिता सा
मही च वो लण्डनराजहस्ते ।

* क्षणं क्षणात् उत्सवात् विरम्य ।

राज्ञः प्रसादात् सुगुणानवाप्य
यूयं तदद्योद्धरतात्मभूमिम् ॥

॥ इति श्रीहृषीकेशकृतं होल्यष्टकं समाप्तम् ॥

—०@०—

## ॥ डाक्टर लाइटनर महोदयस्य शुभप्रत्यागमनम् ॥

अयं हि महात्मा भारतवासिनां प्रकृतो बन्धुरस्य प्रयत्नेनैव पञ्चनद-महाविद्यालयः स्थापितः। अयं हि महोदयो द्वादशवत्सरानस्माकं हितव्रत मनुष्ठाय स्वदेश मनुजगाम। तत्र च वर्षद्वयं नीत्वा पुन रत्र प्रत्यागतः। तत् प्रत्यागमनं मुपलक्ष्य श्लोका एते रचिताः ॥

(१)

सन्त्यत्र भूमिवलयेऽमितवाङ्गवीर्य्या
लक्ष्मीविलासनिलयाः किलगौरवाढ्याः।
तेजस्विनो गणयितुं ननु तान् समर्थः
कोवा भवेद्वसुमती ह्यतिविस्तृताऽसौ ॥

(२)

निःश्रेयसाय वहुभिर्निजजन्मभूमेः
प्राणाः प्रिया अपि जनैस्तृणवद्विसृष्टाः।
चित्रं विभाति हृदये नहि मेऽत्र किञ्चित्
स्वार्थं विमुच्य मिद मेव जगत् समस्तम् ॥

(३)

धन्य: सएव भुवने सततं हि यस्य
श्रेयश्चिकीर्षति मनः सदयं परस्य ।
त्यक्त्वात्मदेश मपरान् कृपयोद्दिधीर्षु
रेत्यन्यदेश मिह धन्यतम: स एकः ॥ *

(४)

मतानुकम्पि हृदयं पुनरार्य्यभूमि
मुद्धर्त्तु मुत्सुक महो महनीयकीर्त्तिम् ।
दृष्ट्वा भवन्त मय मेव हि मे वितर्को
जातः किमु क्षितितले स्वय मार्य्यधर्म्मः ॥

(५)

दीनांश्च हीनबलविक्रमबुद्धिविद्यान्
दूरस्थितार्य्यकुलजान् यदिहोद्दिधीर्षुः ।
एकान्वयत्व मिह तेन हि नः प्रमाणं
शर्म्मण्यभारतभुवां भवतीव लोके ॥ †

---

* भुवने यस्य मनः सदयं सत् अपरस्य आत्मजातिभिन्नस्य श्रेयः (मङ्गलं) चिकीर्षति स धन्यः यस्तु अपरजातिजान् उद्दिधीर्षुः सन् आत्मदेशं विहाय अपरजातिजानां देशं एति आगच्छति स एक एव धन्यतमः ।

† दीनान् हीनबलबुद्धिविद्यान् दूरदेशवासिन आर्य्यकुलजान् यदुद्दिधीर्षुरसि तेनैव शर्म्मण्य (जर्म्मण्य) भारतवासिनां नः एकान्वयत्वं प्रमाणं भवति ॥

(६)

प्राच्याः प्रकाश्य निखिला ननु ताश्च विद्या
विज्ञानजात मपि पश्चिमदेशजातम् ।
आनन्दयन्निह समाद्दर्शधिका दशाब्दान्
यातः स्वदेश मपहाय च देश मेतम् ॥

(७)

अनागतं समवलोक्य पुनर्भवन्तं
स्मृत्वा च त्वत्कृतमहोपकृतीरिदानीम् ।
हर्षः समुल्लसति चेतसि नोऽतिमात्रम्
चन्द्रोदये जलनिधौ लहरीव धीर ॥

(८)

प्रार्थामहे वय मतो जगदीशपादम्
युष्मच्छुभानि सततञ्च सुदीर्घ मायुः ।
त्वञ्चापि नो हितशतानि वितत्य नित्यं
कीर्त्तिं लभस्व भुवने विशदां स्थिराञ्च ॥

———०———

कलिकाता-सत्ययन्त्रे-श्रीमहेन्द्रनाथसरकारेणमुद्रितः। लाहोरस्थ-श्रीहीरालालचट्टोपाध्यायेनप्रकाशितः॥

Registered NO. 12



# विद्योदयः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयतु सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नाना शास्त्रकथारम्यो लोकवृत्तानुशीलनः। विद्योदयो निराकुर्य्या दविद्यातिमिरं भुवि ॥

खण्ड ६ ] फरवरी १८७६ ई० [ संख्या २

## ॥ प्राकृतप्रकाशः ॥

आल्विल्लोल्लालवन्तेन्तामतुपः ॥ २५

आलु इल्ल उल्ल आल वन्त इन्त इत्येत आदेशा मतुपः स्थाने भवन्ति ॥

आलुस्तावत्, ईसालू, णिद्दालू। इल्ल, विआरिल्लो, माला इल्लो। उल्लः, विआरुल्लो। आलः, धनालो, सद्दालो। वन्तः, धनवन्तो, जोव्वणवन्तो। इन्तः रोसाइन्तो, पाणाइन्तो। यथादर्शनं चैते प्रयोक्तव्याः न सर्व्वे सर्व्वत्र ॥ ईर्षावत् निद्रावत् विकारवत् मालावत् शब्दवत् धनवत् यौवनवत् रोषवत् प्राणवत् ॥

क्वचिद्वा मतुपोऽन्तस्य मन्तो वा दृश्यते—

हणुमा हणुमन्तो ॥

इल्लोल्लावपरे प्राय: शैषिकेषु प्रयुज्यते ।—

पौरस्त्यं पुरोभवं पुरिल्लम् । आत्मीयं अप्पुल्लं ॥

परिमाणे किमादिभ्यो भवन्ति केद्दहादय: ॥—

केद्दहं केत्तिअं। जेद्दहं जेत्तिअं। तेद्दहं तेत्तिअं। एद्दहं एत्तिअं।

कृत्वसो हुत्त मित्यन्ये । देशीशब्द: सदृश्यते ।—

सअहुत्तं, सहस्स हुत्तम् । शतकृत्व:, सहस्रकृत्व: ॥

जातौ वा स्वार्थिक: क: ।—

जातौ स्वार्थे ककार: प्रयोक्तव्य: ॥

विद्युत् पीताभ्यां ल: ॥ २६

विद्युत् पीतशब्दाभ्यां परत: स्वार्थे ल प्रत्ययो भवति ।

विज्जु विज्जुली । पीअं पीअलम् ॥

वृन्दे वो र: ॥ २७

वृन्द शब्दे वकारात् पर: स्वार्थे रेफो वा प्रयोक्तव्य: ।

व्रन्दं वंदं ॥

करेण्वां रणो: स्थितिपरिवृत्ति: ॥ २८

करेणु शब्दे रेफणकारयो: स्थितिपरिवृत्तिर्भवति ।

कणेरू । पुंसि न भवति करेणू ॥

आलाने लनो: ॥ २९

आलान शब्दे लकारनकारयोर्नल्मात्रयो: स्थितिपरिवृत्तिर्भवति । आणाल खंभो ॥

बृहस्पतौ बहोर्भंओ ॥ ३०

बृहस्पति शब्दे बकार-हकारयोर्यथासङ्ख्यं भकार-अकारौ भवतः। भअप्फइ।

मलिने लिनो इलौ वा ॥ २१

मलिनशब्दे लिकार-नकारयोर्यथासंख्यं इकार-लकारौ वा भवतः। मइलं मलिणम् ॥

गृहे घरोऽपतौ ॥ २२

गृह शब्दे घर इत्यय मादेशो भवति पतिशब्दे परतो न भवति॥ घरं भवनं ॥ अपताविति किं गहवइ ॥

दाढ़ादयो बहुलम् ॥ २३

दाढ़ा इत्येव मादयः शब्दा बहुलं निपात्यन्ते दंष्ट्रादिषु। दंष्ट्रा, दाढ़ा। इदानीम्—एण्हं, दुहिता—धीआ, * धूदा, चातुर्थम्—चातुलिअं, मण्डूकः—मंडूरो, गृहेणिहितं—घरेणिह्दिदम्, उत्पलम्—कंदोट्टो, गोदारी—गोला, ललाटं—णिड़ालं, भूः—भूमआ, वैडुर्य्यं—वेलुरिअं, उभयपार्श्वं—अवहोवासम्, चूतः—माइन्दो वा माअंन्दो॥ आदि शब्दोऽयं प्रकारे॥ तेन सर्व्वत्र एव देशसंकेत प्रवृत्तभाषा शब्दाः परिगृहीताः।

इति वररुचिकृते प्राकृतप्रकाशे सङ्कीर्णविधिर्नाम

चतुर्थः परिच्छेदः॥



* एवं परिवर्त्तनक्रमेण दुहिता वङ्गदेशीय भाषायां झीति कथ्यते।

## अध्यापक "मोनियर विलियम्स" साहेव महोदयस्य लवपुर सन्दर्शनम् ॥

अयं हि महात्मा लण्डन नगर स्थित अक्सफोर्ड नामक विद्यालयस्य संस्कृताध्यापकः सुचिरादेवाभिनिवेशपूर्व्वं संस्कृत विद्या मधीत्य तद्विद्याप्रसवभूमिं दिदृक्षुरेवात्रागतः ॥ अथ चिरवर्द्धित कौतूहल प्रशमनार्थं भ्रमत्य विविध देशं पर्य्यटन् सांप्रतं लवपुर मध्यगमत् ततस्तत्रत्यै देश हितचिकीर्षु भि र्धनिराजविद्वन्निकरैस्तदागमन माकर्ण्य,फेब्रुयारि-मासस्याष्टमेदिवसे "शिक्षासभा" नामकस्थाने तस्य सम्मानार्थं काचित् सभा कृता । तत्र तमामन्त्रापरसभ्य गणैरनुमतौ राजश्रीयुतो हरवंश नामा तस्मा एक मभिनन्दन पत्रं दत्तवान् । अस्य पत्रस्यार्द्धं मुद्दं भाषया ऽर्द्धं संस्कृतभाषया च पूर्णं मासीत् । संस्कृतभाषा-पूर्णार्द्धं हि लवपुरस्थित संस्कृत विद्यालय प्रधानाध्यापक श्री गुरुप्रसाद महोदयै र्लिखितम् ते महोदयाः सभाधिवेशनाव्यवहितप्राक्कालमेव सभ्यवृन्दवृन्दारकेण श्रीमता मूल सिंहाभिधेनानुरुद्धाः श्लोकानेतान् प्रणिन्युः ॥ वयंच प्रथमं सहृदय पाठकवृन्देभ्यस्तानेवोपहरामः ॥

"सुधीशु धांशोस्ततं समन्ता
दयूखसङ्घान् बहुशो हसन्ति ।
यशांसि वृन्दारकवृन्दवन्द्य
प्रज्ञाविनोदानि पुरा श्रुतानि ॥ १

निरीक्षणात्तेऽद्य तदुत्कता नो
निवारिताश्लाघनीयकीर्त्ते ।
तथापि तान्युत्कटप्रेमभङ्गि
प्रहाय पत्त्राद्भुतमुत्कयन्ति ॥ २

समाहृता सम्यगिहाधियौवनं
गौर्व्वाणवाणी विवृणोति भावम् ।
स्फुटश्रवानपुरादितोऽस्मनस्य
स्तन्माद्भूमिः परिवीक्षणाय ॥ ३

विवोढ़ मार्गश्रमभूरिभार
मनागबुद्धेव विबुद्धचेष्टः ।
स्वकीयदेशं विसृजन्निहास्ति
नैचातिथिर्नः सुकृतोपलब्धः ॥ ४

तनुतान्तव शश्च यशोऽधिपते
परमेड़निशन्नृपनीतनते ।
जनतोपकृतिस्वगृहीतमते
जय मोनियर्विलियम्ससाधुकृते ॥५

किम्ब्रूमो भवतां यशश्चु विलस
द्वैशाखिलापूरि भूः
भूरिश्लिष्टपदावलीसमुदया
दारिद्र्यविद्राविणा ।
कोशेनात्मकृतेन तेन च तथा
ऽन्यैर्वा निबन्धोज्ज्वलैः
पाश्चात्या परिचायिता सुमधुरं
भूः संस्कृतास्वादनैः ॥ ६

अस्माकमेषा मतिरुत्स्फुरन्ती
कर्पूरगौरः सुभवानुकम्पी ।
जातः स्वयं शङ्कर एव साक्षा
द्भवान्नवीकर्त्तुमिमाञ्चविद्याम् ॥ ७

काव्यायिका तेऽस्तु विशालबुद्धे
स्त्वोयैरनाख्याङ्कमिताम्परीताम् ।
गीर्व्वाणवाणीं मुहु रुद्विधीर्षो
स्तत्सारमाख्यापयितुस्त्वदेशे ॥ ८

स भवानिह सत्य महद्दयदे
भविता शुभदो भुवि भारतीनाम् ।
भवतापहरा महताम्प्रथिता
दुरीकृतपद्मवतान्न कथम् ॥ ९

कमलानि यथा विकसन्ति लसन्ति
लसन्ति तथाद्य मुखानि नृणाम् ।
निरुपद्रववातदयाजलधौ
त्वयि जायति विश्वजनीनमतौ ॥ १०

सन्ति यद्यपि शतं विबुधास्ते
कूपतोऽपि लघुमानसमार्हाः ।
त्वान्निरीक्ष्य समुदग्रगुणोर्म्मिं
वार्द्धिमात्मनिधिपूरितवेलम् ॥ ११

वयन्न सम्भावयितुं स्फुटन्त्वां
शक्तास्तथापि तद्वश्यधियम् ।
यथामहोऽस्मासु निरीक्षणात्ते
तथा न वाग्गोचरता मुपैति ॥ १२

पूर्व्वोदितः संस्कृतशास्त्रभानुः
शनैः पतन् सोऽपरपरा मुपैति

अहोऽनुसन्धानविधिप्रवीण
तदुद्भवाशाम्बलिनासुपार्श्वे ॥१६
अहो ! पुरापि प्रत दुदीरितं बुधै
र्गुणाज्ञ एवैति गुणिष्वजस्रम्
भवद्भिरत्यन्तदृढत्व मापितं
गुणाणुभाज्याहृतदृष्टिपातैः ॥१७
गुरुप्रसादोऽनुमितप्रसादः
कालेऽल्पकेऽप्याश्रितकाव्यकर्मा ।
भवत्प्रकाशाम्बुहिताम्बहार्द्रै
र्गण्डूषकोदापचितिर्यथाब्धेः ॥१८"

अथ स तदभिनन्दनपत्र माकर्ण्य परमानन्दं प्रकाशयामास । अवदच्च मया सर्व्वं सम्यगेव बुद्धं किन्त्वधन्यतया भवदीयभाषया प्रत्युत्तरप्रदानेऽसमर्थोऽस्मि । वयमिङ्गलण्डीया "पुस्तककीटा" भवदीयभाषासु लिखितपुस्तकानि पठामो न तु तद्भाषया वक्तुं समर्था इति यावत् । एवं स प्रवर्णीकृत्य लण्डनीयभाषया सुदीर्घां वक्तृता मेकां चकार । तस्याः सारन्तु भारतवर्षीयानामिदानी मिङ्गलण्डदेशदर्शन मतीवावश्यकं, किन्तु लण्डनगमनं बहुव्ययसाध्यं, देशीयधनिनां साहाय्य मन्तरेण तद्वायसाधने नान्यः पन्था दृश्यते इत्यादि । अथ तद्वक्तृतावसाने देशीयधनिनस्तदभिप्रायसिद्ध्यर्थं सभा मेकां स्थापयितु मङ्गीचक्रुः । तद्दिवसे तस्या भाविसभायाः सभ्यनिर्व्वाचनं कृत्वा सभापतिः सभाभङ्ग मकरोत् ॥

अथ परेद्युः स विलियम्स महोदयस्तद्विद्यालयाध्यक्षेण पण्डित श्रीमता ज्वालाप्रसादाभिधेन प्रदर्शितमार्गौ नवपुरस्थितसंस्कृतपाठशालां परिवीक्षितु माजगाम । ततस्तद्विद्यालय प्रधानपण्डितश्रीगुरुप्रसादाऽध्यापनगृहमागते तत्र भवति विलियम्स महोदये ते पण्डित प्रधानाः ससम्भ्रम मुत्थाय श्लोकद्वयेन तमुपतस्थिरे । इमौ हि तौ श्लोकौ—

"विधाय प्रबन्धोद्धुरान् सन्निबन्धान्
प्रमाय स्वयत्नप्रयोगान् कृतित्वे ।
समाख्यापयन् सौहृदय्यं धरित्र्यां
वयस्युत्तरे पर्य्यटनमासि भूमिम् ॥
भुवि न सन्ति विनोदकरा यतः
समधिकाः सुहृदां परिवेक्षणात् ।
तदिह वोऽभ्युपगम्य विपश्चितः
सुमनसोमनसोपचिता वयम् ॥२"

ततस्तद्विद्यालयान्यतमाध्यापकेन श्रीहृषीकेशशर्म्मणा प्रणीतस्य 'राजकुमारागमनं' काव्यस्य खण्ड-पञ्चक मत्र भवते प्रदत्तं सतु महानन्द संवृत्तः मुम्बई नगरे राजकुमारसमीपेऽस्य पाठं करिष्यामीति भूयो भूयः स्वीचकार ।

ततश्छात्रान् परीक्ष्यातीवसन्तुष्टोऽस्मीति कथयित्वा तान् साम्यावस्थाविषये किञ्चिदुपदिश्य स्वपुस्तकेऽध्यापकानां नामानि लेखयित्वा तेभ्यः स्वनामचिह्नितं पत्रं प्रदाय च यथागतं प्रतिनिवृत्तः ॥ इति शुभमस्तु ॥



## ॥ भाषाविचारः ॥

| संस्कृत | प्राकृत | हिन्दी | वंगाली | महरट्टी |
|---|---|---|---|---|
| । | । | । | । | । |
| मार्ग | मग्ग | मार्ग | मार्ग | |
| अग्नि | अग्गि | आग | आगुन | आग |
| मलिन | मइल | मैला | मयला | |
| क्षण | छण, क्खण | छन | क्खन | |
| क्षमा | छमा | छमा | ख्यामा ( ग्राम्य ) | |
| मक्षिका | मच्छिआ | मक्खी | माछी | |
| स्रोतस् | सोत्तो | सोता | सोंत् | |

| संस्कृतम् | प्राकृतम् | हिन्दी | बङ्गाली | महरट्ठी |
| --- | --- | --- | --- | --- |
| निद्रा | णिद्दा | नीन्द | निद्रे | नीद् |
| ताम्र | तंवं | तांवा | तांवा | तांव |
| दुहिता | धीश्रा | धिया, धी | झी | |
| प्रस्तर | पत्थर, पत्थर | पत्थार | पाथर | पाथर |
| मुक्ता | मोत्ता | मोती | मुक्ता, मति | मोतीं |
| रात्रि | रत्ती | रात् | रात् | रात् |
| यष्ठि | लट्ठी | लाठी | लाटी | लट्ठ |
| वृश्चिक | विच्चुश्रो, बिच्छुश्रो | विच्चु, बिच्छु | विचे | विंच्छ |
| सूर्य्य | सुज्जो, सूरो | सूरज | सुज्जि | |
| वाष्प | वाप्फो, बाप्फो | भाप् | भाप्, भाव् ( ग्राम्य ) | |
| पर्य्यङ्क | पल्लंक | पलंग | पालंग | पलंग |
| एकस्थ | एकत्थ | इकट्ठा | एकत्तर | |
| मस्तक | मत्थक, मात्थश्र | माथा | माता | माथा |
| मत्स्य | मच्छ | मच्छ, मच्छली | माच | |
| कस्य | काह | काहे | काहार | |
| यः | जो | जो | ये | जो |
| यत्र | जहिं | जहां | यथा, येथा ( ग्राम्य ) | येथें |
| तत्र | तहिं | तहां | तथा, सेथा ग्राम्य ) | तेथें |
| कुत्र | कहिं | कहां | कोथा | कोठें |
| भवति | भोदि, होदि | है | हय | |

——:o:——

॥ विदूषकः ॥

( नवीनवत्सरस्स )

दाणीं 'कलिअत्ता' णअरे आअच्छिअ मे भद्दमुहाणं लण्डणीआणं व्ववहारे णिउणत्तणं संवुत्तं, किदाच मए सव्वस्सिं एव्व कज्जे उणादी ।—

अज्ज मह वअणाइं सुणिअ जाणिस्सध केत्तिअं णिउ-णत्तणं किदं मए वाआ बिलाहेसुं त्ति अधवा अलं वित्थरेण। केणाहि वङ्गीअ कइणा सुट्ठु कहिदं "अह्माणं हिअए जइ भाओ भवे ण तादिसं वअणं अअच्छदि, जइ वअणं भवे ण उण भाओ"—ममवि एआरिसी गदी ; सम्पदं मे हिअए बहुअरा भाआ आअदा ण उ वअणाइं वट्टंदि; भोदु एत्तिएण तुह्माणं संदोसो भोदु ॥

पहिवीणाहस्स आअमणे जं जं संवुत्तं तं सव्वं दाणीं

---

इदानीं कलिकाता नगरे आगत्य मे भद्रमुखानां लण्डनीयानां व्यवहारे निपुणत्वं संवृत्तं कदाच सर्व्वस्मिन्नेव कार्ये उन्नतिः—

अद्य मम वचनानि श्रुत्वा ज्ञास्यथ कियन्नि-पुणत्वं कृतं मया वाग्विलासेष्विति । अथवा अलं विस्तारेण केनापि वङ्गीय कविना सुष्ठु कथितं "अस्माकं हृदये यदि भावो भवेत् न वचनं आगच्छति यदि वचनं भवेत् न पुनर्भावः" * ममापि एतादृशी गतिः— साम्प्रतं मे हृदये बहुतरा भावा आगता न पुनर्वचनानि वर्त्तन्ते, भवतु एतावता युष्माकं सन्तोषो भवतु ॥

पृथिवी नाथस्य आगमने यत् यत् संवृत्तं तत् सर्व्वं युष्माभिः विशेषेण ज्ञातं तत किन्तु न चर्व्वित चर्व्वणेन अथवा रामा-

---

* दीनबन्धु मित्रस्य लीलावती नाटकं द्रष्टव्यम् ॥

तुह्मेहिं विसेसेण जाणिदं ताकिं तेण चव्विदचव्वणेण। अधवा रामाअण, रहुवंस, सिसुबालवह पहुदिसु कव्वेसु ट्ठिदेसु कस्स वा जणस्स मे राआगमणकधणे सद्धा हविस्सदि ?—अदो एव्व अज्जतं परिहरिअ णवाअद वच्छरस्स किम्पि वत्तु कामह्मि तासुणाध——

यथा रघुवंश, शिशुपाल बध प्रभृतिषु काव्येषु स्थितेषु कस्य वा जनस्य मे राजागमनकथने श्रद्धा भविष्यति ? * अतएवाद्य तत्परिहृत्य नवागत वत्सरस्य किमपि वक्तुकामोऽस्मि—अहो ! नदीनां वेग इव वेश्यानां यौवनमिव वाष्पीय शकटमिव दिनानि गच्छन्ति न कमपि अपेक्ष्य तिष्ठन्ति। गतः स खृष्टीय १८७५ वत्सरः !! न कोऽपि केनापि उपायेन इमं प्रत्यानेतुं पुनः पेक्षितुञ्च पारयति,

* विदूषकस्य सौम्य रहन भाषण मेतदिति प्रतीयते तादृश वीर्य्य सम्पन्नार्य्य जातीयानां चैत्रे राजागमन वर्णनं लज्जाकर मित्यस्य मनोगत भाव इति टीकाकारः।

अह्मो णईणं वेअविअ, वेस्साणं जोव्वणं विअ वप्फीअ सअड़ं विअ दिणाइं गच्छंदि ण कम्पि ओवेक्खिअ चिट्ठंदि—गदो सो खुट्ठीय १८७५ वच्छरो !!! ण कोवि केण वि उवाएण इमं पच्चाणेदुं उण पेक्खिदुंअ पारेदि;—वच्छरो हि समग्ग महासाअरस्स एक्को तरंगो जधा साअरे एक्को तरङ्गो उट्ठीअ सव्वं समुद्दट्ठिदं आउलीकरेदि तधा एक्केण वच्छरेण पहिवी आउला भोदि। वच्छरस्स परिमाणं हि अवत्थाणुरूवं कप्पीअदि। तधाहि विरहि

वत्सरो हि समग्रमहासागरस्य एकस्तरङ्गः, यथा सागरे एकस्तरङ्ग उत्थाय सर्व्वं समुद्र स्थितं आकुली करोति तथैकेन वत्सरेण पृथिवी आकुला भवति वत्सरस्य परिमाणं

णीणं एक्केण एव्व क्खणेण एक्को वच्छरो भोदि सुहभाइणो उण एक्केण वच्छरेण एक्कं क्खणं, एवं भोअणमेत्त सव्वस्सस्स दीग्घ सूत्तस्स अह्लादिसस्स कहिं वि वच्छरो भोदि वा णत्ति ण जाणीअदि, भोदु साहारण णिअमादो बारह मासेहिं एक्को वच्छरो भोदि बच्छरस्स कहणसमए मासदिअहाणं परिमाणकहणं दाव णिप्फलं ता किं एदाणं कहणेण

---

हि अवस्थानुरूपं कल्पते तथा हि विरहिणीनां एकेन क्षणेनैको वत्सरो भवति सुख भागिन: पुनरेकेन वत्सरेणैकं क्षणम् एवं भोजनमात्र सर्वस्वस्य दीर्घसूत्रस्याह्लादशस्य कदापि वत्सरो भवति वा नेति न ज्ञायते ; भवतु साधारण नियमात् द्वादशमासैरेको वत्सरो भवति वत्सरस्य कथन समये मास-दिवसानां परिमाण कथनं तावन्निष्फलं तत्

बारहमासेहिं बच्छरोत्ति सव्वदेसीआणं अहिमदं ण वा त्तत्तीअदि एत्थ कोवि विकप्पो। अधो को णाम मासो बच्छरस्स प्पवत्तओ भवेत्ति तक्के ण कोबि णिण्णयो लक्खीअदि एत्थ एव्व लोआणं रुइए अणेक्कत्तणं पडिहादि का गदी।

जो कोवि मासो वच्छरस्स प्पवत्तओ भोदु बारहेहिं

---

कि मेतेषां कथनेन द्वादश मासै र्वत्सर इति सर्वे देशीयाना मभिमतं न वा लक्ष्यतेऽत्र कोऽपि विकल्प:। अथ को नाम मासो वत्सरस्य प्रवर्त्तको भवेदिति तर्के न निश्चयो लक्ष्यते अत्र व लोकानां रुचेरनेकत्वं मति भाति का गति:—

य: कोऽपि मासो वत्सरस्य प्रवर्त्तको भवतु द्वादशभिरेव तैर्वत्सरो भवति अत्र नास्ति कोऽपि सन्देह: इदानी मेतावत्तु विचार्य-ताम्—अस्माकं पूर्व पुरुषै र्मनुष्याणा मायु:

जेव्व तेहिं वच्छरो होदि एत्थ णत्थि कोवि संदेहो। दाणीं एत्तिअं तु विआरो अदु अह्माणं पुव्वपुरिसेहिं मणुस्साणं आउ सदवच्छर पडिमिदं किदं अध यूरोव देसीएहिं तदो तीसीअ वच्छरे अवहरिअ सत्तदि वच्छर पड़िमिदं माणवाण आउ किदं साम्पदं समएण तदोवि तीसीअ वच्छरा ग्गहीदा अहवा णत्थि दाणीं मरणस्स णिअमो। दाणीं तीसीअ वच्छरे जो जीअदी स वुड्ढो।

---

शत वत्सर परिमितं कृतं अथ यूरोपदेशीयैः स्ततस्त्रिंशत् वत्सरानपहृत्य सप्तति वत्सर-परिमितं मानवानामायुः कृतम् ;

साम्प्रतं समयेन ततोऽपि त्रिंशत् वत्सरा गृहीता अथवा नास्तीदानीं मरणस्य नियमः इदानीं त्रिंशत् वत्सरान् यो जीवति स वृद्धः।

अह्मो विसुमरिदं मए ताव अस्सिं क्खणे पइदं ताकिं णाम तं ( स्मृति मभिनीय ) आं जाणिदं णव वच्छरस्स कहणे पउत्तो अहं सु ीअदु सुणीअदु णव वच्छरस्स फलं अस्सिं वच्छरे बहुओ माणव लीलं पड़िहरिस्संदि अवरे जम्मं गेह्णिय पहिवीए भारं वड्ढइस्संदि काणं पाणिग्गहणं

---

अहो विस्मृतं मया तावत् अस्मिन् क्षणे प्रकृतं तत् किन्नाम तत् ? आः ज्ञातं नववत्सरस्य कथने प्रवृत्तोऽहं श्रूयतां श्रूयतां नववत्सरस्य फलम् अस्मिन् वत्सरे बहवो मानवलीलां परि-हरिष्यन्ति अपरे जन्म गृहीत्वा पृथिव्या भारं वर्द्धयिष्यन्ति केषां पाणिग्रहणं भविष्यति केषां वा वियोगः। कतवो यथाकालं मागत्य पृथिवी मलङ्करिष्यन्ति, एवं सर्व्वस्यैव जीवित-जीवस्य आयुषो वत्सरैकमिता हद्धि भविष्यति नास्त्यत्र कोऽपि विकल्पः श्रुतं मया प्रधान गणक मुखात्।

हविस्सदि काणं वा विओओ उदुओ जधाकालं आअच्छिअ पहिवीं अलंकरिस्सदि एव्वं सव्वस्स जेव्व जीविद जीअस्स आउणो वच्छरे क्कमिदा बुड्डी हविस्सदि णत्थि एत्थ कोवि विकप्पो सुदं मए प्फहाण गणाअ सुहादो ॥

समओ हि शोवस्स आरो जधा कोबि शोवस्स आरो सोहन शोवस्सं गेह्णिअ तेण सह अवरस्स अप्पमोल्ल अधाउणो संम्मिस्सणं कदुअ सोहणाहरण णिम्माणं करेदि, समओ वि तधा अह्माणं वाल्लावत्था शोवण्णं गेह्णिअ पावसम्मिस्सं जोव्वणालंकार गढेदि । जधा अ आहरणे भग्गेण तस्स किम्पि मोल्लं वट्टइ तधा जोव्वणस्सा-च्चए माणवाणं न कोवि सारो चिट्ठदि । अज्जजा जुअदी जोव्वणमदगव्विदा पहिवीए णअलण देदि जो-व्वणस्सात्त्रएसे उवरि कस्स वा दिट्ठी णिपड़िस्सदि । अलं पल्लविदेण ॥

---

समयो हि सुवणकार: । यथा कोऽपि सुवर्णकार: शोभनसुवर्णं गृहीत्वा तेन सहापरस्याल्पमूल्यधातो: सम्मिश्रणं कृत्वा शोभनाभरण निर्म्माणं करोति समयोऽपि तथास्माकं बाल्यावस्थासुवर्णं गृहीत्वा पापसम्मिश्रं यौवनालङ्कारं गठयति । यथा चाभरणे भग्ने न तस्य किमपि मूल्यं वर्त्तते यौवनस्यात्यये मानवानां न कोऽपि सार स्तिष्ठति । अद्य या युवती यौवनमद-गर्व्विता पृथिव्यां न चरणं ददाति यौवनस्यात्यये अस्या उपरि कस्य वा दृष्टि निंपतति ? अलं पल्लवितेन ।

## ॥ प्राचीन भूगोलवर्णनम् ॥

( तीर्थस्थानानि )

अग्निष्टोमातिरात्राभ्यां फल माप्नोति भारत ।
पृथिवी तीर्थं मासाद्य गोसहस्र फलं लभेत् ॥
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ।
दशाश्वमेधे स्नात्वा च तदेव फल माप्नुयात् ॥
सर्पदेवीं समासाद्य नागानां तीर्थ मुत्तमम् ।
अग्निष्टोम मवाप्नोति नागलोकञ्च विन्दति ॥
ततो गच्छेत धर्मज्ञ द्वारपालन्तरान्तकम् ।
तत्रोष्य रजनी मेकां गोसहस्रफलं लभेत् ॥
ततः पञ्चनदं गत्वा नियतो नियताशनः ।
कोटितीर्थं मुपस्पृश्य हयमेधफलं लभेत् ॥
अश्विनोस्तीर्थं मासाद्य रूपवानभिजायते ।
ततो गच्छेत धर्मज्ञ वाराहं तीर्थं मुत्तमम् ॥
विष्णुर्वराहरूपेण पूर्व्वं यत्र स्थितोऽभवत् ।
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ॥
ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फल मवाप्नोति राजसूयस्य मानवः ॥
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ।
कृतशौचं समासाद्य तीर्थसेवी नराधिपः ।
पुण्डरीक मवाप्नोति कृतशौची भवेच्च सः ॥

ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः ।
उपोष्य रजनीमेकां गाणपत्य मवाप्नुयात् ॥
तत्रैव च महाराज यक्षिणीं लोकविश्रुताम् ।
स्नात्वाभिगम्य राजेन्द्र सर्व्वान् कामानवाप्नुयात् ॥
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिण मुपावृत्य तीर्थसेवी समाहितः ॥
सम्मितं पुष्कराणाञ्च स्नात्वार्च्चेत्र पितृदेवताः ।
जामदग्न्येन रामेण कृतं तत्सुमहात्मना ॥
कृतकृत्यो भवेद्राजन्नश्वमेधञ्च विन्दति ।
ततो रामह्रदान् गच्छेत् तीर्थसेवी समाहितः ॥
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ॥
क्षात्र मुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः ।
पूरयित्वा नरव्याघ्र रुधिरेणेति विश्रुतम् ॥
पितरस्तर्पिताः सर्व्वे तथैव प्रपितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्नराधिपः ॥

पितरऊचुः—

राम राम महाभाग प्रीताः स्म तवभार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते प्रभो ॥
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ।
एव मुक्तः स राजेन्द्र रामः प्रहरतां वरः ॥
अब्रवीत् प्राञ्जलिर्व्वाक्यं पितॄन् स गगनेस्थितान् ।

## ॥ प्राचीन भूगोलवर्णनम् ॥

( तीर्थस्थानानि )

अग्निष्टोमातिरात्राभ्यां फल माप्नोति भारत ।
पृथिवी तीर्थं मासाद्य गोसहस्र फलं लभेत् ॥
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ।
दशाश्वमेधे स्नात्वा च तदेव फल माप्नुयात् ॥
सर्पदेवीं समासाद्य नागानां तीर्थ मुत्तमम् ।
अग्निष्टोम मवाप्नोति नागलोकञ्च विन्दति ॥
ततो गच्छेत धर्मज्ञ द्वारपालन्तरान्तकम् ।
तत्रोष्य रजनी मेकां गोसहस्रफलं लभेत् ॥
ततः पञ्चनदं गत्वा नियतो नियताशनः ।
कोटितीर्थं मुपस्पृश्य हयमेधफलं लभेत् ॥
अश्विनोस्तीर्थं मासाद्य रूपवानभिजायते ।
ततो गच्छेत धर्मज्ञ वाराहं तीर्थं मुत्तमम् ॥
विष्णुर्वाराहरूपेण पूर्व्वं यत्र स्थितोऽभवत् ।
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ॥
ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फल मवाप्नोति राजसूयस्य मानवः ॥
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ।
कृतशौचं समासाद्य तीर्थसेवी नराधिपः ।
पुण्डरीक मवाप्नोति कृतशौचो भवेच्च सः ॥

ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः ।
उपोष्य रजनी मेकां गाणपत्य मवाप्नुयात् ॥
तत्रैव च महाराज यक्षिणीं लोकविश्रुताम् ।
स्नात्वाभिगम्य राजेन्द्र सर्व्वान् कामानवाप्नुयात् ॥
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिण मुपावृत्य तीर्थसेवी समाहितः ॥
सम्मितं पुष्कराणाञ्च स्नात्वार्च्च्य पितृदेवताः ।
जामदग्न्येन रामेण कृतं तत्सुमहात्मना ॥
कृतकृत्यो भवेद्राजन्नश्वमेधञ्च विन्दति ।
ततो रामह्रदान् गच्छेत् तीर्थसेवी समाहितः ॥
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ॥
क्षात्र मुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः ।
पूरयित्वा नरव्याघ्र रुधिरेणेति विश्रुतम् ॥
पितरस्तर्पिताः सर्व्वे तथैव प्रपितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्नराधिपः ॥

पितरऊचुः—

राम राम महाभाग प्रीताः स्म तवभार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते प्रभो ॥
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ।
एव मुक्तः स राजेन्द्र रामः प्रहरतां वरः ॥
अब्रवीत् प्राञ्जलिर्व्वाक्यं पितॄन् स गगनेस्थितान् ।

'भवन्तो यदि मे प्रीता यद्यनुग्राह्यतां मयि ॥

पितृप्रसादमिच्छेयं तप आप्यायनं पुनः ।

यच्च रोषाभिभूतेन चत्र मत्सादितं मया ॥

ततश्च पापान्मुच्येयं युष्माकं तेजसाप्यहम् ।

ह्रदाश्च तीर्थीभूता मे भवेयुर्भुवि विश्रुताः ॥'

एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ।

प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ॥

तपस्ते वर्द्धतां भूयः पितृभक्त्या विशेषतः ।

यच्च रोषाभिभूतेन चत्र मुत्सादितं त्वया ॥

ततश्च पापान्मुक्तस्त्वं निहतास्ते स्वकर्म्मभिः ।

ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥

( क्रमशः )



## ॥ मूल्यादीनां नियमः ॥

वार्षिक मूल्यं प्रथमदेयम्— — — — — — २।/०

पश्चाद्देयम्— — — — — — ३।/०

प्रत्येकखण्डं ।०) परिमित मूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येक पंक्तिः /० परिमित-मूल्येन मुद्रिता भविष्यति ॥

कलिकाता-सत्ययन्त्रे श्रीसच्चेन्द्रनाथसरकारेणमुद्रितः। लाहोरस्थ-श्रीहीरालालचट्टोपाध्यायेनप्रकाशितः॥

Registered N0 12

ॐ

# विद्योदयः ।

चरतु राजकुलं प्रकृतिप्रियं
भवतु वेदविदां परिवर्द्धनम् ।
जयतु सा विधदाम्बुजवासिनी
सुमनसाम्मनसा मभिनन्दिनी ॥

नानाशास्त्रकथारम्भौ लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्याद्दविद्यातिमिरं भुवि ॥ *

खण्ड ६ ] जनुवरी १८७६ ई० [ संख्या १

## ॥ विदूषकः ॥

+ अहं क्खु महाराअ विक्कमादिअस्स परलोअ गमणादो अत्तणो जीविदे हदासो हणु मन्तो विअ हिमवन्तस्स गुहाए सिसिणीओ जेव्व ट्ठिदः । अधो अज्ज भारदे राआगमणवुत्तन्तं सुणिअ अविरल पादतुवराए गदीए राअहाणीं पड़िचलिदः ( आकाशे ) जाद पथिअ अहं

---

* अत्र श्रीमत्पण्डित राधाकृष्ण गोस्वामिनः प्रयत्नेनैव विद्योदयस्योदयो जातः । सुतरामसौ कृतज्ञताप्रकाशयन्निव तत्कृतश्लोकद्वयं शिरसि निधाय प्रतिमासं प्रकाशमगमत् । इदानीं परलोक स्थित तव भवति तत्कृतश्लोकधारणं हृदयं दुःखाकरोतीति नवीनवत्सरारम्भे नवीनश्लोकद्वयं धृत्वा प्रकाश्यते ॥

+ अहं खलु महाराजविक्रमादित्यस्य परलोकगमनात् आत्मनो जीविते हताशो हनुमानिव

खु बह्मणो बुभुक्खाए मारिदो, अज्ज राआगमण वुत्तंतं सुणिअ राअहाणीं गमिस्सं ता कधेहि किं णामहेआ सा राअणअरी केण वा उणा उवाएण तहिं लहु गमिस्सं त्ति । ( श्रुति अभिनीय ) किं कधेसि 'कलिअत्ता' णामहेआ सा णअरी वाप्फीअ सअड़ प्पसादेण तुरिअं गमिस्ससि त्ति । वच्छ चिरंजीअ अण्णं वि पुच्छिदव्वोसि तहिं बह्मणा सआसादो सअड़ मोल्लं गेह्णीअदि वा ण ? । ( पुनः श्रुति अभिनीय ) किं कधेसि दाणीं लण्डणीआण हत्थे भारदभूमी णिपड़िदा ता कुदो जादि विआरो त्ति का गदी देव्वस्स एत्थ पहुत्तण। जाद देवदाणं प्पसादेण दे मंगलं होदु, कधेहि

---

हिमवतो गुहायां स्वपन्नेव स्थितः। अथाद्य भारते राजागमन वृत्तान्तं श्रुत्वा अविरल पादत्वरया गत्वा राजधानीं प्रति चलितः। जात पथिक ! अहं खलु ब्राह्मणः बुभुक्षया मारितः अद्य राजागमन वृत्तान्तं श्रुत्वा राजधानीं गमिष्यामि। तत् कथय किं नामधेय सा राजनगरी ? केन वा पुनः उपायेन तत्र लघु गमिष्यामीति ? किं कथयसि कलिकत्ता नामधेया सा नगरी वाष्पीय शकट प्रसादेन तूर्णं गमिष्यसीति। वत्स ! चिरञ्जीव अन्यदपि प्रष्टव्योऽसि तत्र ब्राह्मण-सकाशात् शकटमूल्यं गृह्यते वा न ? किं कथयसि इदानीं लण्डनीयानां हस्ते भारतभूमि र्निपतिता तत् कुतो जातिविचार इति। का गतिः दैवस्यात्र प्रभुत्वं। वत्स ! देवतानां प्रसादेन ते मङ्गलं भवतु, कथय कुत्र वाष्पीय शकटं लभ्यते ? किं कथयसि समीप एव तत् स्थान मिति। गच्छतु भवान् उपकृतोऽस्मि संवृत्तः। अहो किमेतत् राजसद्मनमिव मनो-हरं गृहं दृश्यते श्रूयते च महानेव मनु-

कहिं प्पदेसे वाप्फीअ सअड लभीअदि ? किं कधेमि समीव एव्व तं ट्ठाणं त्ति गच्छदु भवं उवकिदोह्मि मनुत्तो । ( पदान्तरं गत्वा ) अम्मो किं एदं राअ सअणं विअ मणोहरं घरं लक्खीअदि सुणीअदिअ मह तो जेव्व मणुस्साणं कोलाहलो । अह्मो तदो इदो आहिण्डं तेहिं जणेहिं सव्वधा आउली किदं एदं घरं । ता किं एत्थ बह्मण भोअणं बट्टइ ? अ-सधा कध एआरिसो जणाणं समागमो जादो । भोदु समीवं गदुअ सव्वं पाच्चक्खी करेह्मि ( पदान्तरं गत्वा शकटस्थितिस्थानस्य (ष्टेसन) समीपवर्त्ती भूत्वा घण्टा-नादं निशम्य च ) उअर मा

---

ष्याणां कोलाहलः अहो तत इत आहिण्ड-मानैर्जनैः सर्व्वथा आकुलीकृत मेतत् गृहं तत् किमत्र ब्राह्मण भोजनं वर्त्तते ? अन्यथा कथमेतादृशो जनानां समागमो जातः । भवतु समीपं गत्वा सर्व्वं प्रत्यक्षो करोमि । उदर ! माउताम्य अत्रैव ते मध्याह्न करणीयं (भोजनं) भविष्यति अरे यन्मया चिन्तितं तदेव संवृत्तम् । अत्र देव पूजा वर्त्तत इति घण्टा शब्देनानु-मीयते एते खलु मानवा दान पत्रं (टिकिट्) हस्ते कृत्वा आगच्छन्ति तदेते ब्राह्मणे भवि-तव्यम् । अहमपि ब्राह्मणो ममापि दान पत्र लाभो भविष्यति ही ही ही प्रस्थान समये ब्राह्मण्या मुखदर्शनस्य फल मेतत् ! ! पृच्छामि तावत् अरे कस्यैतत् गृहं अत्र किं ब्राह्मण भोजनं भवति ? अहं ब्राह्मणो बुभुक्षया मारितोऽस्मि तत् कथय गृहपतिम् अहो न कोपि शृणोति अरण्ये खलु मया रुदितं, भवतु एतेषां समीपे गमिष्यामि हा धिक् हा धिक् कोनु एषः * यमराजस्य अनु-चर इव भयानकं दर्शनः सर्व्वेषेव पशुमारणं मारयति, तत् पृच्छामि अरे कस्यैतत् सदनं अत्र किमपि ब्राह्मणानां भोजनं लभ्यते ? किं कथयसि एतत् वाष्पीय शकटा-

* कनिष्टेबल को देखकर ।

उत्तम्म एत्थ एव्व दे मज्झ
स्स कारणोज्ज हविस्सदि।
अले जं मए चिन्दिदं तं जेव्व
संवुत्त एत्थ देवपूआवहूर्त्ति
घण्टासद्देण अणुमीअदि
( मन्दिरं ) एदे क्खु माणुसा
दाणपत्तं हत्थे कदुअ आअ
च्छंदि ता एदेहिं बह्मणेहिं
होदव्वं अहं वि बह्मणो मम
वि दाणपत्तलाहो हविस्सदि
हीही प्पत्थान समए
बह्मणीए मुह दंसणस्स फलं
एदं। पुच्छिस्सं दाव अले
कस्स एदं घरं एत्थ कि

बह्मण भोअणं होदि ? अहं
बह्मणो बुभुक्खाए मारिदो
ह्मि ता कधेहि गच्छइ ।
अम्हो ण कोवि सुणादि
अरण्णे क्खु मए रोदिदं
भोदु एदाणं समीवं गमिस्सं
( स्तोक मन्तरं गत्वा ) हही
हही को णु एसो जमरा-
अस्स अणुअरो विअ भआ-
णअदंसणो सव्वं जेव्व पसु-
मारणं मारेदि ता पुच्छि
स्सं अले कस्स एदं सअणं ?
एत्थ किम्पि ब्रह्मणाणं भो-

---

वस्थान सदनम् अत्र मुद्राव्ययेन सर्व्वस्यैव
भोजनं भवति न केवलं ब्राह्मणस्य। भवतु
वाष्पीय शकटं कस्मिन् समये कलिकत्ता
नगरीं गमिष्यति ? किं कथयसि अस्मिन्नेव क्षणे,
अहं गमिष्यामि कथय सारथिं क्षणं विलम्बितुं
किं कथयसि प्रथमं शकट मूल्यम् उपहर

ततो गमिष्यसीति। अब्रह्मण्यं अब्रह्मण्यम्
न मे ब्राह्मणाः अपरः कोऽपि वर्त्तते नूनं
हता मा तपस्विनी ! जात! अहं कलिकाता
नगरं गमिष्यामि शकट मूल्यं दातुं आगतः,
तत् किं मां तीक्ष्ण दृष्ट्या मैवम् ताड़यसि ?
अहो लण्डनराजस्य विचारो! मूल्यं गृह्णाति
मारयति च!!

अणं लभीअदि ? ( अुतिम भिनीय ) किं कधेसि एद वाफ्फीअ सअडावत्थान सअण एत्थ मुह्राब्वयेण सव्वस्स एव्वं भो अणं भोदि ण केवल बह्म णस्स। भोदु वाफ्फीअसअड़ कम्सिं समए 'कलिअत्ता' णअरं गमिस्सदि ? किं कधेसि दूमस्सि जव्व क्खणे अहं गमिस्सं कधेहि सारहि क्खणं विलंबिदु। किं कधेसि पढमं सअड़ मोल्लं उबहर तदो गमिस्ससित्ति ( पदान्तरं गत्वा कमपि यष्टिपाणिं शान्तिरक्षक स्वाभिमुखं क्रोधेन धावन्तं दृष्ट्वा ) अब्बह्मण्णं अब्बह्मण्णं णामे बह्मणीए अवरो कोवि वट्टइ णूणं हदा सा तव खिणी ! ! जाद अहं 'कलिअत्ता' णअरं गमिस्सं सअड़ मोल्लं दादुं आअदो ता किं मं तीक्ख दिट्ठीए पेक्खिअ ताडेसि अहो लगुडणा-राअस्स विआरो मोल्लं गेण्हिदुं मारेदि अ ! ! !

(विदूषकस्य शकट भ्रमण-वृत्तान्तोऽयं प्रकाश मे ष्यति इदानीं कलिकाता नगरं राजदर्शनं वर्णते) अह्मो इअं सा 'कलिअत्ता' णअरी ता किं इमाए दलि-हागलहत्थेण णिक्कासिदा

---

इयं सा कलिकाता नगरी तत् किमस्या दरिद्रा गलहस्तेन, निष्कासिता भवन्ति किं कथयसि अद्यात्र राजागमनं भविष्यति तत् धन प्रार्थन शंकया निष्कासन्ते इति। मो हतोऽस्मि आमूलात् भग्ना सा दुरारोहिणी आशा लता। हा महाराज विक्रमादित्य ! महाराज भोज !

होदि। किं कहेसि अज्ज एत्थ राआगमणं हविस्सदि ता धणप्पत्थणा संङ्काए णिक्कासीअदि एदेहिं मो हदोह्मि! आमूलादो भग्गा सा दूरारोहिणी आसा लदा। हा महाराअ विक्कमादिच्च! महाराअ भोअ! पेक्खतं दाणीं तुह्माणं भारद भूमीए का वि अवत्था संवुत्ता रअणो आअमणे दाव धण प्पत्थण संकाए दलिद्दा णिक्कासिदा ण जाणीअदि भारदस्स भाओ अवरं वा किं हविस्सदि। हिअअ तादिसे सुहोवणदे मणोरहे रज्जं कदुअ सम्पदं अणुभव दाव दुक्खं। सव्वधा मारिदोह्मि देव्वेण जदो दिवहस्स सेसो संवुत्तो ण मे भोअणं संवुत्तं का गदी!!!

अले तत्थ महंतो कोलाहलो सुणीअदि ता किं सो राआ आअदो भवे? (पदा

---

प्रेक्षेथां इदानीं युष्माकं भारत भूमेः काप्यवस्था संवृत्ता राज्ञ आगमने तावत् धन प्रार्थन शंकया दरिद्रा निष्कासिता, न ज्ञायते भारतस्य भाग्यं अपरं वा किं भविष्यति!!! हृदय तादृशे सुखोपनते मनोरथे राज्यं कृत्वा साम्प्रत मनुभव तावद् दुःखम्। सर्व्वथा मारितोऽस्मि दैवेन यतो दिवसस्य शेषः संवृत्तः न मे भोजनं संवृत्तम् का गतिः—अरे तत्र महान् कोलाहलः श्रूयते तत् किं स राजा आगतो भवेत् हा धिक् हा धिक् अयं स रत्न प्रसव कारिण्या भारत भूम्या नाथः अयि भारतधरे नास्ति ते मरणं हा धिक् हा धिक् अद्य रत्नाकर वेष्टिताया रत्न प्रसव कारिण्या ते नाथः पदातिक वेशं कृत्वा आगतः, अद्य कस्मात् त्वं तादृशं पूर्व्वगौरवं विस्मृतासि? अथवा तवोपरीदानीं शनैश्चरस्य दृष्टि र्निपतिता: यतः सन्ध्याकालेऽपि ब्राह्मणस्य भोजनं न संवृत्तम्॥

न्तरं गत्वा) हद्धी हद्धी अयं सो रअणप्पसवआरिणीए भारद भूमीए णाहो!! अयि भारदहरं णत्थि दे मरणं हद्धी हद्धी अज्जोरअ-संअर वेट्ठिदाए रअणप्प-सव आरिणीए दे णाहो पदाहूअ वसं कदुअ आ-अदो अम्ब कीस तुमं ता-दिसं पूव्वगोरअं विसुमरि-दासि अथवा तुवोवरि दाणीं सणैच्चरस्स दिट्ठि निपडिदा जदो संज्झा समए वि अग्गि-णास भोअणं ण संवुत्तं।



॥ राजपूजा ॥

"प्रवर्त्ततां प्रकृतिहिताय पार्थिवः।
सरस्वती श्रुतिमहती न हीयताम्॥"

वयं चिरादेव राजभक्ताः, यदास्माकं बलानि हिमालय मुल्लङ्घ्य पारसीकादि प्रदेशान् विजित्य च जयमङ्गलसूचक-शङ्खनादैस्तदानीं नवोदितं यूरोप-प्राच्यराज्यनिकरं कम्पयन्तिस्म, तथा समरश्रमविनयनाय मलयमारुतसन्दोलित-तमाल-च्छाया-शीतल-सह्यपर्व्वतनितम्बे नारिकेलासवं पीत्वा-सान्द्रानन्द-सम्मुग्ध हृदय-वहिर्गत-हास्यरवेण नियतोत्तुङ्गतरङ्गसङ्घट्टसमुत्थितं जल-निधिनिनद मुपहसन्ति स्म, यदा-चास्मद्दिशीया विविध-दर्शन-

ज्योतिःप्रभृति-शास्त्र-समालोचनेन मनोवृत्तेः परमोत्कर्षं सन्दर्श-यन्तो दूरदेशस्थितानपि विस्मापयन्ति स्म ; तदा च वयं राज-भक्ताः, अग्रलिखित-मनु-वचनैरस्माकं तदानीन्तनी राजभक्तिः प्रकाशिता भवति ॥———

"अराजके हि लोकेऽस्मिन् सर्व्वतो विद्रुते भयात्।
रक्षार्थ मस्य सर्व्वस्य राजान मसृजत् प्रभुः॥
इन्द्रानिलयमार्काणा मग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः॥
यस्मादेषां नरेन्द्राणां मात्राभ्यो निर्म्मितो नृपः।
तस्मादभि भवत्येष सर्व्वभूतानि तेजसा॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्म्मराट्।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥
बालोऽपि नावमन्तव्यो मनुष्यइति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥
यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे।
मृत्युश्च वसति क्रोधे सर्व्वतेजोमयो हि सः॥
स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषा मनुपूर्व्वशः।
वर्णाना माश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता॥"

प्राचीनार्य्याणां मते राजा पितृहीनानां पिता पुत्रहीनानां पुत्रः बन्धुहीनानां बन्धुः राजा प्रजाना माराध्यो देवः, किमधिकं

पैतृकवार्षिककृत्येऽपि भूस्वामि-पूजनविधिर्दृश्यते ।

प्राचीननृपतयोऽपि प्रजानां बन्धुकार्य्यं मकुर्व्वन्निति प्राचीनकाव्यादिभ्यः स्फुटं प्रतीयते। तथाचाभिज्ञानशकुन्तले दुष्मन्तवाक्यम्—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥"

प्रजाना मनुरञ्जन मेव तेषा मेकमात्रं लक्ष्य मासीत् प्रजासन्तोषाय ते सर्व्वंव्यापारादितेषु जलाञ्जलिं ददुरित्युत्तरचरितीयरामवचनैर्ज्ञायतएव—

"स्नेहं दयाञ्च सौख्यञ्च तथा वा जानकी मपि ।
आराधनाय लोकस्य त्यजतो नास्ति मे व्यथा ॥"

नृपतीना मेव मादिगुरुत्वेऽभीभूताः प्राचीनार्य्यजातीया राजहस्ते स्वजनपालनभारं विन्यस्य राजान मिष्टदेववत् पूजयन्ति स्म । ततः प्रभृत्येवास्मद्धृदयाङ्किता राजभक्तिः पाषाणा निहितरेखेव न कुतोऽपि विलुप्यते। तेनैव कारणेनाद्य राजागमने निखिल मेव भारतं सान्द्रानन्दसागरे निमग्नं स्वस्व-सद्भावानुरूपं विविधविलास मातनोति । पृथग्जनानां का कथा कर्दमिनराजगणा अपि भाविसम्राजश्चरणसेवार्थं स्वराज्यसाररत्नान्यादाय "कलिकत्ता" (कलिकाता) नगरे समायाताः ।

## ॥ युवराजः ॥

नाम

॥ प्रिन्स अव् ओयेल्स ॥



कवयोऽपि यथाशक्ति पदरचनां कृत्वा केचित् स्वान्तसञ्जातानन्दप्रकाशनेन राजपूजां कुर्व्वन्ति यथा—

"दुःखध्वान्तातिघोरा
व्यसनमयनिशा
भारतस्य प्रभाता,

दृष्टः पूर्व्वाचलान्ते
पुनरिह तरणि
र्मोदयँल्लोकसङ्घम्।

तत् किं निद्राभिभूता
शयनमनुरता
स्तिष्ठताद्यापि धीराः,
उत्थायोच्चैर्मिलित्वा
नृपतनययशो
गीयतां सर्व्वदिक्षु ॥
वाद्यन्तां राजदुर्गे
सुमधुर निनदा
राजमाङ्गल्यवादा,
ढक्कावंशीमृदङ्गा
ऽऽणकपणवमुखा
वाद्यसङ्घा मिलित्वा ।
स्फूर्ज्जन्त्वत्यातिघोराः
प्रतिपुरमचिरा
द्धस्तिहेतैर्विरावा,
उच्चैः श्रीराजसूनो
र्जयवचनयुता
गीतिका गीयताञ्च ॥
सिच्यन्तां राजमार्गा
हिमसुरभिजलै
र्नीरजीकारितञ्च,
स्थाप्यन्तां पूर्णकुम्भा
इह सकलपुरी
तोरणाधः सरम्भाः ।
मालाभिः पल्लवानां
विलसतु नितरां
गोपुरं सर्व्वतोऽद्य,
श्रीलश्रीराजसूनो
र्जयवचनयुता
गीतिका गीयताञ्च ॥
सायं दीपावलीभि
र्विलसतु नितरां
राजमार्गोऽथ सौधाः,
शोभन्तां राजचिह्नै
र्जलधरपटला
ऽऽलम्बिभिः केतनैश्च ।
एवं सम्भावयद्भि
र्नृपतय मथा
ऽऽनन्दसम्मुग्धचित्तैः,
गीयन्तां गीतिका

स्वाद्विजयरवयुता
स्वैकतानं मिलित्वा ॥"*
केचिच्च स्वेयकाव्यया
स्वदेशमाकलयन्ति—
"श्रीयुवराजसमागमे
समागतपतिका
भारतधरा—
उत्तिष्ठ भारतधरे !
त्यज शोकतापौ
वीरप्रिये ! जगति
निर्जितवैरिवारः ।
प्राणेश्वरः प्रणयवान्
युवराज एष
आगत्य रञ्जयति ते
नयनप्रदेशम् ॥
गन्धेन लेपय तनुं
धर रत्नभूषां
वस्त्रं पिधेहि

नवरागमयं मनोज्ञम् ।
गेहं सुसज्जय
सपल्लवपुष्पहारैः
दीपं प्रकाशय
समाहर भोग्यजातम् ॥
केतून् प्रसारय
विसारय भोगतल्पं
आपृच्छ कायकुशलं
व्यजनं विधेहि ।
आगच्छति प्रियतमो
परदेशवासी
दैवं विधेय मयि
मङ्गल मुन्नताङ्गि ॥
येन प्रयाति न पुनः
विरहेण दग्धा
तादृक् प्रदर्शय
मनोहर भोगमोदम् ।
भोगेन बद्धहृदयो
न पुनः प्रयाता
भोगोत्सुकाः प्रणयिनो
दयिता भवन्ति ॥
एवञ्च—

* एते श्लोकाः 'राजकुमारागमन'-काव्यान्नीताः ।

'उत्तिष्ठ वङ्गललने धर रत्नभूषां
वस्त्रं पिधेहि शुभरागमयं मनोज्ञम् ।
गेहं सुसज्जय सपल्लवपुष्पहारै
र्दीपं प्रकाशय समाहर भोज्य जातम् ॥
गन्धेन लेपय तनुं शुभपूर्णकुम्भं
संस्थापयोभयतया कुरु भद्रनादम् ।
आमन्त्रयान्यभगिनीगण मुत्सवार्थं
या या पुरा पतिसुखेष्वभिमानिनीह ॥
यत्ते वने जटिलवन्यगणेन सार्द्धं
घोरे तपश्चरित सुव्रतनाथहेतोः ।
धाता प्रसादवशभूः फल मस्य सम्यग्
दातुं समानयति ते युवराज मेतम् ॥
वीरप्रिये जगति निर्ज्जितवैरिवृन्दो
रूपेण तर्ज्जितमनोजतनुर्युवासौ ।
वाचा बृहस्पतिसमो विभवैः कुवेरो
यत् यत् प्रियं मृगदृशां सकलं तदत्र ॥' *

एव मन्येऽपि बहवः कवयो राजकुमारागमनानन्दसम्मुग्ध-हृदयाः स्वभाषया मनोगतोच्छ्वासं प्रकाशयामासुः ॥ राजपुत्रोऽप्यस्मत्कृतपूजाभिः सन्तुष्टः संवृत्तः । इदानी मस्माकं विप्रत्व मनुचिन्त्य मनु-कथितं राजधर्म्मं राजकुमार मुपदिश्य प्रबन्धशेषं कुर्म्मः—

* एते हि श्लोकाः 'कविवचनसुधा'-नामक-पत्राद्‌धृताः । न ज्ञायते कस्य कृति रिति ॥

"स्वराष्ट्रे न्यायवृत्तः स्याद् भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।
वृद्धसेवी हि सततं रक्षोभि रभिपूज्यते ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥
त्रैविद्येभ्य स्त्रयी-विद्यां दण्डनीतिञ्च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः ॥
इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥
दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत् ॥"*



## ॥ स्वप्नलब्धभविष्यपुराणम् ॥

"व्यास उवाच—

अथापरेह्नि सङ्गत्य मुनयो धर्म्मभीरवः ।
प्रणिपेतु र्यथान्यायं पराशर मनिन्दितम् ॥
ततो वेदविशुद्धात्मा वात्सायन इति श्रुतः ।
कृताञ्जलिरुवाचेनं पितरं मे द्विजोत्तम ! ॥

---

* मृगयाक्षा दिवास्वप्नः परिवादः स्त्रियोमदः ।
तौर्य्यत्रिकं वृथाट्या च कामजोदशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणं ।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥

संक्षिप्त वचनन्त्वेतन्निशम्य मुनिसत्तम ! ।
नास्माकं हृदये तृप्तिः परं कौतूहलं महत् ॥
तस्माद्विस्तरशो ब्रह्मन् ! श्रोतु मिच्छा प्रवर्त्तते ।
कलिस्वरूप मस्माकं सर्व्वधर्म्मभृताम्वर ! ॥
इति श्रुत्वा वचस्तस्य सर्व्वज्ञो मे पिता ततः ।
ध्यानस्थितः क्षणं वक्तु मारेभे सुविचक्षणः ॥
दिवं याते नरश्रेष्ठे कृष्णे विष्णुविवर्द्धने ।
सानुजे पाण्डवे चैव कलिकालः समेष्यति ॥
तत्र विप्रास्तु गतवला वेदार्थं वोद्धु मक्षमाः ।
ज्ञानहीना कर्म्मरताः मूर्खाः पण्डितमानिनः ॥
लुब्धा गर्व्वाभिभूताश्च पाषण्डा लिङ्गिनस्तथा ।
छन्नकामाः पापरता भविष्यन्ति कलौ युगे ॥
वेदार्थग्रहणाशक्तास्ततस्ते द्विजसत्तम ! ।
यज्ञं समनुतिष्ठन्ति लुब्धाः स्वोदरहेतवे ॥
त्यक्त्वा वेदविधिं सर्व्वं निर्दयाः क्लीवमानसाः ।
नियतं घातयिष्यन्ति पशून् यज्ञच्छलेन वै ॥
जात्यहङ्कारभूयिष्ठा वर्णानन्यान् निरन्तरम् ।
पीड़यिष्यन्ति ते विप्रा मिथ्याशास्त्रप्रदर्शनैः ॥
प्रतिमाः सर्व्वदेवानां कल्पयित्वा पृथक् पृथक् ।
अर्च्चयिष्यन्ति विविधान् ग्राम्यदेवगणांस्तथा ॥
एवं तैर्मूढ़हृदयैर्नियतं कापथस्थितैः ।
उपद्रुताः प्रजाः सर्व्वा दुःखमाप्स्यन्ति केवलम् ॥

ततः पापभराक्रान्तां धरां संधर्त्तुमक्षमः ।
शेषः स्तोष्यति देवेशं जगदीशं परात्परम् ॥
"नमो धात्रे विधात्रे च विष्णवे प्रभविष्णवे ।
अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने ॥
नमः शिवाय शान्ताय जगदुत्पत्तिहेतवे ।
विश्वरूपाय सर्व्वाय ब्रह्मणे परमात्मने ॥
अनादिर्जगता मादिरनन्तस्त्वं निरन्तकः ।
सर्व्वाधारो निराधारो निर्गुणस्त्रिगुणात्मकः ॥
यतोवाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
न हि स्तोत्रवचस्तस्य किञ्चिदेवात्र विद्यते ॥"
एवं बहुविधैः स्तोत्रैः संस्तूय परमेश्वरम् ।
कृताञ्जलिपुटः शेषो ननाम च पुनः पुनः ॥
ततस्तेन सन्तुष्टः परमात्मा कृपान्वितः ।
आविर्बभूव तस्याग्रे गरुड़ोपरि संस्थितः ॥

इति स्वप्नलब्ध-भविष्यपुराणे उत्तर खण्डे
चतुर्थोऽध्यायः ॥



## ॥ मूल्यप्राप्तिस्वीकारः ॥

श्रीबाबु रामदास सेन — बहरमपुर — २॥ =

सम्पूर्णचविद्योगएवैतत्कार्यकालात्ययकरोऽव्यसम्पन्नस्तत्सम्बन्ताचन्तुमर्हाइतिचलेनशाध्यवः ।

कलिकाता-सव्ययन्त्रे श्रीमहेन्द्रनाथसरकारेणमुद्रितः। लाहोरस्थ श्रीहीरालालचट्टोपाध्यायेनप्रकाशितः ॥

ओं Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासनी सुमनसांमनसामभिनन्दिनी॥

नानाशास्त्रकथारश्मि-लोकालोकानुशीलनः।

विद्योदयोनिराकुर्य्याद्‌विद्यातिमिरम्भुवि॥

खण्डं ८ ] नवम्बर इं १८७८ [ १२ संख्या

सूची



लाहोर

एल्बर्ट नाम के यन्त्रे दिवाकरराघवनामधेयेन मुद्रितः॥

---


मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

,, पश्चाद्देयं ... ... ... ३।/०

प्रत्येकखण्डं।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति।

पवनोत्तमे ॥ तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते । जर्द्धजन्तुगतान् रोगान् करोति च विशेषतः। आमपक्वाशयचरः समानोवह्निसङ्गतः सोन्नं पचति तज्जांश्च विशेषान् विविनक्ति च। गुल्माभिसङ्गातिसारप्रभृतीन् कुरुते गदान्। कृत्स्नदेहचरोव्यानो रससम्वहनोद्यतः। स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि क्रुडश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान् पक्वाधानालयेऽपानः काले कर्षति चाप्ययम्। समीरणः सकृन्मूत्रशुक्रगर्भार्त्तवान्यधः। क्रुडश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्। शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः। युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम्। इत्यादि अन्येऽपि नाग कूर्म्म कृकर देवदत्तधनञ्जया एतेनैव व्याख्याताः। यतस्ते नान्यएषामेव विशेषाः वाह्या अपि तृणगुल्मलतादीनां जीवनादिभूताः।

इतिश्रीकाशिराजसागरे वाशिष्टे चारणे कलातत्त्वे प्रथमे पादे प्रथमाह्निकम् ॥

निरुक्तयोऽप्येतेषां स्वरूपमावेदयन्ति तथाहि प्राणयति जीवयति प्रकटरूपेणवान्तं अन्तरा नयतीति प्राणः। उद्र्द्धं शब्दादिकमानयतीत्युदानः। सम मानयति स्वस्वभागेन रसादीन् यथास्थानं प्रापयतीति समानः विशेषेण तानेव स्वस्थानमानयतीति व्यानः। अप आनयति

सक्तमूत्रानि अधः प्रापयतीत्यपानः। एतज् ज्ञानेनैव चिकित्साप्येतेषां कर्त्तव्या, तथाहि, यथापानो ह्यधोऽधिकं निःसरति तदोर्द्ध्वज्वलनस्वभावेनाग्नेयेनोपचारः। यदाग्नेयेण स्तदाधोगमनस्वभावेनाप्येनसह वायव्येनोपचारः। एवं प्राणादीनां वाह्यानामपि वस्तूनां प्रणिधानेनस्वभाव मवगम्य विपरीतेषु वैपरीत्येन, क्षीणेषु च तत्स्वभावेनोपयोगः येन जठराग्नेर्व्याघातोन स्यात्। यस्मादग्निसंरक्षणमायुर्वेदस्य तत्वम् इति द्रव्यस्वभावविज्ञानन्तु गुणादिदर्शनेन यथा शैत्यान्माधुर्य्यादाप्यमिति जाड्यात् गौरवात्पार्थिव मिति। लाघवात् रौक्ष्या दावव्यमिति काठवात् दाहात् तैजसमिति एवमन्यस्मादपि लिङ्गात् शास्त्रानुभवसंस्कृतात्स्वभावा अवगन्तव्याः। तथाविन्नादिमज्जावि विन्नाद्यात्मकत्व मिति। विशेषस्त्वेतावान् वस्तुमात्राणां पञ्चात्मकत्वेपि यद्गुणस्य प्राबल्यं तेन तद्व्यपदेशमितरेषां निमित्तत्वम्। यथास्मिन् काये पञ्चानामपि भूतानां संयोगेऽपि पृथ्व्येवोपादानं तदाधिक्यात्-एवं सर्वत्र अनयैव दिशा अन्येषां पित्तादीनां धातूनां विचारः कर्त्तव्यः। एतेनाप्यादिक मपि शरीरं व्याख्यातं। प्राणायामोऽपि प्राणस्वगतिज्ञानाद्भवति। यस्तु सुसिद्धः शरीरं दृढ़यति, वृत्तिं स्थगयति, कामादीन् निरोधयति, रोगान् अपहन्ति, पुष्टिं वर्द्धयति, शुक्रं स्तम्भयति, ऊर्द्ध्वरेतसं करोति, जीवनं चिरयति, सिद्धिं ददाति, विभूतिं सम्पादयति च। तथाहि षट् शताधिकैकविंशतिसह

स्व प्राणक्रियाभिर्नित्यं पथ्याशिनां शीलस्थतां यावदायुषांशतं शरीरमिदं तावत्तिष्ठति स्वभावतः अन्यथाचाराद्दावकालमृत्युर्व्याधिर्वा । सचेद्वायुः प्राणायामेनोपरुद्धक्रियः यावदुपरोधस्तावदायुराधिक्यमिति । विशेषस्त्वेतावान् परिपक्व मिदं शरीरं हीनसामर्थ्यं भवति तेन कल्परसायनादिकमप्युपयुज्यते । येनेदं नित्यं तरुणं स्यात्- एतेनैव देवाः योगिनश्च स्थिरयौवनाश्चिरायुषश्च भवन्ति । यावता वेगादिक्येन क्रियाबाहुल्यं तावदायुषां क्षयः ॥ यथा धावकोद्धूतं नश्यति । न तावत् शिव्योति । अनेन प्राणक्रियाज्ञानेन कालज्ञान मपिजायते । क्रियात्मकत्वात् कालानाम् । शरीरभूताद्युदयोपि प्राणक्रियाभिरवगन्तव्यः यदाशिरसो वायुश्चलति तदाकाशस्य, यदा कण्ठात् तदा पृथ्व्याः यदा हृदयात् तदा जलस्य, यदोदरात् तदा वायोः यदाजठरात् तदाग्नेश्चोदयः नित्यमेतेषां द्वे द्वे घटिके यथाक्रमस्त्वित्युदय कालः अन्नाद्युपयोगोऽपि मैत्रेण यथा प्राणचारो वायौ आप्यं जले सर्वमन्नाविति । सिद्धयोऽपि व्योमचारादयः यदा ह्यपान मुदानेन समवेगं सम्पादयति तदोर्द्ध्वगमनस्वभावापानवेगादाकाशे विहरति । यदा व्यान मन्ये समक्रियमन्तश्चारिणं करोति तदा विनालम्बं जले भूमा विव तिष्ठति ।

सुवर्णमयकिरणूनादिसिद्धिरपि प्राणक्रियाभिः तथाहि सूक्ष्मातिकोमलया सच्छिद्रया सुवर्णादिशलाकया सुसंस्कृतानन्दक्रिया

वता पानकषर्णैश्चूर्णैरपोपकर्षति तद्दाभ्यासात् समर्थः सिद्धोऽन्तरा-
रे पानीयस्य यद्यदाकर्षति तन्निःसार्य्य स्वाभीष्टां तत्तदाश्रितां क्रियां
सम्पादयति, सूत्रात् सुवर्णं निःसरति । ज्वलतिच दीप इति एवम-
न्या अपि सिद्धयो वस्तुस्वभावविज्ञानादुक्त्या गुरूपदेशेन सम्पाद-
नीया आकरेभ्य इति । इत्यादयः सर्वाः कलैव नतु ज्ञानम् तस्मान्मो-
क्षिनीयम्- आन्तर्सुखानां सम्पद्विवर्द्धिनी साधकानां कल्याणरूपा जन-
नीव धर्म्माभ्युदयानामिति ॥ ॐ इतिश्रीकाशिराजसागरे वाशिष्टे चा-
रणिकलातत्वप्रथमे पादे द्वितीयमाह्निकम् ॥ इति ।

अथ द्वितीयः पादः ।

ततः प्राणवानीश्वरः समर्थः श्रद्धामसृजत्, सर्वे हि प्राणवन्तः सम-
र्थाः श्रद्धया कार्य्यजातानि कुर्वन्ति श्रद्धासामर्थ्यजन्या विश्वासः स-
त्यावश्यकर्तव्यताप्रयोजक आन्तरोभावविशेषः, असत्यां श्रद्धायां-
संकल्पवानपि, समर्थोऽपि,न कार्य्यं करोति, यथा दस्यवो वाणिज्या-
दिना जीवनधारणसमर्था अपि न तत् कुर्वन्ति । कस्मात् यतो ना-
स्ति तत्र श्रद्धा । कुर्वन्ति च प्राण्युपघातम् । यतस्तत्र श्रद्दधाना एवते ।
एवं साधवः समर्था अपि न हिंसन्ति, चरन्तिच भैक्ष्यमिति । अतए-
वेयं श्रद्धा सर्वेषां कार्य्याणाम् मूलम् । अतएवच, श्रद्धा जननीव कल्या-
णी योगिनम्पातीति योगभाष्यम् । योगिनमित्युपलक्षणार्थं सर्वत्र त-
द्दर्शनात् यथा श्रद्धावन्तो ब्राह्मणाः स्वाध्यायं कुर्वन्ति, तथा क्षत्रि-

या वैरं शूद्राच दास्यमिति। अतएव त्रिविधेयं श्रद्धा सात्विकी राजसी, तामसी चेति, सर्वत्रैव सर्वेषामुपयोगो गुणानाम्। यत्र यत् प्राधान-भाव: स तत्र राजा तमाश्रित्यैवापरो प्रवर्त्तते भावो, यथालोके मधुक-र राजसुत्पतन्तमनुपतन्ति मक्षिका इति, यथा वा कर्णोऽयं शब्दान्--गृहीत्वा सुखरूप: सत्वोज्वलोभवति, तदा भोग: पुंसां सम्पद्यते, स-च सर्वेष.मिष्ट:। शब्दा हि वीणाकण्ठादिजा लोकायत्ता, लोकाश्चार्था धीना, अर्था अर्ज्जनरक्षणदानादौ दु:खा:, सुतरामादिमध्यान्तेषु स-र्वएव सर्वानुस्यूता इति। एवं प्वादिषु इन्द्रियेषु, अन्त:सुच भावा नित्यपरिणामिन: कर्म्मादिसहाया नानारूपा नित्यमेतं चिदानन्दं-संक्रमय्य कुलटा इव नायकं विडम्बयन्ति संसारयन्ति। गुणप्रधान-कृतान्येव, श्रद्धा वीर्य्यं, संग: कार्य्याणि फलञ्चेति। तारतम्यभावश्च-गुणानामविज्ञेयमूल:, स्वभावकृतो निरवधि निरन्तो। देशजन्मा-दिसहचारी चेति। प्रायश्एव निसर्गो जन्मसहकृत: कर्म्मोपासना-ज्ञानकृतश्चापि यथा पाण्डुर्मूर्द्धाभिषिक्त;: वेण: शूद्रो वधार्ह इति, विश्वामित्र ब्रह्मर्षिरिति, तत्वतस्तु केयमादि: सृष्टीनामित्यविज्ञात-तत्वं मायाजालम्। सर्वदैव सर्वेषां भावानां जन्मस्थितिभंगदर्शना-त्,, सर्वेषां सर्वापेक्षित्वात्। यथा संकल्प: कार्य्यं फलम् तथा फलं ना-श: संकल्प: कार्य्यमिति, अतएव। "एवं हत्ति संस्कार चक्रमनिश-मावर्त्तत,, इति योग भाष्यम्। क्रमकथनन्तु आर्य्याणाम् यथेच्छं कस्य-

चिदुपादानात् सर्वेषामेवतात्पर्य्यात् । अतएव—

प्रवाहोनादिमानेष, न विजात्येकशक्तिमान् ।

तत्वे यत्नवता भाव्य, मन्वयव्यतिरेकयोः ॥

इत्याचार्य्य वाक्यम् । व्याख्यानमस्य, वीजादङ्कुरः अङ्कुराद्बीजमिति यस्मात् तस्मादेष कार्य्य कारणानां प्रवाहो निरवधि रविज्ञातमूलः । दृश्यते एतस्माच्च इदमस्मादिदं नास्मात् ॥ ततोदृष्टमात्रेषु अव्यवहितपूर्वापरीभावादि दर्शनेन किञ्चित् कस्यचिदिति कल्पनमात्रम् । यतः सर्वैः सर्वेभ्यः सर्वदा सर्वाणि कर्तुमकर्तु मन्यथा वा-कर्तुं समर्थः प्रभुरेवेति । जायतेच तथा यथा बीजात् कदली तथा दग्धवेतस वर्नात् एवं गोमय दग्ध तण्डुलादितो वृश्चिक शोकादीनि, तथा दाहात्तापः शान्तिश्च, तथा कामा द्बन्धो मोक्ष श्चेति । अतएव साधयितव्ये विषये यत्नवता भाव्यम्, स प्रणिधानं द्रष्टव्यमित्युपदेशः । अतएव श्रद्धामसृजत्, श्रद्धैव मूलं सर्वेषामिति । इति काशि राज सागरे वाशिष्टे चारणे कलातत्वे द्वितीयपादस्य प्रथमाह्निकम् । श्रों । व्याख्याता श्रद्धा ॥

ततस्तेनेश्वरेण सृष्टानि, खं; वायु; ज्योति; आपःपृथिवी चेति भूतानि । खमित्यादि सूक्ष्म स्थूलानां सर्वेषा मेव संग्राहकम्, एकतरपरिग्रहेऽन्येषा मकथनान्न्यूनता स्यात्, सा चानिष्टेति ।

अतएवादौ शब्दस्पर्शरूपरसतन्मात्राणि सृष्टा तेभ्यः आका-

शब्दादीनि क्रमात् सृष्टानि, तत्रायं क्रमः, शब्दतन्मात्रात् शब्दगुण आकाशः, शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुः शब्दस्पर्शतन्मात्र सहितात् रूपतन्मात्रात् शब्दस्पर्शरूपगुणं ज्योतिः, शब्दस्पर्शरूपतन्मात्र सहितात्द्रसतन्मात्रात् शब्दस्पर्शरूपरसगुणा आपः शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्धतन्मात्रात् पृथवी चाजायत इति अतएव प्रलये पृथिवीजले जलं तेजसि, तेजो वायौ, वायुराकाशे लीनोभवति। एवं सूक्ष्माणामपि। यद् यत्र लीनोभवति तत् तस्योपादानम्। यथा घटः कपाले, वृत्तयो वुद्धौ, कपालदुग्ध्यादयो घटवृत्यादीनामिति, तथाच विष्णुपुराणम्—

जगत् प्रतिष्ठा देवर्षे, पृथिव्यप्सु प्रलीयते।
तेजस्यापः प्रलीयन्ते, तेजो वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि, तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते॥
अव्यक्ताच्च परं किंचित्, सा काष्ठा सा परा गतिः॥

एवमन्येऽपि भवन्ति श्लोकाः—

प्राणि कर्म्मवशाद्यस्मिन्, सुखम्वा दुःखमेववा।
प्रवृत्तां लभते सीमां, तदेवं कालरूपिणी॥
महाशक्तिः समुद्रिक्ता, उग्ररूपा भयङ्करी।
सहस्रार्चिषमाश्रित्य, रमते शतवत्सरम्॥

तेन सूर्यस्तपेत् पृथ्वीं, वह्निरूपेण तेजसा ।

दग्धा पृथ्वी वियुक्ताङ्गी, तदाशुष्ककलेवरा ॥

ततःसम्प्लावयेद् भार्य्यां, स्नीणा धारेण वारिणा ।

क्लिन्ना जलमयी पृथ्वी, वारीभूता विराजते ॥

ततो वाष्पः समुत्पद्य, वायुना सम्प्रचोदितः ।

आकाशचारी शनकै,र्वायुभूतो विराजते ॥

ततो वायुर्विनालम्बं, सञ्चरन् व्योम्नि कालतः ।

महाकाशे लयं याति, आकाशस्वनिजालये ॥

एतेन चणिकदैनन्दिन खण्डमहाप्रलयान्ताः ।

सर्वे प्रलया व्याख्याताः ॥

इतिश्रीकाश्मिराजसागरेवाशिष्टे चारणे कलातत्त्वे द्वितीपादे द्वितीयमाह्निकम् ॥

ततस्तेनेन्द्रियं सृष्टमिति, इन्द्र आत्मा तद्भोग-साधनत्वात् तस्येदमिति इन्द्रियं, तद् द्विविधं, ज्ञान कर्म्म भेदात् । श्रोत्रं, त्वक्, चक्षुः, जिह्वा घ्राण मिति पञ्च ज्ञानेन्द्रियाणि । वाक्, पाणि, पादपायूपस्थानि इति पञ्च कर्म्मेन्द्रियाणि । तेषु कर्म्मेन्द्रियाणि कर्म्माणि कुर्वन्ति, ज्ञानेन्द्रियाणि शब्दादीन् गृह्णन्ति । कर्म्मवागिन्द्रियेषु, वाचो वाक्यं, हस्तयो रादानं, पादयोर्गमनं पायोर्विसर्गः, उपस्थस्य-चादानमिति ॥ तथा ज्ञानेन्द्रियेषु ग्रहणं श्रोत्रयोः शब्दानां, त्वचः-

काबुलयुद्धम् ।

कारणम् ।

बहवोऽत्र समुपस्थितसंग्रामे बहूनि भिन्नरूपाणि निमित्तानि निर्दिशन्ति । केचिदस्मद्राजपुरुषाणा मयथाचरणमस्थानबलप्रयोगञ्च तत् कारणं वदन्ति । अन्ये तु काबुलाधीशस्य कृतघ्नतामेवात्र हेतु मुदाहरन्ति । अपरे च रूषाधीशस्य चातुर्य्यमेतत्कारण मिति व्याहरन्ति । अस्माकं ज्योतिर्व्विदस्तु करशिरो विधूननं विधाय—

"आघूर्णन्ते समुद्राः प्रचलति वसुधा कम्पते नागलोकं, चन्द्रार्कौ रश्मिहीनौ ग्रहगतिचलिता वान्ति वाताः प्रचण्डाः ॥ युध्यन्तेपार्थिवेन्द्रा, हय-खरदलिताभूः, प्रणश्यन्ति मेघा हाहाकृत ञ्च लोके जनयति मरणं मीनगे चार्कपुत्रे" ।

इत्यादि वचनान्युच्चैः कथयन्तः साधारणेषु स्वपौरुषं प्रख्यापयन्ति । यतोऽस्मिन्नब्दे सौरफाल्गुनादारभ्य शनैश्चरो

मीनराशि मधिवसतीति पञ्चाङ्गपाठादवगम्यते ।

युद्धस्य प्रकृतकारणनिर्द्धारणं नास्मदायत्तं यतो—

"निसर्गदुर्व्वोध मवोधविक्लवाः—

क्व भूपतीनाञ्चरितं क्व जन्तवः" ।

भवत्वेतत्पूर्व्व-वर्त्तिनां केषाञ्चित् पत्राणां सारसंग्रहो ना-

त्रानुचित इति विचिन्त्य प्रवृत्ता वयं तस्मिन्नेव कर्म्मणि । तत्र प्र-
थमं अगष्टमासस्य चतुर्द्दशदिवसे भारतीय प्रधानतमराजपुरुषे-
ण कावुलपतिं प्रति पत्रमेकं प्रहितम् । सारञ्चास्य——

"सम्प्रत्याफ्गानस्थान-विषयक-वृत्तान्त माकर्ण्य तत्रभवतां-
महतां सन्निधौ सविस्तरमस्मन्मनोगतावश्यकमन्त्रविशेषस्य विज्ञा-
पन मुचितमिति प्रतिभाति । येन भारतभूमेः कावुलराज्यस्य
चोभयोर्हितं भविष्यति । इत्थं विचार्य्य तत्रभवत्सकाशे दूतमेकं
विसर्ज्जितुमिच्छामः । दूतस्तु भवतां परिचितपूर्व्वः माद्रासदेशीय-
सेनाध्यक्षः सर नेभिल वोलस चम्बरलेननामधेयो महोदयः ।
सहि स्वयमेव तत्रभवद्भिः सह रहोविस्रम्भ्य सर्व्वमशेषमभिव्यक्तुं स-
मर्थोऽस्ति । उभयस्मिन् प्रदेशे चिरमित्रतां शान्तिञ्च दृढ़ीकर्त्तुं म-
स्माकमेष प्रयासः । एतत् पत्रवाहकस्तु नवावोपाधिकः सर्द्दार
गुलामहोसनखांनामाऽस्मत्सनादरपात्रं प्रकृतिपुरुषः । अयंहि
सर्व्वं मस्मन्मनोगतं विस्तरेण तत्रभवत्समीपे प्रकटयिष्यति । अनन्त-
रञ्चास्य पुत्रशोकसमवेदनीयतां निवेदयता तेन पत्रमपरं प्रेषितम्,
कावुलाधीशस्त्वेवं प्रत्युत्तरमदात् । प्राप्तंमया भवदनुग्रहपत्रं
प्राप्तश्च मे राज्यं गुलामहोसनखांनामधेयो भवदीयसन्देशहारकः ।
परन्त्वितःपूर्व्वं पेशवारप्रदेशशासकेन यानि पत्राणि मदन्तिके
प्रेषितानि न तानिमित्रराजोचितानि नोचितो भवतां मित्रराज्ये

हठेन दूतप्रेरणाभिलाषः। वस्तुतस्त्वद्यावधि याः पत्रिका मदन्तिके प्रेरितास्ताः केवलमुग्रपदविन्याससङ्कुला न वन्धुजनसद्भावानुभवानुरूपाः।

जगदीश्वरकृतनियमवशेनास्माकमुपरि या विपत्तिर्निपतिता तयास्मच्चित्तमतीव संक्षुब्धम्। एवं विधावसरे ब्रिटिश-राजपुरुषाणां समुचितावकाशप्रतिपालनमेव योग्यमासीत्।

न कदाप्यस्माभिर्ब्रिटिस राजपुरुषान् प्रति तीक्ष्णतरं वैरोद्दीपकम्वा वाक्यं प्रयुक्तम्। न वा ब्रिटिशराजपुरुषेभ्यः शासनपूर्णपत्राण्यधिगत्याऽस्माभिस्तेषु किमपि विरुद्धमाचरित मथवा न वयं केनापि राज्येन सह वैर मनुतिष्ठाम स्यात् कथं विनैवकारणमपर राज्यमस्मद्वैर माचरे दित्यादि।

इत्थं निराहतप्रार्थनः कावुलाधिपतिनाऽस्मत्प्रधानतमराजपुरुषः सहसैव युद्धाय प्रवृत्तिमकरोत् संगताश्च तदाज्ञया सकलसैनिकपुरुषा भारतप्रान्तभूमिषु। एतस्मिन्नन्तरे पार्लिमेण्टमहासभाव्यनुज्ञयाऽक्टोबरमासस्यैकत्रिंशद्दिवसे भारतीयप्रधानतमराजपुरुषेण कावुलाधीशं प्रति पुनरपरं पत्रंप्रेषितम्।

तद्यथा सर्दारगुलाहसन्खांनामधेयेनास्म द्दूतेनानीतानि भवत्प्रदत्तानि पत्राणि पठितानिच तान्यस्माभिः।

अस्त्यवश्यं तत्रभवन्तो भवन्तो यन्मया भारतभूमि-

माऽगत्यैव भवतोऽस्मच्छुभाभिलाषप्रकाशनार्थं पूर्व्वराज-पुरुषकृत-भ्रान्ति-संशोधनार्थञ्च वन्धुजनोपयोगि-सन्देशहारक-प्रेरणेच्छा-समभिव्यक्ता। परं भवद्भिः स्वराज्ये यूरोपीयदूतस्य विपत्तिजालं तथा रूसाधिपतेर्हटदूतप्रेरणाशङ्काञ्चोल्लिख्य निराकृतः सोऽस्मदभिलाषः। वन्धुजनानुचितमप्येतत् भवदनुष्ठानं विसोढ़मस्माभि स्तदानीं भवदुद्वेजनमपहातु मिच्छद्भिः। सम्प्रतितु सम्भवितेऽपि अंगलरूसराजयोः संग्रामे सादरं गृहीतः रूसराजदूतस्तत्रभवद्भिर्भवद्भिः। एतेनहि भवदनुष्ठानेन व्रिटिसराज्यं प्रति भवतां समीचीनं वैर मालक्ष्यते।

भवतु वलेन निराकृतेप्यस्मद्दूते कावुलप्रान्ततो भवत्सैनिकै र्वयं पुनरेवो-भयराज्यशुभाकांक्षया तमेवदूतं प्रेरयितु मिच्छामो यदीदानीमपि भवन्तः पूर्व्ववदौदासीन्यमवलम्वित-तदा वयमपि-संग्राम-रङ्गे समवतीर्णा भवेम:। केवलमिदानीमित-दुत्तरागमनसमयः प्रतिपाल्यतेऽस्माभिः।

इदमेव चरमं पत्रं। अतः परं महासमरा-रम्भः। युद्धारम्भ-समयादेतावत्कालपर्य्यन्तमस्माकमेव विजयः सञ्जातोऽतः-परं परमेश्वरस्य मनसि यदस्ति तदेव भविष्यति।

इत्थं सम्प्रवृत्ते कावुल समरमहोत्सवे लण्डननगरीय पार्लिमेण्ट सभायाः सभ्यानां मतद्वैधं संप्रवृत्तम्। तत्रकेचिद्युद्धस्य पक्ष-

पातिनः प्रथमं समरानल प्रज्वालकस्य लर्डलिटन-महोदयस्य अस्मत्प्रधानतमराजपुरुषस्य तदनु हानिं समुल्लाहं वर्द्धयन्ति। निंदन्ति च काबुलाधिपतिं यः सुचिरादेवास्मत्सौहार्द्दमलब्धं प्रतिवर्षमधिगत्यापि तथास्मत्सैन्यसाहाय्येन सिंहासनमधिरुह्यापि रूसाधिपते र्यत्किञ्चिदालब्धै वास्मन्मैत्रीं परिहाय तमेवानुगन्तुं प्रवृत्तः। एवं क्षुद्राशयस्य तस्य सम्यक् शासन मेव समुचितम्। न तु तेन सह मैत्रीकरणमित्यभिधाय प्रवर्त्तयन्ति संग्राम कर्म्मणि लर्ड लिटनम्। अपरे तु सहसैतादृशयुद्धस्यानवसरप्रवृत्तत्वमुल्लिख्य लर्ड लिटनावलम्बितां नीतिं दूषयन्तस्तमतीव विगर्हयन्ति। तेषां मते भारतवर्षं हि वाह्यशत्रुभि र्दुर्लङ्घनीयम् यतोस्य समुद्रः परिखा हिमालयपर्व्वतश्रेणी च सुदृढ़प्राचीरावली। विशेषतः काबुलाधीश्वरादेतदाक्रमणशङ्का न कदाप्युद्भवति। स हि स्वय मतीव दुर्ब्बलः। यत्तु तेनास्मद्दौत्यग्रहणपराङ्मुखतया प्रतिकूल माचरतीति तदपि न सम्यग्युक्त्यनुसारि। यतोस्माभिः प्रथममेव ससैन्यदूतप्रेरणाभिलाषः कृतः। चिन्त्यतां तावत् को नाम कारणं विना स्वराज्ये परसैन्यप्रवेशं सहेत। विशेषतस्तदानीं तस्य सुदारुण-पुत्रशोकेन हृदयं विदलितमासीत्। राज्ये च समन्तात् विशृङ्खलैव सञ्जाता कुतस्तदानीं दौत्यग्रहणावसरः। इत्थ निराकृते ह्यस्मदभिलाषे वयं समय मप्रतीक्ष्यैव भारतसीमामुल्लङ्घ्य तदीयराज्ये सेनानिवेशं कृतवन्तः। एतेन वयमेव हि प्रथम मपराद्धा न तु सः। इत्यादि वचनं तेऽभिदधति। अन्यच्च प्रथमपक्षीयानाम्मते सर्व्व एव युद्धव्ययो भारतीयराज-

करांतर्निवेश्यो यतो युद्धमिदं भारतस्यैव संरक्षणार्थं प्रवृत्तं । तदन्ये-न मन्यन्ते। तेषाम्मते तु कुतोऽपि कामपि विपदाशङ्कां विनैव यद्-ङ्गल राजनीतिज्ञा सङ्ग्रामाङ्गणे समवतीर्णा स्तदेतन्मय स्वाङ्गलभूमि-र्निर्वाह्य: । वयन्तनदिव्यदृष्ट्या भारतस्य स्कन्धे भाविव्यय- भार-पतनम् प्रत्यक्षमिव पश्याम: । सत्यमेवम्विधावसरे भारत मप-हाय न काऽपि भूमि: करभारमावहति करप्रदाने भारतस्य न का-चिदस्ति संवेदना । परमस्मिन् वर्षे भारतभूमि र्हि चिरदुर्भिक्ष म-हामारीप्रमुखोत्पातनिचयेन क्षीणशक्ति र्हीनसारा च जाता क-थं करभारं वक्ष्यतीति चिन्तया समाकुलितासंवृत्ता अस्मिन् सं-ग्रामे सर्वेर्हि निम्ननरपतयोऽस्मत्साहाय्यं कर्तुमिच्छन्ति प्रेषिता-श्च तदर्थं स्वसैनिक पुरुषा: कैरपि राजभि: । सिन्धियाधिपति-स्तु स्वयमेव संग्रामभूमौ स्वसैन्यनेतृत्वमनुष्ठातुमभिलषति । सम्प्रति पञ्चनदीयराजवर्गाणां सैनिकपुरुषा: लवपुरं समागत्य स्वशिक्षाप्रदर्शनेन प्रधानराजपुरुषं सन्तोषयामासु: ।

श्रूयते सम्प्रति कावुलेश्वरोऽस्मत्प्रधानराजपुरुषं पुनरे-व पूर्ववत् सन्धिस्थापनार्थमनुरुध्य पत्रमेकं प्रेषयामास । स ही-दानीमितो भ्रष्ट स्ततो भ्रष्ट इव महाविपत्सागरे निमग्नो दि-शोऽवलोकयन् तिष्ठति । यस्मात्रुशाधिपते: सहायतालाभं सम्भा-व्यास्मद्राजपुरुषै: सह विरोध मुत्थापयामास । इदानीं रुसाधिप-तिस्तस्मै न किमपि साहाय्यं दत्तवान् । अस्मत्सैनिकास्तु प्रत्यहं त-द्राजधानीमभिगच्छन्ति । अतएव शमं विना नास्त्यन्य: कश्चिदुपा-य स्तस्य राज्यसंरक्षणार्थम् ।

ओं Registered No. 12.

# विद्योदय:

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादित:

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशित:।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासनो सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भै:-लोकवृत्तानुशीलनै:।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्ड ८] नवम्बर इं १८७८ [ ११ सङ्ख्या

सूची



लाहोर
ऐल्बर्ट नाम के यन्त्रे दिलमागरायनामधेयेन मुद्रित:॥

# विज्ञापनम् ॥

इतः पूर्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथक् मुद्रितम्भविष्यति । यद्ग्रहणेच्छुभिरस्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्य संस्कृत पाठालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचित । मूल्यं ।)

## नूतनपुस्तकम् ।

छन्दोबोधः ( संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः ) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्यालये (रेजिस्टार्'स अफिस, पञ्जाब युनिवर्सिटी कलेजे प्राप्तव्यः ।

---

## मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

" पश्चाद्देयं ... ... ... २।/०

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति

श्रीगणेशायनमः

तामसीं त्वां नमामीशां

राजसीं त्वां नमाम्यहम् ।

सात्विकीं तनुमादाय

कुरु कल्याणमम्बिके ॥ १ ॥

मेधासि देवि विदिताखिलशास्त्रसारा

दुर्गासि दुर्गभवसागरनौरसङ्गा ।

श्रीः कैटभारिहृदयैक कृताधिवासा

गौरि त्वमेवशशिमौलिकृतप्रतिष्ठा । १ ।

अथ कलातत्वं व्याख्यास्यामः

कलयन्ति कथयन्ति पुरिशयं पुरुषं यास्ताः कलाः प्राणादयः षोडशभागाः । यदि प्राणादीनां कलाना मभिसम्बन्धो न स्यात्तर्हि नित्यं निरञ्जन, मसंक्रामि निर्गुणं सच्चिदानन्दमात्रं कथं केन किं कुर्य्यात् । तत्सम्बन्धादेव, अद्वैत मपि द्वैतवदवभासमानम् द्रष्टृ द्रष्टृत्वादिभावमापन्नं, तदेव चैतन्यं पुरुष इतिगीयते ।

सच यथा विराट् षोडशकलोभवति । तथा जीवोऽपि सर्वेषा- मेव तावत्कलाभागित्वात् । विशेषमात्रं न्यूनाधिकभावेन सचकर्म्मा नुसारी दुर्विज्ञेयमूलः तद्दर्शन मस्मिन् षाट्कौशिके, श्रोत्रमाकाशं स्पर्शो वायुः सूर्य्यश्चक्षुः रसनं वारि घ्राणं पृथ्वीति एवमन्यान्यपि ॥

अतएव षोडशकल: पुरुष इत्याम्नातो भवति। एतद्विज्ञानात्पुरुषो- पि विराड् भूत्वा ब्रह्म भवति। बाल्यादाप्रौढ़मिता: क्रमशोवर्द्धमाना: पुरुषस्य पूर्णतां कथयन्ति। एवं क्रमेण प्रौढि रामरणान्तं क्षीणा: प्रल- यमापादयन्ति। एतेन सत्वादय:सर्वे कला व्याख्याता:। प्रौढिरासां- ध्रुवा। यथा नक्षत्राणां ध्रुवस्तारकाविशेष:। अतो बाल्यादाप्रौढमु- द्यम: पुरुषाणाम्। यदवस्थाविर्भाविनाम् भावानामुद्यम:। सत्व- प्रधानोरज: सहायोऽभ्युदयसुखस्तिरस्तमाश्चेति। पूर्णेचोद्यमफले स्थि रत्वं यथाचन्द्रोदयेसागर: क्रमादभिवर्द्धमान: पूर्त्तौ स्थिरोभवति। एव मवस्थतिरोभाविनां भावानां क्रमात्प्रलय स्तमोवहुलो निवृत्त रजाहीनसत्वश्चेति। अतएव बाल्यकैशोरयौवनेषु सोतसाह: ससुख: प्रोद्यम: प्रौढिषु स्थिरोभोग: जरावार्द्धक्यादौमालिन्यमिति दृष्टा- न्तोत्र षोडशकलश्चन्द्र: यथोद्यमे प्राक् पूर्णताया: क्रमादूर्जस्वी। पूर्त्तौ पूर्णस्थिर:। अतएव शरदि राकायां अर्द्धरात्रे महालक्ष्म्या नाराय- णोत्सव:। अन्यत्रा भ्युदयलक्षणानि कर्म्माणि लोकानां तथाभूता- नाम् क्रमादंशानां देवानामिति। एवमसितपक्षे क्रमश:क्षीणासु प्राग् विलयात् सतीष्वपि तासु नतादृगुर्ज्जस्वी क्रमान्मलिनोभूत्वा लयं प्राप्नोति अतएवशरद्यमायां महाकाल्या महोत्सव: कालरात्रि- रितिगीयते। अन्यत्र च प्रेतानां कर्म्माणि प्रलय कारिणा मुण्डवक्त्रा- त्तचण्डादिभैरवादीनामिति। एताभिरेवकलाभि: सर्वे स्थावराख्या-

वराः स्थूलास्थूलाः परोक्षापरोक्षाः वाह्यावाह्या ऐश्वर्य्यानैश्वर्य्याणि ऐहिकामुष्मिकाद्यसर्व्वभावाः व्याख्याताः इति। ताश्च कलाः षोडश यथाह मन्त्रः। स प्राणमसृजत्। प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्य्यं तपोमन्त्राः कर्म्म, लोका लोकेषु नाम चेति एष व्याख्यायते। सदेव सौम्येदमग्र आसीदित्युपक्रम्य प्राक् सृष्टेः प्रतिपादिते सच्चिदानन्दतयावस्थिते परमात्मनि स ऐक्षत बहुस्यां प्रजायेय इत्यादिना संसारसृष्ट्यनुगुणः सङ्कल्पोऽभिहितः। यस्मादादौ विना सङ्कल्पं किमपि न जायते। तथाहि इदं कर्त्तव्यमित्यादौ संकल्पवन्त एव वागादीन् व्यापारयन्ति तत एव कार्य्यमुत्पद्यते अतएव शिक्षायां आत्मा बुद्ध्या समेत्यार्थान् मनो युंक्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतान्। इत्यादि सङ्कल्पवानीश्वरो यानि भूतादीनि यथा पूर्व्वमकल्पयत् तेषामयमपरः कालः स्तत्वावबोधाय कथितः। कथं तच्चैतन्यं कदाचित् नाना सङ्कल्पवत् सृजति, पालयति नाशयति। किमवधि वा किमारब्धमित्यस्योत्तरम्। तदविज्ञानमस्य अनादि वामस्य। स्वभावमायाद्यपरपर्य्यायं विनाश्य किञ्चित् सामर्थ्य सम्बन्धादेव। तदेतच्चैतन्यं तत्सम्बन्धादेवानात्मीयानपि विषयानात्मीयत्वे नाभिमन्य देहेन्द्रियान्तःकरणाद्यभिमानी जीवो भूत्वा संसरति। अतएवा ज्ञानमूलः संसार तत्वज्ञानाद्विलयं प्राप्नोति। यन्नैतदाम्नातं तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति।

साचाविद्यानिवृत्तिः परमः पुरुषार्थः। पुरुषव्यापारेणश्रवणादिना निवृत्तायामविद्यायां सिद्धमेवात्मनः सच्चिदानन्दरूपंस्वयमेवाविर्भवति यथा स्थितमेव स्फाटिकस्य भास्वरं रूपं पुरुषव्यापारेणजपापगमे स्वयमेव प्रकाशत इति तदात्म स्वरूपाभिव्यक्तये तावदनात्मिकान्यात्ममलान्यपनेतुं यत्सम्बन्धात्तानि आख्यायन्ते। स सङ्कल्पवानात्मा ईश्वराख्यः प्राणमसृजन्। प्राणोनानाशरीरारम्भकस्यैकस्यापिस्थानादिभेदात् प्राणोदानसमानव्यानापानाख्यस्य, जीवनधारणपोषणादि क्रियावतोवायुविशेषस्याभिमानी देवता स्वात्मैव। यदधिष्ठानात् जड़भूतोपि ससजातीयाद्वायुान्तराद्धि शेषसम्बन्धो जीवयति धारयति पोषयति शरीरमिति। तदभिमानापगमे सत्स्वपि समीरेषु न जीवनादिमत्वम्। अत एव अन्नं, प्राणं, मनो, विज्ञानमानन्दं ब्रह्मेत्युपासीतेत्यादिना प्राणस्यात्मतोपदेशः। एवमेवसूत्रेभाष्येच-संहितायामपि——स्वयम्भूभगवान् वायुरित्यभिशब्दितः स्वातन्त्र्यान्नित्यभावाच्च, सर्वगत्वात्तथैवच। सर्वप्राणिसर्वात्मा, सर्व्वलोकनमस्कृतः।

स्थित्युत्पत्तिविनाशेषु भूतानामेषकारणम्, इत्यादि नामस्थानकर्म्माण्येतेषांतत्रैव प्राणोदानौसमानश्च व्यानश्चापानएवच स्थानस्था वायवश्चैते यापयन्तिशरीरिणाम्। वायुर्योवक्त्रसञ्चारी सप्राणोनामदेहधृक् सोन्नंप्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते। प्रायशः कुरुतेदुष्टोहिक्काश्वासादिकान्गदान्। उदानोनाम यस्तूर्द्ध्वमुपेति-

यतो ब्राह्मणा: प्रकृत्यैव भयकार्कश्यलोभानामालय:। अत्रावसरे विदूषको नाम कश्चिन्महासत्वो ब्राह्मण स्तस्मान्मठान्निर्गत्यान्यान् विप्रान् विधूय प्रणयावनबस्तं नृपं मठान्त: प्रवेशयामास अथ विश्रान्तस्य तस्य नृपोचित माहारं कल्पयामास तदीयं तुरङ्गमञ्च यवसादि प्रदानेन गतश्रमं चकार तत: प्रसुप्ते नरपतौ स खड्गं गृहीत्वा द्वा:स्थो निशि जागरामास परेद्यु: प्रातर नुक्तोऽपि राज्ञा तुरङ्गमं सज्जीचकार राजाऽपि तमामन्त्र्य तुरङ्गमं समारुह्योज्जयिनीं विवेश तत: सहसैव प्रत्यायन्तं नरपति मालोक्य प्रकृतयो महानन्दपूर्णहृदया महोत्सवं चक्रु: गृहमागत्यच स राजा समुपकारिणे तस्मै विदूषकाय ग्रामाणां सहस्र मदात् अथैकदा त्वन्ये श्मशानवासिनो विप्रा स्तद्दानस्यांशं जिहृक्षवो विदूषकेन तुमुलं कलहं चक्रु: तत्रान्तरे चक्रधरोनामकश्चि द्द्विब्राह्मण स्तत्समागत्याऽब्रवीत् सन्तीत: श्मशान शूलायां त्रय श्चौरा निसृदिता: योहि-सत्ववान् तेषां नासा श्छित्वा नयेत् स एव युष्माकं प्रधानं तस्यैव सर्व्व मृक्थ मुचित मिति तन्निशम्य विप्रा ऊचु: न वय मेतत् कर्तुं क्षमा: यो वा शक्त: स कुरुताम् वयं समये स्थिता: ततो विदूषक स्तत्री यमचक्रे।

तेच मूढास्तदतीवदुष्कर मत्वोचु:।

"एवं कृते त्वमस्माकं स्वामी नियम एषन:"।

ततो विदूषको रात्रौ श्मशानं गत्वा तत्र स्थितानां नासा च्छित्वा यावद् गच्छति तावत् शव मारूढ़ गच्छन्तं कमपि प्रव्राजक मपश्यत् विदूषकश्च प्रच्छन्न स्तस्य प्रव्राजकस्य पृष्ठतस्तस्थौ चणात् मन्त्रं जपत स्तस्य प्रव्राजकस्याधः स्थितः शवःफुत्कार मकरोत् ते न फुत्कारेण सह तस्य मुखात् सर्पाः निर्गता अभवन् तान् सर्पान् गृहीत्वा स प्रव्राजकः समुत्थाय पाणितलेन तं शवं ताड़यामास ततः स शव उदतिष्टत् सोऽपि तस्य स्कन्ध मारुरोह विदूषकोऽपि तथाभूत एव तमन्वगच्छत् ततस्ते क्रमेण कात्यायनी मूर्त्तिस-नाथं शून्यं देवतागृहं जग्मुः तत्र गत्वा स प्रव्राजको देवी मेवं व्यजिज्ञपत्।

तुष्टासि यदि तद्देवी देहि वर मभीप्सितम्।

ततआकाशवागाविरभूत्

"अदित्यसेननृपतेः सुतामानीय कन्यकाम्।

उपहारीकुरुष्वेह ततः प्राप्स्यसि वाञ्छितम् ॥"

तच्छ्रुत्वा सप्रव्राजकः पुनरेव शवमारुह्य तां राजपुत्रीं आनेतुं नभसा प्रययौ ततो विदूषकोऽचिन्तयत् अहो हन्यते कथं मयि जीव-ति राजपुत्री पापात्मनाऽनेन तदत्रैव तिष्ठामि अथ यावत् स परिव्रा-जकस्तां राजपुत्री मानीय तत्र निहन्तु मियेष तावत् स विदूषकः खड्गमुद्यम्य आः पाप मालती पुष्प मश्मना हन्तु मीहसे इत्युक्त्वा तस्य शिर श्छेदमाकरोत् ततो देवी प्रसादेन तस्य वेतालसिद्धिरभवत् परेद्यू राजा विदितवृत्तान्तः सन्तुष्ट श्च तस्मै स्वां कन्यां प्रायच्छत् एवं विदूषकः स्वपौरुषेण विपुलां सिद्धिमवाप।

ततो यौगन्धरायणो राजानं प्राह राजन् विद्यते दैवानुकूलं तव पौरुषम्। तद्यथा चिन्तितं शीघ्रं दिशां विजयं कुरुष्व।

मन्त्रिमुख्येनेत्यभिहिते राजाह।

"अस्त्येतद्बहुविघ्नास्तु सदा कल्याणसिद्धयः।
अतस्तदर्थं तपसा शम्भुमाराधयाम्यहम्॥
बिनाहि तत्प्रसादेन कुतो वाञ्छितसिद्धयः।

तच्छ्रुत्वा मन्त्रिणस्तस्य तपोऽनुमेनिरे। ततोदेवीभ्यां सचिवैस्सह त्रिरात्रोपषितं भूपं शिवः स्वप्ने समादिशत्।

"तुष्टोऽस्मि ते तदुत्तिष्ठ निर्विघ्नं जयमाप्स्यसि।
सर्व्वविद्याधराधीशं पुत्रञ्चैवाऽचिरादिति॥

ततः स राजा तत् प्रसादापहृतश्रमो बबुधे। प्रातस्तेन स्वप्नेन सचिवानानन्दयत्। तत उत्सवव्ययपौरे व्रतपारणे विहिते यौगन्धरायणो राजान मब्रवीत्—

"धन्यस्त्वं यस्यदेवेत्थं प्रसन्नो भगवान् हरः।
तदिदानीं रिपूञ्जित्वा भज लक्ष्मीं भुजार्ज्जिताम्।
निजधर्म्मार्ज्जितानां हि विनाशो नास्ति सम्पदाम्॥
तथाच चिरभूमिष्ठो निधिः पूर्व्वजसम्भृतः
प्रनष्टो भवता प्राप्तः ——
अत्रैतांकथां शृणु।

. पुरा पाटलि पुत्राख्ये पुरे महाधनकुलोद्भवो देवदासाख्यः कश्चिद्वणिक् पुत्रोऽभवत्। पौण्ड्रवर्द्धन नगर निवासिनः कस्यापि स-मृद्धस्य वणिजः सुता तस्यभार्य्याऽभवत्। पितरि पञ्चत्व मुपगते स-देवदासो व्यसनान्वितो द्यूतेन सर्व्वं धनमहारयत् ततोदुःखदारि द्र्याद्दुःसहा तस्य भार्य्या स्वपित्रा पौण्ड्रवर्द्धनं नीता । अथ स आत्मानं रजीकृत्तं विवस्त्रंसमीच्य कथमोदृशः श्वशुरवेश्मनि प्रविशामीत्यचि-न्तयत् यतो—

वरंहि मानिनां मृत्यु र्न दैन्यं स्वजनाग्रतः ॥

इत्यालोच्यापणे गत्वा कापिवह्निर्विपणोस्थितः। क्षणात् तस्यां विपणौ प्रविशन्तं कमपि युवानं वणिक्पुत्रं ददर्श ददर्शंच तत्र निःशब्दपद मागतां कामपि स्त्रियम्। प्रज्वलत्प्रदीपे तदन्तरे-यावदृष्टिं ददौ तावत्तां निजामिव गेहिनीं प्रत्यभिज्ञातवान्। ततो देवदासःस्वभार्य्यामन्यगामिनीं दृष्ट्वा दुःखाशनिहतो व्यचिन्तयत्-

"धनहीनेन देहोऽपि हार्य्यते स्त्रीषु काकथा।

निसर्गनियतं यासां विद्युतामिवचापलम् ॥

इतिविचिन्तयन् रतान्त विस्रम्भजुषोस्तयोः कथालापमवा शृणोत् ।

अथ सा निजोपपतिं वक्तुमारेभे ।

"मद्गरत्तं धरवर्म्माख्यः पुराऽभूत्प्रपितामहः।

श्रमविभागेनैवं महत्फलाभ्युपगमेऽपि न स यथेष्टमाचरणीयः। तदुत्पन्नद्रव्याणामावश्यकतानुसारेणावश्यमेव तस्य सीमा-विधातव्या। यथा विचिन्त्यतां तावत् कस्मिंश्चिन्नवीनोपनिवेशिक-देशे कोऽपि सूचीव्यवसायी दश मानवान् दशसु विभिन्नरूपेषु व्यापारेषु नियुज्य वर्षेण १०००० संख्यकाः निर्म्मातुं शक्नोति परं यदि तत्र तथाविनिर्म्मितसूचीनामर्द्धमात्रमावश्यकं भवेत् तदा स-व्यवसायी वत्सरस्यार्द्धभागमेव स्वभृत्यान् तादृक्प्रकारेण तस्मिन्कर्म्मणि नियोजयेदथवा श्रमविभागजन्याधिक फलेप्सां दूरे विहा-याल्पसंख्यकानेव मनुजान् तत् कर्म्मणि सन्निवेशयेत्।

(Co-operation or combination of Labour.)—

श्रमसंघात सुचिरादेवास्मद्देशे श्रमसंघातस्याधिकफलदा-यित्वमुपलब्धमेव। उक्तानिच नीतिशास्त्रेषु " संहतिःकार्य्यसाधिका-तृणैर्गुणत्वमापन्नैर्वध्यन्ते मत्तदंतिनः" ॥ इत्यादीनि वहूनि वचनानि सोदाहरणानि। नह्येकः कदाऽपि गृहस्योपरि गोपानसीप्रमुख-वृहत्काष्टखण्डानामुत्तोलने समर्थः एकस्य तादृक्कार्य्यार्थं परि-श्रमोहि सर्वथैव विफलो भवति। एतादृशः श्रमसंघातो हि शुद्ध-(simple.) इत्यभिधीयते। एतमन्तरेण हर्म्यसेतुलोहवर्त्मादिनि-र्म्माणाकरखननादीनि कार्य्याणि नोत्पद्यन्ते। श्रमसंघातस्यापरोऽपि-

कश्चित् प्रकारो वर्त्तते यो मिश्रगोणादिनामभिर्व्यपदिश्यते (complex) यद्वशेन देशकालभेदेषु मनुजा विभिन्नरूपाणि कार्य्याण्यनुतिष्ठन्ति । यथा भूकर्षका भोजनद्रव्याणि सम्वर्द्धयन्ति कर्म्मकारतन्तुवायादयश्च शस्त्रवस्त्रनिर्म्माणादिकं कुर्व्वन्ति इत्थं स्वावश्यकातिरिक्ततत्तद्द्रव्याणां विनिमयः सञ्जायते । दृश्यते प्रायो नवोपनिवेशिक प्रदेशे सर्व्वे ह्यागन्तुका जनाः परस्परं स्वेच्छया भूमिं विभज्यात्मसात्कृत्वा वा कृषिकर्म्माणि कुर्वन्ति येनच ते सर्वे केवलं शस्यशालिनः-कर्षकाः सञ्जायन्ते । परं यदि तत्रत्याधिवासिनां केचित् भूकर्षण व्यापारे-स्व-परे च वस्त्रवयनादिशिल्पकर्म्मस्वभिनिविष्टा भवेयुस्तदा तत्रोभयेषामेव तेषां समधिकश्रेयःसंलाभः । दृष्टान्तस्त्वत्र यदा अष्ट्रेलियाद्वीपे सुवर्णखनयः समाविष्कृता वभूवुस्तदा सर्व्वे हि तत्रत्या विपुलधनलिप्सया हिरण्यखनने प्रवृत्ति मकार्षुर्येन तत्र क्रमेण-कृषि-र्हीनवला । दुर्भिक्षस्याविर्भावायोपाकल्पत । ततो वहवस्तद्देशवासिनः पुनरेव कृषिकर्म्माण्यनुष्ठातुमारेभिरे येन सञ्जातेदानीन्तन सर्वांगीना समुन्नतिः । एष श्रमसंवातेर्हि सुपथाद्युपायमन्तरेण-नोपकल्पतेऽभिलाषानुरूपाय फलाय अस्य सुफलोत्पादकत्वं हि कुल्यालोहवर्त्मादिनिर्म्माणेनैव सम्वर्द्धते ।

अस्ति यन्त्रन्नाम परिश्रमस्य सुफलोत्पादकत्वेऽपरः कश्चिदुपायः । पश्चिमैरभूमिभूयिष्ठेऽपि भारतवर्षे यन्त्रसहायतां विना कृ-

षिकार्थस्य न तादृशी समुन्नतिर्यथा यन्त्रवर्त्तीनांगलभूमी,परं यन्त्र-
निर्म्माणसमये त्वेतद्द्वयमवश्यं लचितव्यं (प्रथमं) येन यन्त्रस्य हृ—
स्तकृत परिश्रमेभ्योवहुफलोत्पादकत्वं भवेत् । (द्वितीयं) यन्त्रमनुष्य
शक्त्यसाध्यं कार्य्यं कुर्य्यादिति ॥

वस्तुतस्तु,श्रमकारिणां वुद्धिनैपुण्यदचतानुसारेणैव परि:
श्रमस्य फलोत्पादकतोत्पद्यते। शारीरावस्थोत्कर्षश्चतेषां परिश्र-
मस्य सुफलजनकताया निमित्तं भवति ।

प्रतिजिघांसा

प्रतिजिघांसा नाम न प्रकृतन्यायानुगता वृत्तिः। यथेयं मनुष्य
हृदयेऽवकाशं लभते तथैवास्याः समुन्मूलने नवनियम-प्रवर्त्तन मा
वश्यकम्भवति। यतः प्रथमापराधोहि जनानां, नियम मुत्क्रम्य प्रव-
र्त्तते। तदर्थं प्रतिहिंसातु सर्व्वत्रैव न्यायप्रवृत्तिं तिरोदधाति। प्रति
हिंसां कुर्व्वन् नाम जनः स्वप्रतिपचेण समतामाप्नोति। अथ प्रति-
हिंसा मकुर्वंस्तु स्वमहत्वमेव प्रकटयति। चाम्यन्ति हि विजेतारो-
राजानो नतु पराजिताः उक्तञ्च सलोमन् महोदयेन ।

"अपकारप्रसहनेन हि मनुजानां गौरवमेवं प्रकाशते"। यद्-
गतं तद्गतमेव नकेनाऽप्युपायेन प्रत्यावर्त्तते। अतएव ज्ञानिनोऽना-
गत वर्त्तमानान् खलुविषयाननुचिन्तयन्ति। नविद्यते तेषां काप्य-
तीत विषयिणोचिन्ता। नकोऽपिन्यायविरुद्धमेतदितिवुद्धितो विभा-

व्य तदनु तिष्ठति सर्वैर्हि जना विशेषसम्मानानन्दधनादिलिप्सया कर्मसु प्रवर्त्तन्ते तत् क्रुध्यामि कथं मत्तः प्रियतरमात्मानं मन्यमानाय जनाय। यः कश्चिदसदा चरति तत्र तस्य स्वाभाविकी कुप्रवृत्तिरेवहेतुः

तथाचोक्तम्

"न धर्म्मशास्त्रं पठतीतिकारणं नचापि वेदाध्ययनं दुरात्मनाम् ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः"।

मनुष्याणां पीडन मपहाय नान्यदस्ति कार्य्यं कण्टकवनस्य किञ्चित्

येतुशास्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः। इति नयमवलम्ब्य नियम मुपेक्षमाणानां दुर्ज्जनानामुपरि प्रतिहिंसनमुपदिशन्ति-तन्मन्दं यतस्तथाऽनुष्ठितेहि प्रतिहिंसकस्य राजनियमः शत्रुश्चेति द्वौ परिपन्थिनौ भवतः। अन्येतु प्रतिहिंसनेन प्रतिपक्षं केवलं स्वकर्म्मानुस्मारयितुमिच्छन्ति। सुष्ठु खल्विदमनुष्ठानं। प्रतीयते ह्यनेन, शत्रूणां हिंसनेन न तथा सन्तोषो यथा तेषां स्व कर्म्मानुशोचनेन। केवलं छन्नचारा दुर्बलहृदयास्तु तमसि निक्षिप्ता इषव इव गूढ मप्रिय माचरन्ति। फ्लोरेन्स नगर निवासी ड्यूकपदाभिषिक्तः कसमस नाम धेयः कृतघ्नानां बान्धवानामपराधोऽसहनीयो न तथा परेषामिति विविच्य स्व वन्धूनुपदिदेश। पठिष्यथ यूयमवश्यं बहुषु धर्म्मपुस्तकेषु यदयं शत्रूणा मुपरि क्षमामाचरितु माज्ञप्ताः। नतु कस्मिन्नपि मित्राणि क्षन्तु मिति। जवनामा कश्चित् धैर्य्यवानेवमाह। कि-

स्वयं परमेश्वरपादात् सायहं केवलं श्रेयोऽस्मासो न तस्मादमङ्गल
प्राप्य तुष्टा भवाम: । जवनानकस्य वचनमेतत् वक्तृना सुदर्थैपि प्रवो-
क्तव्यम् । यथा वयं सुहृद्भ्यो हितमभिलषेम तथा तेभ्योऽहितमपि-
गृहीतुं प्रस्तुता भवेम । सत्यमेतत् ये प्रतिहिंसनमाचरन्ति ते स्वा-
क्षतं यथावत् संरक्षन्ति यदन्यथाचरणेन भ्रममिति । कैसर-
पार्टिनैक्स फ्रांसदेशीय तृतीयहेनरी प्रभृतीनां मृत्युरूपाणि साधा-
रणहितार्थं विहितानि प्रतिहिंसाकार्याणि शुभप्रदानि भवन्ति
एकस्यापि कस्य हितसिपाधयिषया प्रवृत्तं प्रतिहिंसाकार्यं तु न तथा ॥

संक्षिप्तसमालोचनम्

भूगर्भी (१)

अर्थात्

संस्कृतसिद्धान्तशास्त्रोक्त

संक्षिप्त

भूगोलविद्या

श्रीगोविन्दमोहनरायविद्याविनोदेन

वङ्गभाषायां प्रणीता

इदानीं हि वङ्गभाषायां प्रत्यक्षं विविधकाव्य
नाटकादीनां यादृशाविर्भावो दृश्यते न तथा प्रकृत
विद्याविधानोपयोगिदर्शनादिविषयक ग्रन्थाना

मित्येवास्माभिर्भूयोभूयो निर्द्दिष्टम्

ग्रन्थस्यास्य कृष्णमयीत्यभिधा मवलोक्यास्माभिरेव प्रथमं नवोपन्यासविषयकग्रन्थ इत्याशङ्कित:, पश्चात् संस्कृत सिद्धान्त शास्त्रोक्तभूगोल विद्येत्यपरपर्य्यायम् दृष्ट्वा संहृत्ता न: पिपठिषा त्वस्यश्चासीद्धि ग्रन्थ कर्त्तुः कृष्णमयीनाम काचित् कृशोदरी पतिप्राणा-धर्म्मपत्नी अथ परलोक मितायां तस्यां शोकवेगविवशो ग्रन्थकारस्तन्नाम चिरस्मरणीयं कर्तुं ग्रन्थमिमं प्रणीतवान् यदा भर्त्ता स्वयं पतिपरायणाया: भार्य्याया नामस्मरणार्थं बद्धपरिकरो ऽभूत् तदाऽस्य प्रणयने परिश्रमस्य प्रयत्नस्यच न कथमपि न्यूनत्वं सम्भवति प्रत्युत परमाधिक्यमेव परन्तु ग्रन्थस्यास्य गुर्वभिनिवेशोपपाद्यमहद्विषयतया ग्रन्थप्रणेतु: शोकाभिभूतत्वात् तादृक् चिन्ताऽसद्भावान्नायं सर्वाङ्ग सम्पन्नो भवत्वेतद्ग्रन्थावलोकनेन विज्ञायते हि संस्कृत सिद्धान्तशास्त्रोक्तविविधमतपरम्परा ॥

---

श्रीं Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)


श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।


चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासनी सुमनसांमनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकहितानुशीलनः।

विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि॥


खण्डं ८] अक्टूबर ई॰ १८७८ [९ संख्या


सूची



---


लाहोर

ऐल्बर्ट नाम के यन्त्रे दिलवागरायनामधेयेन मुद्रितः॥

विद्योदय: ।

—————

बृहत्कथा सरित्सागरसार:

ततो विदिताऽखिलवृत्तान्तेन मगधेश्वरेण वत्सराजसमीपं कश्चित्दूत: प्रेषित: । स हि दूतो वत्सेश मभ्येत्य व्यजिज्ञपत् ।

"मंत्रिभिस्ते वयं तावत् वञ्चितास्त्वत्तथाऽधुना ।
कुर्य्या: शोकमयो येन जीवलोको भवेन्न न: ॥"

तच्छ्रुत्वा वत्सराजस्तं दूतं पद्मावतीपार्श्वं प्राहिणोत्
सा दूतमुखात् पितृसन्देशं निशम्य प्रत्युवाच ।

"जगाद भद्र विज्ञप्यस्तात: किन्न गिरा मम ।
किं शोकेनार्य्यपुत्रो हि परमं सदयो मयि ।"

इति उक्त्वा तं दूतं यथाविधि सत्कृत्य पितृसमीपे प्रत्यहिणोत् ।

अथ प्रतिनिवृत्ते तस्मिन् सन्देशहारके पद्मावती स्वपितृभवनं सखीं च स्मृत्वा परमोत्कण्ठया पीडिताऽभवत् । तस्योत्कण्ठा-विनोदार्थं देवी वासवदत्ता वसन्तकं तत्रानयत् । सचागत्य कथामिमाख्यत् ।

अस्ति पाटलिपुत्राख्यं पृथ्वीविभूषणरूपं नगरं । तत्र धर्म्मगुप्ताभिधेय: कश्चिद् वणिक् निवसतिस्म । तस्य चन्द्रप्रभानाम्नी भार्य्या आसीत् । कालेन सा चन्द्रप्रभा सगर्भा बभूव । प्रासूत च समये सर्व्वाङ्गसुन्दरीं कन्याम् । सा कन्या जातमात्रैव सुव्यक्तं माललाप । तन्निशम्य सर्व्वं हि स्त्री—जन मन्त: पुरस्थं भयविह्वलं बभूव ।

ततो धर्म्मगुप्तो रहस्तां प्रणम्योवाच । मातः का त्वं छलेन मम गृहे समवतीर्णासीति ।

ततः साऽवदत् "नाहं त्वयाकस्यचित् प्रदेया । गृहस्थितैवाहं ते शुभा भविष्यामि किमन्येन पृष्टेनेति" । ततः प्रभृति धर्म्मगुप्तस्तां वहिर्मृतेति ख्यापितां कृत्वा सभयं गृहे स्थापयामास । नाम्ना च तां सोमप्रभा मकरोत् सा दिव्यकान्तिशालिनी कन्या सोमप्रभा शुक्लपक्षीय- सोमप्रभेव मानुष शरीरेण प्रत्यहं ववृधे

अथैकदा गुहचन्द्राख्यः कश्चिद् वणिक्पुत्रो हर्म्यगवाक्षे न-स्थितां मधूत्सवं विलोकयन्तीन्तां ददर्श । ततः सद्यो हृदि विलग्न-या मनोभवस्य भल्लरूपया तया मुमूर्च्छ । अथ कथ मपि लब्धसंज्ञो स्वगृहाभिमुख मायया ।

पिता त्वस्य गुहसेनाख्यः पुत्रं तथाविधावस्थ मालोक्य स्नेहेन स्व-यमेव तां कन्यां याचितुं धर्म्मगुप्तस्य गृहं ययौ । धर्म्मगुप्त स्तं निराक-रोत् । ततः स गुहसेनो राजानं धनैरभ्यर्च्य तस्य साहाय्यं गृहीत्वा तां कन्यां बलेन स्वगृह मानिनाय । तया सह स्वपुत्रस्य विवाह मकरोत् । परन्त्वस्मिन्नेव विवाहदिवसे गुहसेनः पञ्चत्व मगमत् गुहचन्द्र स्तु तदवलोक्य तस्याः सहधर्म्मिण्या भीतिभ्रजमान स्तत्सहवासाभिलाषं दूरतः परिहरन्नेव प्रत्यहं ब्राह्मणभोजनादि-भि दैवत माराधितु मारेभे ।

अथ कदाचित् कोऽपि तपस्तेजसा प्रज्वलन्निव वेदविद्वाम्बरो ब्राह्मण स्तद्गृह मागतो विलोक्य च तां वणिक् पुत्रीं प्रोवाच नैषा मानुषी परं देवी शापवशात् भूमण्डले समवतीर्णा न ते सुकर एवास्याः संगमः ।

अतस्तुभ्यमेतत्साधनोपायं मन्त्रमेकं प्रयच्छामि यत् प्रसादेनैषास्व यमेव भवदनुग्रहमभ्यर्थयिष्यति । अथ स वणिक्पुत्रो विप्रदत्तमन्त्रप्रसादेन दिव्यं रूपं लब्ध्वा तस्या देवकन्यकायाः प्रियतमो बभूव ॥

एवं यागप्रदानादि सुकृतैः पापकर्मणाम् ।
दिव्याः शापच्युता नार्यो भवन्ति गृहिणीपदे ॥
देव—द्विज—सपर्या च कामधेनुः सतां मता ।
किं हि न प्राप्यते तस्या अभ्यासस्यादिवार्णवात् ॥
दुष्कृतं त्वपि दिव्यानामत्युच्च—पद—जन्मनाम् ।
प्रवात मिव पुष्पाणामधःपातैककारणम् ॥

इति उक्त्वा वसन्तकः पुनर्लोकविदित महत्त्वान्वितान्त मकथयत् तन्निशम्य ते सन्तोषोत्फुल्लहृदये परस्परमीर्षास्पर्शरहिते परस्परस्य प्रियं चक्रतुः ।

अथान्येद्युर्मन्त्री यौगन्धरायणो वत्सेशमुपेत्याब्रवीत् देव उपस्थितोऽयं कौशाम्बीप्रत्यागमनसमयः यतो नास्तीदानीमस्माकं कन्यासम्पर्कसम्बन्धा मगधेश्वरात् कोऽपि भयावकाशः । निर्व्यूढकार्य्ये

यौगन्धरायणो इत्थं विज्ञापयति मगधेश्वर—प्रहितः कश्चित् दूतः समागत्य प्रणम्य वत्सराजं व्यजिज्ञपत् ।

देव मगधेश्वरो विज्ञापयति ॥

वहुना किं मया सर्वं ज्ञातं प्रीतिः सदा त्वयि ।

तद्यदर्थीयमारम्भस्तत् कुरु प्रणता वयम् ॥

इति वचनं श्रुत्वा राजा ननन्द यौगन्धरायणोऽपि स्वकीयस्य नयतरोः पुष्पोद्गममिवापश्यत् ।

एतस्मिन्नन्तरे चण्डमहासेनोऽपि वत्सेशं प्रति दूतमेकमहिनोत् । स च दूतः समेत्य प्रणम्य चोवाच देव सर्वकार्य्यतत्त्वविन्नृपतिश्चण्डमहासेन स्तत्त्वविज्ञाताशेषवृत्तान्तः संहृष्टमना इदं सन्दिशति

प्राशस्त्यं भवतस्तावदियतैवोपवर्णितम् ।

यौगन्धरायणोयत्ते मन्त्री किमधिकोत्किभिः ॥

धन्या वासवदत्ता च लङ्कया च कृतं यया ।

येनास्माकं सतां मध्ये चिरमुन्नमितं शिरः ॥

न च वासवदत्तातोभिन्ना पद्मावती मम ।

तयोरेकं हि हृदयं तच्छीघ्रं कुरुतोद्यमम् ॥

एतन्निजश्वशुरस्य वचो निशम्य वत्सेश्वरस्य हृदये कोऽपि प्रमदोत्कर्षो ववृधे ।

अथान्येद्युर्वत्सराजः प्रियतमाभ्यां भार्य्याभ्यामनुगतः चित्रारोहिणीसंगतश्चन्द्रमा इव सचिवैः सह कौशाम्बीं प्रतस्थे । गजारूढं

तं तेजस्विनं प्रयान्तं नरपतिं जनाश्चलदुदयाचलसंस्थितं भास्वन्त मिवानुमेनिरे। ततः स कतिपयैरेव दिवसैर्ध्वजरक्तांशुकच्छद्मा ग वाक्षोत्फुल्ललोचनां विततोत्सवां कौशाम्बीं प्राप।

ततो वत्सेश्वरो जनानां नयनोत्सवं कुर्व्वन् कृतमङ्गलः स देवीकः स्वमन्दिरं प्राविशत्। रतिप्रीत्योः स्मर इव स तयोर्द्व्योर्मध्यस्थितो दिनशेषं निनाय। परेद्युर्मन्त्रिभिः परिवृते संसदि समुपविष्टे नृपतौ कश्चिद्विप्रोऽब्राह्मण्यमब्राह्मण्यमित्युच्चैर्वदन् राजसमीपमगमत्॥ प्र विश्य च नरपतये जयाशिषं दत्वा कृताञ्जलिरुवाच राजन् विनैव कारणं पापैर्गोपालकैर्मम पुत्रस्य चरणोच्छेदः कृतः। तच्छ्रुत्वा नृ- पतिर्व्विचारानवष्टभ्यन् गोपालकानानाय्य प्रपच्छ कथमेवं चेष्टितं भव तामिति ततस्तेऽप्यूचुर्द्देव वयं सर्वे गोपालका मिलित्वा विजने वने क्रीडामः। अथैकदा देवसेनाख्यः कश्चित् गोपालक स्तदटव्येकदेशे कस्मिंश्चिच्छिलापट्टे समुपविष्टो राजाहं युष्माक मस्मि संवृत्त इ- त्युवाच। ततः प्रभृति नकेनाप्यस्माकं तदाज्ञा विलंघ्यते। अद्यत्व- स्य विप्रस्य तनय स्तेन वर्त्मना गच्छन् नाकरोदस्य गोपालक रा- जस्य प्रणामं। राजान मप्रणम्य मागा इत्यस्माभिः प्रतिषिद्धो- ऽपि स बटुर्विहस्य यदास्मानवधूय गन्तुं प्रवृत्तस्तदा गोपालराजेन तस्य पादच्छेदरूपं निग्रहं कर्त्तुमादिष्टा वयम्। तदाकर्ण्य मन्त्रिण ऊचुः यत्र गोपालकस्यैवं प्रभावः, नूनं तत्र स्थाने निधा-

नादियुतेन भवितव्यम् तत्तत्र गत्वैव विचारः कार्य्य इति मन्त्रि-
भि र्विज्ञापितो नृपति र्गोपालकान् पुरस्कृत्य तदभिमुखं ययौ
तत्र गत्वा भूमिं परीक्ष्याकर्षिभिर्यावत् खन्यते तावत् कश्चित् शिला
मयाकृतिर्यक्ष उत्थाया ब्रवीत् राजन् इदं तवैव पितामह
निखात निधानं मया सुचिरात् रक्षितं तत् स्वीकुरुष्वैतत् । इत्युक्त्वा
वत्सेश्वरं प्रतिगृह्य च तत्कृतां पूजां स यक्षस्तिरोदधे ततस्तत्र
महार्हरत्नसिंहासनञ्चैकमलभ्यत भवन्त्यभ्युदय काले सत्कल्याण
परम्पराः । ततो वत्सेश्वरः कृत्स्नं निधानं सिंहासनञ्चादाय महो-
त्सवं कृत्वा गोपालकान् प्रशास्य च स्वपुरं प्रतस्थे । मन्त्रिणोऽपि
भूपतेर्जयं निश्चित्योत्सवं चक्रुः । यतः आमुखापाति कल्याणं
कार्य्यसिद्धिं हि शंसति ॥

ततः स राजजलदः स्वानुजीविषु कनकं ववर्ष । ततो
यौगन्धरायणो वत्सेश्वरस्य चित्तं जिज्ञासु रन्येद्युस्तमुवाच । अलं
क्रियतामेतत् कुलक्रमागतं सिंहासनं देव । अत्र हि ते प्रपिता-
महाः पूर्वं पृथ्वीं विजित्यारूढाः । तन्निशम्य वत्सेश्वरः प्राहाहमपि
समुद्रान्तां महीं विजित्यैतदलंकरोमि सम्भवति ह्यभिजातानां
कश्चिदकृत्रिमोऽभिमानः ॥

तच्छ्रुत्वा यौगन्धरायणो विहस्य साधु साध्विति प्रोवाच
व्यजिज्ञपच्च प्रथमं प्राचीविजयार्थं ।

ततो राजा पप्रच्छ कथं नृपाः प्रथमं प्राचीं यान्तीति ।

यौग- । स्रोताऽपि राजन् कौवेरी म्लेच्छ संसर्ग दूषिता ॥

अर्काद्यस्तमयेहेतुः पश्चिमाऽपि न पूज्यते ।

आसन्न राक्षसा दुष्टा दक्षिणाप्यन्तकाश्रिता ।

प्राच्यामुदेति सूर्य्यस्तु प्राचीमिन्द्रोऽधितिष्ठति ।

जाह्नवी याति प्राचीं च तेन प्राचीप्रशस्यते ॥

पूर्वजैरपि ते प्राचीप्रक्रमेण जिता दिशः ॥

साम्राज्यं हि पौरुषाधीन मितुरक्त्वाविरते तस्मिन् मन्त्रिसत्तमे राजा प्रोवाच ।

सतंत्र निर्देश नियमः साम्राज्यस्येह कारणम् ।

सम्यक्तु हि सुसत्वानामेकं हेतुः स्वपौरुषम् ॥

शृणु चैतां कथां । आसीत् पुराकश्चिदादित्यसेनाख्यो नृपति स्त्रिभुवनविश्रुते उज्जयिनीनगरे । आदित्यस्येव प्रतापनिलयस्य यस्य रथः क्वचिदपि न चखाल अथैकदा सैन्यैः सार्द्धं जाह्नवीतटे विचरते तस्मै नृपतये गुणवर्म्मा नाम कश्चिद्धनी दीप्तिद्योतितदिक्षु कान्तिजस्विनीं नाम स्वकन्या मुपानयत् । ततः स राजा तां परिणीय स्वगृहं जगाम तत्र गत्वा च तेजस्विनीकलालापविमुग्ध चेतानचिरादेवान्तः पुरान्निरगात् तत स्तच्छत्रवः प्राबल्य मुपलेभिरे ।

अथ पृथुविक्रमः स नृपति स्तानदीनभिवीक्ष्यमना उज्जयिन्यां प्रययौ सैन्यस्याधिदेवता मिव सहप्रयायिनीं तां राज्ञीं तेजस्विनीं करेणुकारूढां कृत्वा स्वयं चाश्ववर मेक मारुरोह । एवं किञ्चिद् गत्वा स भूपतिः समां भूमि मवाप्य तेजस्विन्याः प्रदर्शयन् यावदश्व मुत्तेजयामास सोऽश्वो यन्त्रेणेरितः शर इव केनाप्यतिजवेन क्षणादेवालक्ष्यतां जगाम । तद्दृष्ट्वासम्भ्रमा कुलेऽखिल सैन्ये सहस्रशो हयारोहाः पश्चादभ्यधावन् परं न तमश्वापहृतं नृपं प्रापुः । ततश्चाऽनिष्टमाशङ्क्य ससैन्या मन्त्रिण स्तां क्रन्दन्तीं देवी मादा योज्जयिनीं प्रतिययुः । अत्रान्तरे स राजा महाजवेन तेन वाजिना सिंहसञ्चारां विन्ध्याटवीं नीतः । तत्र दिङ्मोह विस्मया कुलः स महीपति रन्यां गति मपश्यन् तस्मादश्वादवतीर्य्य तमेवाश्वं प्रणम्योवाच ।

"देवस्त्वं न प्रभुद्रोहं त्वादृशः कर्तुमर्हति ।
तस्मै त्वमेव शरणं शिवेन नय मां पथा ॥

इत्यभ्यर्थ्य समारूढ़े तस्मिन् राजनि स जातिस्मरोऽश्ववरः सुशीतलेनैवाध्वना सायमुज्जयिन्याः समीपमनयत् ततो नगर द्वाराणि पिहितान्यवलोक्य स श्मशान समीपस्थितं कमपि मठं जगाम अथ तदभ्यन्तस्थिता विप्राःस्तं श्मशान पालं चौर माशङ्क्य तत्र प्रवेशं ददुः ।

काबुल युद्धम्

अहो प्रवृत्तोयं काबुल युद्धरूपो महायज्ञः। यत्र राज्ञी भारताधीश्वरी धरावतीर्णा साक्षात् यजमानमूर्त्तिरिव विराजते। भगवान् लार्डलिटननामा स्वसचिववर्गैः सह कर्म्मोपदेष्टा। ऋत्विजश्च बहवो गोमेधः-परिपुष्ट देहिनः वाजपेयिनो लम्बकूर्चा-गौराङ्ग महर्षयः पश्चिमाफगानवासिनः। आहूताश्च नाना दिग्देशीया ब्राह्मण-क्षत्रिय-प्रमुखविविध जातीयाः सैनिकाः।

सम्प्रति हि भारतभूमौ सम्वादपत्रेषु पण्डितगोष्ठीषु विपणिश्रेणीषु रथ्यासु वाष्पीयशकटेषु स्त्रीपरम्परासु चास्यैव युद्धस्य समालोचनं भवति। केचित् अहो अकृतज्ञः काबुलाधीशः अस्मद्राजकोषात् प्रतिवर्षं द्वादशलक्ष परिमिता रौप्यमुद्रा गृहीत्वाऽपि रूसदेशीयैः सह मैत्रीं कृत्वा सहसैवास्मद्विपक्षता माचरतीति वदन्ति। अन्येतु नास्त्यत्र काबुलाधीशस्यापराधलेशोऽपि। सहि आशियामहादेश मधस्थितान् सर्व्वानेव प्रदेशान् रूसदेशिभि र्विजितान् विगतरुस तुर्की युद्धे अङ्गलजातीयांश्च स्वमित्रेभ्यः प्रतिश्रुतपालनपराङ्मुखान् दृष्ट्वा यदि स्वराज्य संरक्षणार्थं रूसदेशिभिस्सह मैत्रीं कृतवान् तत् का हानि रस्माकम्। ततो ऽस्मद्राजपुरुषाणां युद्धोद्यमः सर्व्वथाऽनुचित एवेत्यभिदधति। एवमादि बहु स्वमतपरिपोषकयुक्तियुक्तवचनपरम्पराभिराकुलीकृतमिव

भारतराज्यम् अथ वा न केवलं भारतभूमिः अङ्गलभूमिरप्यि तद्युद्ध विषयक विरुद्ध वचन निचयै नियतमाकुलीक्रियते॥

काबुल शासनकर्तुर्हि नास्माकं स्वल्पाभीति विद्यते सहि क्षुद्रो नृपतिः नास्मत्प्रतिपक्षत्व मार्हु मर्हति। पूर्व मेव तद्राज्यं अस्मत्सैनिकै र्विनष्टं सम्यग्विध्वस्तञ्च। परन्त्वस्योपरत्वं शीतप्राबल्यञ्च दृष्ट्वा राज्यपालन व्ययानु रूपराजकर प्राप्तेरसम्भवत्वम् विचिन्त्य परित्यक्तमेव तद्राज्य मस्मत्प्रधानपुरुषैः। तत्परित्यागे चान्यदपि कारण मासीत्। तदानीं पञ्चनद प्रदेशे सिंह इवासीम पराक्रमशाली निश्वासावधूतविपक्षमत्तकुञ्जरो महाराजः-श्रीमान् रणजीत् सिंहनृपतिः पञ्चनद प्रदेशेष्वप्रतिहत प्रसरं शासनं वितनुतेस्म। तद्राज्य विलंघनं विना नासीदन्यः कोऽपि पन्थाः काबुल गमनेऽस्मद्राजपुरुषाणां। यथोचित कर प्रदानं विना न सोऽपि स्वराज्य लङ्घनायैता ननुमेने। पन्था च विविध नदनदी पर्व्वतादि समाकुलोऽगम्य एवासीत्। अतस्तदानीं काबुलगमनं हि राज पुरुषाणां दुष्करं वहुव्ययसाध्य ञ्चासीत्। अनयैव कारण परम्परया तदा लब्धविजया अपि राजपुरुषाः काबुल राज्यं परिजहुः। अन्यच्च रत्नगर्भभारतभूमि प्रलोभन समाकृष्टमना अस्मच्चिरपरिपन्थी रूसदेशाधीशः सुचिरादेव भारत भूमि मभिसेनयितुं वर्तमानोविविधोपायमनुचिन्तयति। काबुल राज्यञ्च भारत-

भूमि गोपुर पुरोवर्त्ति। तत्रत्याश्चातिमात्रं धनलोलुपा: अर्थेप्सया ते-ऽगाधस्नेहाधारं पितरं अनन्त स्नेह पात्रं पुत्रम्वा स्वहस्तेन यमन सदनातिथीकुर्व्वन्ति। धनलोभो हि तेषां प्रकृतिवन्धनादिकम तीतैव वर्त्तते। मा कदाचित् कावुलेश्वरो धनलोभेन रूसाधीश्वरस्य वशम्वदो भूदित्या लोच्यास्मद्राजपुरुषै र्द्वितीय मुपाय मवलम्ब्य विहिता च तेन सह मैत्री। वेहस्तलोकमुपयाते दोस्तमुहम्मदखांनाम्नि वृद्ध कावुलाधिपता वस्मद्राजकीय साहाय्येनैव वर्त्तमाना फगानन्टपति: सिंहासन मधिरूढ:। स चाष्टषष्ट्युत्तराष्टादश खृष्टीयाव्दे तदानीन्तन प्रधानतम राज पुरुषेण लार्डमेश्री नामधेयेनाम्वाला नगरे ससम्मानमाहूय पूर्व्वोल्लिखितेनैवोपायेन मित्रतायां सुदृढ मावद्ध: ?

एव मतीते कियत्तिथे समये रूस सैनिकपुरुषान् क्रमेण सीसाहं जम्बू द्वीप मध्य स्थितान् प्रदेशान् विजित्य भारताभि मुखमग्रेसरान वलोक्य आफ्गान राज्येऽस्मत्सैनिकनिवासलिप्सया पूर्व्व कृत सन्धे: सुदृढत्वचिकीर्षयाचप्रेषित: पेलिनामधेय: कश्चित् राजवार्त्तावह: पेशवार नगरे कावुलाधिपतिना च तत्रस्वप्रतिनिधिरूप: कश्चित् सामन्त: प्रेषित:। किन्त्वधन्यतया श्मार्क न सो स्मत् राजप्रार्थनासु कर्णपातं कृतवान्। जातश्च तदवधि कश्चिदभ्यन्तरोभेद स्तेन सहास्माकं परमेतावत्कालं स भेदोऽलक्षितरूपेणैवावस्थित:।

सम्प्रति तु काबुलाधिपतेः सकाशं केनाप्यभिसन्धिना रूसाधीश संदेशहरं समागतं तेन सम्यक् समाहृतञ्च निशम्य सन्देहान्दोलितहृदयेनास्मद्राजप्रातिनिधिना काबुल राज्ये रूसागमनिरोधनं प्रार्थमानेन प्रेषितः प्रथमं कश्चित् इसलाम् धर्मावलम्बी वार्त्तावहः। अथ तस्य प्रत्यागमनविलम्बमसह मानेन च तेन प्रहित श्चानन्तरं कश्चिदपरो गौरङ्गसन्देशहरः स च काबुलाधि पतिना प्रियतमात्मज वियोगज मन्युवैक्लव्य व्यपदेशेनस्वराज्य प्रवेशेऽपि निवारितो श्रमवैफल्यम्लानमुखेन प्रत्यागत सम्मुच्चयमासास्मद्राज पुरुषाणां क्रोधाग्निं येन क्षण-मात्रमविचार्य्यैव वैद्युतवार्त्तावहेन भारतीयविविध प्रदेश-स्थिता युगपदेवाज्ञापिताः सर्वे सैनिक पुरुषाः काबुला-भिमुखमभियातुम् गच्छन्ति च प्रतिदिनं गुड्डलिका प्रवाह न्यायेन सेनानायकाः सगणाः संग्रामावतरणार्थम्भारतप्रान्त भूमिषु। श्रूयते रूसदेश नरपतेः प्रतिश्रुत विपुल सहायता-मधिगम्य काबुलाधि पतिरपि सोत्साहं रण सज्जां करोति प्रेरयतिच प्रत्यहं गङ्गास्रोतो न्यायेन रूस जातिभूयिष्ठा पूर्वाभिमुखगामिनीं सेनाम्। रूसाधिश्वरेणापिवज्रमिर्घोषेण विज्ञसम्। अङ्गल भूमि वासिनः काबुल मा क्रमेयुस्तदा वयं साचा देव तैस्सह युध्येम॥

प्राप्त ग्रन्थानां ॥
संक्षिप्त समा लोचनम् ॥

वय मतीव क्रतज्ञ हृदयेन 'हिन्दीप्रदीप" नामधेयस्य कस्य चिन्मासिक पत्रस्य प्राप्तिं स्वीकुर्म्मः अत्रहि विद्या नाटक समाचारा वली तिहास परिहास साहित्यदर्शन प्रमुखानां विषयाणां हिन्दी भाषया समालोचनश्चवति प्रकाशस्थानमस्य प्रयागनगरी सम्पाद कस्तु बालक्रष्ण भट्टनामा कश्चित् क्रतविद्यः लेखन पद्धतिश्चास्य य- द्यपि न विशुद्ध हीन्दीस्वरूप मनुसरति तथापि सहृदय हृदय ग्रा- हिणी प्रतिपदं सम्पादकस्य हिन्दुस्थान निवासि जनेष्वदृष्टपूर्व्वं साहसमभि व्यञ्जयति वयमत्र प्रबन्धमेकमुद्धरामः।

पुराने और अब के हाकिम बुद्धि और गम्भीराशय अगले हाकिम जिन्हों ने हिंदुस्तान ऐसे दूर देश में ब्रिटिश महा- राज्य की एतनी बड़ी भारी इमारत खड़ी करदी उनकी राज्य नीति का अब के हाकिमों की राज्य नीति से मिलान किया जाय तो बड़ा अन्तर पाया जाता है लार्ड क्लाइव और हेसटिंग्स का मुख्य लक्ष्य यही था कि हिंदुस्तानी जो मुसलमानों के अत्याचार से कुट कर हम लोगों के हस्तगत हुए इनके सुख और आराम को दिन दिन वृद्धि करना उचित है सच है "जूठा खाइए मी ठेकी आश ,,ज्यों २ अंग्रेज़ी राज्य हिदुस्तान में फैलता और पुष्ट होता गया वे जिनके हाथ में सलतनत को बाग डोर दी गई बराबर इसी नीति पर चले आए अर्थात हिंदुस्तान को सभ्यता में इङ्गलैण्ड के बराबर करदें और राज काज की ऐसी बुद्धि इन में आजाय कि अपना प्रबन्ध ये आप ही कर लें जब लार्ड कान वालिस ने देखा

कि मुट्ठी भर गिने गिने दस बोस अंग्रेजों से एतने बड़े राज्य का इन्तिजाम नहीं हो सकता तब हिंदुस्तानियों को भी सल्तनत के काम में शरीक किया जो अब यहां तक बढ़ गए कि बराबर से सिविल सरविस के सब ओहदे पा सकते हैं यह दूसरी बात है कि उस नीति का भरपूर बरताव वास्तव में नहीं किया जाता और हिंदुस्तानी बेचारे सब तरह की योग्यता रख कर भी बैठे बैठे टापा करते हैं योरोपियन हों चाहे वे निरे को रामचन्द क्यों न हों हम लोगों के सिरताज कर दिए जांयगे यद्यपि उन्हीं हाकिमों की एक यह भी नीति हैं कि रङ्ग और मजहब का बिलकुल फरक न रहना चाहिए और सब लोग एक ही कानून और नियम से शासित किए जांय; इन दिनों इङ्गरेजी गवर्नमेंण्ट के एक बड़े भारी स्तम्भ जो अपने आर्य्य भाइयों के बड़े हितैषी कहते हैं साफ लिखा है कि फरक न रहना यह बात सिरिफ कहने को है करने को नहीं यदि इस कहने के अनुसार बर्ताव हुआ तो हम लोगों का इस मुल्क में काम कौन हैं; हिंदुस्तानियों को तालीम की बाबत एक बार श्रीयुत लार्डमेओ ने अपनी वक्तता में कहा था कि ठौरठौर स्कूल और कालिजों के स्थापित करने से हम एक ऐसी सोने की जञ्जीर बना रहे हैं जिस्से कुछ दिनों में महाराणी की काली और गोरी प्रजा जो दूर देश के टापुओं में और यहां रहती हैं दोनों को ऐसा बांध देंगे कि दोनों दो तन भी रह कर महाराणी के प्रताप बढ़ाने में एक मन होंगी परन्तु यहा हम देखते हैं कि एक ऐसे उच्च पदाधिकारी जिन के हाथ में सवा ४ करोड़ मनुष्यों का बनना बिगड़ना रख दिया गया है ।

श्रीं Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासनी सुमनसांमनसामभिनन्दिनी॥

नानामालकथारश्मी-लोकव्याकुलीमनः।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ८] सितम्बर इं १८७८ [८ सङ्ख्या

सूची



---

लाहोर
ऐल्बर्ट नाम के यंत्रे दिलबागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं [illegible] विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—परिशिष्टादि [illegible] पृथङ् मुद्रितम्भविष्यति। [illegible] ग्राहका [illegible]-लाषः प्रकाशनीयः विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिविषयः) लवपुरस्थ संस्कृत पाठशालाध्यक्षाध्यापक पण्डितश्रीगुरुदयालु विरचिता मूल्यं ।)।

### नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्यः।

---

### मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

" पश्चाद्देयं ... ... ... ३।/०

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति।

विद्योदयः।

---

॥ बृहत् कथा सरित्सागर सारः ॥

आश्लिष्यमाणः प्रियया शंकरोऽपि यदाज्ञया।
उत्कम्पते स भुवने जयत्य समसायकः ॥

एवं स राजा वत्सेश्वरो वासवदत्तया संगतः क्रमेण सुखासक्ति कमना अभूत्, अस्य प्रधानमन्त्री यौगन्धरायणः सेनापती रूमण्वांश्च राज्यभार मुद्वहतुः, अथैकदा मन्त्री यौगन्धरायणो रूमण्वन्त मब्रवीत् अयं वत्सराजः मण्डितभूमण्डल पाण्डव कुलांकुरस्तदस्य क्रमा वसुमती कुल क्रमागता गजसाह्वयं नगरं च परं जिगीषाशून्येनानेन तत्सर्वं परित्यक्तमेव, अहो एष स्त्रीमद्यमृगयासक्तो निश्चिन्त एव तिष्ठति, राज्यंचास्यैकत्र एव मण्डले सञ्जातम् भवत्स्वयमस्मासु निखिला मेव धरणीधुरमर्पितवान् तदस्माभिः स्वबुद्ध्यैव तथा कार्यं यथैषकुल क्रमागतं समयमेव पृथिवीराज्यं प्राप्नोति एवंकृते तु राजभक्तेः सुमन्त्रितायाश्च पराकाष्ठा प्रदर्शिता भविष्यति,-शृणुचैतां कथाम् ॥

आसीत्कश्चिन्महासेन इति नाम्ना पुरा नृपः।
स चान्येनाभियुक्तोऽभूद्राज्ञा चातिबलीयसा ॥
ततः समेत्य सचिवैः स्वकार्य्यभ्रंश रक्षिभिः।
दापितः स महासेनस्तस्मै दंडं किल द्विषे ॥

इत्तद्दच्छय राजा ऽसौमानीष्टश मतप्यत ।
किं मया विहितः शत्रोः प्रणाम इति चिन्तयन् ॥
तेनैव चास्य गुल्मोऽन्तः शोकेन समुदपद्यत ।
कालेन गुल्माक्रान्तश्च समुमूर्षुरभून्नृपः ॥
ततस्तद्दोषधासाध्यं मत्वैको मतिमान् भिषक् ।
मृता ते देव देवीति मिथ्यावक्तिस्म तं नृपम् ॥
तच्छ्रुत्वा दुस्सहं भूमौ पतत सास्य भूपतेः ।
शोकावेगेन वलिना सगुल्मः स्वयमस्फुटत् ॥
रोगोत्तीर्णश्चिरं देव्या तयैवच समेपितान् ।
भोगान् स वुभुजे राजा जिगाय चरिपून् पुनः ॥

इत्थं स भिषग् यथा स्वबुद्ध्या राजहितं कृतवान् तथा वय मपि कुर्मः अथमेदिनीं साधयामः ; अस्माक मनोद्यमे प्रद्योतनामा मगधेश्वर एवैकः परिपंथी विद्यते सहि पार्ष्णिग्राहः सर्व्वदाऽस्माकंपद्यात् कोपं करोति अतः सकेनाऽप्युपायेनास्माभिः स्ववशमानेतव्यः अस्ति चात्रायमेव सुकर उपायः तस्य नरपतेः पद्मावती नाम काचिल्लोकोत्तर चमत्कारि रूप शालिनी कन्यका विद्यते वत्सेश्वरस्य कृते तां याचामहे; एतस्मिन्नन्तरे देवीं वासवदत्तां कौशलेनकुत्रांस्थापयित्वा तस्या-गृहे ज्वलनं दत्वा च देवी दग्धेति सर्व्वतः प्रख्यापयामः अन्यथा नसौ ऽस्मैराज्ञे सुतां ददाति यतः पूर्व्वमेतदर्थं मया प्रार्थितः स शोकवान्

नाहं वत्सेश्वरायैतां ददाम्यात्माधिकां सुताम् ।
तस्य वासवदत्तायां स्नेहो हि सुमहानिति ॥

वत्सेश्वरोऽपि देव्यां विद्यमानायां नान्यां परिणेष्यति अतः सर्व्वथैव वासवदत्तायामरण-प्रख्यापनमस्मत्कार्य्यसाधनमित्यनुमीयते यतः पद्मावत्यां लब्धायां हि समगधाधिपः सम्बन्धी सन् न पश्चात् कोपं कुरुते सहायत्वमधिगच्छति च इत्थं मस्य इश्वता मुपगते हि मगधाधिपे सुलभएवास्माकं ससागरधरा विजयः । पूर्व्वंदिव्य-वागप्ये तदब्रवीत् ततो यौगन्धरायणस्यैतद्वचन माकर्ण्य रूमण्वानेतदति सा-हस माशंक्याब्रवीत् एषोहि व्याजः कदाचिदस्माकं दोषाय भवेत् अत्रैतां कथां शृणु अस्ति जाह्नवीतटे माकंदिका नामनगरी तस्यां कश्चिन्मौनव्रतः परिव्राजको निवसतिस्म सहि भिक्षाशनेनैवाऽवर्त्तत अथैकदा भिक्षार्थं कस्यापि वणिजोगृहं प्रविष्टः कामप्य द्भुत रूपां शुभां कन्यां भिक्षामादाय निर्गतां दृष्ट्वा विषमवाणवशगो हा हा कष्ट मित्युच्चैराहस्म अथ स वणिक् विस्मयाविष्ट आह कथंभवता ऽकस्मादेव सुचिर रक्षितं मौन व्रतं परि त्यक्तम् ततः स उवाच ॥

दुर्लक्षणेयं कन्याते विवाहो ऽस्या यदा भवेत् ।
तदा ससुत दारस्य क्षयः स्यात्तव निश्चितम् ॥

तदेतामेतादृ ग्दुर्लक्षणसम्पन्नां दृष्ट्वा भवन्तञ्च मे चिरभक्तं विचिन्त्य परित्यक्तं मया सहसैव चिरमौनव्रतम्

तच्छीघ्रमेवैषा कन्यका मञ्जूषायां निवेशिता उपरिन्यस्तप्रदीपा च गङ्गाम्भसि रात्रौ निक्षिप्यताम्। ततो भयविक्लवमना सोऽपि वणिक् तथेति प्रतिश्रुत्य नक्तं तथा चक्रे। भीरवो हि स्वभावत एव निर्विमर्षा भवन्ति॥ स परिव्राजकोऽपि मठं गत्वा स्वशिष्येभ्योऽकथयत्।

"गङ्गां गच्छत तत्रान्तर्वहन्तीं यां च पश्यत।

पृष्ठस्थदीपां मञ्जूषां गुप्तं मानयतेह ताम्॥"

ते तथेति निर्गता यावद्गङ्गां न प्राप्नुवन्ति तावत् केनापि राजपुत्रेण समुद्धृता सा गान्धर्वेण विधिना परिणीता। ततः स राजपुत्रस्तां गृहीत्वा तस्या मञ्जूषाया अन्तः कमपि दुष्टाशयं वानरं स्थापयित्वा तां मञ्जूषां पूर्ववदूर्ध्वस्थदीपां कृत्वा गङ्गाम्भसि न्यक्षिपत्

ततो गङ्गायां वहन्ती सा मञ्जूषा प्रव्राजकशिष्याणां दृष्टिपथमागता। तेऽपि सहर्षं तां गृहीत्वा प्रव्राजकस्य निन्युः। ततः स धूर्त्तः प्रहृष्टमनास्तान् जगाद।

"एकोऽहं साधये मन्त्रमादायैतामिहोपरि।

अथ तूष्णींच युष्माभिः भवितव्यमिमां निशाम्॥"

इत्युक्त्वा स परिव्राजकाधमो यावत्तां मञ्जूषां विजने नीत्वातस्या द्वारमुद्घाटयामास तावत् स्वकृतो मूर्त्तिमान् दुर्नय इव स भीषणाकृति र्वानरो निर्गत्य दशनैस्तस्य नासां नखैः कर्णौ च चिच्छेद।

तदहं ब्रवीमि व्याजेन पद्मावती मणिलिप्सूनामस्माक मप्यिता इष्टा दृष्टा भवेत्। एवमुक्तोयौगन्धरायणः प्राह वत्सराजोऽयंसचिवायत्त सिद्धिः यद्यस्य सचिवाः पुनर्निरुद्यमास्तदा निश्चितं श्रियैजलाञ्जलिः प्रदत्तः। अतः सर्वथास्माभि रुद्यमः कर्त्तव्यः।

रुमण्वान्। कथं स वत्सराजः प्राणाधिकप्रियतमायाः प्रियाया वियोगं क्षणमपि सहेत ?

यौगन्धरायणः। राजानो हि सर्व्वथा स्वार्थप्रियाःपुरा रामचन्द्रः सीतादेव्याः विरहं विषेहे।

रुम। देवानान्त्वयमेव दृष्टान्तः। मनुष्याणान्तु विरहवेदना न कदापि सहनीया।

यौग्। छलेनैतेनास्माकं न काऽपि हानिर्भविष्यति परं निश्चितं कार्य्यसिद्धिरेव। वहवो हि राजमन्त्रिण एवम्विधैश्छलैः क्षत कार्य्यतामापु रितीतिहासेभ्यः श्रुयते।

अथ यौगन्धरायण मेवं कृत निश्चयमवलोक्य रुमण्वानाह। यद्येवं ते निश्चय स्तद्देव्या भ्रातरं गोपालकमानीय तेन सह सम्मन्त्य सर्व्वं विधियताम्।

तच्छ्रुत्वा यौगन्धरायण एव मस्त्वित्यवदत् परेद्युरुत्कण्ठा व्यपदेशेन स गोपालक मानेतुं दूतमेकमसृजत्। गोपालकश्च तेनैव दूतेन समं द्रुतं तत्राऽगमत्। ततः समागतन्तं गोपालकं ससम्मान

मभिनन्द्य रहस्य नीत्वा सर्वं मशेष मकथयत्। राज्ञःपरममंगलेप्सुना धीमता तेन श्वशुरापाततो दुःखोदयं विचिन्त्याप्यत्र सम्मतिः प्रदत्ता। तत्रावसरे रुमण्वता पुनरेवोक्त मेवं कृते प्रियावियोगं क्षण मप्यसहमानस्य वत्सेश्वरस्य कथं जीवीतेपावदति। यौगन्धरायणो ऽवदत् नात्र मे चिन्ता यतो देवीयं गोपालकस्य प्राणेभ्यो ऽप्यधिक प्रियतमा कनीयसी स्वसा। अस्य तु शोकस्याल्पत्वमालोक्य कदाचित् देवी जीवेदिति मत्वा वत्सराजो धैर्य्यमवाप्स्यति। ततस्ते पुनरप्येवं मन्त्रयामासुः, वर्त्तते लावाणकं नाम नगरं मगधराज्यस्य पार्श्ववर्ति तत्राखेटव्यपदेशेन देव्या सह राजानं नीत्वाऽन्तःपुर मादीप्य चाभीप्सितं साधयामः। देवी च छद्मवेशेन पद्मावती समीपे रक्षितव्या, येन सैवाऽस्याः शील साक्षिणी भवेत्। इत्थं समन्त्र्य परेद्युस्ते राजा विज्ञप्तः। देव सुचिरा देवास्माभि र्लावाणकं नगरं न दृष्टं सन्ति तत्रानेकाः शोभना आखेटभूमयः। नैकट्यात् सर्वदैव तत् मगधेश्वरेण बाध्यते ततस्तद्रक्षाहेतोश्च तत्र गम्यतामिति। एतन्निशम्य क्रीडैकलो लुपः स वत्सराजो लावाणके गन्तु मति श्चक्रे। एतस्मिन्नन्तरे नारदो मुनि र्नभोमध्या त्तत्र सभायां समवतीर्णो ऽभवत्। ततो गृहीताति थ्यसत्कारः प्रीतश्च स मुनि स्तस्मै चरण तल निपतिताय भूभृते पारिजात पुष्पमयीं मालां दत्वा ऽवोचत् भविष्यति ते अस्यां वासव दत्तायां विद्याधराधिपः कामदेवांशसम्भूतः पुत्रः। अपि च

"अचिरेण च न कालेन महतीमृद्धि माप्स्यसि ।
किञ्चित् कालं च दुःखन्ते भविष्यति न च त्वया ।
तस्मात्ति मोहः कर्तव्यः सुखान्तं भाविता हि तत् ॥"

इत्यभिधाय स मुनिरदर्शनं ययौ ।

ततः पूर्व्वोक्तया नीत्या ते यौगन्धरायणाद्याः सवल्लभं वत्सराजं लावाणक मानिन्युः ।

तत्र गत्वा वत्सेश्वरो मृगयार्थं प्रति दिनं दवीयसी मटवी म- टतिस्म । एकस्मिन् दिवसे मृगयायां निर्गते राजनि स मन्त्री यौगन्धरायणो गोपालक वसन्तक रुमण्वद्भिरनुगतो विजनस्थिताया वा सवदत्तायाः समीपं ययौ । अथ स सन्निसत्तमः भ्रात्वा पूर्व्वं प्रवोधितां तामत्र राजकार्य्ये सहायतामभ्यर्थयामास सा निज क्लेश प्रदमपि तत् भर्तृहितमनुचिन्त्यानुमेने अथ वा भर्तृ भक्ताः कुलां- गनाः किन्नाम न सहन्ते ततस्तांब्राह्मणीरूपां विधाय वसन्तकं वटु रूपं कृत्वा मन्त्रीयौगन्धरायणः स्वयमपि वृद्धब्राह्मणो भूत्वा पद्मा वती गृहंगत्वातामभ्यर्थ्य स्वापत्यव्यपदेशेन तत्पार्श्वे तौ स्थापयामास ततान्तरे रुमण्वता तन्मन्दिरमादीप्य हाहा वसन्तकेन सह देवी दग्धे त्युद्घुष्यत ततः समन्तात् क्रन्दितध्वनि रुदभूत् । वत्सराजो पि सायमाखेटात्प्रतिनिवृत्य सर्व्वमेवान्तः पुरमग्निना भस्मीकृत मप- पश्यत् । तत्र देवी दग्धा च शुश्राव । तच्छ्रुत्वैव तदसह्य दुःखानु

भव क्षेण मपाकर्त्तुं मिवेच्छता मोहेन हतचेतनो भूगावपतत्। ततो लब्धसंज्ञो स नृपति र्बहुविलप्य मन्त्रिणाम्प्रबोधवचनं निशम्य नारद वाक्य मनुस्मृत्य च कथमपि शान्तिमालेभे। देवी वासवदत्ता च भर्त्तृ वियोग विधुरा भावि मङ्गला शाश्वतप्राणा कथं कथमपि कन्यान्तःपुरे स्वालौकिकगुणैवाकृष्टचेतसा पद्मावत्या सख्यमभिपूजिता समयं निनाय। ततो योगन्धरायणेनाभ्यर्थितोमगधेश्वरो वत्सेश्वराय पद्मावतीं प्रायच्छत्। वत्सेशश्च पद्मावतीं परिणीय वासवदत्तासमन्वितया तया सह स्वभवन माजगाम। वासवदत्ताऽपि परित्यक्त ब्राह्मणीभावा छत पूर्व्व रूपा स्वाट भवनस्थिता राज्ञा विज्ञाता सादरं परिगृहीताऽभूत्।

एतस्मिन्नन्तरे राज प्रत्ययार्थं दिव्या वागुदभूत्।

धन्यस्त्वन्नृपते यस्य मन्त्री योगन्धरायणः।

यस्य वासवदत्ता च भार्य्या प्रागजन्म देवता।

दोषो न कश्चिदेतस्याः——इत्युक्त्वा स वा गुपारमत्।

इधदथ नृपतिः स मूर्त्ति मत्यौ निकट गते रति निर्वृतो दृवौभे।

अनुदिन सह वास सानुरागे निजदयिते परमुत्सवं बभार।

अन्येद्यु राजा भार्य्याभ्या मनुगतोरहसि तत्र गोपालकं रुमण्वन्तं वसन्तकं योगधरायणं चानीय विविधा विस्रम्भिणीः कथाश्चक्रे।

## वियोगि विलापः ॥

(१)

यत्नोपनीत मपहाय चिराय याता

क्वासि प्रिये हृदय मन्दिर मेतदद्य ।

शून्या दिशः प्रसरतो नच चक्षुषी मे

वाष्पावरुद्धवचनप्रसरश्च कण्ठः ॥

(२)

आशोपकल्पितफलान्वितरम्यवल्लीं

त्वां कृन्तता हृतमहो मम दैवतेन ।

सौख्यं शुभं हृदयमोहनमद्यरूपम्

प्रेम प्रिये सुरुचिरं चिरसञ्चितञ्च ॥

(३)

त्वामन्तरेण हरिणायतलोचने मे

नेमे सुखाय ऋतवो धृतरम्यभावाः ।

उन्निद्रएव रजनीः सुचिरं नयामि

प्राणाधिके न मनसः क्षणमस्ति शान्तिः ॥

(४)

वर्षासु नीरदचये रयि नीरजाक्षि

प्रच्छन्न मम्बरतलं न दिगाम्विकाशः ।

चित्तं ममासमशराशुगजालविद्धं

संच्छन्न मन्धतमसा न विकाश मेति ॥

(५)

दृष्ट्वा तड़िज्जड़ितमम्बुदमम्बरे ऽस्मिं
आरामपादपसमाश्रितवालवल्लीम् ।
त्वामङ्कलालितसखीं स्मरतश्चिरं मे
दंदह्यते मनसिजो हृदयं मृगाक्षि ॥

(६)

तन्द्रांगतः कथमपि प्रसभं निशीथे
स्वप्ने विभाव्य घनगर्जनविह्वलां त्वाम् ।
आलिंगितुं विततवाहु रहं यदासो
वर्षाच्छलेन रजनी परिरोदितीव ॥

(७)

नद्यो वहन्त्यनुसरित्पति मात्तवेगाः
पान्थाश्चलन्त्यनुगृहं दयितां विचिन्त्य ।
नृत्यन्ति वर्हिनिचया नवमेघ मत्ताः
सन्ताप मेति मम केवल मत्र चेतः ॥

(८)

अन्तर्गतं क्षितिरियं नवमेघसिक्ता
तापं विमुञ्चति शनै र्य महो स किं मे ।
अन्तर्विशत्यनिशमुग्रतरप्रभावो
मेघोदयस्फुटितचेतसएणनेत्रे ॥

(९)

सान्द्राम्बुदोपरि धनुर्वहुवर्णचित्रं

दृष्ट्वेन्द्र मिन्दुवदने हृदये ऽभ्युदेति ।

लीलास्खलद् घन कचान्तविलम्बमाना

स्रक् चारुपुष्पनिचयग्रथिता तवाऽद्य ॥

(१०)

वर्षात्यये शरदुपैष्यति शुद्धरूपा

कान्ता ऽमलेन्दु किरणै, र्हरिणायताक्षि ।

मुक्तं घनैर्गगन माशु विकाशते दिक्

कूपे निमज्जति मन स्तमसां ममैतत् ॥

(११)

चन्द्रानने विमलचन्द्र सुधाव धौतं

सौधं समस्त मखिलं वसुधातलञ्च ।

साकं त्वया रतिकरं मम पूर्वं मद्य

त्वामन्तरेण विषमं विषमुज्जहाति ॥

(१२)

एतत् सुधामुखि सुविम्बित चन्द्रविम्बं

विम्बोपमं मधु तव प्रणयाभिलाषि ।

मन्दस्मितोपूद्भितविम्वनिभाधरेण

पूतं पुरेव मदिराक्षि पुरः कुरुष्व ॥

(१३)

आराम भूमिषु शुभासु च शाद्वलासु ।
ज्योत्स्नोज्ज्वलासु पवनः शनकै र्विचीय ॥
शेफालिका कुसुम सन्तति मेष शय्यां ।
युष्मत्कृते रचयति क्वनु तिष्ठसि त्वम् ॥

(१४)

इन्दीवरं सरसि सुन्दरि मन्दवातैः ।
सञ्चालितं ततइतः कलितद्विरेफम् ॥
दृष्ट्वा मनो रतिवशोत्तरलायताक्षि ।
सन्तप्यते चटुल मद्विधुरं विभाव्य ॥

(१५)

पूर्णाऽमलेन्दु धवला ननु शारदीया ।
गन्धाढ्य मन्द मरुता सुखसेवनीया ॥
हाहा गतैव रजनी रुदती भृशस्मे ।
कान्ते रतीश-विशिख-ज्वलितात्मनो ऽद्य ॥

(क्रमशः)



प्राप्तग्रन्थानां संक्षिप्तसमालोचनम्

{ दयानन्दमत मर्दनाख्यो }

निबन्धः

फगवाड़ा नगर निवासि ब्राह्मण जातीय लवपुरस्थापरनामक

राजकीय पाठशालाधिकरणक संस्कृताध्यापक

श्रीपण्डित गोविन्दराम निर्मितः ।

दयानन्दोहि समाजसंस्कारणच्छद्मना समाजमध्ये महान्तमेव विप्लवं घटयितुं प्रवृत्तः । स हि विविधदेवतोपासनोपदेशपराननुप्रख्यातान् वेदान् स्वकपोलकल्पितया व्याख्यया समन्वितान् कुर्वन् भारतवर्षवर्त्तस्य सरलस्वभावस्य हृदयस्य आलिमसोमहम्मदादिभि र्युवावस्था प्रदर्शी विद्याकारइव विमुग्ध चेतसां केषांचित् यूनां विशेषश्रद्धाया आस्पदमपि तत्त्वदृशां पण्डितानां न तथा चमत्कारकारी प्रत्युत प्रमोहकत्वेनैव प्रतीयमानोभवति अनेनैव कारणेन विविधदिग्देशीयाहि भारतीय पण्डिता स्वस्य तथा प्रागल्भ्यं साधारणेषु प्रकटीकर्त्तुं तन्मत खण्डन पराणि बहूनि पुस्तकानि रचितवन्तः ॥

पण्डितवर श्रीगोविन्दराम महोदया अपि दयानन्दमत विमर्दकानां पण्डितानामन्यतमाः अत्रभवन्तोहि विशेषनैपुण्येन स्वासीमविद्यावत्तयाच दयानन्दमतं विमर्दितवन्तः उदाहरणार्थं वयं ग्रन्थस्यैतस्यांशमेकं मुद्रयामः ॥

„ओम् अग्निमीळे पुरोहितं यज्ञस्य देव मृत्विजम्- होतारं रत्नधातमम्„ ॥

अस्यार्थस्तु माधवाचार्य्यै रेवं कथितः अग्निनामकं देवमीळे स्तौमि मंत्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते कीदृशमग्निं यज्ञस्य पुरोहितम् यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितम् होमं सम्पादयति यद्वा यज्ञ सम्बन्धिनि पूर्व्वभागे आहवनीयरूपेणावस्थितं पुनः कीदृशम् देवं दानादि गुणयुक्तं पुनः कीदृशम् होतारमृत्विजम् देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव तथाच श्रुति अग्निर्देवानां होतेति, पुनः कीदृशम् रत्नधातमम् यागफलरूपाणां रत्नानां अतिशयेन धारयितारं पोषयितारञ्चेति अत्र दयानन्दः अत्र प्रथमत ईश्वर एवार्थोऽग्निशब्देन गृह्यत इति वदति तन्न संगच्छते अग्निशब्दस्ये श्वर शक्तिकत्वेप्रमाणाभावात् होतृयज्ञर्त्विक्पुरोहितशब्दैः साहचर्य्यादत्राग्नेरेव देवताया ग्रहणस्यौचित्यात्त नचेन्द्रं मित्रं वरुण मग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुरिति ऋग्अष्टक २ अध्याय ३ वर्ग २२ मन्त्र ४६ मन्त्रे एकस्य सतः परब्रह्मण इन्द्रादीनि बहुधा नामानि सन्तीतिवेदितव्यं इत्यर्थके तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः तदेवशुक्रम् तद्ब्रह्म ताआपः सप्रजापति रिति य॰ अ॰ ३२ मं १ मन्त्रेच यत्सच्चिदानन्दादिलक्षणं ब्रह्म तदेवग्न्यादीनामवाच्य मित्यर्थकेऽग्न्यादिशब्दानामीश्वरवाचकत्वस्याभिधानात् कथंतत्र प्रमाणाभावः प्रतिपाद्यत इतिवाच्यम् परमेश्वरस्ये[illegible]ादिरूपेणा वस्थितेरेवात्र निरूपणात् तत्राद्यमन्त्रगतस्यैकं सद्विप्राः बहुधा वदन्तीति वाक्यस्यैकं सद्ब्रह्म बहुधा बहुप्रकार मिन्द्रादि रूपम् विप्रा वदन्तीत्ययमेवार्थोयुक्तो नहिनामबाहुल्ये बहुप्रकारता सम्भाव्येत

ओँ Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः ।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासनी सुमनसां मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भै-र्लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ८ ] अगस्त इं १८७८ [ ८ सङ्ख्या

## सूची



लाहोर

ऐल्बर्ट नाम के यंत्रे दिलबागरायनामधेयेन मुद्रितः ॥

विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणंमहाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथक् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः ॥

विद्योदय कार्य्याध्यक्षः।

लवपुरे।

---

नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे) प्राप्तव्यः।

---

मूल्यादीनां नियमः।

| | | |
|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं ... | ... ... | २।/० |
| „ पश्चाद्देयं ... | ... ... | ३।/० |

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति।

---

वेदान्त मुक्तावली

मुक्तकेशी पदद्वन्द्वं मुक्तये हृदिसंस्मरन् ।
मुक्तावलींकरोम्यद्य वेदान्तवचनोज्ज्वलां ॥

तत्र तावदखिलात्मक चिदानन्दमय परब्रह्म स्वरूपं भेदादिकं च निरूप्यते । यथाऽयमनन्त ब्रह्माण्ड व्याप्येक एवाकाशः कन्दरा दरीगृह मठवटादिमध्यगत स्तत्तदुपाधि मधिगच्छति तथैकमेव परब्रह्मैतदनन्त ब्रह्माण्डान्तर्गत निखिलवस्तु स्वरूपाण्य धिगच्छति । अतएवोक्तम् मुण्डके—

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥

एवञ्च

यदर्च्चिमद्यदणुभ्योऽणु यस्मिन् लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म स प्राण स्तदुवाङ्मनः । तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्यविद्धि ॥

गौड़पादीये च

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः

इत्याद्युपनिषद्वचनैः रज्ज्वां भ्रांत्या सर्पकल्पनेव प्रपञ्चस्यास्य माययोपकल्पितत्वं नतु वस्तुत्वमित्युपपद्यते । एतच्चन्द्र सूर्य्यादि ग्रह नक्षत्र पूर्णं परितः परिदृश्यमानं विश्वमण्डलं भ्रमविलासमात्रं न वस्तुतो ब्रह्म विहाय किमप्यन्यद् द्वैतं विद्यत इति फलितार्थः ।

वेदान्तमते एकस्यैव परब्रह्मणो ब्रह्मजीवभेदेन द्वैविध्यमुपकल्पितम् । तत्र ब्रह्म ईश्वरः साक्षी परमात्मा कूटस्थः अक्षरं जगदधिष्ठानं जगन्निषेधावधिभूतञ्च व्यवह्रियते । बृहत्वाद्बृंहणत्वा

ब्रह्म । व्यापकमित्यर्थः । साक्षा दृत्तिव्यवधानं विना आपरोक्षेणे-क्षते प्रकाशयति साक्षी, कूटः अयोघनं तद्वन्निर्विकारेण तिष्ठतीति कूटस्थः न क्षरतीत्यक्षरः ।

तस्य च स्थूलसूक्ष्मकारण शरीरोपाधितया विराट् हिरण्य-गर्भेश्वरेति भेदत्रयं यथाक्रम मुदीरितं । तत्र वनवज्जलाशयवदेक बुद्धिविषय जरायुजाण्डजस्वेदजोद्भिज्जाख्य चतुर्विधान्नमय कोश स्थूल शरीरोपाधिकचैतन्यं विविधमेकवद्विराजमानत्वात् विराड़ित्युच्यते । सच विश्वेषु समस्तेषु नरेष्वहमित्याभिमानित्वाद्वैश्वानरः विशेषेण भासमानत्वाद्वैराजइतिचव्यपदिश्यते । पूर्ववत् वनव-ज्जलाशयवदेकबुद्धिविषये कादशेन्द्रिय पञ्चतन्मात्रात्मकसूक्ष्म शरी-रोपाधिचैतन्यं ज्ञानशक्तिमत्वाद्धिरण्यगर्भः । सचमणिसूत्रवत्समस्त प्रपञ्चानुस्यूतत्वात् सूत्रात्मा क्रियाशक्तिमत्वात् प्राण इति च व्यप-दिश्यते । समष्ट्यभिप्रायेणैकवद्व्यपदिश्यमानाज्ञानोपाधिचैतन्यं समस्त प्राणिनियामकत्वादीश्वरः । सच समस्तप्राणिहृदयनिष्ठत्वे सति समस्त प्राणिकर्म्मप्रेरकत्वा दन्तर्य्यामी नामरूप रहितत्वाद-व्याकृतः, सकलाज्ञानतत्कार्य्यावभासकत्वा ज्जगत्कारण केनापि प्रमाणेन नव्यज्यत इत्यव्यक्तमितिच व्यपदिश्यते ।

फलितार्थस्तु अध्यात्मिकस्याधिदैविकेन सहितस्य प्रपञ्चस्य सर्वस्यैव स्थूलस्य पञ्चीकृत पञ्चमहाभूत तत्कार्य्यात्मकस्यात्मनो विराड़िति नामधेयं । तस्यैव सूक्ष्मस्या पञ्चीकृत पञ्चमहाभूत तत् कार्य्यात्मनो हिरण्यगर्भेतिसंज्ञा ॥

क्षेत्रज्ञो देहाभिमान्यात्मा जीवः सोऽपिसाक्षी कूटस्थाक्षर-चैतन्यादिनामभिर्व्यपदिश्यते कथ्यतेच प्रत्यगात्मेति प्रतिलोम्येनानृत जड़दुःखाहंकारादिभ्यो विलक्षणत्वेन, सच्चिदानन्दात्मकतया अञ्चति

प्रकाशत इति तथा भूतात्मा । सच यथाक्रमं व्यष्टिस्थूलसूक्ष्म कारण शरीरोपाधिकत्वेन विश्वस्तैजसः प्राज्ञ इतिच व्यपदिश्यते । एतदेव जीवत्रयम् । वृक्षवज्जलवद्वानेकविषय पञ्चीकृतपञ्चमहाभूत तत्कार्य्यात्मक गोमानुषादि स्थूलभोगायतन स्थूलशरीरोपाधिचैतन्यं विश्वः । तथानेकबुद्धि विषय पूर्वोक्त सूक्ष्म शरीरोपाधिचैतन्यं तैजसः । एवं व्यष्ट्यविद्यारूपाज्ञानोपाधिकचैतन्यं प्राज्ञः ॥

---

पितापुत्रयोः सम्बन्धः

पुत्राननपंकज सन्दर्शनेनविमुग्धहृदययोः पित्रो रानन्दोच्छ्वास इव दुःखभययोस्तरङ्गोऽप्यव्यक्तएव तिष्ठति । तयो रानन्द प्रकाशने भाषा क्षीणशक्तिर्जायते दुःखभयेतु नतौ गदितुमिच्छत :

अहो दूरमपनयन्त्यपिसन्ततिः संसारश्रमक्लमादिकं द्विगुणयति दारिद्र्यजन्यदुःखानि, तथा परिवर्द्धयन्त्यप्यनिशं चिन्ताशतं नि क्रासयति मरणचिन्ताम् ।

वंशसंवर्द्धनकार्य्यं हि पशुभिः सह सामान्यमेव विशेषास्तु मनुजानां स्मृतिगुणोदारकर्म्माणि ।

दृश्यतेऽत्र बहुशो निरपत्याहि पुरुषाः प्रायो विद्यालयस्थापना- दीनि महान्ति कर्म्माण्यनुतिष्ठन्तीति तेतु शारीरिकानुरूप प्रतिकृति स्थापने हताशा भुवनेषु मनसः स्वरूपं प्रकटयितुमिच्छन्ति प्रतीयते एतेन भवतिहि सन्ततिहीनानां स्वनामरक्षणाय गरीयसी चिन्ते ति । येहि जगत्याख्यापयन्ति प्रथमं स्ववंशं येषामनन्तोदारकार्य्य परम्पराभिर्वंशस्य कीर्तिर्जगतिविस्तृता भवतीत्यर्थः । तेहि स्वकृत वंशोन्नतिं चिरं स्थापयितुं निजापत्येभ्योपि सद्गुणशिक्षां ददति ।

बहुधाऽपत्यनिचयेषु पित्रो र्विशेषतो मातुःस्नेहभेदवाहुल्यं प्रतीयते अतएवोक्तं सलीमन् महोदयेन

"A wise son rejoiceth the father, but an ungracious son shames the mother."

विवेकदृक्पुत्रः पितरमानन्दयति तथाऽसच्चरितस्तनयो मातरं क्लेपयतीति । दृश्यते बह्वपत्यपूर्णगृहेषु प्रथम जात द्वित्रिपुत्राणां शिक्षादिबाहुल्यं कनिष्ठानां विलासाधिक्यं, मध्यमास्तु मध्यावस्थायां तिष्ठन्ति न तेषामुपरि पित्रोः स्नेहाधिक्यं, नवाते स्वमहत्वं दर्शयितुं शक्नुवन्ति शैशवे पुत्रेभ्यो यथेष्टधन प्रदानं हि तेषामनिष्टायो पकल्प्यते तेहि तादृशापक्वज्ञानदशायां प्रचुरधनमालभ्य सर्वदैवासत्सहचरसंगिनो विगर्हितपथमनुसरन्ति अतएव बालपुत्राणामुपरि सुशासन स्थापनेनयादृगुत्तमफलो त्पत्तिर्भवति न तथा यथेष्टव्ययनिर्वाहार्थं तेभ्यो धनप्रदानेन । शैशवे पित्रोः शिक्षकाणां भृत्यानाञ्चासमव्यवहारेणच भ्रातृषु परस्परमसूया सञ्जायते येन तुमुलगृह विवादस्याविर्भावो भवति ॥

---

## अर्थशास्त्रम्—परिश्रमः

संस्कृतशास्त्रानुसारेण तु परिश्रमद्वयमेतत् यथाक्रमं सानुबन्ध निरनुबन्धेति नामभ्यामभिधातव्यम् । कदाचित् परम्परया सानुबन्धतां भजमानोऽप्यमात्यसचिवादीनां परिश्रमः प्रायो निरनुबन्धतयैव प्रतीयते । सत्यं शस्यविधेः संस्तम्भनेन निष्कर वाणिज्यकार्य्यप्रवर्तनेन च इंग्लेण्डदेशस्य समृद्धिरतीववृद्धिमवाप, तथ । प्यैतदप्यनुस्मर्त्तव्यं यदमात्यानामेतदनुष्ठानं हि पूर्वमन्त्रिनिचय भ्रमोत्पन्नवाणिज्यवृद्धिप्रतिबन्ध निराकरणमात्रम् ।

इत्थं यदैव राजसचिवानां कार्य्यपरम्परया महत्सानुबन्ध-भवति तदैवैतत् पूर्वमन्त्रिणां भ्रमसंशोधकरूपेण प्रतीयते । अतएवप्रकृतीनां धनजीवन संरक्षणमपहाय राजसचिवानामन्य कार्य्याणि सानुबन्धानि भवन्ति नवेति न परमार्थतो ज्ञायते ।

कदाचित् सानुबन्धपरिश्रमोऽपि निरनुबन्धतां प्राप्नोति, यथा सन्निहित वाष्पीय शकटस्य जलयानेभ्यो ह्यधिक कार्य्योपयोगित्वं निश्चित्य निखातप्रायाणां हि कुल्यानां तादृशसंपूर्णावस्थायामेव परि वर्ज्जयन्ति; एवं निरनुबन्धपरिश्रमशालिनां परिश्रमोऽपि कदाचित् सानुबन्धतां भजते, यथा रसायनतत्त्वज्ञानां परिश्रमेणानेकशः कार्य्यानुष्ठानस्य सुलभ पद्धति राविष्कृता भवति। अतः फलसन्दर्शनं विना नैतन्निश्चेतुं शक्यते कस्य परिश्रमः सानुबन्धः कस्य वा निरनुबन्ध इति ।

अवस्थाविशेषैः परिश्रमस्य सानुबन्धताशक्तिः सम्वर्द्धते । तत्तदवस्थाविशेषाणा मन्यतमः श्रमविभागः प्रथमं निर्द्दिश्यते।

सूचीनिर्म्माणोदाहरणेन आदमस्मिथनामधेयः श्रमविभाग मतीव प्रविशदमगमयत् । तद्यथा कश्चिल्लौहखण्डं वह्निना सन्तापयति कश्चित्तदुद्धृत्यायोघनेन सन्ताड्य फलकं निर्म्मीति । अन्यस्तत्फलक मवदाय क्षुद्रशलाका रचयत्यपर स्ताः संघर्षयत्येवं क्रमेण बहूनामंशतः परिश्रमा दल्पव्ययेन बहुसूचीनिर्म्माणं भवति, येन भारतभूमावपि इंग्लण्डीयसूचीचतुष्टयं ताम्रखण्डैकेनाऽवगम्यते यद्येकः कश्चित् सूचीनिर्म्माण विषयकावश्यक निखिलकार्य्य निचयमनुतिष्ठेत् तदा स दिवस चतुष्टयेनाऽप्येकां सूचीं निर्म्मातुं न शक्नुयात्। नकेवलं सूचीनिर्म्माणं सर्वमेव सांसारिककार्य्यजातमेवं परिश्रमविभागतोऽल्पायास साध्य भवति। श्रमविभागस्य फलत्रयं लक्ष्यते प्रथमं कर्म्मकारिणां स्वकर्म्मनैपुण्यम् । कर्म्मनैपुण्यं श्रमविभागलब्धफलानामुत्तमं विशेषोपकृतिहेतुश्च बरमिंगहम प्रमुख महानगरीय शिल्पागारस्थितकर्म्मचारिणां श्रमविभागजन्यकर्म्मनैपुण्यं हि चित्तं सुविस्मितं करोति। लेखनीनिर्म्माणयन्त्रेभ्यो लेखनी मुन्नयतां हस्तलाघवं दृष्ट्वा चित्तं विस्मयरससागरे निमग्नोन्मग्नं

भवति । अहो ! कदा वा तेषां हस्तो यन्त्रस्याभिमुखमधिसरति कदा वा तद्यन्त्रात्तेषुनो भुवयतीत्यादिका नश्यति व्यापारपरम्परा । नहि कदाऽप्येकदानिक कार्य्यासक्ताना मनस्येव मङ्गलम् ।

द्वितीय मेक कार्य्यात् कार्य्यान्तरेष्वनभिवेशान्न वृथा समयापहरणं । विविधकार्य्याभिनिविष्टानां हि जनानां भवति तत्तदभिनवरूपकर्म्मविशेषाणां प्रथमाभ्यासे वृथानेकसमयव्ययः एक कार्य्याभ्यासिनान्तु न तथा प्रत्युत तस्मिन्ने कस्मिन्ने वा दृढनैपुण्यम्।

वाष्पीय शकट विद्यालयानि चक्षैतद्दृष्टान्तो नियतमेवाभिलक्ष्यते । यदा प्रातर्यानजातेभ्यः प्रदीपा अपनीयन्ते तदैकोयानशिखर मारुह्य दीपानुद्घाटयाधःस्थितायान्यस्मै समर्पयति अपरस्तान्यथास्थानं स्थापयति एवमल्पक्षणेनैव बहुदीपापनयनं भवति ।

यद्येकस्तदखिलानुष्ठानं कुर्य्यात्तदा यानारोहणावरोहणाभ्यामेव तस्य समय व्यतीयात् स बहुपरिश्रमेणैकघण्टायां त्रिचतुःप्रदीपानपनेतुं शक्नुयात् यानिदानीं स मिनिटपञ्चकेनैवापनयति ।

तृतीय मेककार्य्याभिनिविष्टचित्ततया जनै स्तत्तत्कार्य्यसाधनोपयोगि यन्त्रविशेषाविष्करणम् ।

यथा कस्यचिद् यन्त्रस्य रन्ध्रविशेषपिधानोद्घाटन व्यापार नियुक्तेन वाट नामधेयेन केनचिद् बालेन वाष्पीय यन्त्रनिर्म्माणम् । स हि बालो निरन्तरं तद्यन्त्रीय रन्ध्रपिधानोद्घाटने कुर्व्वन्नेकदा चिन्तितवान् यदि मद्व्यापारं विना केनाऽप्युपायेन रन्ध्रोऽयं स्वयं पिहित उद्घाटितश्च भवेत्तदाऽहं क्रीडया समयम पनेतुं समर्थो भवेयम् ।

एवं तदिच्छोद्भूत चेष्टापरम्परया स वाष्पीय यन्त्र निर्म्माण मकरोत् ।

परिश्रमविभागतोऽन्यदपि हित मुपलभ्यते यद्वि आदमस्मिथ महोदयेन न वर्णितम् ।

तद्यथा यो यत्कार्य्यं साधु सम्पादयति तस्य तस्मिन्नेव नियोजनम् । अनिपुणं हि जनं कर्मसु नियुज्य न जनोऽर्थव्ययानुरूपं फलं लभते ।

---

## प्राचीन
## वङ्ग भाषा

सम्प्रति भारतवर्षे यावत्यो दैशिकभाषाः समुत्पन्नाः, सर्वासा मेव तासां वङ्गभाषा समुन्नति मधिगता । इदानींह्यस्यां न केवलं प्राच्य वेद दर्शन साहित्या दीनामनुवादोजातः किन्तु पाश्चात्यगणिते तिहासदर्शनादीनामपि प्रत्यहमनुवादो जायते । रचिताश्चानविविध महाकाव्य नाटकोपन्यास प्रभृतयो नवीना ग्रन्थाः । किमधिक मिदानीं केवलं वङ्गभाषीय पुस्तक जातं सम्यगधीत्यैव लभते जनः समोचीनं पाण्डित्यम् । संस्कृत पद विन्यास ग्रहणं हि वङ्ग भाषायाएवं समुन्नति कारणमित्यनुमीयते । क्रियाविभक्तो वर्ज्जयित्वा संस्कृतस्यान्यत्सर्वं पदविन्यासालंकारादिकं वङ्गभाषायां यथायथं वर्त्तते । प्राचीनसमये वङ्ग हिन्दीभाषयोर्न तादृशमन्तर मासीत् । तदा उभे एव ते संस्कृतमातुर्युगपत् प्रसूते यमजे इव सुसदृशस्वरूपेआस्ताम् । वचन मिदं मप्रमाणीकर्तुं मत्र वङ्गीय प्राचीन कवि विद्यापति गोविन्ददास प्रमुखानां कविताः समुदाह्रियन्ते ॥

१ ए धनि कमलिनी सुनो हित बानी ।
प्रेम करवि अवसुपुरुख जानी ॥
सुजनक प्रेम हेम सम तूल ।
दाहि ते कनक द्विगुन होय मूल ॥
टूट इते नांही टूटे प्रेम अद्भूत ।
जै छने वाढ़त मृणालक सूत ॥
सभहु मतङ्गजे मोति नांही मानि ।
सकल कण्ठे नाहिं कोकिलबानी ॥
सकल समय नाही ऋतु बसन्त ।
सकल पुरुष नारी नाहीं गुणवन्त ॥
भनये विद्यापति सुनो वर नारी ।
प्रेम करित अब बुझ हि विचारी ॥

२ सुनो सुनो मुग्धिनी मुझ उपदेश ।
हम शिखायब चरित विशेष ॥
पहले हि अलका तिलक करि साज ।
वंकिम लोचने काजर राज ॥
जायविवसने झांपि सब अङ्ग ।
दूरे रहवि जनु वात विभङ्ग ॥
सजनि पहिले हिं निअड़े न जावि ।
कुटिल नयने धनि मदन जगावि ॥
झांपवि कुच दर्शयवि कन्द ।
दृढ़ करि वान्धवि निविहकवन्ध ॥
मान करवि कछु राखवि भाव ।
राखवि रस जनु पुनः पुन आव ॥
नसये विद्यापति प्रथमक भाव ।

सोहि गुणवन्त सोहि फल पाव ॥

३ लोचन श्यामर वचन हि श्यामरुचारु निचोर ।

श्यामर हार हृदय मणि श्यामर श्यामर सखि करु कोर ॥

माधव ईथे जानि बोल विथान ।

अचपल कुलवति मति उमतायलि कियेतुहुंमोहिनिजान ॥

मरमेहि श्यामर परिजत पामर झामर मुख अरविन्द ।

झर झर लोरहि लोलित काजर विगलित लोचन निन्द ॥

मन्मथ सागर रजनि उजागर नागर तुहुं किये भोर ।

गोविन्ददास कतहुं आश आसव मिलवहुं नन्दकिशोर ॥

४ शैशव यौवन दर्शन भेल ।

दौंहुं पथ हेरइते मनसिज गेल ॥

मदन की तार पहिल परचार ।

भिन जने देयल भिन अधिकार ॥

कटि के गौरव पावल नितम्ब ।

इन्ध के खीन उहैं अवलम्ब ॥

प्रकट हास अवगोपत भेल ।

वरुण प्रकट फिर उहे की नेल ॥

चरण चञ्चल गति लोचन पाव ।

लोचन क धैरज पद तलि जाव ॥

नव कविशेखर कि कहिति पार ।

भिन भिन राज भिन व्यवहार ॥

---

जगन्मण्डलम् ॥

गच्छतीति जगदितिव्युत्पत्तिलभ्येनार्थेनैतच्चन्द्रसूर्य्यग्रहनक्षत्र-तारकादिपरिव्याप्तस्य जगन्मण्डलस्य तदन्तर्गत विविधवस्तुजातस्य च सर्वदैव गतिशालित्वं प्रतीयते न तु स्थिरत्वम् । गतिर्गमनन्तद्धि पूर्वदेशसंयोगध्वंसानन्तरमपरदेश संयोगोत्पत्तिरूपव्यापारः । यान-नावादि विरूढ़ानामेतद् व्यापारासत्त्वेऽपि तेषां गतिरस्ति नवेति जिज्ञासायां ब्रूमहे साश्रययानादिपरम्परया तेषामवश्यन्तादृशव्या-पार शालित्वमस्तीति ।

यूरोपीयगतिविज्ञानशास्त्रमते तु गमनं नाम स्थिति परिवर्त्तनं एकस्य स्थितिपरिवर्त्तनं हि वस्त्वन्तरावस्थानमपेक्ष्य प्रतीयते । यथा नियतैकस्थान स्थितानामपिवाष्पीयशकटारूढ़ानां वर्त्मपार्श्वस्थितद्रव्याद्यवस्थानमपेक्ष्य स्वावस्थानपरिवर्तनात्गमन भवति । अत एव जगतीतले यत्किञ्चिद्गमनं दृश्यते तत् सापेक्षमेव । नास्मिन् काऽपि निरपेक्षा गतिरालक्ष्यते । पश्य यद्यहं चलद्वाष्पीयश कटस्थैकसीमातः सीमान्तरं गच्छेयम् तदा तत्सीमास्थितवस्त्वव स्थानमपेक्ष्य मे गतिर्जाता । वाष्पीयशकटश्च न स्थिरं तद्धि स्ववर्त्मपा

र्द्धस्थितवृक्षाद्यवस्थानमपेक्ष्य स्थानपरिवर्त्तनं करोतीत्यस्यापि गति र्विद्यते । वृक्षादयोऽपि वार्षिकाह्निकेति द्विविधगतिद्वयेन नियतं स्वावस्थानपरिवर्त्तिन्या पृथिव्या सह सूर्य्यावस्थानमपेक्ष्य गमनवन्त एव । को वा जानाति सूर्य्यो ऽप्येव स्थान परिवर्तनं करोति वा नेति ।

नन्वियं स्थान परिवर्तन स्वरूपा गतिः किं वस्तूनां स्वाभाविकी त्वन्यथावेत्याशंकायां केचित्तु कणभक्ष प्रमुखा अस्मद्दार्शनिक वर्य्याः क्षित्यप्तेजोमरुतां स्वाभाविक वेगाश्रयत्वमाहु र्यथा " क्षितिर्जलन्तथा तेजः पवनोमनएवच । परापरत्वमूर्त्तत्व क्रियावेगाश्रयाअमीति " कारिकावलीप्रदर्शनात् । अन्येतु न तन्मन्यन्ते तेषाम्मते सर्व्वेषामेव क्षित्यप्तेजोमरुत्प्रमुखजड़वस्तूनां नास्ति काऽपि स्वाभाविकी गति र्बलिरपरप्रयुक्तवलविशेषेणैव तेषां गति र्जायते । तथैकदा चलद् वस्थामानीतानां वस्तूनां न जायते स्वत एव तद्गति निवृत्ति र्न जायते स्वतोवान तद्गतेरन्यथा परिवर्त्तनम् । गत्यु त्पत्तिं प्रति यथा वलस्य कारणता तथैव गतिनि वृत्तिं गति परि वर्तनं प्रति वा वलस्यैव कारणत्वमस्ति । केन चिद्बले नोत्पन्नाया गतेः प्रतिकूल समवलेन तिरोधानम्भवति । पूर्वोक्त नियमे नैतदेव प्रतीयते यत्क स्मिंश्चिद् वस्तुपिण्डे केनाऽपि वलेन यदा काऽपि गतिर्जायते तथैवाचिर जातया गत्या तत्पिण्डं गन्तुं प्रवर्त्तते न तद्बलस्य प्रतिक्षणं गमनकालस्था वस्थिति प्रयोजनम्भवति । प्रतीय ते च यावद् न्यत्वल

स्तद्गति विरोधि भवेत्तदा तत्पिण्डमृजुरेखाङ्कितेन मार्गेण चिराय गन्तुमा रभेत । अत एवोक्तं न्युटन महोदयेन "यदि न वलप्रयोगो भवेत् तदा सर्व्वमेव जगदन्तर्गतं वस्तुजातं निश्चलावस्थायामवतिष्टे दथवैक रूपेण वेगेन ऋजु रेखाङ्कित मार्गेण सुचिरं गच्छेदिति" वस्तूनां न स्वाभाविको गतिरस्ति बलेनैव तेषां गति र्जायते उत्पन्ना च गतिः प्रतिकूल वेग क्रमण पर्य्यन्तमेक रूपेण तिष्टतीत्यर्थः

---

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्
गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत् ॥ १ ॥

यद्यपीह यद् यद् वस्तूत्पद्यते तत्तत्किञ्चित्कालानन्तरमवश्यमेव नश्यति ईश्वरसृष्टसकल वस्तुजातस्य मनुष्यस्यापि मरणदर्शना'दिति नियमोऽस्ति तथापि प्रजापतिप्रदत्तं मनुष्यज्ञानं तमीश्वरं प्रापयति ॥

कोऽपि पुरुषः पुरुषापेक्षया प्राप्ताधिकज्ञानः स्वगृढविचारा नन्येभ्यः प्रकाशयामास पुस्तकं वा लिलेख तद्रचितपुस्तकमस्माभिः पठ्यमानमस्मांस्तमेव सङ्गमयतीव ।

अतः सर्वे मनुष्या ईश्वरदत्तमिदं ज्ञानं सफलीकुर्वन्तु । परं "वयन्तु किञ्चित्कालं संजीव्य मृत्युमेव प्राप्स्यामो विद्यालाभेनास्माकं किं प्रयोजन" मिति विचिन्त्यामूल्यं रत्नमिव ज्ञानमिदं न

त्यजन्तु । प्रथमतो नास्माकम्मरणं कदाचिद् भविष्यती" ति हृदि स्थिरीकृत्य विद्यालाभः करणीय इति ।

अमुनैव प्रकारेण धनस्याऽपि चिन्ता कार्य्या यद्यपि सर्वे मनुजा धनादीन्यैहिकवस्तूनीह परित्यज्यैव यमनगरातिथयो भवन्ति तथाऽप्यपीडितसकलप्राणिना मनुजेन धनादिसञ्चयोऽवश्यमेव कार्य्यः । सञ्चितञ्च धनादिकं वाणिज्यादिकर्म्मणा वर्द्धनीयं, वर्द्धितञ्च पुनः कस्मिंश्चिच्छ्रेष्ठकार्य्यकरणे वितरणीयमिति । बहुभिर्महात्मभिर्लोकानां हितार्थं कृतानि वापीकूपसरोवरपथिकशालाप्रभृतीन्युत्तमकार्य्याणि दृष्ट्वा तद्रचयितॄणां नामानि च स्मृत्वा तेऽद्यापि जीवन्तीत्येवम्भूतमेवाऽस्माकं स्मरणं जायते ॥ तथैव मृत्युना केशेषु गृहीत इव पुरुषो धर्म्मसञ्चयं कुर्य्यात् ।

यो हि "अहन्तु बहुवर्षिष्टजीवनोऽस्मि वृद्धो भूत्वा धर्म्ममाचरिष्यामि इदानीन्तु यथाकथञ्चित्समय एव नेय" इति कृतनिश्चयो धर्म्मन्न कुरुते तेनाऽवश्यमेव कदाचिद्दुःखं प्राप्तव्यम् ॥

नैवाऽस्तीह लोकानामायुःसमता केचित् पूर्णामवस्थां भुक्त्वा केचित्तदल्पवयस्काः, केचिद्धि अप्राप्तयौवना एवाऽन्ये जन्मैवादायाऽपरेच गर्भमध्य एव मृत्युमाप्नुवन्ति । न जानेऽस्मिन्नेव समये वयं सर्पदष्टा गृहाधःपतिताः, केनचिज्जीवेन हता, विद्युन्नष्टजीविताः कृतापराधतया प्राणदण्डा । उदरव्यथापीडिताः केनचिद्रोगेण

जर्ज्जरितकलेवरा भूकम्पपातितग्टहमध्य एव मृता वा यमनगरातिथयो भविष्याम: ॥

वयन्तु येषां पुत्रकलत्रादिसम्बन्धिनां कृते पापमाचरामो न तेऽस्माकं मरणानन्तरमल्पामपि सहायतां करिष्यन्ति केवलं धर्म्म एवाऽस्माकंरक्षां पापात्करिष्यतीति । अत एव सत्यमुक्तम् - एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ १ ॥

अस्माभिः सञ्चितञ्च धनादिकं नग्नेभ्यो वस्त्रव्याजेन बुभुक्षितेभ्योऽन्नव्याजेन च दत्तमेव सुफलमिति शम् ॥

श्री    Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

स्वस्तु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः।

विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ८ ]    डिसेम्बर इं १८७९    [ १२ सङ्ख्या

सूची



लाहोर

ऐल्बर्ट नामके यन्त्रे दिलजागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता क्रमु

---

मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

" पश्चाद्देयं ... ... ... ३।/०

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति

नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम-हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये रेजिष्टार्'स अफ्स, पञ्जाब यूनिवर्सिटी कालेज प्राप्तव्यः। कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं ।=)

अस्मत्समीपे व्या।

॥ विद्योदयः ॥

---

॥ मृत्युः ॥

सुहृद हर्म्य विहार सुखो चितान्

परिजनैः परितः परिरक्षितान् ।

क्षितिभृतो निखिलानपि दुर्गतान्

ग्रसति मृत्युविहोटन जृम्भितान् ॥ १ ॥

खमपि सिन्धु मनेकसमाकरं

भुवमिमां परिपृच्छ हिमञ्च ताः ।

युगपदुत्तर मेक मुदेष्यति

मरणतः शरणं नहि विद्यते ॥ २ ॥

जलनिधिं परिपृच्छ च जाह्नवीं

हिमगिरिं यमुनाञ्च सरस्वतीम् ।

प्रति वचोऽथ ततः शृणु केवलम्

न शरणं मरणाद्भुवि विद्यते ॥३ ॥

व्रज परेत भुवं परिलोकय

खिल समाधि समाहित वर्णकान् ।

विदितमेतदथाशु भविष्यति

प्रकृति रत्र मृतिर्नतु जीवितम् ॥ ४ ॥

पठ पुराण मनोज्ञ बृहत्कथां

क्षितिभृतां कथितां चरितावलीम् ।

निखिलमेव विलीन मुदीर्यते

ननु यतो जल बुद्बुद सन्निभाः ॥ ५ ॥

अनुगता ननु ते बुध विक्रमाः

नृपतयोऽर्ज्जुनरामसुयोधनाः ।

ननु च वर्णित वेत्ति विदर्द्दिनः

अथ च नेपलियार्ज्जुन कैसराः * ॥ ६ ॥

"यदुपतेः क्व गता मथुरा पुरी

रघुपतेः क्व गतोत्तर कोशला" ।

इति विचिन्त्य कृता परि भावय

प्रकृति रेव क्षतिस्तनुधारिणाम् ॥ ७ ॥

अनुदिनं गगना दनुपातयन्

स्वतनु मेव रविस्तनुते किल ।

स्थिर मही न कियन्त चिरन्तनी

विषमयः समयः परिणामतः ॥ ८ ॥

---

* अर्ज्जुन राम सुयोधनाः = अर्ज्जुनः कार्त्तवीर्य्यः; रामो दाश-रथिः; सुयोधनो दुर्य्योधनः;

नेपलियार्ज्जुन कैसराः = नेपलिय नेपलिअन् बोनापार्टि; अर्ज्जुनः पार्थः, कैसर = जुलियस सिजर ।

भूतया खिन्नः पुनर्भारतीं प्रत्यक्षीकृत्यऽभणत मातरति प्रज्ञापि दोषाय मे जाता बुध्यमानवचनं मां कुरु । ततो देव्योक्तं तर्हि मध्यरात्रे स्नात्वा अम्भः क्लिन्ने शिरसि दधीनि पिब पश्चात् स्वपिहि कफांशावतारोज्जडता लेश मामुहि तथैवकृतवोध्य वागासीत् । खण्डनखाद्यादि ग्रन्थान् परश्शतान् जग्रन्थ कृतकृत्योभूय काशी मायासीत् । नगरतटे स्थितो जयन्त चन्द्रं व्यजिज्ञपत् अहम धीत्या गतोऽस्मि श्रीहर्षो नमस्कृतः तत्र सभायां स्थपिष्ठ वैरं जिगाय च। ततो राजाज्ञया नैषध चरित महाकाव्यम् रचितवान् ।

इत्यादि ।

क्षितीश वंशावली चरित ग्रन्थे लिखित मस्ति । यथा पुरा वङ्गाभिधेये जनपदे आदिशूरोनाम न्यायवान् नृपतिरासीत् । एकदा तस्य प्रसादोपरि कमपि गृध्रं पतित मवलोक्य भावि विघ्नाशङ्की नृपतिः परिषदग्रेसरान् पण्डितान् प्रतीकारं पप्रच्छ । तेच गृध्रमांसेन होमविधि मादिदिशुः । ततो राज्ञा तादृश होम प्रकारं पृष्टा स्ते मूका अतिष्ठन् । ततः तत् सभा मण्डप स्थितः कश्चित् भूसुरः प्राञ्जलि रुवाच । "प्रत्यागतोऽस्मि साम्प्रतमहं कान्यकुब्जदेशात् । तत्र च राजभवने एवं गृध्रपाते जाते कान्यकुब्जाधिपो भट्टनारायाण प्रमुखै र्भू सुरैर्मन्त्र बलेन तं गृध्र मानीय तन्मांसैर्यज्ञ मचीकरत् ।

इति श्रुत्वा तेन ब्राह्मणेन सार्द्धं दूतान् प्रेष्य बहुमान पुरः सरं भट्टनारायण दक्ष श्रीहर्ष छान्दस वेद गर्भ संज्ञकान् यज्ञोपकरण सामग्री सम्भृतानानीय नवनवत्य धिकनवशतीमक्राब्दे प्रागुपकल्पितवासे निवेशयामास ।

विश्वगुणादर्श प्रणेता वेदान्ताचार्य्य वल्लालमिश्रैः श्रीहर्षस्य भोजदेवनृपतेः पारिषदत्वं निरनायि । परन्तत्र न प्रमाण मस्तीति निराकृत मेतन्मत मैतिहासिकरहस्यकर्त्तृभिः ।

पूर्व्वोक्त राजशेखर कृत प्रबन्ध कोषोल्लिखित श्रीहर्ष विषयक वृत्तान्तस्तु श्रीहर्ष स्वहस्त लिखित नैषध चरितस्थितैः "श्रीहर्षं कविराजराजिमुकुटालङ्कार हीरः सुतम्" "ताम्बूल द्वय मासनञ्च लभते यः कान्यकुब्जेश्वरा "दित्यादि वृत्तान्तै रैक्यमञ्जति" ।

अयं जयन्त चन्द्रो हि अनहीलपत्तनाधिपतेः कुमारपालस्य समकालवर्त्ती बभूव । संस्कृत विद्यापारग बुल्लरसाहिबस्य मते अयं जयन्तचन्द्र एव काष्ठकूट क्षत्रिय वंश्यो जय चन्द्र इति विश्रुतः । अयं नागर्त्तु चन्द्रेन्दुमिति खृष्टाब्दे कान्य कुब्ज राज्यं प्राप्तास ।

"पृथ्वीराज चौहान रासो" नामक पुस्तके श्रीहर्षस्य नामोल्लेखो दृश्यते । यथा "नरं रुव पञ्चम्म श्रीहर्षसारम् । नेले राय कण्ठ दिनैषदहारम्" ।

एवम्विधैरनेकैः प्रमाणैः श्रीहर्षो जयचन्द्र पृथ्वीराज कविचन्द्र कुमारपाल हेमाचार्य्याणां समसामयिक इति प्रतीयते ।

अयं श्रीहर्षः कविर्दार्शनिकश्चासीत् । नैषध चरित खण्डन खाद्य प्रमुखा बहवः काव्य दर्शन ग्रन्था एतद्विनिर्म्मिता अद्यापि भारत भूमे गौरव मावहन्ति । अस्मद्देशीय पण्डितानाम्म ते नैषध चरित सदृशं काव्यं न वर्त्ततएव । तथा च ।

"उदिते नैषधे काव्ये क्व माघः क्व च भारविः"

अयं श्रीहर्षः प्रसिद्धालङ्कारिकस्य मम्मटभट्टस्य भागिनेय आसीत् । प्रथमं श्रीहर्षस्य बुद्धे रतीव प्राखर्य्य मासीत् । स प्रथमक्षणे कविता मेकां विरचय्य द्वितीयक्षणे तर्कबलेन तस्या भावं प्रति सन्दिहानस्ता मन्यथाकर्तुं प्रवृत्तोऽभवत् । तस्यैवंविधं प्रतिभातैक्ष्ण्य मवलोक्य वर्षशतेनापि न काव्यं सम्पूर्णता मेष्यतीति विचिन्त्य च मातुल स्तस्य माषभक्षणार्थं समादिशत् । ततो माषभक्षणेन स्थूलबुद्धिरसौ नैषध काव्यं विरचितवान् । नैषधं दृष्ट्वा हर्षोत्फुल्ल लोचने मातुले सोऽकथयत् "अमिपत्निमुपोमोप माप मग्नाऽस्मि मातुलः" इत्यपि किम्वदन्ती वर्त्तते । अयञ्च श्रीहर्षो वङ्गदेशीयमुखोपाध्याय वंशीयानामादिपुरुषः ।

विचार्य्यत इदानीं किमय मेव नैषध रचयिता श्रीहर्षो रत्नावली नागानन्दादीनां प्रणेता अथवा अन्यः कोऽपीति ।

श्रीहर्षादेर्धावकादीनामिव धनम्, इति काव्य प्रकाश वाक्यस्यैवं विधा व्याख्याः सन्ति। श्रीहर्षो राजा, धावकेन रत्नावलीनाटिकां तन्नाम्ना कृत्वा बहुधनं लब्धम्, इति प्रकाशादर्शे महेश्वरः। धावकः कविः सहि श्रीहर्षनाम्ना रत्नावलीं कृत्वा बहुधनं लब्धवान् इति नागेशभट्टः। श्रीहर्षाख्यस्य राज्ञोनाम्ना रत्नावलीनाटिकां कृत्वा धावकाख्यः कवि र्बहुधनं लब्धवान्, इति प्रसिद्धं इति प्रकाश प्रभायां वैद्यनाथः। तथा धावक नामा कविः स्वकृतां रत्नावलीं नाम नाटिकां विक्रीय श्रीहर्ष नाम्नो नृपात् बहुधनं प्रापेति पुरातनं पुरावृतम्।

अध्यापक श्रीविलसन साहिब महोदयस्य मते अयं रत्नावली प्रणेतृत्वेन प्रसिद्धः श्रीहर्षो हर्षदेवेति नाम्नाविश्रुतः १११३ बिमिते खृष्टाब्दे काश्मीरराज्यं शशास। अध्यापक काविल महोदयेनैतिहासिकरहस्य प्रणेता चैवं समत निरूपणं निराकृतम्। तयोः युक्तिस्तु--अस्ति महाकविर्धनञ्जयकृतं दशरूपं नाम नाटकलक्षण पुस्तकम् तत्र रत्नावली नाटका द्ब्ह्य्युदाहरणा न्युद्धृतानि। धनञ्जयस्तु भोजनृपतेः पितृव्यस्य मञ्जुनामकस्य नरपतेः पारिषदानामन्यतम आसीत्।

"विष्णोः सुतेनाऽपि धनञ्जयेन विद्वन्मनोराग-निबन्ध सेतुः।
आविष्कृतं मुञ्ज महीश गोष्ठीवैदग्ध्यभाजा दशरूप मेतत्"।

अयं मुञ्ज नृपति स्त्रिनवत्यधिकनवनशती खृष्टाब्दे धारा नगरे राज्यशासन मकरोदत स्ततःपूर्वमेव रत्नावली निर्म्माण मभवत्। दशरूपावलोक कारस्य धनिकस्य धनञ्जय समकालिकत्वे स्वीकृते विलसन वाक्यं दूषणास्पदं भ्रमपूर्णं च भवति ।धनिकधनञ्जय योः सम कालिकत्वेकाविल साहिवे नैवं युक्तिः प्रदर्शिता।

"I do not distinguish between the text of the Dosparupa and the commentary as I feel sure that if Dananjoya the son of Bishnu, the author of the one, was not the same person as Dhanika, the son of Bishnu, the author of the other they were at any rate brothers."

"There is no hint given of any difference of authorship and the two works read every where as if they were from the same pen like the text and commentary of the sahityadarpana."

अस्य तात् पर्य्यम् दशरूपस्य तदवलोकस्य च लेखनरीति रेकरूपैव। यदि तद्द्वयी नैकलेखनी प्रसूतेति मतं भवेत् तथापि धनिकधनञ्जययोरेकोदरत्वं कल्पनीयं।

साहित्य दर्पणस्य मूलविवृत्योरिवे तदुद्द्वयस्यापि भिन्नकर्त्तृत्वेन नकिमपि प्रमाणं दृश्यते इत्यादि।

इदानीं दृश्यता न्तावत् काविल साहिव वाक्यस्य कीदृक् सारगर्भत्व मस्तीति सत्यं दशरूप तदवलोकयो र्लेखन रीतिदर्शनेन त-

यो रेक कर्त्तृत्व मेककालवर्त्तित्वोद्दर-कर्त्तृत्वम्वा प्रतिभाति । तथा-
पि तयो र्भिन्न कालिकत्वं भिन्नकर्त्तृत्वज्ञानस्य मवगन्तव्यम् ।
रत्नावली रचयितुः कालस्यानिश्चितत्वात्तत्रोपकारिण्यपि सा युक्ति
र्वेणीसंहारे महदसमञ्जस्यं विदधाति । वेणीसंहारनाटकन्तु क
विकेशरिश्रीमद्भट्टनारायण कृतम् । अयं भट्टनारायणश्चादिशूरान
न्नितानां ब्राह्मणा मन्यतमः ।

कथित मेव पूर्वमस्माभि र्यन्नवनवत्यधिक नवशती शकाब्दे (१०५९ खृष्टाब्दे) आदि शूरो नृपति स्तान् पञ्च विप्रान् स्वराज्य मानयामासेति । वंगागमनादनन्तरं स इदं नाटकं विरचितवा-निति प्रसिद्धिरेव ।

दृश्यन्ते च वहूनि वेणीसंहारोदाहरणानि दशरूप कावलो-के तत् किं १०५९ खृष्टाब्दे युवावस्थायां वर्त्तमानो भट्टनाराय-णोऽपि ९९३ खृष्टाब्दे हवता मापन्नस्य भोजस्य पूर्वं वेणीसंहारं नाटकं विरचितवान् ।
वङ्गदेशागमनात् प्रागेव भट्टनारायणो वेणीसंहारं विरचितवा नि-
तिचेन्न लोके प्रसिद्धस्यै वोदाहरणानि कल्पन्ते । तदानी मप्रसि-
द्धत्वान्नवकवित्वाच्च वेणीसंहारादुदाहरणानि ग्रहीतं कथं इव पण्डि-
तस्य धनिकस्य धनञ्जयस्य वा मति रभवत् । अत एव वेणीसंहार द-
शरूपावलोकनकालोर्वैधंशतमन्तरं कल्पनीयं ।

भवतु रत्नावलीकृतः समयेऽनिश्चितेऽपि स पूर्व्वोक्तश्रीहर्षात् पृथगेवेति पूर्व्वोक्त काव्यप्रकाश व्याख्यावाक्यैः प्रकाश्यते ।

उक्त काव्यप्रकाश व्याख्या कारिणां सर्वेषा मेव धावक नामा कश्चित् कवी रत्नावलीं विरचय्य श्रीहर्षाद्विपुलं धनं प्राप्तवानित्यवै-कमत्यं दृश्यते परमेति हासिकरहस्य कर्त्ता कावेलसाहिवेन च खण्डित मभूदेतन्मतं विभिन्न युक्त्या ।

तत्र प्रथमस्य मते धावको हि तत्र भगवतः कालिदासस्यापि पूर्व्ववर्त्ती बभूव । तथा च मालविकाग्निमित्रनाटकस्य प्रस्ताव-नायां—

प्रथितयशसां धावक सौमिल्ल कवि पुत्रादीनां प्रबन्धानतिक्र-म्य वर्त्तमानस्य कवेः कालिदासस्य कृतौ किं कृतो बहुमानः ।

द्वितीयस्तु उर हाल साहिब मनु सृत्य बाण भट्टो नाम रत्ना-वलीरचयितेति कथयंति; तत्र युक्तिस्तु

"द्वीप दन्यस्मादपिमध्या दपिजलनिधे र्दिशोऽप्यन्तः" इ-त्याद्ययं श्लोको यथा रत्नावली प्रस्तावनायां तथा हर्षं चरितस्यापि बाण भट्टरचितस्योप क्रमणिकायां दृश्यते ।

कावेल साहिवस्य मते बाणो रत्नावली रचयिता धावकस्तु नागा-नन्दनिर्म्माता ।

ऐतिह्यासिकवहुव्यक्तिनां मते काश्मीराधिपः श्रीहर्ष एव तद्ग्रन्थस्य रचयिता। तत्र मते प्रमाणं मस्ति। यथा राजतरङ्गिण्याम्

"सोऽशेष देशभाषाज्ञः सर्व्वभाषासु सत् कविः कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरे ष्वपि"।

---

नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे) प्राप्तव्यः। कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं। =)

अस्मत्समीपे प्राप्तव्या। विद्योदयाध्यक्षः

## विज्ञापनम् ॥

इत: पूर्व्वं विद्योदये क्रमश: प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितञ्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाष: प्रकाशनीय:। विद्योदय कार्य्याध्यक्ष: लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थ:) लवपुरस्थ संस्कृत पाठशालान्यतमताध्यापक पण्डितश्रीसुखदयालु विरचितं मूल्यं।)

### नूतनपुस्तकम्।

छन्दोबोध: (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थ:) सुगम-हिन्दीभाषायां लिखित: लवपुर (लाहोर) स्थित मेहरचान्द नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेज) प्राप्तव्य:। कवितावली— (अत्युत्तमकवितायन्थ:) मूल्यं। =)

अस्मत्समीपे प्राप्तव्या। विद्योदयाध्यक्ष:

### मूल्यादीनां नियम:।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।√०

„ पश्चाद्देयं ... ... ... ३।√०

प्रत्येकखण्डं।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्ति:/० परिमितमूल्येन मुद्रिता भविष्यति

तदाकर्ण्य गरुड़स्तत्र गत्वा सुधार्थं गुरुविक्रमं दर्शयामास। तत्पराक्रमदर्शन—प्रीतोभगवान् हरिः स्वयं तमब्रवीत्—

"तुष्टोऽस्मि भो गरुत्मन् वरं वृणीष्व"

मातुर्दास्येन जातक्रोधो गरुड़ः प्राह "नागा मे भक्ष्याभवन्त्वि"ति

ततस्तथाऽस्त्विति कथित-वति देवेन्द्रे गरुड़ः सुधाकलश मादाय सर्पाननुययौ। ततो वरप्रभाव-भीतान् तान् नागानालोक्य स प्राह। यदि भीति रुदिता मत्तोभवतां तत्स्थापयाम्यमृत-मिदं युष्माकं दर्भविस्तरे मुञ्चन्तु मे जननीं भवन्तः। तथेति स्वीकृते तैः-स पवित्रकुशास्तरे सुधाकलसमस्थापयत् ते च तज्जननीं विजहुः।

अथमातरं दास्यमुक्तां कृत्वा प्रस्थिते गरुत्मति। यावत्ते नागा निःशङ्कं तदमृत मादधुः तावदिन्द्रः स्वशक्तितस्तं सुधाकलशं-जहार। ततस्तदमृतमपहृतं दृष्ट्वा विषादमापन्नास्ते दर्भसंस्तरं लिलिहुः कदाचिदमृतलेपोऽस्मिन् भवेदिति। तेन पाटित-जिह्वास्ते सर्पा द्विजिह्वतामापुः। भवति दुर्मतिलोल्यवतामिव सैवपरिणामः।

अथ प्रासावसरोगरुत्मान् नागलोकमापत्य नागानुत्प्लावयामास। तदालोक्य सर्पराजोवासुकि नागलोक मेकपदे प्रणष्ट-

मिवामन्यत । चकार च प्रार्थनापूर्व्वं तेन सह समयं, प्रतिदिन मे-कमेकं नागं पयोधिपुलिनाचले प्रेषयामीति । ततः प्रभृति प्रत्यह-मेकोनागोगरुड समीपमागच्छति । क्रमेण चासंख्याः फणिनः क्षयमु-पगताः अद्य मम वारोवर्त्तते । अहं शङ्खचूडाख्योनागो गरुडाहा-रहेतोरत्र समागतोऽस्मि

दुःखितस्य तस्यैवं विलपितं श्रुत्वा जीमूतवाहनः प्राह ।

"अहो किमपि निःसत्वं राजत्वं वत वासुकेः ।

यत्स्वहस्तेन नीयन्ते रिपोरामिषतां प्रजाः ॥

किन्न प्रथममात्मैव तेन दत्तं गरुत्मति ।

क्लीवेनाभ्यर्थिता केयं स्वकुलक्षयसाक्षिता" ॥

तदहं स्वशरीरप्रदानेन त्वां रक्षामि माविषादं कृथाः ।

तदाकर्ण्य शङ्खचूडः प्राह मैवं काचस्यकृते सुक्तमणेः क्षयो-भवतु । इत्युक्त्वा गरुडागमन कालमाशङ्क्य स शङ्खचूडो गोकर्णाख्य-सुमापति मन्तिमकाले नमस्कर्त्तुं जगाम तावत् परानुकम्पोह्वदयः-स जीमूतवाहन स्तांवध्यशिलामध्यारुरोह । तत्क्षण मेवाहरत् ग-रुडोनिपत्याम्बरात् तं महासत्त्वम् ।

ततोगरुत्मता स्वच्छायाछादिताम्बरेण निपत्याम्बरतलं नीते-जीमूतवाहने नभस्तलात् पुष्पवृष्टिः पपात । ततः शङ्खचूडोगो-कर्णं प्रणम्य समुपागतोवध्यशिलातलं रुधिरासारसिक्तं ददर्श । हा-

धिक् नूनमनेन महात्मनामदर्थमेवात्मा प्रदत्त इति चिन्ताकुलोरु-धिरधारामनुसृत्य ययौ ।

अत्रान्तरे गरुडस्तं जीमूतवाहनं तथाविधावस्थायामप्यवि-कृतं निरीक्ष्यभक्षणान्निवृत्तोऽचिन्तयत् । कोऽयं महात्मा य इत्थं प्रबलविपत्तावपि न स्वाभाविकं धीरभावं विजहाति । अथगरुडं भोजनान्निवृत्तमवलोक्य जीमूतवाहनोऽवदत्-

"पक्षिराजोममास्त्येव शरीरे मांसशोणितम्
तदकस्मादतृप्तोऽसि किं निवृत्तोऽसि भक्षणात्" ॥

तन्निशम्यगरुडोऽवदत्-कोभवानिति । जीमूतवाहनोऽकथ-यदहंनागस्तत्कथं ते विरामः । अस्मिन्नवसरे शङ्खचूडः समागत्य-कथयति ।

"मामागरुत्मन्नैवैष नागोनागोह्यहं तव तदेतं मुञ्च कोऽयं वा-जातोऽकाण्डे तव भ्रमः" ॥

ततः प्रसङ्गप्रवृत्तया वार्त्तया तं विद्याधराधिपमात्मना मो-क्षाञ्चित मवगम्य गरुत्मानभ्यतप्यताचिन्तयच्च स्वहृदये ।

"श्लाघ्यस्त्वेष महात्मैकः परार्थंप्राणदायिना ममेतिमोहैकव-शं येनविश्वमधः कृतम्" ॥

ततोविमनायमानं वह्निप्रवेशोन्मुखंतं गरुडं दृष्ट्वा-जीमूतवा-हनोऽवदत् ॥

" पक्षीन्द्र किं विषण्णोऽसि सत्यं पापाद्बिभेषि चेत् ।

तदिदानीं न भूयस्ते भक्ष्याभोमि भुजङ्गमाः " ॥

ततस्तार्क्ष्यस्तथेतिप्रतिश्रुत्यामर नगराद्मृतमानीय तं सिषेच । येन तदङ्गानि न केवलमक्षतानि परं पूर्व्वादप्यधिकतरमनोज्ञानि जज्ञिरे । ततोगरुडस्तत्र वेलातटोऽमृतं ववर्ष । येन पूर्वे- पूर्व्वविनष्टानागा अपि प्रत्युद्गतजीविताः समुत्तस्थुः एवं दयासारो जीमूतवाहनो विद्याधरचक्रवर्त्तित्वं लेभे ॥ *

यौगन्धरायणस्य मुखादिति विद्याधरकथामाकर्ण्य गर्भभरोद्वारदोहदिनी ममुदे वासवदत्ता ।

अथैकदा-सा-विजनं सेवितं राजानमुपगम्याकथयत् दृष्टवत्यहं स्वप्ने कमपिपुरुष मागतं । यथा

---

* इममेववृत्तान्तमवलम्ब्य श्रीहर्षदेवेनकाश्मीराधिपतिना नागा-नन्दं नाम नाटकम् विरचितम् । नागानामानन्द विषयकत्वात्तस्य नागानन्देति नामधेयं कृतम् । अत्र यथा विवाहानन्तरं नागानन्दवृत्तान्तो नाटके तु न तथा तत्र विवाहात् प्रागेव नागा-नन्दवृत्तान्त उपन्यस्तः ।

दानदयायुद्धादि भेदेन वीरस्य चतुर्विभागः कृतस्तत्र जीमूतवाहनो दयावीरस्यालम्बनमिति साहित्यदर्पणकारैः पञ्चकारिभि निर्द्धारितं अतोऽस्यव्रताधिकारिणोऽपि नागानन्दं वीररसप्रधानं नाटकम् ॥

मोहयन्ति,साध-कायामुष्या भूतानुकम्पम् सम्पद्यमाना-
वैराज्यं लब्ध्वा निरुपप्लवा स्थिरस्थैमाः स्व-रूपेणावतिष्ठन्ते तदेवात्म-
रूपं परमः पुरुषार्थः शिष्टानामिति ॥ ॥

इतिश्रीकाशीराजसागरे वाशिष्टे चारणे कल्पतल्पे तृतीय-
पादस्य चतुर्थाह्निकांशः ॥ ओम् ॥

अथास्य प्रातिभस्य सिद्धिषु काञ्चित्परमकल्याणीं सिद्धिं
व्याख्यास्यामः ।

अनेनैव प्रातिभेन लोका वैराज्यविशन्ते,तथाहि स्थपते भा-
वाः कामादयः प्रमाणादयः प्रमादादयः सुखदुःखे च सर्वेषु वा-
गादीनां व्यापारेण लब्धानां रूपादीनाम् सम्बन्धादेव ते यथैकस्मि-
न् तथा परत्रापि तारतम्यमानात् कामादीनाम् जात्यादिभेदो दु-
र्विज्ञेयमूलः । उदाहरणम् यथा तित्तिरिः सामरो स्वार्थीभावभाव
तथामहेन्द्रोऽपि । एवमन्येषामपिभावानामात्मनि प्रणिधानेन उद-
वापायादिदर्शनसम्पत्त्या-साजात्या इत्यचातिदिशताम् सर्वेषित्वम-
सम्पद्यते,अत्रैषश्लोकः—

यत्र सर्वाणि नामानि रूपाणि व्याकृतानिच ।

सर्वैर्मिलत्याभिर्वैरत्वं वैराज्यं तत्र सम्पदः ॥

अन्ये अपि प्रकारा एतादृशेति । [illegible]

इतिश्रीकाशीराजसागरेवाशिष्टे चारणे कल्पतरौ तृतीयः पादः ॥ ओम् ॥

ततस्तेनकर्म्मादृष्टमिति । क्रियते यत् तत् कर्म्म स साधनमदृष्टम् । साधनानि वागादीनाम् वचनादीनि,श्रोत्रादीनाम् शब्दादिग्रहणादीनि,अन्तः करणानाञ्च कामादीनि,तानि विधिनानुष्ठितानि धर्म्मान् जनयन्ति,वैपरीत्यादधर्म्मानिति ।

तपसि सर्वाणि व्याख्यातानि विहितानि । विपरीतान्यविहितानीति कामीयदि स्वर्गे वा मुक्तौ वा तर्हि स तानि तानि साधनानि साधयन् धर्म्मं सम्पादयति । वैपरीत्यादधर्म्ममिति । अत्रोदाहरणम् पूर्वोदाहृता विश्वामित्रवेणादयः ।

इहा परोक्षा अपि लोका इति । एवं क्रोधादिष्वपि । कर्म्मस्वेतेषु प्रायशो यजनयाजनाध्ययनाध्यापन दानप्रतिग्रहा इति षड् ब्राह्मणानाम् । यजनाध्ययनदानदुष्टताडनसद्रक्षण स्वांशदानानीति षट् क्षत्रियाणाम् । यजनाध्ययन दानकृषिगोगुप्तिवाणिज्यानीति षड्वैश्यानाम् । दानमेव शूद्राणाम् कर्म्माणि इति । अनुलोमजातानान्तु पितुरेव कर्म्माणि,विलोम जातानाञ्च,शूद्रस्येति एतानि विहितानि विपरीतान्यविहितानि धर्म्माधर्म्मावुत्पादयन्ति । यावेता विहामुत्र च सुखदुःखे साधयतः । तावेवादृष्टमिति गीयते । तच्चादृष्टं चतुर्धा । कृष्णं,शुक्लम् । शुक्लकृष्ण,मशुक्लकृष्णञ्चेति,-

तद्व्याख्यातमाह व्यासः कृष्णा शुक्ला शुक्लकृष्णा शुक्लाकृष्णा चेति ।

तत्र कृष्णा दुरात्मनाम् । शुक्ल कृष्णा वहिःसाधन-साध्या । तत्र परपीड़ानुग्रहद्वारेण कर्म्माशयप्रचयः । शुक्ला तपः स्वाध्यायध्य-नवताम् ॥ सा हि केवले मनसि आयतत्वाद्वहिःसाधनाधीनानप-रान् पीड़यित्वा भवति । अशुक्ला कृष्णा सन्यासिनाम् क्षीणक्लेशा-नाम् चरमदेहानामिति तत्राशुक्लम् योगिनएवफल सन्यासात्-अकृष्णञ्चानुपादानात् । इतरेषान्तु भूतानाम् पूर्वमेव त्रिविधमि-ति । अतएवयोगसूत्रम् कर्म्माशुक्लाकृष्णम् योगिनस्त्रिविधमितरे-षामिति । तेषु कर्म्मस्विकं प्रधानं शरीरारम्भक मुपभोगनामकम् । अ-न्यत्तद्गुणीभूतम् ज्ञानभोगादिनामकमित्युपपादितम् मुक्तिमीमां-सायाम् । चेदेतदवलोकते दुःखं विकृतेभ्यः सुखं विपरीतेभ्यः-इतिनात्रमोहनीयम् तथो रापातमात्रत्वं परिणामादिना स्थैर्यमि-वेति, तदेतददृष्टम् भोग्यानाम् शरीरस्येन्द्रियाणाम्, अन्तः कर-णानाम् बुद्धेर्जीवाना मित्याचार्य्या बहुधा विकल्पयन्ति । यदेतत् सत्यपि समसाधनादौ वैपरीत्यहेतुः किञ्चिदलौकमिति व्याख्या-तं कर्म्म । इतिश्रीकाशीराजसागरे वाशिष्टे चारणीकलातत्वेचतुर्थ-पादे प्रथमाह्निकम् । ओम् ।

ततस्त्रिन लोकाः सृष्टा इति । लोक्यन्ते ये ये यैस्तथा ते-लोकाः आकीटादाब्रह्मान्ता आच अणोः आब्रह्मान्ताः सर्वे हि च-

र्यां: । तत् प्रस्तारमाह भगवान् व्यासः, सप्तलोकाः । तत्रावीचेः प्रभृ-
ति मेरुपृष्ठं यावदित्येवम् । भूर्लोको मेरुपृष्ठादारभ्याध्रुवात्, ग्रह-
नक्षत्र तारा विचित्रो ऽन्तरीक्षलोकस्तत्परः । स्वर्लोकः पञ्चवि-

धः, माहेन्द्रस्तृतीयो लोकः ।

चतुर्थः प्राजापत्यो महर्लोकः । त्रिविधो ब्राह्मः, तद्यथा-
जनलोकः तपोलोकः सत्यलोक इति । ब्राह्मस्त्रिभूमिको लोकः-
प्राजापत्यस्ततो महान् । माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजा-
इति संग्रहश्लोकः ।

तत्र वीचे रूपर्युपरि निविष्टाः षण्महानरकभूमयो घन-
सलिलानलानिलाकाशतमः-प्रतिष्ठाः, महाकालाम्बरीषरौरव का-
लसूत्रान्धतामिस्राः । यत्र कर्मार्जित दुःखवेदनाः प्राणिनः कष्ट-
मायुर्दीर्घमाक्षिप्य जायन्ते ।

ततो महातल, रसातल, वितल, तलातल, पातालाख्यानि स-
सपातालानि । भूमिरियं अष्टमी सप्तद्वीपा वसुमती । यस्याः सुमेरु-
र्मध्ये पर्वतराजः काञ्चनः । तस्य राजतवैदूर्य स्फटिक हेममणिम-
यानि शृङ्गानि । तत्र वैदूर्य प्रभानुरागान्नीलोत्पलपत्रश्यामो नभ-
सो दक्षिण भागः । श्वेतः पूर्वः । स्वच्छः पश्चिमः । कुरण्टकाभ उत्त-
रः । दक्षिणपार्श्वे चास्य जम्बू, यतोऽयं जम्बूद्वीपः । तस्य सूर्यप्रचारा-
द्रात्रिन्दिवं लग्नमिव वर्त्तते ।

(१०)

उच्चाभिलाषाकुलचेतसा वा कार्य्या घृणा न स्ववशे कदापि ।

अनङ्गुलस्था चरितस्य तेषां दारिद्र्यदुःखौघनिपीड़िताानाम् ॥

(११)

वंशाभिमानं,स्वबलस्य गर्व्वः,शरीरकान्ति,र्विपुलार्थसौख्यम् ।

सर्व्वाणि कालस्य वशे स्थितानि,प्रयान्ति नाशं तनुपावकूनि ॥

(१२)

लिपिर्न काचिल्लिखिता बहुत्र समाधिभित्तौ स्मरणार्थमेषाम् ।

अतो महात्मा न विचिन्तनीयं भवद्भिरेतत्स्वनभिज्ञतेति ॥

(१३)

स्तम्भो मृतानां चरितावबोध-युतोऽथ मूर्त्तिः शुभनिर्म्मिता वा ।

देहात्मगेहे निमन्त्र्य पुनःस्वा द्रागाहु माल्मान मतीतमेषाम् ?

(१४)

उत्साहमुद्दीपयितुं समर्था पिण्डे स्तुतिः किं खलु कीर्तिकी वा ।

किं शीतसौख्यं भुवने स्तवेभ्यः वचांसि चाटूनि समर्पयन्ति ?

(१५)

भवेद्दविज्ञानमिहैव सत्यं प्रेमप्रसक्तं हृदयं पवित्रम् ।

तमं चलोतुं नृपतोमदण्डं वाहुद्वयं वा शुभयाभिवन्द्यम् ।

(१६)

नीतं न दृग्गोचरतामशेषं ज्ञानैःकतत्वं कमपि विलीनम् ।

दारिद्र्यदुःखेन विमर्दितोऽभू दुष्कारण्यां,प्रतिभा च नष्टा ॥

(१७)

रत्नान्यसंख्यानि समुज्ज्वलानि तथैवागाधसमुद्रगर्भे ।

वसन्त्य,दृष्टानि जनैर्वनान्तः प्रयान्ति शीर्णं कति वा सुमानि ॥

(१८)

दुर्दैव पक्षोपतितोऽभवेग-विरोधनार्थं व्यपभीतिचित्ताः ।

हैम्प्डिनतुल्याः कति चात्रदेशे समाभवेयुस्त्वधिभूमिगर्भम् ।

(१९)

सुताश्च केचित्त्विह गुप्तरूपं मिल्टनसमा ये प्रतिभावतारे ।

क्रोम्वेलतुल्याः कति शोणिताशाः परस्वबन्धुवधदोषलिप्ताः ॥

(२०)

नभागधेयैर्लिखितानि तेषां श्रोतुः प्रशंसा-विगमः सभासु ।

हेलाविभङ्गो,भ्रूकुटीविलासे व्यलीकजालप्रलयापदाम्बा ॥

ऐश्वर्यभोगस्य विकाशनम्बा निजेषु देशेषु शुभोत्करेषु ।

प्रख्यापनं वा चरितस्य चैषां वसुष्वमुष्मिन् भुवने जनानाम् ॥

(२१) युग्मकम्

बभूवुरेवं परिमेयभावाः गुणाः शुभाः केवलमेव तेषु ।

आसन् तथैव प्रमिताः सदैषां विगर्हणीया ननु ये ऽत्रदोषाः ॥

शोकसंगीतकम्

*(Translated from elegy.)*

(१)

तुल्यान्तरै रेकविधैश्च नादैर्ध्वनन्ति घण्टा दिवसस्य शेषम् ।

विलङ्घयन्तः शनकैरलक्ष्या भूमीः सनादं पशवः प्रयान्ति ॥

(२)

श्रान्ताः स्वकार्यैः प्रतिपादक्षिप्ता भूकर्षिणोऽनु स्वगृहं चलन्ति ।

तमिस्रसंघाय च चेतसे मे समं समस्तां धरणीं समर्प्य ॥

(३)

शोभन्ति मार्गैरभिरञ्जितैषा भूमिस्तमिस्रैः क्रमशो विलिप्ता ।

समं समन्तादखिलाभजन्ति भावा गभीरस्थिरतामितैते ॥

तमेव देशं परिहाय यत्र ध्वनिः पतङ्गोच्चलनादुदेति ।

यतश्च निद्रापयति प्रणद्धान् पशून् सुदूरे मृदु टुङ्कृतिर्या ॥

विहाय चैतद्व्रततीप्रकीर्णं दुर्गं, यतोघुत्कृतिनाऽभियोगम् ।

करोति चन्द्रं प्रतिकौशिकोऽयं ज्योत्स्नाभिरन्तःस्फुरिते स्वराज्ये ॥

विशेषकम्

(४)

स्थूलत्वचो ये हरिता स्तृणौघैर्विशोभमानाः पुरतो ममाग्र ।

छायाद्रुमच्छायसमाश्रितानां मध्यस्थलीषा मधिकृत्य कक्षम् ।

"अस्माङ्गराग-सितया शेखरीकृतचन्द्रया पिशंगजटया मूर्त्त्या शोभितं शूलहस्तया" ॥

स च मामभ्युपेत्येव सानुकम्पइवावदत् "पुत्रि गर्भव्यक्तौ चिन्ता न कार्य्या किञ्चन त्वया अहं तवैवरक्षामि" ॥

एवं स्वप्नवृत्तान्तं कथयन्त्यां तस्यां स्वभार्य्यया पीड्यमानःकश्चित् कपोहादेशमुपस्थितः ।

ततः साक्षिवचनैस्तं पुरुषं निर्दोषं ताञ्च कुलटां विज्ञाय राजा स पुत्रान्तां स्वदेशान्निरवासयत् । विससर्ज्ज च तं साधुं वितीर्य्य-दारान्तरग्रहणपर्य्याप्तं विपुलं वसु । तस्मिन् गते राजा व्यचिन्तयत्

"इममावाधनक्रूरे पतितं दुर्दशातटे ।
जीवन्तमेव क्षिणाति वृकीव कुकुटुम्बिनी ॥
स्निग्धा कुलीना महती गृहिणीतापहारिणी ॥
तरुच्छायेव मार्गस्था पुण्यैःकस्यापि जायते" ॥

इति वदन्तं तं महीपतिं पार्श्वस्थितौवसन्तकःप्राह ।

"किञ्चदेव विरोधोवा-स्नेहो वापीह देहिनां प्राग्जन्मवासनाभ्यासवशात्प्रायेण जायते" ॥

इत्युक्तोतदुदाहरण-मेक मदर्शयत् ।

एवं दिनेषु गच्छत्सु तस्य राज्ञोमंत्रिणां शुभलक्षणात्मन-

या-जज्ञिरे। यथा योगन्धरायणस्य मरुभूतिः, रुमण्वतो हरिशिखः, वसन्तकस्य तपन्तक इत्यादि। तेषु जातेषु वर्द्धमाने महोत्सवे

नभसोऽनिःससारैवमशरीरा सरस्वती

"वत्सराजसुतस्येह भाविनश्चक्रवर्त्तिनः।

"मन्त्रिणोऽमी-भविष्यन्तिवैरिवंशावमर्द्दिनः"।

इति ततो वासवदत्ताचासन्न-प्रसवोद्‌या बभूव। तत्रैवं वर्णितम्

"अध्यास्त सा च तामिलं पुलिणीभिः परिष्कृतम्।

जातवासगृहं साकीर्णमोगुप्तसवाचकम्॥

रत्नदीपप्रभासङ्गमङ्गलैर्विविधायुधैः"।

गभीरत्वाचमं तेजोज्वलयद्भिरिवावृतम्॥

मन्त्रिभिस्तन्त्रितानेकमन्त्रयन्त्रादिरचितम्।

जातं मातृगणस्येव दुर्गं दुरितदुर्ज्जयम्॥

तत्रासूत च काले-सा कुमारं कान्तदर्शनम्।

द्यौरिन्दु मिव-निर्गच्छद्‌च्छामृतमयद्युतिम्॥

येन जातेन च परं मन्दिरन्तत् प्रकाशितम्।

यावद्‌हृदयमप्यस्य मातुर्निःशोक तामसम्॥

"ततो हर्षं भरापूरपीडनोत्फुलया दृशा।

सास्रया स्रवतीवास्मिन् सुतस्नेहं महीपतौ॥

नन्दत्स्वपि च यौगन्ध-रायणादिषु मन्त्रिषु ।

गगनादुच्चचारेयं काले तस्मिन् सरस्वती ॥

कामदेवावतारोऽयं राजन् जातस्तवात्मजः ।

नरवाहनदत्तञ्च जानीह्येनमिहाख्यया ॥

अनेन भवितव्यञ्च दिव्यंकल्प मतन्द्रिणा ।

सर्व्वविद्याधरेन्द्राणां चक्रवर्त्तिना ॥

एवमुक्त्वा विरतायां वाचि पुष्पवृष्टिर्नभसो निपपात ।

ततो ध्वजपताकादिभिः परिशोभिता सा नगरी कौतुकवती-
बभूव ।

तस्मिन्क्षणे च नभसो निपपात दिव्या ।

नादीनिनादसुभगा सुरपुष्पवृष्टिः ॥

राजा-ननन्द च तदा भृत्यैः समेतः ।

सत्कृत्य तत्र सचिवात्मजमण्डलं तम् ॥

बाल्येऽपि तैरभिमतैरथ मन्त्रिपुत्रैः षड्भिस्तदेकनिरतैश्च स-
राजपुत्रः ।

युक्तः सदैव नरवाहनदत्त आसो द्धर्मो गुणैरिव यशोदयहेतुभूतैः ॥

तत्क्रीडा-कलितकललिताव्यक्तसंभाषाभिलापम् ।

यातं प्रीतिप्रवणमनसामङ्कतोऽङ्कं नृपाणाम् ॥

पुत्रं स्मेराननसरसिजं पश्यतः पश्यतस्ते ।

तस्य नीलश्वेतशृङ्गवत उदीचीनास्त्रयः पर्वता साहस्रायामाः। तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि हरिवर्षं किम्पुरुषं भारतमिति। सुमेरोः प्राचीना भद्राश्वा माल्यवत्सीमानः। प्रतीचीनाः केतुमाल गन्धमादन सीमानो,मध्येवर्षं मिलावृतम्। तदेतद् योजनशतसाहस्रम् सुमेरो र्दिशिदिशि तदर्द्धेन व्यूढ़म्। स खल्वयं शतसाहस्रायामोजम्बूद्वीपः। ततो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः। ततश्चद्विगुणाः शाक,कुश,क्रौञ्च शाल्मलगोमेधपुष्करद्वीपाः,सप्तसमुद्राश्च,सर्षपराशिकल्पाः,सविचित्रशैलावतंसा,इक्षु,रस,सुरा,सर्पि,र्दधि,मण्ड,क्षीर,स्वादूदक सप्तसमुद्रवेष्टिता, वलया कृतयो,लोकालोक पर्वतपरिवाराः,पञ्चाशद्योजन कोटि परिसंख्याताः। तदेतत्सर्वं सुप्रतिष्ठित संस्थान मण्डमध्ये व्यूढ़म्। अण्डञ्च-प्रधानस्याणु रवयवो,यथाकाशे खद्योत इति। तत्र पातालेजलधौ पर्वतेष्वेतेषु,देवनिकाया असुरगन्धर्व,किन्नर किम्पुरुष यक्ष,राक्षसभूत प्रेत पिशाचापस्मारकाप्सरो ब्रह्मराक्षस कुष्माण्ड विनायकाः प्रतिवसन्ति। सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः। सुमेरुस्त्रिदशानामुद्यान भूमिः,तत्र मिश्रवनं,नन्दनं,चैत्ररथं,सुमानसमित्युद्यानानि। सुधर्मा देवसभा। सुदर्शनम् पुरम् वैजयन्तः प्रासादः। ग्रहनक्षत्र तारकास्तु ध्रुवे निबद्धा

वायुविक्षेपनियमेनोपलक्षितप्रचाराः, सुमेरोरुपर्युपरि सन्निविष्टा विपरिवर्त्तन्ते। माहेन्द्रनिवासिनः षड्देवनिकायाः त्रिदशाः। अग्निष्वात्ता, याम्या, स्तुषिता, अपरिनिर्मितवशवर्त्तिनः परिनिर्मितवशवर्त्तिनश्चेति। सर्वे संकल्पसिद्धाः अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो, वृन्दारकाः कामभोगिन, औपपादिकदेहाः, उत्तमानुकूलाभि रप्सरोभिः कृतपरिवाराः। महति लोके प्राजापत्ये पञ्चविधो देवनिकायः कुमुदा,ऋभवः,प्रतर्दना अञ्जनाभाः प्रचिताभा इति। एते महाभूत वशिनो ध्यानाहाराः-कल्पसहस्रायुषः। प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायः। ब्रह्म पुरोहिता,ब्रह्म कायिका,ब्रह्ममहाकायिका,अमरा इति। ते भूतेन्द्रिय प्रकृति वशिनो द्विगुण द्विगुणोत्तरायुषः। द्वितीये तपसि लोके त्रिविधो देव निकायः। आभास्वरा,महाभास्वराः, सत्यमहाभास्वरा इति। ते भूतेन्द्रिय प्रकृतिवशिनो द्विगुण द्विगुणोत्तरायुषः,सर्वे ध्यानाहाराः,ऊर्द्धरेतस,ऊर्द्धमप्रतिहतज्ञाना,अधरभूमिष्वनावृतज्ञान विषयाः। तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकायाः। अच्युताः,शुद्धनिवासाः,सत्याभाः,संज्ञासंज्ञिनश्चेति। अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्युपरिस्थिताः प्रधानवशिनो,यावत्सर्गायुषः। तत्राच्युताः सवितर्कध्यानसुखाः, शुद्धनिवासाः सविचारध्यानसुखाः, सत्याभा आनन्दमात्रध्यानसुखाः, संज्ञासंज्ञिन-

र्वाश्रितानामध्यानसुखाः । तेपि त्रैलोक्यमध्ये प्रतितिष्ठन्ति । तए-
ते सप्तलोकाः सर्वे एव ब्रह्मलोकाः विदेहप्रकृतिलयास्तु मोक्षपदे
वर्त्तन्ते न लोकमध्ये न्यस्ता इति व्याख्यातालोकाः ॥

इतिश्रीकाशीराजसागरे वाशिष्ठे चारणे कालातत्त्व चतुर्थ-
पादेद्वितीयमाह्निकम् ॥

ओम्

ततस्तेननाम सृष्टमिति । नामानि वाचका वर्णाः । वर्णा ए-
वावापोद्धाराभ्यां वर्णान्तरैः संकेतवन्तः पदवाक्यादिभावेन
अर्थानवबोधयन्ति यथाएकः ककारो वर्णान्तराभ्यां कामं,
तथावर्णान्तराभ्यां कालमिति सर्वे सर्वार्थे वाचकाः ।
अतएवार्य्यम्लेच्छयवनानां सर्वेषामेव वाचकत्वमर्थानाम् । एतेन-
सर्वाण्येवशास्त्राणि व्याख्यातानि अर्थानां वाचकानामेकत्वात् ॥
नामैव पदार्थानां स्वरूपं कथयति । नाम्ना निरूप्यमाणेनार्थोज्ञा-
यते, इदमेतदिति । शिवदुर्गाहृषीकेश विधातृगणेश देवमानवाद-
यः । तथाहि मंगल रूपत्वात् शिवः,दुर्गमनाशाद्दुर्गा, हृषीकाणा-
मिन्द्रियाणामीशत्वाद् हृषीकेशः विधानाद् विधाता, गणानां वि-
घ्नानाम् पतित्वाद् गणेशः,अतएवादौ ओंनमोगणेशायेतिपन्थादा-
विति । आदौ विघ्ना एवापसार्य्याः स्तथापि स्वतएव सत्त्व भवंति ।

दीव्यन्ति क्रीडन्तीति देवाः,मननवान्मनुः तदपत्यानि मानवाः तथा
अप अघः आपयतीतिपापःपुणातीति पुण्य मेवमन्यान्यपि । ना-
न्येतानि नामानि सर्वव्यवहारहेतवः लोकान् संसारयन्ति मोक्ष-
यन्तिच तस्मान्नामैव ब्रह्म, नामैवब्रह्मेति.

यद्दृष्टी-प्रसादाद्दिनारायण इतिस्तुतः ।
स काशीशः प्रसन्नोऽस्तु द्विजराजः सदाशिवः ॥१॥

तस्यकृपालवः श्रीमान् प्रभुनारायणोमुनिः ।
श्रोताराचरण प्रेमतन्नोत्वस्याभिदर्शनेः ॥२॥

दीनोऽहं दीनकर्माहं मूर्च्छितोऽहं सदोद्यतः ।
सोमसूर्ति र्भूतनाथः काशिनाथः प्रमोदतु ॥३॥

यदेतत् कथितं सर्वं मन्यहास्तुयथातथा ।
चिद्विलासस्तदेतानिचित्मन्दंसुखमव्ययम् ॥४॥

इतिश्रीकाशिराजसागरे वाशिष्ठे चारणे कलानले तृतीय-
माह्निकम् चतुर्थ पादएकोऽध्याय सम्पूर्णोऽयम् ॥

ओंपूर्णमदः पूर्णमिदम् पूर्णात् पूर्णमुदच्यते ।
पूर्णस्यपूर्णमादाय पूर्णमेवा वशिष्यते ॥ श्री ॥

## सौभाग्यम्

दृश्यते हि लोके निरन्तरं समीप्सित-फलाधिगतये यतमानेष्वपि निखिलमानवकुलेषु न सर्व्वदा सर्व्वैस्तत् फलावगमः किन्तु केनाप्याकस्मिकघटना-पातेन क्वचिदपि कः स्तौति । इयमेवाकस्मिकघटना भाग्येत्यपरपर्य्याया,तथाचोक्तम् "भाग्यं फलति सर्व्वत्र न विद्या नच पौरुषमिति"

धनिना-मनुग्रहः,अनुकूलमुहूर्त्त संयोगः,अपरेषां मृत्यु स्वयात्मगुणप्रदर्शनोचितावसरः; चतुष्टयमेतत् समासतो व्यासतो वा भाग्यस्य फलोत्पादने द्वारक्षम । परं "उद्योगिनं पुरुषसिंह मुपैति लक्ष्मीर्दैवेनदेय मिति कापुरुषा वदन्तीति" महाजन वचनमपि सर्व्वदाऽनुस्मर्त्तव्यम् । तात्पर्य्यं श्चास्य स्वोद्दिष्टफलाधि-गतौ भाग्यस्य हेतुत्वेऽपि जनैः सर्व्वदा नत यत्नः करणीयो नतु कदापि निश्चेष्टैर्भवितव्यं स्मर्त्तव्यं च ——

"यत्नेकृते यदि न सिध्यति कोऽत्रदोष" इति पण्डितवचनम्

स्वाद्दिष्टावगमोहि प्रधानतः स्वयत्नायत्तइतिकल्पित मतएवच आपियस नामधेयेन सु-कविनोक्तम्

"Faber quisque fortunæ."

अात्म सौभाग्य मत्यात्मोद्यमस्यैव कारणत्वम् ॥

गीतायाञ्च

आत्मैव ह्यात्मनो बन्धु रात्मैव रिपु- रात्मनः ।

उद्धरेदात्मनात्मानं नात्मानमव सादयेदिति ॥

प्रायोऽस्मिन् सचराचरे जगन्मण्डले "तिमोदयस्य युगपद्‌व्यमनोदयाभ्यां लोको नियम्यत इवेप दृष्टान्तरेषे" तदवनस्योदाहरणं नयनपथमाक्रामति । नास्ति हि कोऽप्यन्यः सुलभः पन्था विनाऽन्याधःपतनमपरस्योद्‌यनलाभाय । अप्रणीतम्——

"A serpent unless it eat a serpent cannot become a dragon."

"सर्पभोजनमन्तरेण न सर्पस्य महाजगरत्वलाभः"

किंवदन्त्येषा——

अन्यच्च

"विपत्कालविलोक्य प्रतिष्ठाप्यन्तु दुर्जना ।

अनीत्वा-पङ्कतां धूलि मुदकं-नावतिष्ठते ॥

इत्येवंरूपा नीतिरात्मोन्नतये समवलम्बनीया

अथ कीदृग्गुणसत्त्वे ईप्सितसमधिगम इतिजिज्ञासायां — प्रतिवचनस्थले प्राचीन वचन मेतत् स्थापयामः ।

"प्रारभ्यते न खलु- विघ्नभयेन- नीचैः

प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः

प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ।

यादृग्गुणगणान्विते जनानां चेतो- दिग्दर्शनयन्त्रसूचीव हठाद्विचालित अपि न स्थानस्थानं परिवर्त्तयति तादृश एव गुणा स्वाभीप्सित फल लाभहेतवः । ते हि गुणौघा निगूढ़ मेव मानवेषु पदं कुर्व्वन्ति । केषाञ्चिन्मते मनुष्याणां स्वार्थसाधनोपयोगि-चेष्टाविशेषा एवते नैवत्तवा गणयितुं शक्याः ।

एवमतश्च लिविनामा कश्चित् केटो मेजर नामकस्य स्वभाव-वर्णनावसरे कथितवा नेवं—"तस्य मनसः शरीरस्य चैव दार्ढ्यमासीत् यत् सर्व्वावस्थास्वेवेष्टसिद्धिरस्य हस्तगतैवासीत्"

एवमुक्ता स पुनरपि कथितवान—"सोऽप्रतिहत- प्रतिभान्वित आसीदिष्ट साधयन् (सर्व्वमभीप्सित) मिति"

अतएव यस्तोत्तोलनाविश्यामजुषा चक्षुषा पश्यति सोऽवश्यमेव सिद्धिं द्रक्ष्यति । यतः स्वयं दृष्टिहीना अपि सम्पदापरैर्द्दृश्या । तदर्ज्जनहेतुभूतः पन्थास्तु व्योममध्यचारिच्छायापथवत् प्रतिभाति । यथा- क्षुद्रतर तारकानां समष्टिरूपस्य छायापथस्यावयवरूपाणि-नक्षत्राण्यति क्षुद्राकारानीति न पृथक् दृश्यन्ते । परं मिलितानीव तानि प्रकाशमायान्ति । तथैवैतदेदन्यथा वा निर्द्दिष्ट मनस्या-गुणविशेषा आचार विशेषाश्च नैनगाद्विकत्र सम्मिलिताः सम्पादयन्ति मनुजानामर्थसिद्धिम् ।

धालहस्त्वो विकतमविहित विना-व्यापयन्ति । अन्यथा तेषां तादृक् सम्पदुपभोगः सुदुष्कर-एव स्यात् ।

येऽपि सम्पदधिगमं प्रति स्वकीयबुद्धिकौशलतया-दिकं कारणत्वेना व्यापयन्ति मूढधियां तेषां सम्पत्त्वचिरप्रभेवाचिरेणैव प्रणश्यति सन्ति चात्र भूयांस्युदाहरणा-नीतिहासेषु ।

### प्राकृत शिक्षा प्रयोजनम्

इह खलु दृश्य श्रव्य रूपेण द्विधाविभक्तेषु काव्येषु दृश्य-काव्यानि पुन नाटक प्रकरण प्रहसनादिभेदेन दशविधानि रूपकाणि तथा नाटिका त्रोटकादि भेदेना ष्टादशविधानि चोपरूपकाणि भवन्ति । तत्र चाष्टोत्तर विंशति संख्यकेषु दृश्य काव्येषु भाषा प्रयोगस्यैव व्यवस्था विद्यते । —यथा—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृ-तात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥
आसामेव तु गाथासु-महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजन्तः पुर चारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठिना चार्द्ध मागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका ॥
योध नागरकादीनां दाक्षिणात्याहि दीव्यताम् ।
शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत् ॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाशि" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंस्कृतोत — [illegible] — अचिरमचिरेणैव कालेन पृथक् मुद्रितं भविष्यति । [illegible] पत्रिकया स्वाभि-लाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (व्याकरणप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालाध्यक्षाध्यापक पण्डित[illegible] विरचिता मूल्यं ।)

नूतनपुस्तकम् ।

छन्दोबोधः (संस्कृतछन्दोभाषानभिज्ञोपकारी ग्रन्थः) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्जाबीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेज) प्राप्यः । कवितावली — (अत्युत्तम कवितायन्थः) मूल्यं । =)

अस्मत्समीपे प्राप्या । विद्योदयाध्यक्षः

मूल्यादीनां नियमः ।

| | | | |
|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं ... | ... | ... | २।॥० |
| " पश्चाद्देयं ... | ... | ... | ३।॥० |

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति

विद्योदयः

बृहत्कथासरित्सागरसारः

अस्ति हिमवान्नामाम्बिकाजनयिता महान् पर्व्वतः । यः केवलं गिरीणां न किन्तु गौरीपतेरपि-गुरुरित्यभिधीयते ।

तत्रविद्याधरभूमौ पूर्व्वं जीमूतकेतुर्नाम कश्चिद्विद्याधराधिपो निवसतिस्म । तस्योद्याने मनोरथदायक इति यथार्थनामा कश्चित् कल्पवृक्षः कुलक्रमागत आसीत् ।

कदाचिज्जीमूतकेतुरुद्यान देवतामाद्यं तं कल्पवृक्षमभ्युपेत्य ययाचे

"सर्व्वदा प्राप्यतेऽस्माभि स्त्वत्तः सर्व्वमभीप्सितम् ।

तदपुत्राय मे देहि देव पुत्रं गुणान्वितम्"

ततः कल्पद्रुमोऽवादीत् ।

"उत्पत्स्यते जातिस्मरो दानवीरः सर्व्वभूतहितरतस्तव पुत्र"

इति,तदाकर्ण्य स कल्पवृक्षं भक्त्या प्रणम्य गृहं गत्वा देवीमनन्दयत् । अथ काले तस्य जीमूतवाहनो नाम पुत्रोऽजायत ।

तस्य च महासत्त्वस्य शरीरेण सह सर्वएव सद्गुणाः प्रत्यहं पोपमापुः । अथैकदा यौव-राज्यस्थः स पितरं परिचर्य्यया प्रसाद्य व्यजिज्ञपत्

"जानामि तात यद्भावा भवेऽस्मिन् क्षण भङ्गुराः ।

स्थिरन्तु महतामेकमाकल्पममलं यशः ॥
सम्पच्च विद्युदिव सा लोकलोचनखेदकृत् ।
लोला क्वापि क्षयं याति या परानुपकारिणी ॥
तदेष कल्पविटपी कामदोऽस्माकमीदृशः ।
स चेत् परार्थे युज्येत तदाप्तं तत्फलं भवेत्" ।

पितरमेवं विज्ञाप्य तदनुज्ञामवाप्य च स कल्पद्रुमसमीपं गत्वाऽब्रवीत् । देव सर्वदाऽसि त्वमस्माकमभीष्टफलदायकः । तत् पूरयाद्यैकमभीप्सितं कुरुष्व क्षमामेतां वसुमतीमदरिद्राम् । त्वमिदानीं प्रदत्तोऽसि द्रविणार्थिने लोकाय स्वस्त्यस्तु ते ।

तेनैवं विसर्जितः कल्पपादपो भूतले भूरि कनकं ववर्ष । तदानन्दपूर्णहृदयाः सर्वाः प्रजास्तदा एव मुमुदुः ।

"दयानुवीधिसत्त्वांशः कोऽन्यो जीमूतवाहनात् शक्नुयाद्-र्थिसात् कर्तुमपि कल्पद्रुमं क्षितौ" ।

ततो जीमूतकेतुं पुत्र-सम्पत्-समृद्धमवलोक्य तद्गोत्रजा-ईर्ष्या विकारमापुः । कल्पवृक्षविहीनस्यास्य जयं च सुकरं मेनिरे । तेषां चेष्टितं विज्ञाय धीरो जीमूतवाहनः पितरमब्रवीत् ।

"यद्यशरीरमेवेदं जलबुद्बुदसन्निभम्
प्रवातदीपचपलास्तदा कस्य कृते श्रियः" ॥
तस्मात्तात मयानैव योद्धव्यं गोत्रजैः सह ।

राज्यं मुक्त्वा तु गन्तव्यमितः क्वापि तपोवनम्"

इत्युक्तवन्तं जीमूतवाहनं तस्य पिता प्रोवाच

"ममापि पुत्र गन्तव्यं कास्ति वृद्धस्य मे स्पृहा ।

राज्ये तृण इव त्यक्ते यूनापि कृपया त्वया" ॥

इत्युक्तवता पित्रा साकं स जीमूत-वाहनो मलयाचलं ज-गाम । तत्र च सिद्धाश्रमे पितुः परिचर्य्यापरः स्थितो । अभवच्च सिद्धाधिराजस्य विश्वावसोः पुत्रेण सह तस्य मैत्री । एवं स्थितस्य तस्य कदाचिदेकान्ते विश्वावसुकन्यका मलयावती दृष्टिपथं म-गमत् । तत्र दर्शनमुभयोः स्वयोर्मनोमृगीमन्दवागुरा- बन्धनमिव-मभवत् ।

तत एकदाऽकस्मात् मित्रावसुः जीमूतवाहन मभ्युपेत्याब्रवी-त्—अस्ति मलयवती नाम्नी मे कनीयसी भगिनी । तामहं तुभ्यं प्र-दातु मिच्छामि ममेच्छा मन्यथा मा कृथाः । तदाकर्ण्य स्मितं कृत्वा जीमूत वाहनमवदत् । एषा ते भगिनी पूर्व्वस्मिन्नपि जन्मनि मे-सहधर्म्मचारिण्यासीत्त्वमपि च मे मित्रम् । तन्नास्ति मे तत्परिण-येकाऽपि विमतिः । परं वृत्तान्तमिदं मम पित्रोः निवेद्य । तयोर-नुज्ञाम-न्तरेणनाहं किमपि विधातु मुत्सहे । ततः प्रीतमना मि-त्रावसुः सर्व्वं तत् तत्-पितृभ्यां शशंस । तावपि प्रीतौ तत्रसम्मना-वभूताम् ।

अथ युवराजो मित्रावसुः स्वसुर्विवाहाय समारम्भमकरोत्।

ततो जीमूतवाहनः सिद्धराज-पुरस्कृतो मलयवत्याः पाणिं विधिवज्जग्राह । अभूच्च तत्र तन्निमित्तं महामहोत्सवो विद्याधराणाम् ।

ततः कृतोद्वाहो जीमूतवाहनो महार्हेण विभवेन मलयाद्रौ वधूसमस्तस्थौ । अथैकदा वेलावनौ मित्रावसुना सह परिभ्रमन्नसमयमितस्ततश्चकित-चकित-नयने दिशन्त सखेदं भ्रमन्तं कमपि पुरुषं तत्पार्श्वे च रुदतीं वृद्धामेकामपश्यत् । ततस्तेन सविनयं पृष्टः स पुमानुवाच ।

इयं हि वृद्धा जननी मे, शृणु चास्मद्-दुःखवृत्तान्तम् । पुरा प्रजापतेर्मरीचात्मजस्य महर्षेः कश्यपस्य भार्ययोः कद्रूविनतयोरभवन्महान् विवादः इन्द्राश्वविषयकः पणीकृतदासभावश्च । एकाह इन्द्राश्वस्य छाया कृष्णा द्वितीयातु श्वेतेति । ततः कद्रूः स्वतनयविषभरेण तमुच्चैःश्रवसं कृष्णं चकार । ततः पराजिता तस्या दास्यभाव-स्थापिता विनता । विनता स्वपुत्रं गरुडमब्रवीत् ।

ततः पक्षीन्द्रो विनयेन कद्रूं मातुर्दासत्वमुक्तिमयाचत ततश्च कद्रूतनया नागा विचिन्त्यैवमब्रुवन्—

"भो वैनतेय क्षीराब्धिः प्रारब्धो मथितुं सुरैः । ततः सुधां समाहृत्य प्रतिवस्तु प्रयच्छ नः" ॥

प्राप्तपत्रम् *

यथोचितसम्मान पुरःसरसानुनय निवेदनमिदम्

हे सहृदयमहोदयाः भवतां बहुविद्योदयविद्योदयाख्यपत्रे-
अस्माभिर्विरचितान्यनुपादेयानि कतिपयपद्यानि मुद्रणार्थं प्रेरितानि,
भवद्भिस्त्वेतेषु मुद्रितेषु चरितार्था भविष्यामः। परन्तु तेषामकवि-
कृतत्वाद्भवतां समीपे प्रेरणानुपयुक्तानि तानीति सत्यं किन्तु भव-
तां सुकोमलकरकमलसम्पर्कादतिहेयान्यपि तान्युपादेयानि भ-
वेयुरित्याशयै रेवमनुष्ठितम्। किञ्च अनन्तरत्नाकररत्नाकरे अस-
ङ्ख्यान्यमूल्यरत्नानि सन्तीति मत्वा-गभीरबुद्धिर्वारिधिः शम्-
बूकादीन्यपि दूरमनपसार्य्य तेभ्यः स्थानं सोदर एव सादरन्ददा-
तीतिदृष्टान्तदृष्ट्या अकरणान्मन्दकरणमपि श्रेयइति न्यायाच्च प्रो-
त्साहिता वयं भवद्भिः कृतार्थी-कर्त्तव्याः। एतस्मा देवभद्रसुतं-
धीमता शिवरामेण

"दोषः क्वतो सुकृतिनोमम चेत् स चाद्य युष्माभिरत्नकृपया विनि

* पत्रप्रेरकस्यनाम न ज्ञायते राजसाहीप्रदेशान्तर्गतकर-
चमारिया ग्रामनिवासिभ्योयुक्तवाबुशम्भुचन्द्रचक्रवर्त्ति महोदयेभ्यो-
विशेषानुरोधैः सहाधिगतमस्माभिः पत्रमिदम्। अस्य शिरमकर्ता
वयं धर्म्मविषयकान्यपि पद्यानि; अत्रेदमपिवक्तव्यं यत् ततभवत्प्रे-
रितयोर्द्वयोस्तोत्रयोः केवलं गङ्गास्तोत्रं प्रकाश्यते।

वारणीयः ।

आर्त्ताः खगाः तमवलोक्य सवर्थबाधां निःगतिका अपि कु-
र्वन्ति यतःसमन्तात् द्रवणं पतन्तीति ॥

गङ्गास्तोत्रम्

मातः संसारसारेऽखिलकलुषहरे भूमिशृङ्गारहारे,
त्वन्निस्तारावतारा भव भुवनतले तापिनाम्पापिनाय ।
साक्षाद्ब्रह्मस्वरूपे द्रवमयवपुषः गाङ्गता सङ्गतायाः
गङ्गागङ्गेति नाम स्मरति तव जनो यः स मुक्तिं प्रयाति ॥
आलोक्यैतान् बहुकलुषिणः सर्वलोकां स्त्रिलोक्या
मातासि त्वमिह हि दयया कीदृशा निस्तारः ।
उद्धर्त्तुं तानिव निजसुतान् वारिबिन्दुप्रदानात्
कोजानाति द्रवमयि जगद्व्यापि के ते महत्त्वं ॥
कोटिं वा नृपता यसोमकरुणा ते तारतम्यं विना
रम्यं योऽत्र जनः स्वपुण्यवशतस्तीरं स्थितः स्याद्यदि ॥
दूरस्थोऽपि विमुक्तिमिति सततं गङ्गादिकं नाम ते
योऽश्नाति दयामयीति जगति ख्यातासि यज्जाह्नवि ॥
भवाब्धौ संलीने मयि गतिविहीने तव दया
न चेत्तस्माद्दुःखी नहि नहि शिवोऽहं स्वकृतिभुक् ।
यमस्त्वेऽवास्ते यत् पतितजननिस्तार—जनितं

कलङ्कःस्यात्तस्मिन् पतितजननीति व्यथयति ॥

जगत्यां जनन्याः कृपास्ति सदैव सतां वाऽसतां वा सुतानां समैव गताः सत् सुतास्ते विमुक्तिं मदन्यि दयायाः समत्वं व्यपैवेति-मन्थि ॥

सुरतरकरपुलवासभङ्गप्रसङ्गे सदसि तव गुणाली नाञ्चितः साधुसङ्गे ।

सततसुरतरङ्गे रङ्गतस्त्पृसकासि तरलतरतरङ्गे त्वं हि गङ्गे गतिर्मे ॥

हरति दुरितवारं वारिणस्ते प्रदृष्टः स्वरपि नयति विन्दुः स्पृष्टपूर्णोऽमरेष्टः ।

निखिलकलुषयुक्ता विष्णुदेहं विशन्ति,सकृदपि तव भक्त्या ये पृषन्ति स्पृशन्ति ॥

शतकलुषमानुषोऽमरनगरमृच्छति तव सलिलपानतो यः-स्वश्रभमिच्छति ।

मम तु गतिवारकं वारि तव तारिणि भवतु भववारिधौ नरनरकवारिणि ॥

सन्देहसन्दोहसम्पूर्णदेहे नास्त्येव विश्वास इश्लाघगेहे ।
गङ्गे स्वकारुण्यलेशेन दीनं मान्त्राहि संसारकान्तारलीनम ।

इति गङ्गास्तोत्रं समाप्तम्

ॐ-तत्सत्

## राज्ञी एलिजिबेथ

दण्डि-प्रमुख प्राचीनाचार्य्याणां मतेऽलौकिकचमत्कारित्वदा-गतयैव काव्यत्वमालक्षितम् । तदलौकिकचमत्कारित्वञ्च काव्यप्राण-भूतं विविधवाह्यान्तर्विषयसम्बद्धतया बहुप्रकारकं सम्भवति, यत्र च येन केनापि प्रकारेण तदलौकिकचमत्कारित्वमस्ति तदितिहासस्वरूपमपि काव्यत्वेनाङ्गीकृतं सिद्धं, अतएव यथाद्भुत- हृदयसार- शालिरामाद्यलौकिकाकारमयडुरङ्गानन- कुम्भकर्णादि-चरित-सम्बद्धत्वाद्रामायणादिकं काव्यपदभाग्भवति तथैव स्वीयस्वभावासुलभपुम्वर्दोत-प्रागल्भ्या अचिन्तनीयप्रसन्न शरीररत्नभूतराज्ञी-एलिजिबेथचरितमितिहासरूपेणोल्लिखितमपि महाकाव्यरूपेण प्रतिभात्यस्माकम् ।

काव्यन्नाम सुदृधियां साङ्गचतुर्वर्गावगतौ सुलभसाधनं पण्डितानामपि परानन्द-सन्दोहजनकमतएव न परित्यक्ता मस्माभिः सा कस्मिंश्चिद्देशज-परिग्रहं कृतवती कस्मिन् वा कृता, तस्याः

शारीरलावण्यादिकम्वा किम्प्रकारकमासीदित्यादिविषया, यतो न दृश्यते तत्सदृशेषु तादृग्विग्रहालौकिकत्वं तस्याः । तस्या अलौकिकत्व मवाप्तमिव स्त्रीजनासुलभ-प्रातिभ-भवत्त्वादिगुणवत्त्वम् ।

प्रतिभा नाम नवोन्मेषवती बुद्धिः । सा हि समन्तादाकीर्ण-फलाधिगम-प्रतिघातकं विघ्नजातमुत्सार्य्य स्वाश्रितानामाभिकाङ्क्षितायोपकल्पते तत् कस्यचित् प्रतिभापरिचय-प्रसङ्गे तदीयदेशस्य तदानीन्तनी प्राक्तनीवावस्था सम्यक् कथनीयेति तत्पिठसमयादारभ्या इङ्गलदेशस्य सामाजिकराजनैतिकाद्यवस्थादयः प्रथममभिधीयन्ते । पितरिह्यस्या अष्टम हेनेरिनामधेये सिंहासनमधिरूढे यूरोपस्य-विशेषतो अङ्गलदेशस्यावस्थाया महत् परिवर्त्तनं जातम् ।

अम्बरन्ध्रसमुद्रेन्दुविमिते खृष्टाब्दे आमेरिकादेशः समाविष्कृत स्तस्मिन्नवसरे चोत्तमाशान्तरोप मवविश्य भारतवर्षागमनमार्गश्च प्रकाशितोबभूव । इत्थ कृत्स्नभूगोलाविष्कारात् यूरोपीयानांहृदये नवनवविषयमानवप्रचलतापरजीवाद्यालोकनकुतूहलिनी ह्यङ्कितम् । तदौत्सुक्येन वहवोभूमण्डलमखिल मभि भ्रमितुमुद्यता वभूवुः । ततश्चादृष्टपूर्व्वापवर्त्तनतत्तद्वस्था-वलोकन-संस्कृतचेतसां स्वच्छन्दं प्रत्यावर्त्तिनां तेषां स्वदेशरीत्यादयो नानन्द मभिजनयितुं शेकुः । ततस्ताः परिहाय ते समुन्नतिमिव समुचितामभि-दुद्रुवुः

अष्टमहेनेरिनामकस्य राज्य समये मुद्रायन्त्रस्य परमोत्कर्षाधिगमात् वहूनि यूनानरोमीयभाषाभिलिखितानि सुद्रितानि वभूवुः पुस्तकानि;यानि पूर्व्वमज्ञानवशाद्दलयितान्यासन् । कालमदाविद्याया मृतप्रायायाः पुनरुज्जीवनं जातम् । अनेनैव क्रमेण अना-

कान्दिशीकतामलम्बत ।

निवतिर्हि जीवानां न बाध्यते केनाऽप्युपायेन । सप्तश्रेणी काचल-प्राचीराभ्यन्तर्लौहमय-नीरन्ध्र प्रासादस्थितस्यापि नादि-न्दरस्याशीविषदंशनं न केनापि बाधितमभूत् । इत्यतोऽत्र मृत्यु-मतिक्रमितुमिच्छु शीघ्रतएव मृत्युमुखे निपतति । कथमितश्च स-पलायमानः काबुलाधिपतिः पथि सर्व्वजगदन्तकेनान्तकेन । महिषशृङ्गस्थितसर्षपवदस्थिरमेतद्विश्वमण्डलमिति भूयोभूयः परि-ज्ञाताऽपि न मुञ्चति हृदयमागामिगर्त्तचिन्ताम् । येषां कृते स एवमात्मकुलक्षयकरे भयङ्करे समरे प्रवृत्तोऽभवदिदानीं न तैराज्या-दिकैः सहास्ति तस्य कोऽपि सम्बन्धः । न पुनरनुशासनं का-बुलदेशीयास्तदादेशम् नोपहरिष्यन्ति वाऽस्मै राजकरम् न चैषां दुःखोदये प्रभविताऽस्य काऽपि दुश्चिन्ता, किम्बहुना शत्रुभिरशेष-तोदलिताऽपि काबुलभूमिः नोत्पादयिष्यत्यल्पामपि मानसीं व्यथाम् यदि स आत्मजीवितस्यैव मस्थिरता मज्ञास्यत् तदा नाकरिष्यत् पूर्व्वं मित्रै रस्मद्राजपुरुषैः सह सहसैवंविधवैरानलम् ।

भवतु यद्भाव्यम् तद्भाव्यमेव विधातृविहितं हि कार्य्यं न-निवार्य्यते कदापि । इदानीं चिरायास्तमितः सोऽस्मत्कृतवैरी ह-यात्मकुलक्षयकारी काबुलाधिपतिः । अध्यारुरोह तदात्मजः या-कूबखाँ नामधेयः काबुल सिंहासनम् । अयं हि युवा धार्मिक

रमयाकरोऽपि स्वपितुरविमृश्यकारितया राज्यमखिलं विपक्षकु-
लैः कवलितप्रायमात्मानं स्वपदे दृढ़मवलोक्य नास्माभिः महत्
इदं हितकरमिति संग्रामकार्य्यादपावृत्य प्रथमोपाय मवलम्बितु-
प्रवृत्तिं कृतवान् ।

अन्यच्च प्रतिपदं लब्धविजया अप्यस्मद्राजपुरुषाः प्रतिकूल-
दैवविशेष-समुत्पन्नेनोत्पातनिवहेन बाध्यमानमात्मबलं क्रमेण-
परिहीयमानमवलोक्य समधिकृतेऽपि वैरिराज्ये नास्ति कोऽपि-
लाभ-इति विमृश्य च सामावलम्बन मेवेदानीं श्रेयस्करं मन्यमा-
नाः सन्धिस्थापने सम्मता अभवन् ।

वर्त्तमान मासस्याष्टम दिवसे याकुमवा अवमत् सेनानिवे-
शं प्राप्तइति श्रूयते। अतः परमपरपत्रे सर्व्वं प्रकाशितं
भविष्यति ।

## प्राप्तग्रन्थस्य संक्षिप्तसमालोचनम्

वयमतीव कृतज्ञहृदयेन सरलकाव्यनामधेयस्य खाड़ियाद-
हनिवासि श्रीराजकुमार तर्करत्नसम्पादितस्य कस्यचिन्मासिक-
पत्रस्यावगतिं स्वीकुर्म्मः ।

सटीकं वङ्गानुवादसहितञ्चैतत्सरल काव्यमलोक्य वहूनां
मनस्यसरलत्व एवसन्देहोजायते । तथापि संस्कृतभाषानां कृत-
विद्यानामितरत् सुबोधं भविष्यतीति सम्पादकेन संस्कृत रसिकेनास्यैवं-

नामधेयं कृतंभवेत् ।

अत्र प्रथमं स्कारमिट् नामक प्रसिद्धवाक्यपाठात्मकवि-
तायाः संस्कृतपद्यानुवादः कृतः । येहि मूलस्कारमिटकविता-
अधीतवंतः तेऽवश्यं जानन्ति नास्ति तत्र किमपिकाव्यत्वमिति ।
सहि ग्रन्थो बालोपदेशायप्रवृत्तो न काव्यरसभिव्यायै । छन्दउपनि-
बद्धानां काव्यत्वे कारिकावली प्रभृतीनामपि काव्यत्व मङ्गीकार्य्यम् ।

भवत्वनुवादस्यातीव समीचीनत्वं वर्त्तते । उदाहरणार्थ-
मत्रश्लोकचतुष्टयमुद्धरामः ।

१ ५

सदा सदालापममुष्य कुर्व्वती
वर्षीयसस्तेन यवीयसा सह ।
अस्तं ययौ वीक्ष्य दिनं गतं रवि-
र्निशाकरश्चाभ्युदियाय सत्वरः ॥

१ ६

पथिस्थितानां सुषमां पलाशिनां
निम्नस्थलानाञ्च तृणावृतान्निनाम् ।
निरीक्षमाणो चलतः स्म तावुभौ
तस्मिन् क्षणे नीरवनिश्चलात्मके ॥

श्रीः Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः ।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्धनम् ।
जयति सा विशदाम्बुजवासनी सुमनसां मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरं भुवि ॥

खण्डं ८ ] अपरैल ई १८७८ [ ४ सङ्ख्या

सूची



लाहोर

एल्बर्ट नामके यन्त्रे दिलवागरायनामधेयेन मुद्रितः ॥

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितञ्चविष्यति । ग्रहणेच्छुभिर्मद्विन्तिके पत्रिकया स्वाभि लाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।)

## नूतनपुस्तकम् ।

छन्दोबोधः ( संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः ) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे) प्राप्तव्यः । कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं । =)

अस्मत्समीपे प्राप्तव्या । विद्योदयाध्यक्षः

## मूल्यादीनां नियमः ।

| | | |
|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं ... | ... ... | २।‍॥० |
| " पश्चाद्देयं ... | ... ... | ३।‍॥० |

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति

इत्यादिष्टः सूपकृत् स्वगृहं ययौ । ततः फलभूति मागतं दृष्ट्वा राजा प्राह गच्छ, शीघ्र मन्नपचनार्थं सूपकारं साहसिकमादिश । अथ पथि यान्तं तं राजपुत्रः षन्यस्मिन् कार्य्ये प्रेषयित्वा स्वयं सूपकार समीपं ययौ । सूपकार ख तं राजदत्त-सङ्केतानुसारेण निजघान । ततोविदितवृत्तान्तो नृपतिः हा पुत्रेति क्रन्दन् मूर्च्छां प्राप्तः । ततोलब्धसंज्ञो नरपतिर्मन्त्रिभिः पृष्टः सर्व्वं सशेषं वर्णयित्वा प्राह सत्य मुक्तम् फलभूतिना

"भद्रकृत् प्राप्नुयाद् भद्र मभद्रञ्चा-प्यभद्रकृत्तदिति" ॥

यतो ब्रह्म हत्यां चिकीर्षुभि रस्माभिः स्वपुत्र एव व्यापादितः इत्युक्त्वा प्राप्तवैराग्यो राजा फलभूतिं निजे राज्ये संस्थाप्य सभार्य्यो वनं जगाम । इत्युक्त्वा यौगन्धरायण स्तं भूपतिं पुनरभाषत । ब्रह्मदत्तो यदि हन्येत तदा नैवंविधभयस्यावकाशः । षथ राजा तद्वचन मभिनन्द्य दिनकतिपयं निरवर्त्तयत् प्रतस्थे च परेद्युर्लावणकात् कौशाम्बीं नाम स्वपुरीम् । इत्थं स्वपुरीं गत्वा यौगन्धरायणे राज्य-भारं विन्यस्य—

कीर्त्तिश्रियो रिव तयोरुभयोश्च देव्यो र्मध्यस्थितः स वरचारण गीयमानः ।

चन्द्रोदयान्निजयशोधवलं सिषेवे सत्प्रताप मिव भाप प-

पौ- च प्रख्यत् ।

अथनरवाहनजन्मप्रकरणम् ।

कर्णतालबलावात-सीमन्तित-कुलाचलः ।
पन्थान मिव सिद्धीनां दिशन् जयति विघ्नजित् ।

अथ राजा वत्सेशः कौशाम्ब्या मवस्थितः एकातपत्रां मही बुभुजे ।

यौगन्धरायणस्योपरि निखिलं धराभारं विन्यस्य विहारैकरसो बभूव । तद्यथा

स्वयं सम्वादयन् वीणां देव्या वासवदत्तया ।
पद्मावत्या च सहितः सङ्गीतकमसेवत ॥

देवी-काकलिगीतस्य तद्वीणा-निनदस्य च ।
अभेदे वादनांगुष्ठकम्पोऽभूद्भेदसूचकः ॥

हर्म्यग्रे निजकीर्त्त्येव ज्योत्स्नया धवले च सः ।
धाराविगलितं सीधु पपौ मदमिव द्विषाम् ॥

आरक्तसरसस्वच्छमन्तःस्फुरिततत्सुखं ।
उपनिन्ये द्वयोर्मध्ये स सचित्तमिवासवम् ।

एवं विहरन् स मृगयारतश्च बभूव । इत्थं व्यसनिनस्तस्य कदाचित् देवर्षि र्नारदः समुपगम्योवाच राजन् नोचिता ते मृगयाऽभिरतिर्यतः पूर्व्वं तव पूर्व्वपितामहः पाण्डु र्मृगरूपेण स्व-

भार्य्यया क्रीड़यन्तं मुनिं वाणेन पातयित्वा शप्तो बभूव । तदेतस्मा-द्विपद्या निवर्तस्व । तव कामांशः पुत्रो जनिष्यति यः सर्व्वविद्याध-राणां चक्रवर्त्ती भविष्यति । इत्युक्त्वा नारदो ऽदर्शनं ययौ ।

ततोऽन्तर्हिते नारदे वत्सराजः पुत्रेषु चिन्तया दिनं निना-य । अथैकदास्थान-वर्त्तिनं वत्सराजमुपेत्य प्रतीहारी व्यजिज्ञ-पत् शिशुकद्वय संयुक्ता काऽपि दुर्गता ब्राह्मणी द्वारि स्थितेति । ततोमहीभृताऽभ्यनुज्ञाते तत्प्रवेशे प्रविश्य विशीर्णवासाः सा ब्रा-ह्मणी यथोचितं राजानं प्रणम्य व्यजिज्ञपत् । दुर्गतिनिपीडि-ताहं प्राप्ता शरणागत वत्सलं शरणमद्य भवन्तम् । तन्निशम्य का-रुण्यकलित-महीपतिः प्रतीहारीमादिशद्प्यैता मिमां देव्यै नीत्वे-ति । देवी वासवदत्ता च तां युग्मापत्यां दुर्गततमां ब्राह्मणीं पश्य-न्त्यचिन्तयत् । अहोप्रजापते र्वामैक—हन्तित्वमथापि नैकोऽपि-मे पुत्रोजातस्त्वस्यास्तु द्वौ । ततः सपुत्रां तां सादरं स्वहीत्वा कथालापैर्मधुरै स्तद्दिनं व्यतीयाय । ततः क्रमेण स्वपरि-चयं ददती सा ब्राह्मणीराजपुरोहितस्य भ्रातृजायात्वेन विज्ञाता बभूव । अ-थ सा पुरोहित माहूय तां तस्मै समर्पयत् सोऽपि स पुत्रां तां-सादरं स्वगृहं निनाय

अथैकदा शरावानादाय समागतां पञ्चपुत्रमहितां कुम्भका-रिका मालोक्य वासवदत्ताऽभिदधौ । अहो पश्येतस्याः सूनवो-

न ममैकोऽपि । तन्निशम्य तत् पार्श्वस्थिता ब्राह्मणी-प्राह ।

"प्रजेयं पाप भूयिष्ठादरिद्रेष्विव भूयसी ।

युष्मादृशेषु जायेत यः स कोप्युत्तमोभवेत्" ।

ततः पुत्रार्थिनी सा शिवाराधनाय मतिञ्चकार । राजाऽपि महानन्देन तया सह शिवव्रतमधात् । अथ प्रसादप्रकटीभूतः-शम्भूः स्वयंस्वप्ने समादिशत् ।

"उत्तिष्ठतां स युवयोः कामांशो जनितासुतः ।

राजाविद्याधराणां योभविता मत्प्रसादतः" ॥

तन्निशम्य प्रबुद्धौ तौ दम्पती परमानन्द मवापतुः । अन्येद्युः सा स्वप्ने फलमर्पयतं कमपि जटाधरमपश्यत् । तदपि राजानं कथयामास । ततश्च विनिवेदितस्फुटतथाविधस्वप्नया सह प्रसादितस्तया समभिनन्दितोमन्त्रिभिः । विचिन्त्य शशिमौलिना फलनिभेन दत्तं सुतं मनोरथ मदूरगं गणयतिस्म वत्सेश्वरः ॥

अथगच्छत्सु दिनेसु राज्ञी वासवदत्ता पत्युः साक्षात् हृदयोत्सव मिव गर्भं बभार ।

ततो प्रजातगर्भदोहदायास्तस्या हृदये विद्याधरकथाश्रवणे कौतुहले जाते यौगन्धरायणः कथामिमां निजगाद ॥

शय्यासनादि संयोग पुष्पादि ग्रथनम्। द्यूताद्यनेकक्रीड़ाभिरभिरञ्जनम्। नानासनधारणादि-सन्धानैः सुरतज्ञानम्। सप्तकमेतद् गान्धर्वे। शल्यकण्टकाद्युद्धृतिशिराव्रणव्यधनादिज्ञानम्

मकरन्दासवमद्यादीनां कृतिज्ञानम्।

हीनाधिक समरस-योगाद्न्नादिपाचनम्।

वृक्षलतादि प्रसवारोप पालनादिकृतिः।

पाषाणादि धातुद्रवभस्मादिकरणम्।

सर्वेक्षु विकाराणाम् क्रियाज्ञानम्।

धात्वौषधादीनाम् संयोगादिज्ञानम्।

धातुसांकर्य्ये पार्थक्य-करणम्।

नवीनधातुरचनम्। क्षारनिष्कासनम्। दशक मेतदायुर्वेदीयम्। पादादिन्यासैः शस्त्रादिसन्धान-विक्षेपादिज्ञानम्।

सन्ध्याघातकृष्यादिभेदैर्मल्लयुद्धम्।

लक्षिते देशे यन्त्राद्यस्त्रनिपातनम्।

वाद्यादि संकेताद् व्यूहरचनम्।

गजाश्वरथगत्यादियुद्धसंयोजनम्। पञ्चकमेतद्धनुर्वेदीयम्।

विविधासन मुद्राभिर्देवता-तोषणम्।

गजाश्वादीनाम् गतिशिक्षा सारथ्यञ्च मृत्काष्ठपाषाणधातुभाण्डादिकरणम्। चित्राद्यालेखनम्। तड़ाग वापी प्रासाद समभूम्यादिकरणम्। घट्यादि विविधयन्त्रवाद्यरचनम्। हीन-

मध्यादि संयोग वर्णाद्यैः योगनम् ।

जलवाय्वग्नि संयोग निरोधैः कार्य्यसाधनम् । विविधतन्तुभिः पटवन्धः । रत्नादिवेध सदसज्ज्ञानम् । स्वर्णादिज्ञानम् । कृत्रिमस्वर्ण रत्नादि करणम् । अलङ्कारक्रिया । लेपादिविधिः । चर्म्मणाम् मार्द्दवादि करणम् । पशुचर्म्माङ्गनिर्हरणम् । दोहनादिज्ञानम् । कञ्चुकादिसीवनम् । बाह्वादिभिस्तरणम् । गृहभाण्डादिमार्जनम् । वस्त्रसम्मार्जनम् । तिलमांसादिस्नेहानां निष्कासणम् । क्षुरकर्म्म । सोराद्याकर्षणम् । वृक्षाद्यारोहणम् । अनुकूल सेवाज्ञानम् । वेणु तृणादिपात्रकरणम् । काच पात्रादि रचनम् । जलानां संसेचनसंहरणे ॥

शस्त्रादीनां कृतिज्ञानम् । पश्वादीनां कैव्यशिक्षादि विधानम् । शिशुरक्षण शिक्षण धारणक्रीड़नादि ज्ञानम् । युक्त्यापराधिताड़नम् । नानादेशीयानां वर्णानां यथा स्वरूप करणम् । ताम्बूलादि कृति रक्षादि ज्ञानम् । भाण्डदानादान प्रतिदान विधानम् । इत्येताः शुक्रोक्ताः ॥

अंशा मूलानां षोड़शानाम् तस्मात् परिभाषिताः । अपरा अपि आगमाद्युक्ताः अंशा एवेति । तथाहि, वाद्यम् । नृत्यम् । नाट्यम् । आलेख्यम् । विशेषकच्छेद्यम् । ताम्बूल कुसुमवलिप्रकाराः । पुष्पास्तरणम् । दशनवसनाङ्गरागाः । मणिभूमिकाकर्म्म ।

शयनरचनम् । उदकवाद्यम् । उदकघातश्चित्रयोगाः । माल्यग्रथ
न विकल्पाः । शेखरापीड़योजनम् । नेपथ्ययोगाः । कर्णपत्रभङ्गाः ।
सुगन्धयुक्तिः । भूषणयोजनम् । ऐन्द्रजालम् । कौचुमारयोगाः । ह
स्तलाघवम् । चित्रशाकापूपभक्ष्य, विकारक्रियाः । पानकरस रागा-
सवयोजनम् । सूचिकर्म्म । सूत्रक्रीड़ा । प्रहेलिका प्रतिमाला । दु-
र्वचकयोगाः । पुस्तकवाचनम् । नाटकाख्यायिका दर्शनम् । काव्य-
समस्यापूरणम् । पट्टिकावेत्रवाण विकल्पाः । तर्कर्म्माणि । तक्षण
म् । वास्तुविद्या । रूप्यरत्नपरीक्षा । धातुवादः । मणिरागज्ञानम् ।
आकारज्ञानम् । वृक्षायुर्वेदयोगाः । मेषकुक्कुट लावकादि युद्धविधिः ।
शुकशारिकादि प्रलापनम् । उत्सादनम् । केशमार्जनकौशलम् ।
अक्षरमुष्टिका कथनम् । म्लेच्छितकतर्कविकल्पाः । देशभाषाज्ञानम् ।
पुष्पशकटिका । निमित्तज्ञानम् । यन्त्रमातृका धारण मातृका । स
म्वाच्यम् । मानसीकाव्यक्रिया । अभिधानकोषः । छन्दोज्ञानम् ।
क्रिया विकल्पाः । छलितकयोगाः । वस्त्रगोपनानि । द्यूतविशेषाः ।
आकर्षक्रीड़ा । बालक्रीड़नकानि । वैनायिकीनां वैजयिकीनां वैता-
लिकीनाञ्च विद्याज्ञानम् । इतिचतुःषष्टिः कला [illegible] ।
मणयोयथा शोभन्ते तथा भूमिरचना-प्राकार

इतिमणिभूमिका कर्म्म । वस्त्रादिसंयोजनोत्पादिव्यापना-
दि युक्त्या स्वतएवोदके नाना शब्दा भवन्ति तदुदकवाद्यम् । नाना-

कूतदर्शनप्रकारा-श्चित्रयोगाः । शीघ्रयुक्तेन हस्तेन लाघवेन तत्त-
द्वस्तु परिवर्त्तनदर्शनम् कौचुमारयोगाः । सूत्रेणपुत्तलिका चा-
लनम् सूत्रक्रीड़ा । सर्ववस्तुप्रतिनिधिनिर्म्माणम् प्रतिमाला । का-
व्येषु विद्यमानपदस्य झटितिपूरणम् योगाः, तर्केणैव सर्वपदा-
र्थानां ज्ञानम् कृतिश्च तर्ककर्म्माणि । मन्त्रादिनापरीक्षादन-
मुतक्षादनम् । यथा शत्रुच्छिन्नका नौका भवति तथोपायज्ञा-
नम् च्छिन्नकतर्कविकल्पाः । पूजार्थं यन्त्ररचनम् तद्धारण विधि-
ज्ञानञ्च यन्त्रमातृकाधारणमातृका । अभेद्यस्यापि हीरकादेर्वे-
धादि सम्पाद्यम् । परमनःस्वार्थस्य पूर्त्तिर्मानसी काव्यक्रिया ।
प्रसिद्धानां नाना साधनैर्निर्वाह्यः क्रिया विकल्पाः पर-वञ्चन
चातुर्यं वाग्व्यवहारादिभिश्छलितकयोगाः स्पष्टमन्यदिति अ-
परा अपि पञ्चकर्म्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणिपञ्चभूतानि मन-
श्चेति भागवतोक्ताः । तथा पञ्चकर्म्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणि,
पञ्चान्तःकरणानि मनो बुद्धिश्चित्त, महङ्कारः स्फुरणञ्च तथोक्तेति ॥

श्रीकाशीराजसागरे कलातरङ्गोक्ता षोडश ।

स्फुरणम् तावद्बुद्धेःप्रातिभम् । साधनान्यस्य देवगुरुकृपा संस्कारा-
भ्यास स्वाध्याय जपादीनि । येन सम्पन्ना जीवाः स्वजातिषु विशेषं-
लभन्ते,यथाशिक्षितो मेषः कुशलः नापरे तथा । यथा वा महेन्द्रः-
कुशलो नापरे देवाः । अयमेव सिद्धिर्यथायथोदयते तथा तथा लोका

## कविसभा

सम्प्रत्यत्रभवद्भिर्लंपुर—राजकीय प्रधानविद्यालयाध्यक्षैः ड-क्टर लाइटनर महोदयमहोदयै र्भारतहितचिकीर्षुभिः पुनरेव दत्तहस्तावलम्बा समुन्नमनोन्मुखी संवृत्ताऽत्रत्या कविसभा। तत्र-प्रथमा-धिवेशने संस्कृतपारसीक तुरुष्क पोस्तोईं काश्मीराङ्गल व-ङ्ग प्रमुख भाषाभिर्वासित कलेवरा मनोहराः कविता विरचय्य-समागतवन्तोमहान्तः कवयः। पेठुश्च ताः स्वस्वोपयुक्त-स्वर-विभ-क्त्या। अङ्गीकृतन्तत्र स्तत्रभवद्भिः सर्व्वोत्तमकाव्य-रचयितृभ्यः कि-मपि पारितोषिकं प्रदातुम्।

तत्रह्रषीकेशभट्टाचार्य्येणैताः श्लोकाः पठिताः।

### कविता

यैषाधिकृतधात्रकार्य्यरचना सौन्दर्य्यसारश्रिया
संयुज्याद्भुत मातनोति भुवनं नूत्नं चिरन्तन्त्वपि।
सेयं स्वल्पितकल्पवृक्षविभवा सत्कल्पनासङ्गता
जीयात्सज्जनरञ्जनी शुभजनिर्वाणी सुधास्पर्द्धिनी॥

२

यत्कृत्या हसती स्थिता वसुमती वल्मीकसाराश्रियम
मर्त्यं यौवत मन्तरे च तनुते दिव्याङ्गनाविभ्रमम्॥
या चैतान् विदधाति भावनिचया नानन्दनिःस्यन्दिनः

सैका भाति सुभारती त्रिभुवने सिद्धेन्द्रजालोपमा ॥

३

याऽनङ्गाय समर्प्य कौसुमधनूरोलम्बमालागुणं
पौष्पांश्चापि शरान् करोति भुवनं वश्यन्त्वमुष्याखिलम् ।
यस्याश्चन्द्रसरोरुहप्रभृतयो भावाः स्थिताः शासने
सैवैकाऽखिलभूतविस्मयकरी वाणी नरीनृत्यते ॥

४

या नित्यं चरतीह वक्रिमलवस्पर्शातिरम्या मुहुः
पुंस्सु स्त्रीनयनान्तवीक्षणकणैः शार्दूलविक्रीडितम् ।
सेयं रूढिङ्गमहर्षीकरमनु वाणी कवेरद्भुता
सर्वाग्रधरणात्तनव्यप्रसरः पायादपायाद्द्विज ॥

५

पूर्वं विक्रम भोजभूप भवने रत्नेव यत्नार्चिता
या रेमे रमया विहाय कलहं हंसीव पद्माकरे ।
यातस्यातत गौरवा युगमतान्यन्तर्हिता भारती
सावैषा पुनरेव राजकुलज प्रोत्साहिता राजताम् ॥

इतिहृषीकेशकृतं कवितापञ्चकम्

## अर्थशास्त्रम्

### नीविः (मूलधनम)

पूर्व्वोक्तानां त्रयाणा मर्थसाधनोपायानां भूमि परिश्रमञ्च विविच्य सम्प्रति क्रमप्राप्ता नीविर्विविच्यते । कुसीदाद्यवगतये यत् संगृह्यते धनं सैव नीवि—मूलधनम् ॥

इयञ्च नीविः स्थानेत्यपरनाम्ना शास्त्रेषु प्रसिद्धा ।

बहवोहि जना धन मुद्रयो रैक्यं जानन्ति । भ्रान्ता एव ते यतोमुद्राह्यर्थस्य प्रकारविशेषः । मुद्राभिः केवलं विनिमय-सौकर्य्यं साध्यते । अतएव च नीविमुद्रयो रपिनैकभावः ।

प्राचीनसमये कृषिवाणिज्योपजीविनोहि निजाग्राच्छादनोत्पादकेभ्यः श्रमकारिभ्योग्राच्छादनान्येव ददतिस्म यतस्तदानीं नासीत् कापि मुद्रा तेषां । वर्त्तन्तेद्यापि श्रमकारिभ्यो वस्तुदानरीतिर्नवोपनिवेशिकप्रदेशेषु । प्रतीयते ह्येतेन न किमप्यस्त्यन्तरमत्र वस्तु-दान मुद्रादानोः । मुद्रया च स्ववेतनरूपया क्रीणाति जनः पुनरेवतत्तदन्न पानाच्छादनादिरूपं वस्तुजातम । परंमुद्रायाः कार्य्यसौकर्य्योत्पादकत्वे नास्ति कापि विमतिरस्माकम् ।

यदि जनानां संगृहीतधनरूपा नीवि र्न स्यात् तदा न भवेत् भुवने श्रमकारिणां जीविका । अन्तरेण श्रमकृतां साहाय्य नोत्पद्यन्ते कृषिफला वस्त्रादीनि च शिल्पजातानि । अतएव नीवे र्धनोत्पत्तिसाधनत्वं निर्व्विवादं सिद्धमेव ।

तत्तद्वस्तूत्पादक श्रमकारिभ्यो यद्वेतनरूपं धनं दीयते साऽपि नीवीरिव यतस्तया पुष्कलस्यार्थस्य लाभो जायते। वेतनसङ्कलन-कोषवर्द्धनेनैव देशस्य धन-वृद्धौ हेतुभूतं मूलधनं वृद्धिमाप्नोति। धनसञ्चयस्यैवैतत्फलं सञ्चायकस्याभिप्राय स्तु यथातथा भवतु ना-स्यर्थशास्त्रस्य सञ्चायकस्याभि-प्रायेण किमपि प्रयोजनम्। उक्तसिद्धान्तादनुमान-त्रयं प्रवर्त्तते। यथा

(१) यदि कश्चिद्विलाससुखेप्सया धनव्ययं कुर्य्यात् तदा सा-नुबन्धपरिश्रमस्योपकारिण्याः नीविः क्षयीभवेत्।

(२) यदि कश्चिद्धनं संगृह्णीयात् तदा तद्देशस्य नीविर्वर्द्धेत।

(३) नीविः सम्वर्द्धनेन परिश्रमस्यावश्यकत्वं वर्द्धते।

नीविरियं द्विविधैव। एका परिवर्त्तिरूपा द्वितीया-स्थिर-स्वभावा परिवर्त्तिरूपं हि मूलधनं श्रम-जीविनः पोषयन्ती देश-स्य धनानि सम्वर्द्धयति। स्थिर रूपन्तु तत् यन्त्राद्यर्प्पितं धनवर्द्धन-साधकं भवति।

यदा जनः परिवर्त्तिरूपेण मूलधनेनार्थं मर्ज्जयितुमक्षमो-भवति तदा द्वितीयोपाय मवलम्बते यन्त्रादौ मूलधनं स्थिरीकृत्या-र्थार्ज्जने यतमानो भवतीत्यर्थः।

शिल्पव्यापारस्य, यन्त्रस्य चौत्रत्या परिश्रमस्य च यथोचित व्यवहारेण मूलधनस्य सानुबन्धित्वशक्तिः सम्वर्द्धते। परिश्रमस्य च-

यथोचितव्यवहारोऽपि कार्य्यपर्य्यवेक्षकाणां संख्याधिक्येनैव जायते । लाभाधिक्यञ्च मूलधनस्य सानुबन्धिता सम्वर्द्धने कारणम् । इत्थानीं शस्योत्पत्तेः प्राचूर्य्यमवलोक्य मूलधनस्यापि तदनुरूपवर्द्धनापेक्षा न कार्य्या यतः शस्यवर्द्धनेन सह राजप्रदेयकरस्यापि वृद्धिर्भवति ।

विलासद्रव्याणां वाणिज्यं हि न देशोपकारसाधनम् । यत्तु विलासोद्दीपकद्रव्येषु यत् यत् धनं व्ययितं भवति सर्व्वैव तेन देशस्योपहानिर्भवतीति मन्यन्ते तदयुक्तम् । पश्य यदि कोऽपि शिल्पकारो मुद्रासहस्रेण विलासोद्दीपनवस्तूनि निर्म्मापयेत् तदा-तत्तद्द्रव्यप्रस्तुतकारिणां वेतन-रूपेण व्ययितमपि तद्धनं न-सानुबन्धि । यतस्तत्तद्द्रव्यं हि विलास मपहाय न किमप्युपतिष्ठति हितमिति नोत्पद्यते धनान्तरं तदुत्पत्तिग्रहणक्रियाभ्याम् ।

पञ्जाबमहाविद्यालयः

अयं हि महाविद्यालयः प्रत्यहं परमोत्कर्षं नीयते विद्यासागरपारङ्गतेन महामहोपाध्यायश्रीमत्लैटनर-महोदयेन महाद्येन भारतहितचिकीर्षुणा ।

अध्यस्यतेऽस्मिन् महाविद्यालये भारतीय प्राचीनविद्यानिकरः स्वस्वदेशभाषासहयोगेनापरदेशीयविद्यानिचयश्च ॥ भारत सागरवेलाभूमेः तुर्कीस्थानपर्य्यन्तं ये जनपदाः सन्ति तेभ्यः-सर्व्वेभ्य एव छात्रा अत्र विद्याध्ययनार्थमागच्छन्ति । सम्मानित परीक्षोत्तीर्णच्छात्रेभ्यो महासमारोहपूर्व्वकं पारितोषिकं [illegible]

अभूवेतन्निमित्तं वर्त्तमानमासस्य-द्वादश दिवसे दिनमणौ चर-
माचलचूडा मनुप्रविशतुकामे भगवति सवितरि निर्द्दिष्टे च घटी-
यन्त्रसूचीभ्यां पञ्चमघटीकानिर्द्देशकस्थानेऽत्रत्यराजकीयप्रधानत-
मविद्यालये महती सभा । यस्याः परिषदोभूपरिधिविदितयशसा
शासिताशेषारातिकुलसमुज्ज्वलप्रतापमण्डलेन स्वमण्डलेन साकं
मण्डनायितं लर्डलिटन—महोदयेन ।

अथ सभातल मलङ्कुर्व्वाणे तस्मिन् भूवलयावतंसे विद्वद्वंश-
रत्ने प्रगीते चैकतान वादनेन विजयगीते भारतशासयितुः ते-
न सभाशिरोरत्नभूतेन केदाश्चिदत्रत्यानां विदुषां परिचयो भव-
त् । ततो लब्धवैशिष्ट्येभ्य श्छात्रेभ्यो यथोचितं पारितोषिकादिकं
प्रदत्तम् । इत्थमा [illegible] यावतीय कार्य्यावसाने तेन कविकुल चक्र-
वर्त्तिना भूस्वामिना पञ्चनदीयविद्यालयं तत्प्रतिष्ठापकं जाक्टर-
लैटनर महोदयं भूयो भूयः प्रशस्यैकासदीर्घा व्याख्या कृता ततः परं
सभाभङ्गः ।

अपरेद्युः स्थानीय प्रधानतमराजपुरुषसमधिष्ठिताऽपरा-
चैका सभा बभूव । तत्रच पूर्व्वोक्त कविसमीपस्थायिनोवहवः तत्र-
भवता मत्रत्य प्रधानराजपुरुषाणां-सन्निधौ स्वस्वकविताः पेठुः ।
सोऽपि ता निशम्य परमपरि-तोषं प्रकाशयामास: ।

वयं सर्व्वान्तः करणेन पञ्चनदीय महाविद्यालयस्य सर्व्वा-
ङ्गीनामुन्नतिं प्रार्थामहे तथाचास्याधिष्ठातुः लाइटनर महोदयस्य
च ।

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः
लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन
प्रकाशितः ।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासनी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्याद्दु[illegible]र्गतिमिभ्भुवि ॥

खण्डं ८ ] फरवरि इं १८७९ [ २ संख्या

सूची



लाहोर
ऐल्बर्ट नामके यन्त्रे दिननाथरायनामधेयेन मुद्रितः ॥

विद्योदयः

बृहत्कथासरित्सागरसारः

स्वगृहस्याङ्गने तेन चत्वारः स्वर्णपूरिताः ।
कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि ।
तदेकस्याः स्वभार्य्यायाः स चक्रे विदितंतदा ।
तद्भार्य्या चान्तकाले सा स्नुषायै तदब्रवीत ।
साऽपि स्नुषायै मच्छ्वश्र्वै मच्छ्वश्रूरब्रवीत मे ।
इत्ययं मत्पतिकुले श्वश्रूक्रममुखागमः ।
स्वभर्त्तुस्तस्य न मया दरिद्रस्यापि वर्णितम ।
स हि द्यूतरतो ह्येष त्वंहि मे परमः प्रियः ॥

मद्भर्त्तुः सकाशात् तद्गृहं धनैः क्रीत्वा स्वर्णञ्च तत्सं-प्राप्य यथासुख मिहागत्य भजस्व मामिति । देवदासस्तु वणि-स्थित स्तस्याः कुलटाया स्तादृशं वाक्यमाकर्ण्य स्वान्तेऽपि हृद-ये धनाशां कुर्व्वन् किञ्चिदानन्दितो बभूव । जगामच सद्यः पाटलीपुत्रकं नगरं । ततः स्वगृह मागत्य लेभे तदनन्तर्हितं कुम्भं निधानं । अथ तद्भार्य्याच्छन्नकामुकः सोऽपि वणिक वाणिज्य व्यपदेशेन तं देश माजगाम क्रमेण। तस्मिं च तद्गृहं दे-वदास सकाशाद्बहुमूल्येन । ततो देवदासस्त्वपरं गृहं नि र्म्मीय युक्त्या श्वशुर—वेश्मनः स्वभार्य्या मानीय च निगूढहृदय-

यत्नः स्थितिं चकार । ततस्तत्-प्रतिपक्षः स वणिक् बह्वन्वेषणेनाप्यलब्धनिधिं देवदास मभ्येत्योवाच । एतद्भवद्गृहं जीर्णं न मह्यं रोचते तस्मै निजं मूल्यं देहि स्वीकुरुष्व चात्मगेहम् । देवदासश्च न तत् स्वीचकार । इत्थं तयोर्महान् विवादोऽभवत् । उपजग्मतु श्च तौ राजानम् । ततो राजकुलं गत्वा हृदयस्थितं दुःसहं विषमिव स्वभार्यावृत्तान्तं नरेन्द्राय समुद्गिरति स्म । ततो नृपति स्तद्भार्या मानीय तत्त्व मविश्य च तं पारदारिकं वणिजं सर्व्वस्व मदण्डयत् । देवदासोऽपि तां कुवधूं छिन्ननासिकां कृत्वा अपरां च परिणीय लब्धनिधिः सुखं तस्थौ । अतो धर्म्मार्ज्जिता लक्ष्मी रासन्तत्यनपायिनी । एव मतश्च राजा धर्म्मेण धन मर्ज्जयितुं यतेत यतो धनं हि राज्यतरोर्मूलम् । तस्मान्मन्त्रिमण्डलं यथावत् सम्मान्य धर्म्मोत्तरां श्रियं लब्धुं दिग्विजयं कुरु ।

यस्तु ब्रह्मदत्ताख्यो वाराणसीपतिः सततं त्वद्वैर माचरति । प्रथमं तमेव विजयस्व । ततः प्राचीप्रक्रमेणाखिलानां दिशां-विजये समुद्यमं कुरु । मन्त्रिमुख्येनैवं विज्ञापितो वत्सराजः प्रकृतिषु प्रयाणारम्भमादिशत् । ततस्तस्य राष्ट्रे यात्रासंरम्भोऽभूत् । यौगन्धरायण श्च ब्रह्मदत्तस्य विचेष्टितं ज्ञातुं वाराणसीं दूतमेकं प्राहिणोत् ।

अथ कस्मिंश्चित् शुभेऽहनि जयशंसिभि र्निमित्तैः प्रोतो-

ब्रह्मदत्तं प्रति प्रययौ। स नृपतिः प्रोक्षितं कर्त्रं गोगुह-जयकुञ्ज-
र मारुह्य पर्वतारूढो दुर्मदमृगेन्द्र इव शुशुभे। चकारच वे-
गसम्भ्रमाभि र्वाहिनोभिर्भुवस्तलं पूरयन्नकाण्डे जलदागमसम्भ्रम-
म्। तत् सैन्यकोलाहलं प्रतिधूनयन्त्यो दिशः परस्परं तदा-
गम-भयमिवाचख्युः। न सहतेऽपि नरपति रपरस्य प्रतापमि-
ति व्यञ्जयन्निव भूरेणुरर्कस्तेजस्तिरोदधे। अनुजग्मतुश्च नवगुणा-
कृष्टे कीर्त्तिजय्यिावेव तौ देव्यौ तं नरपतिम्। अथागच्छन्तं वत्स-
राजं दुर्ज्जयं मत्वा ब्रह्मदत्तः शिरो विरचिताञ्जलि दूतं सम्प्रेषय-
त्। निकटागतञ्च तं दृष्ट्वा स्वय मभ्यगात्। वत्सराजोऽपि प्रदर्शोपा-
यनं तं नृपं प्रीत्या सम्मानयामास। यतः शूराहि प्रणतिप्रिया भ-
वन्ति। एवं तस्मिन् विजिते प्राचीस्थान् सट्टन् नमयन् कठि-
नांश्च नृपानुन्मूलयन् गंगातरङ्गमालाभिः क्रोड़न्तमिवाम्बुनिधि-
प्राप। चकार च तस्य वेलातटान्ते जयस्तम्भम्। अतः पर तस्य-
विजय मिदं वर्णितम्।

अवनस्य करं दत्त्वा कलिङ्गे रथगैस्ततः।

आरुरोह महेन्द्राद्रिं यशस्तस्य यशस्विनः।

महेन्द्राभिभवाद्गीतै विन्ध्यकूटै रिवागतैः

गजैर्जित्वाटवीं राज्ञां स ययौ दक्षिणां दिशम्।

तत्र चक्रे स निःसारपाण्डुरानतगर्ज्जितान्।

पर्व्वतान्ययिनः प्लवन् शरत् कालइवाम्बुदान् ।
उल्लङ्घ्यमाना कावेरी तेन सम्मर्दकारिणा ।
चोलकेश्वरकीर्त्तिश्च कालुष्यं ययतुः समम् ।
न परं सुरलानां स सेहे मूर्धसु चोन्नतिम् ।
करैराहन्यमानेषु यावत् कान्ताकुचेष्वपि ।
यत्तस्य सप्तधाभिन्नं पपु र्गोदावरीपयः ।
मातङ्गा स्तन्मदव्याजात् सप्तधैवासृजन्निह ।

अथ सवत्सेशो रेवा मुत्तीर्य्योज्जयिनीमगात् । ततश्च स्वश्व-शुरेण चण्डमहासेनेन सुसत्कृतः काश्चिन्निशा विश्रम्य च पश्चिमां दिशं जेतुं प्रययौ । तस्यां च यथावदुदयं प्राप्य कुबेरपालितां दिशं जगाम । तत्र सिन्धुराजं वशीकृत्य म्लेच्छान् लपयामास । तत्र तुरगयुद्धचतुरान् तुरस्कान् जित्वा पारसीकपतेः शिरश्चिच्छेद ।

एवं विजित्य वसुधां वत्सेशः सपरिच्छदः ।
पद्मावती-पितुः प्राप पुरं मागध भूभृतः ॥
मगधेशस्य देवीभ्यां सहितेऽस्मिन्नुपस्थिते ।
सोत्सवोभून्निशाज्योत्स्नावति चन्द्र इव स्मरः ॥
ततो मगध भूभृता सनगरेण तेनार्च्चितः ।
समग्र जनमानसे रनुगतोनुरागागतैः ॥
निवीर्य्यवसुधातलो बल भरेण लावाणकं ।
जगाम विषयं निजं स किलवत्सराजो जयी ॥
इतिवत्सेशदिग्विजयोनामेकविंश स्तरंगः ।

एतेनान्येषु सर्वेषु स्थूलेषु सूक्ष्मेषु तत्वेषु सिद्धयो व्याख्याता इति। एवं यदास्य रजोबहुलः सत्वतमसो अभिभूय तमोबहुलो वा सत्वरजसो अभिभूय भावः प्रवर्त्तते, तदैवेदम् घोरां मूढा ख्यावस्थां जनयति। अनेन सत्वादीनां भावव्याख्यानेन ब्रह्मादिकीटपर्य्यन्तं समस्तं जगद् व्याख्यातं सर्वाणि शास्त्राणि चेति॥

अथ यथाग्रेसरन्तं राजानं सम्बन्धिनोऽनूत्पतन्ति एवं मन एवाश्रित्य सर्वाणीन्द्रियाणि व्याप्रियन्ते, यथाच तस्मिन् स्वामिन्युदासीने सर्वे निरवलम्बा भवन्ति, एवं मनस्युदासीने चेन्द्रियाणि। अतएवाचार्य्यवाक्यम्—

"मन एव मनुष्याणां कारणं बन्धमोक्षयोरिति,"

तस्मान्मनोजय एव सर्वथा यतनीय इति॥

इति श्रीकाशिराजसागरे वाशिष्टे चारणे

कलातत्वे द्वितीयपादस्य चतुर्थमाह्निकम्॥

इतिद्वितीयः पादः॥

अथतृतीयः पादः॥

ततस्तेनान्नं सृष्टमिति।

अन्नं नाम अद्यते भक्ष्यते गलादधःक्रियते यत् तदुच्यते। तस्येयं व्यवस्था। वान्यूक्तानि भूतानि तेष्वाकाशोऽवसरं ददाति, लब्धावकाशानि वायुादीनि चत्वारि भूतानि कालमहिम्ना प

त्रिणतानि त्रिविध-रसतामापन्नानि नानाकारेणान्नानि भवन्ति ये यथा यानिभुञ्जन्ते, यथा तृणं पश्वादीनाम्, मलम् शूकरादीनाम, मांसं क्रव्यादादीनां, हविष्यं यतीनां, देवानाममृतमिति ।

तदिदमन्नं, सात्विकं, राजसं तामसञ्चेति ।

सात्विकं हविष्यं, राजसं पिशितादि,तामसं शाकादीति ।

येन यथान्नमुपभुञ्यते, तस्य रसादिकमारभ्य हृत्यन्ताः सर्वे शारीराः आन्तराश्च भावा जायन्ते, सात्विकात् शान्तिः दृष्टिः-कान्तिर्नैरोग्यञ्चेति मनः-काययोः, राजसादुत्साहस्तैक्ष्णं बलं पुष्टिश्चेति, तामसात् दैन्यं मोहः पुष्टिः मालिन्यञ्चेति । पुनरिदमन्नमतिरेकेण वर्णयन्ति, तथाहि अद्यते खाद्यते स्वस्वसामर्थ्येन यद् येन प्राप्य शरीरोपयोगाय कल्प्यते तत्तस्यान्नमितिगीयते यथा वागादीनां वाक्यादीनि, श्रोत्रादीनां शब्दादीनि, अन्तः-करणानां च वृत्तय इति अतएव सुगन्धिं पुष्टिवर्द्धनमित्याम्नातो-भवति, दृश्यते चैतैर्मनःकाययोरुपयोगः प्रीतिः क्षोभो रोगो मोहः शान्तिः पुष्टिश्चेति । अतएवैतानि पूर्ववत् त्रिविधानि,तान्येतानि सर्वाण्यन्नानि यथादेहं, यथाकर्म्म, यथादेशं, यथाकालमुपभुक्तानि संस्कारानुसारेण भावादिकमुत्पाद्य लोकान् पालयन्ति, परमार्थतस्तु सर्वाण्येव चतुर्णां परिणामा इतिव्याख्यातमन्नं ॥

इतिवा-या-भा-ब-तृतीयपादस्य प्रथमाह्निकम् ॥

ततस्तेनाम्नाद् वीर्य्यं सृष्टमिति ।

वीरस्येदं वीर्य्यं बलं सामर्थ्यमिति, तच्च शरीरेन्द्रियान्तः करणेषु यथोपादानं व्यस्तसमस्तसंस्थानेन स्वाधिष्टानमूर्जयति । येन वागादीनि कर्म्मकुशलानि, श्रोत्रादीनि ग्रहणनिपुणानि अन्तःकरणानि संयमशीलानि भवन्ति । अन्नाद्वीर्य्यमित्युदाहरणमात्रम् । अन्नमेव, रसाद्युत्पादादिक्रमेण पुरुषं जनयति, स्थापयति, नाशयति च; तत्रायं क्रमः यथा काल मुपात्तादन्नात् पाकेनादौ रसः रसाद्रक्तम्, रक्तान्मांसं, मांसान्मेदः, मेदसोऽस्थि, अस्थ्नोमज्जा, मज्जः शुक्रम्, शुक्रादोजश्चेति ।

तथा भावा रसास्वादकृताः कामह्लादाद्या इति ।

व्याख्यातम्वीर्य्यम् ॥

इतिश्रीकाशिराजसागरे वाशिष्टे चारणे कलातत्वे तृतीयपादस्य द्वितीयाह्निकांशः ॥

ततस्तेनतपः सृष्टमिति ।

तपोनाम सत्वोद्रिकानुकूलो व्यापारः । सच कायेन, वाचा, मनसा सम्पाद्यः । कायस्य स्नानानु लेपन मलापनयनादि । हस्तयोरभयदान देवचर्य्या पुष्पचयनाचौर्य्यादि । पादयोर्विहितदेशगमनासन मलापनयनादि । पायोर्विहितदेश-विसर्ग-मलशोधनादि । उपस्थस्य वन्मविहितानन्दादि ।

श्रोत्रयोः श्रुतिस्मृतीहासपुराणभगवत् संकीर्तनादिश्रवणादि।
रसनायाः पवित्रान्नपान सेवन कद्न्नत्या [illegible]दि।
घ्राणयोर्धूपदीप-पुष्पादिगन्ध-दुर्गन्ध-त्यागादि।
वाचो भगवत्-संकीर्तन-स्वाध्यायोपदेशाभयोक्त्यादि।

अन्तः करणस्य दयादृष्टिश्रद्धा-कामादि दोषदर्शनकर्त्तव्य पावित्र-विलोकनादि।

एतदेव तपः शनैर्यथाधिकारं चिरनिरन्तर सत्कार सेवितं दृढ़भूमि, यथानुष्ठीयमानं क्रमात् सात्त्विकं प्रेम प्रदर्श्य संसार-दोषात् शनैः प्रच्याव्य ब्रह्मविष्णादि-भावं प्रसाध्यात्मानं ब्रह्मभावं भावयति, पुरुषं निस्तारयति। अतएवादिसर्गे ब्रह्मणस्तप तपेति प्रथमोपदेशः, भृगोर्वारुणे र्वरुणं पितरं प्रति ब्रह्मजिज्ञासयाम्,, अन्नं प्राणं मनोविज्ञान आनन्दं ब्रह्मेत्युपा[illegible]शात्, तपश्चरन्तं तम्प्रति पुनस्तपस्येवोपदेशः। अतएव [illegible]नि, च अपि शिष्यान् प्रथमं तपस्येवप्रेरयन्ति। सुतरां ब्राह्मणा मित्या[illegible]स्तपः-शीलत्वात्। एव स्तप एवगुरुस्तपोऽन्तरस्य, यदैकं तपः प्रसाध्य तपोऽन्तरमनुभूयते, तत्तेन स्वसन्निकृष्टतपोऽन्तरमुपदिश्यते तेन तपोऽन्तरमिति, अतएव तपसो न परं किञ्चित् सा काष्ठा सा परागतिरिति॥

इतिश्रीकाशिराज सागरे वाशिष्ठे चारणे कलातत्वे तृतीय-पादस्य द्वितीयाह्निकार्थः॥ ० ॥

अर्थशास्त्रम्

Production on Large and Small Scale.

युगपन्महतोऽल्पस्य वा कार्य्यजननस्य

फलम्

स्थितेऽपि विविधप्रकारके धनाधिगमोपाये यन्त्रव्यवहारो नाम तत्र प्राधान्येनोपकल्पितः ।

यथा प्रभूत मुत्पद्यते वस्तुजातं सुविस्तृत व्यापारवतां शिल्पिनां गृहे न तथाल्पव्यापारवतामसम्यग्यन्त्रव्यवहारिणां न्यम-विभागकारिणा मपि शिल्पिनां का कथाऽत्र स्वहस्त-मात्र-सहायस्यैकाकिनः शिल्पिनः । पश्य तावदेको हि कार्य्याध्यक्षो यथा शतस्य नियोज्यानां कार्य्याणि पर्य्यवेक्षितुं समर्थस्तथा द्वि-शतयोरपि । एव मेक एव यन्त्रचालको (engineer)यथा शतघोट-कवलान्वितस्य यन्त्रस्य परिचालने शक्त स्तथा द्विशतघोटक-ब-लान्वितस्य यन्त्रस्य च ।

योर्कसायर लांकसायर, मिडलैण्ड प्रभृति प्रदेशेषु यन्त्र-स्याधिक्यव्यवहारेण प्रभूत-द्रव्योत्पत्ति स्तज्जन्यधनलाभस्य चा-धिक्यं लक्ष्यते । परन्वैतल्लाभाधिक्यमसीमं, एतदपि तत्सम्बन्धावगत-तानुगतमस्ति । यदि कदाचित् यन्त्रस्याधिक-व्यवहार वशादेकदैवा-वश्यकातिरिक्त-तत्तद्वस्तुजातं निर्म्माय यन्त्रं निरुद्धोकृतं भवेत् । त

दा यावन्निरोध स्तावदेव यन्त्रेषु व्ययिता नीवि र्न किमपि फलं प्रसवी-त,यन्त्रमपि च तत् मलदूषितं भवेत् तथा ऽन्तरेणापि कार्य्यं भृत्येभ्यो यथायथं वेतनं देयं स्यादन्यथा तेऽपर मनुगच्छेयु:।

सामान्यतोऽधिकद्रव्यनिर्म्माणं न तावत् क्षतिकरं किन्त्वपेक्षिताधिकनिर्म्माणमेव। आपणे विनिमयार्थ मानीतस्य वस्तुन चेदपेक्षाल्पत्व मनुभूयेत तेनैवैतद्विनिमय-विषयीभूत-द्रव्यस्यैवाल्पत्वं प्रतीयेत। अतो युगपत् सर्व्वेषा मेव वस्तूना मनावश्यकप्राचूर्य्यं (Glut) न सम्भवति। अयथाव्यवहारेणैव द्रव्याणा मनावश्यकप्राचूर्य्यं जायते न त्वधिकोत्पादनेन।

एव मधिकद्रव्योत्पादकानां केचित् संहतस्थान-वाणिज्योपजीविसम्प्रदाया: (Joint Stock Company) भवन्ति। एते हि वाणिज्य-लब्धधनेभ्य: कुसीद मिषव: नीविं सङ्कलय्य वाणिज्य मारभन्ते। एतेषां तत्तदावश्यककार्य्यजात-पर्य्यवेक्षणार्थं भृतिभुज: कर्म्मचारिणो नियुज्यन्ते। एतेषां निखिलमेव कार्य्यं भृतिभुग्भि: परै: सम्पाद्यते। परं विशेषलाभं विना न हि परे परेषां कार्य्य मभिनिवेशेन कुर्व्वन्ति। अत: सम्भाव्यते भवति च-तादृशवाणिज्य-कारिणां प्रभूततमा क्षति:। एतन्निवारणार्थं 'कोपरेटिव सोसाइटी' (Co-operative Society) नाम वणिक्-सम्प्रदायानां प्रवृत्ति:। पूर्व्वोक्त वणिक् सम्प्रदायेभ्य एतेषामिता-

* व्ययनं मूलधनं यथा स्यात् लाभनिमित्तं यत् दान ग्रहण मिष्यते

वानेव विशेषो यदत्र लाभांशग्रहीतृणा मन्यतमा एव केचित्-वारं कृत्वा कार्य्यजातं पर्य्यवेक्षन्ते ।

## Effects of increased Productiveness of Labour.

### श्रमकारणक-वर्द्धितोत्पादकतायाः फलम्

केन फलोत्पत्ते राधिक्यं भवति कीदृशीच तस्य सीमा वि-धातव्येति विवेचित मेव पूर्व्वमस्माभिः सम्प्रति श्रमकारणक-वर्द्धितोत्पादकतायाः फलं समालोच्यते । तादृशफलोत्पादकत-या श्रमकारिणां संख्या सम्वर्द्धिता भवति । विचिन्त्यतां तावत् यदि किमप्येतादृशं यन्त्रं निर्म्मितं भवेत् येनैकेनैव मनुष्ये-ण षष्टिसंख्याकमानवानां कार्य्यं सुष्ठु सम्पादितं स्यात् । तदा पूर्व्वं एकोनषष्टि-श्रमकारिणां कृते यद्व्ययोऽभवदिदानीं तदपचा-लव्ययेनास्माभिस्तत्संख्यकश्रमकृतां कार्य्यमधिगम्यते । तेषु चैवं वि-धापरव्यापार-नियोजितेषु सम्वर्द्धत एव क्रमशो धनं तत्तद्देशेषु ।

यदा श्रमजीविनो धनधान्ययुता भवन्ति, परिश्रमानुरू-पं फल माप्नुवन्ति भवति च तेषां परिश्रमं प्रति जनानां म-हानादरः । तदा देशे विवाहस्य वृद्धि र्भवति । भोज्यद्रव्याणां मू-ल्यह्रासेन श्रमकृतां सुखमनुमोदते । भक्ष्यमूल्यह्रासश्च विवाह स-म्वर्द्धने कारणम् ।

देशे यथायथान्नस्याधिक्यं भवति तथातथैव लोक-

द्धारितपूर्व्वां मलक्षितां परेतपद्धतीम् ।

अनिर्द्धारितपूर्व्वत्वेनो निश्चितपूर्व्वत्वमस्मद्भिप्रेतं किन्तु किम्प्रकारकत्वेनानिर्दिष्टत्वमिति । निश्चितायामपि मृतौ ततः परमस्माकं किम्भविष्यतीति नास्त्यस्माकं निश्चित मितिभाव: । मृतेरनन्तरं नागलोकं, सुरलोकं, सायुज्यं सालोक्यं कैवल्यं वा प्राप्स्याम इत्यनिश्चितनिर्द्धारणार्थं नास्माकमुद्यम: । उद्यमे वा तादृङ्निर्द्धारणे कस्य श्रद्धा भविष्यति ।

भवत्वेवं प्रतिवर्षमेव वय मगाध-काल-महासागरस्य समीपवर्त्तिनो भवाम: । यमराजस्य क्रम-ग्रापका भृत्यवर्गा इवै ते सम्वत्सरा जन्मन आरभ्यै—वास्मान् शमन-सदनाभिमुखं नयन्ति । यथा तरङ्गावलीभि: क्रमशोनीयमानं वस्तु मध्येगङ्गं निपतति तथा वय मप्येभिर्वत्सररूप तरङ्गमालाभि: कालमहासागरस्य मध्ये ।

स्वीकार:

वयमतीव कृतज्ञहृदयेन

भारतस्य मित्रकार्य्ये प्रवृत्तस्य भारत मित्रेति यथार्थनामधेयस्य साप्ताहिक सम्वादपत्रस्य प्राप्तिं स्वीकुर्म्म: । इदं हि पत्रं कलिकाता नगरीस्थे बड़्बाजारे वृहस्पतिवासरे प्रकाशितं भवति । भाषा तस्य हिन्दी ।

श्री                Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासिनी सुजनसाधनसाभिनन्दिनी॥

नानाशास्त्रकथारत्नैः-लोकवृत्तानुशीलनः।
विद्योदयोनिराकुर्य्या दविद्यातिमिरम्भुवि॥

खण्डं ८ ]          मारच ई १८७९          [ ३ सङ्ख्या

सूची



लाहोर

ऐल्बर्ट नामके यन्त्रे दिलबागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मद्दन्तिके पत्रिकया स्वाभिलापः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।)

### नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दोभाषारचनोपकारी ग्रन्थः) सुगम-हिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे) प्राप्तव्यः।

---

### मूल्यादीनां नियमः।

| | | | | |
|---|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं | ... | ... | ... | २।৵० |
| „ पश्चाद्देयं | ... | ... | ... | २।৵० |

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः৵० परिमितमूल्येन मुद्रिता भविष्यति।

विद्योदयः

बृहत्कथासरित्सागरसारः

अथैकदा राजा यौगन्धरायण मेकान्ते समाहूयोवाच। सर्व्वे हि राजानो मदाज्ञां पालयन्ति ब्रह्मदत्तस्तु वाराणसीपतिः पूर्व्ववदेव विरुद्धमाचरति। तच्छ्रुत्वा यौगन्धरायणः प्राह राजन् नैतच्चित्रं दुर्जना हि स्वकार्य्योचितं फल मप्राप्य नात्मभावं परिहरन्ति। शृणु चात्रैतां कथाम्।

पुरा पद्मविषये अग्निदत्तनामधेयः कोऽपि द्विज आसीत्। तस्य सोमदत्तो वैश्वानरदत्त श्चेति द्वौ पुत्रौ बभूवतुः। तयोः सोमदत्तो महामूर्खो वैश्वानरदत्तश्च सुपण्डित आसीत्। अथास्तमुपगते पितरि सोमदत्तः शूद्रकर्म्माकरोत् वैश्वानरदत्तश्च राजसम्मानितो बभूवाथैकदा सोमदत्तं शूद्रैः सहावद्धगोष्ठीक मवलोक्य तस्य पितृ-सुहृत् कश्चिद्विप्र उवाच।

"अग्निदत्तसुतो भूत्वा शूद्रवन्मूर्ख चेष्टसे।

निजमेवानुजं दृष्ट्वा राजपूज्यं न लज्जसे"।

तन्निशम्य स हि महामूर्ख स्तं पादेन दारुण माजघान। तेनातिखेदं प्राप्य स विप्रो राजानं व्यजिज्ञपत्। भूपतिश्च क्रुधा सोमदत्तस्य शूलारोपण मादिशत्। ततो राजा तस्य कनी-

वसा श्रावा कृतविज्ञप्तिरेनं वधादमोचयत् ।

एवं विमुक्तः सोमदत्तः कार्य्यान्तराभावात् पुनरेव कृषिं चकमे । ततः स कृषियोग्यां भूमिं द्रष्टुमटवीं ययौ । लेभे च तत्र कामपि शुभ्रां भूमिं । तद्भूमि-मध्यगतं घनच्छायाच्छन्नं सूर्य्यांशुभिः तलमिकमश्वत्थतरुमवेक्ष्य स कृष्यर्थी परमं तोष माप । अथ तत्रतं तरुवरं संपूज्य कृषिमारेभे । ततः कालेन पक्वप्रायेषु शस्येषु दैवात् पर राष्ट्रेण सा भूमिरलंघ्यत । ततस्तद्वनोकनेन रुदतीं भार्य्यां समाश्वास्य पुनरेव तं तरुं सम्पूज्य कृषिमारेभे । अथैकदा चिन्ताविनिद्रस्य निशि तस्यैकाकिनो तस्मादश्वत्थवृक्षादुच्चचार काचित् सरस्वती ।

तुष्टोऽस्मि ते भोः सोमदत्त तद्गच्छ श्रीकण्ठप्रदेशे आदित्यप्रभसंज्ञस्य नरपते राष्ट्रम् । तत्रात्मानं फलभूतिनाम्ना प्रख्याप्य प्रत्यहं सन्ध्याग्निहोत्रं पठित्वा राजद्वारे स्थितो वदे स्त्वमिदं वचः ।

"भद्रकृत्प्राप्नुयाद्भद्र
मभद्रस्याऽप्यभद्रकृत्"

एवं वदन् महतीं हद्धि माप्स्यतीति ।

ततः फलभूति रिति ख्यातः सोमदत्तः श्रीकण्ठविषये गत्वा राजद्वारे स्थित स्तथैवावोचत् राजा च तन्निशम्य वस्त्राण्या—भरणानि ग्रामांश्च ददौ । एवं क्रमेण स नृपते रतीव प्रेमपात्र मभूत् ।

अथैकदा राजा आदित्यप्रभोटव्यां नाखेटकं कृत्वा प्रति निवृत्तः सहसान्तःपुरं ययौ । तत्र प्रविश्यैव देवीं दिगम्बरामुद्ध-केशीं मन्त्रोन्मीलितलोचनां विचित्रवर्णकन्यस्तमहामण्डलमध्यगां स ददर्श । समीपे च तस्या असृक्सुरा महामांसोपकल्पित मुग्रबलि मैक्षिष्ट । तद्दृष्ट्वा भयाकुलचेतसा नृपेण संपृष्टा साध्वसाकुलिता साऽपि सम्भ्रमाकलितांशुका प्रोवाच । राजन् कृतवत्यस्मि तवैवा-दयलाभार्थं पूजन मिदम् । अहं हि डाकिनीसिद्धिमुपगता । शृणु चैतद्वृत्तान्तं, पुराहं बाल्ये वयस्याभिः समभ्युक्ता ।

"अस्तीह प्रमदोद्याने तरुमण्डलमध्यगः ।
दृष्टप्रभावो वरदो देवदेवो विनायकः ॥

तं प्रार्थितप्रदमुपगम्य भक्त्या संपूज्य येन निर्विघ्नं स्वोचितं पतिमवाप्स्यसि । विनायक मपूजयित्वा कृत—सुरत महोत्सवाया पार्वत्या अपि देवैः सुरत-विघ्नः सम्पादितः, का कथा नराणाम्"

वयस्याभि रेव मुक्ता यावदहं पुरो गत्वा विघ्नराज मपूजयन्तावत् गगने समुत्प्लुत्य ता विहर्तुमारेभिरे । ततो मया तादृक् सिद्धिस्वरूपं पृष्टास्ताब्रुवन् । इयं हि नो नृमांसाशनजा डाकिनीमन्त्रसिद्धिः । अस्ति चास्माकं गुरुः कालरात्रिरिति प्र-सिद्धा कापि ब्राह्मणी । अथ तत्सिद्धिलोलुपाऽहमपि ताः सखी-रवोचं । दाप्यतामिष उपदेशो ममापि युष्माभिः ।

ततो मदभ्यर्थनया तास्तत्क्षण मतीव विकटरूपिणीं मत्ता
राक्षसीमिव तां कालरात्रिमानिन्युः । तां दृष्ट्वाहमचिन्तयं मनसोऽवे-
व किं विधाता वैरूप्य-निर्माणवैदुष्यी प्रदर्शिता । सा समागत्यैव-
स्नातां कृतविघ्नेश्वरार्चनां मां विवस्त्रां कृत्वा भैरवार्चां मकारयत् ।

"एतच्चमत् पितुर्देवि चित्रं विस्मय विद्रुतम् ।
कालरात्रेश्च शिष्याहं नित्यादौ वर्णितं मया" ।

सा तु कालरात्रिः पतिव्रता नासीत् । मम तु पतिव्रतत्वात्
ततोऽप्यधिका सिद्धिः । तदस्मद्दोषे नद्य त्वमप्यधुना प्रविश । कुरु-
ष्व च तेन सिद्धियोगर्जितानां राज्ञां मूर्ध्नि पदं । तदाकर्ण्य नरमां-
स-भोजनभीरुर्नृपतिः प्रथमं निषिषेध । अथ प्राणत्यागोद्यतायां
तु राज्ञ्यां तत् प्रत्यपद्यत । दुष्करा हि विपद्याक्रम्यमाणानां
स्वपदेऽवस्थितिः । ततः सा राजानं प्रपूजिते मण्डले प्रवेश्य
समयञ्च कारयित्वा प्राह । नगरेऽत्र फलभूतिर्नाम विप्र उपहारा-
र्थमुपकल्पितः । तदाकर्णयस्व मायासं तद्दत्त नये कश्चित्सूपकारः-
स्थाप्यतां येन स तं हन्ति पचति च । ततो राजा तद्वचनेन कमपि-
सूपकारमाहूयोवाच योऽद्यात्र—भोजननिर्माणार्थं तव स-
मीपे यास्यति तं हत्वा तन्मांसेन स्वादु भोजनं कुर्याः ।

इत्यादिष्टः सूपकृत् स्वगृहं ययौ । ततः फलभूतिमागतं दृष्ट्वा
राजा प्राह गच्छ, शीघ्र मन्नपचनार्थं सूपकारं साहसिकमादिश ।

ततस्तेन मन्त्राः सृष्टा इति।

मननात् त्रायन्त इति मन्त्राः शास्त्राणि तेषां द्वौ भेदौ विद्याः कलाश्चेति।

विद्यते लभ्यते ज्ञायते वा सर्व्वमनेनेति विद्या वाग्रूपा शब्दप्रमाण मिति यावत्। वीजान्यर्थ्यकाचारादीनि संकेतकोमल-प्रतिपादना मन्त्राः शास्त्राणीति।

मूकेनापि यत्साधयितुं शक्यते सा कलेति। विद्या हि तावन्मुख्यतो द्वात्रिंशद्विधाः——

ऋक् यजुः सामाथर्वाणोति वेदाश्चत्वारः। आयुर्धनुर्गान्धर्व तन्त्राणीति चत्वारस्तेषां क्रमादुपवेदाः। शिक्षा कल्प व्याकरण निरुक्त ज्योतिश्छन्दांसीति षडङ्गानि। मीमांसा तर्कः सांख्यं, वेदान्तो, योग, इतिहास पुराणं, स्मृति, नास्तिकमत, अर्थशास्त्रं, कामशास्त्र, मलङ्कारः, काव्यं देशभाषावसरोक्ति यावनमतं देशादिधर्म्मश्चेति। विद्यते लभ्यते ज्ञायते वा तत्त्वमनेनेति वेदः मन्त्रब्राह्मणो मन्त्रः, तत्र यत्र मन्त्राः पादशो ऽर्द्धर्चशो वा पठ्यन्ते कर्म्म क्रमं, समाम्नानञ्च सा उपासनाप्रधाना ऋग्वेति। यत्र मन्त्राणां पाठक्रम गीतछन्दसामनियमः कर्म्माध्वर्य्यवं, पाठश्च त्रिगुणः तत्कर्म्मप्रधानं यजुः कृष्णं शुक्लञ्चेति। यत्र मन्त्रादि रुद्गीथं तज्ज्ञान प्रधानं सामेति। यत्रोपास्यो-पासनादि भावनिर्णयः तद्भावप्रधान मथर्व्वा

ङ्गिरसमिति । ब्राह्मणे विनियोगो अनेनैव प्रदर्शितव्यमिति । येन प्रकृति भेदानुसारं औषधादि कल्पनया चिरायु र्भवति सदानपह- न्ति च स ऋगुपवेद आयुर्वेदः । येन युद्धशस्त्रास्त्र व्यूहरचनादिवि- धयो ज्ञायन्ते, स यजुरुपवेदो धनुर्वेदः । येन तन्त्री कण्ठानुस्थिता- ना मुदात्तानुदात्तादिरूपाणाम् षड्जादि स्वरोद्बोधकानां, काला- दिभेदवतालकलितानां स्वराणाम् स्वरूपतः प्रतिपत्तिः स सामवे- दोपवेदो गान्धर्ववेदो गन्धर्वाणाम् तत्र नैपुण्यात् तन्नामतः प्रसि- द्धिरिति । येन शिरणमारणादि—विविधोपास्योपासनादि—विधी- नाम् षड्भि र्मारणोच्चाटनवशीकरणस्तम्भन मोहाकर्षणैः सह विशेषात् प्रतिपत्तिः तदथर्ववेदोपवेदस्तन्त्रमिति । अतएवागमोक्तेन मार्गेणोपसनादिविषयः शिष्टानामिति ।

येन स्वरात् कालात् स्थानात्, प्रयत्नाद्वर्णाना मुच्चारणादि विषयः शिक्ष्यन्ते सा शिक्षा । ब्राह्मणभेदात् यत्र मन्त्राणां प्रयोग- उक्तः स कल्पः ।

येन प्रकृति प्रत्यय लिङ्गादिभेदानानारूपाणां शब्दानां स्व- रूपनिरूपणार्थकव्याख्यानादि व्याक्रियते तद् व्याकरणं ।

यत्र व्याकरण निष्पन्नानां शब्दानां सति सामान्ये निरुक्तिः समाख्यानम् यथा अश्वोवाजिन इति तन्निरुक्तम् ।

येन ज्योतिषां चन्द्र सूर्यग्रहनक्षत्रादीनां गत्याहोरा—

दिभिःसंहिताभिश्च यज्ञानामिष्टानिष्टः कालः कथितः तज्ज्योतिः ।

येन स्वरस्तादिवर्णपरिभाषित कालभेदैः पाठ समापना-
दार्थं रहस्यानां छादनार्थं उपसंहारार्थञ्च मन्त्राणां विश्रान्ति र-
वगम्यते तत् छन्दः । यत्र संकीर्णानां वेदवाक्यानां अर्थप्रकरणलिङ्ग
श्रुतिसमाख्योपक्रमोप संहारादिभि मींमांसा सा मीमांसा ।

यत्र प्रत्यक्षानुमानादिप्रमाणै र्भावाभावानामर्थानां वेदा-
नुकूलयुक्तिभि र्विवेकः सतर्कः काणादादिः ।

यत्र प्रकृतिपुरुषयोः संख्यानं तत् साङ्ख्यम् । यत्राद्वितीयं
सच्चिदानन्दमात्रं ब्रह्म सत्यम् प्रपञ्चोऽयं मिथ्या चिद्भिन्नासौ माया-
मात्रमिति प्रतिपाद्यते स वेदान्तः ।

यत्र यमनियमादिभि र्वृत्तिरोधः कथितः स योगः ।

राजमुन्यादिकार्यमिषात् प्राक्तन कथनमितिहासः । स एव
पुरावृत्त मित्युच्यते ।

यस्मिन् सर्गप्रतिसर्ग वंशमन्वन्तर वंशानुचरितादीनां विशे-
षतः कीर्त्तनं तत् पुराणम् । सार्धशास्त्र-म्नातां धर्माणाम् वेदावि-
रोधिनाम् स्पष्टतः स्मरणं स्मृतिः ।

बहिर्मुखानां मूढानां लोकयुक्त्या वेदाप्रमाण्यं वदतां स्वैरा-
चरणमिति नास्तिकमतम् । शास्ता विरोधि शासनयुक्तादीपाले-
नरक्षणादिविधि रर्थशास्त्रम् ।

शृङ्गारानुगुण समस्तद्रव्य भावादिकथनम् कामशास्त्रम् ।

प्रासाद प्रतिमारामकूप-वाप्यादि रचनम् शिल्पशास्त्रम् ।

संसारिभि र्विविधव्यवहाराकलितानाम् माधुर्य वैदग्ध्य श्ले-षादिभि र्झटिति चमत्कारभूः साहजसामर्थ्यो शब्दार्थौ वलङ्कारः ।

लोकमिश्रित र्भसभिसतत्त्व यस्य कस्यचिद्वाग्वशात् सरसमदो-षं निबन्धरचन मनुकारोऽपि काव्यम् ।

विना शास्त्रसंबन्धं लोकसंबन्धी व्यवहार साधिका वाग् देशभाषा ।

अन्त विज्ञाय उचितकाले वाग्व्यवहरण मवसरोक्तिः ।

ईश्वर-प्रामाण्येन राजसतामसभावाभिसन्धानात् स्वर्गा-न्तफलकं जीवनिवृत्ति-रहितं लोकाभ्युदय साधकं नडैः सहमानु-मोदितं कर्माद्यनुसारेण दैवैनैव व्याप्तं यावनमतम् ।

शास्त्रे न साक्षादाम्नायते देशे देशे कुले कुले वर्णे वर्णे व्य-वहृतः कल्याणदो देशादिधर्म इति ।

इतिश्री काश्मिराजसागरे वाणिज्य चारणे कलातत्त्व तली-याङ्किकांशः ॥ श्री ॥

कला तु चतुःषष्टि विधा, तथाहि शृङ्गारादिचेष्टा-सूचन-म् नर्तनम् । समष्टि व्यष्टिभ्या मनेकवाद्य वादन योजनादिकम् । नानाकार-धारण-कलितध्यानम् । स्त्रीपुंसो र्वेषा लङ्कार—सन्धानम् ।

शङ्कासमाधानम्

विगतवर्षीय विद्योदयस्यैकस्यां संख्यायां सोमदत्तभट्टकृते कथासरित्सागरस्य पद्यानुवादे अप्सरःशब्दस्यैकवचनान्तत्व मवलोक्याशङ्कितमस्माभि "स्त्रियां बहुष्वप्सरस" इत्यमर स्थितो कथमेवं विधः प्रयोग इति सम्प्रति मुलतान—निवासिभिः ठाकरदत्तनामधेयैः पण्डितवरै रेव मत्र समाधानं कृतम्।

स्वस्ति श्रीलवपुरस्थमहाशयेषु विद्योदयाभिध-संस्कृतपत्राध्यक्षेषु सविनयवृत्तमेतत् भोः महानुभावा विद्योदय प्रकाशने न श्रीमद्भिर्भवद्भिस्संस्कृतविद्याध्ययनशालिनोबहवो बहुश उपकृताः यतः परोपकाराय सतां विभूतिरिति परश्वोक्तप्रपदर्शनतो ममासीमानन्दोजातःततश्च पूर्वोक्त-पत्रस्य सप्तम खण्डीयद्वादश १२ सङ्ख्यान्तर्गत कथासरित्सागरसार-गुणा-ख्य प्रकरणे-भार्याकृता मयैवेयं शापभ्रष्टा वराप्सराः।

इति प्रतीकमादाय- पत्रावोभवद्भिः- श्लोकोयं मूलादुद्धृतः। अप्सरःशब्दोहि नियतं भूम्नि- वर्त्तते। न ज्ञायते केन कारणेन मूलकृतानैकवचनं प्रयुक्तमिति लिखितं तत्पठित्वा हि यथामति चात्र लिख्यतेतथाहि वराप्सराः—इति पदे न काचिदप्यशङ्का- यतः- स्त्रियांबहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपीति शब्दार्णवादेक- वचनान्तत्वमपीति ज्ञेयम् अतएव बालभारते—महाकाव्ये—वीरा

ङ्के—आदिपर्व्वणि—चतुर्थे सर्गे अद्रिकाख्या तिमीभूता पद्मभूगा-पतोऽप्सराः ॥ इत्युक्तम् ॥

निधाय हृदि भक्तिं विधाय करुणां खलु ॥ भवद्भिर्निर्णयो-यं वै प्रतिवाक्यस्य मान्यति ॥ १ ॥

पत्रप्रेषकः- मुलतान—पत्तननिवासी सेतुपालोपनामक-ठाकुरदत्तशर्म्मा ।

अत्रोच्यते अप्सु सरन्ति उदकं गच्छन्ति इत्यप्सरस इति व्युत्पत्ति-योगात् तथा "अप्सु निर्मथनादेव रसात्तस्मादरस्त्रियः उत्पेतु-र्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्" । इति विष्णुपुराण-दर्शनाच्च अ-प्सरःशब्दस्य नित्यबहुवचनत्वपक्षः साधीयस्त्वेन प्रतीयते । अतए-वामरटीकायां महेश्वरः । अत्र अप्सरःशब्द एकस्यामपि व्यक्तौ बहुवचनान्तः स्त्रीलिङ्गः । यत्तु मेनका वै अप्सरा रूपिणीति भा-ष्योक्ति स्तथा अप्सरसा विति श्रुतिनिर्देशाच्च बहुवचनस्यौत्सर्गिकत्व-मिति तन्महाकवि-महर्षि-प्रयोगादिस्थितेषु समर्थनं भवितु-मर्हति न तु सोमदेवभट्टवत् यस्य कस्यचित् प्रयोगस्थितेषु । इत्य-लमतिविस्तरेण । सम्पादकः

ऐतिहासिकरहस्यम्

(तृतीय भागः)

श्रीरामदाससेन प्रणीतम्

वय मतीव कृतज्ञतारसोच्छलितेन हृदयेन ग्रन्थकर्त्तुः सर्व्वतोमुखं श्रेयोऽभिकाङ्क्षमाणा ग्रन्थ मेतं स्वीकुर्म्मः। तत्रभवन्तः पण्डितवर-श्रीरामदाससेन-महोदया हि वङ्गाभिधेय-स्वमातृ-भाषायाः सर्व्वाङ्गीनसम्पद मभिलिषवः प्रतिवर्षं मशेषपरिश्रम लभ्यानन्यसाधारण-ग्रन्थ-रत्नेन नवेन ता माभूषयन्ति। अस्मदा-लोच्यैतिहासिकरहस्यग्रन्थेन न केवल मैतिहासिकरहस्यं परं तत्रभवतां ग्रन्थ कर्त्तृणाञ्च लोकसीमातिवर्त्ति—विद्यावुद्धिशालित्व-रूपरहस्य मपि भुवने प्रथित भवति। अतएवास्य समालोचन-रूपातिसाहसिक्य मपहायैतत्स्वरूप-परिचयमेव केवलं पाठकाना मुपढौकियतेऽस्माभिः।

ग्रन्थोऽयं वङ्गभाषायां विरचितः। अत्र हि जैनमत- समा-लोचनं, भागवतवोपदेवौ, वेदविभागः, कुमारपालो, विद्यापति विहृण, आर्य्यसम्प्रदायस्याचारव्यवहारो, वौद्धजातकम्, स्वरवि-ज्ञानं, पाणिनी, रागनिर्णय इत्येतदभिधेया दश प्रस्तावा इत्यस्ति सर्व्वं एव ते परस्परं स्पर्द्धन्ते स्वाहितयुक्तिप्रमाणादिगुणौघैः।

वयमत्र केषाचित् सारं संग्रह्णीमः। जैनमतसमालोच-नम्—जैनधर्म्मोह्याधुनिकः ७८८ खृष्टाब्दादारभ्यास्य प्रचारः संवृत्तः। एषाम्मते परमेश्वरस्यास्तित्वमस्ति। यथा

"कर्त्तास्ति नित्योजगतः स चैकः

स सर्व्वगः स स्वयम्भः सनित्यः ।

इमास्तु हेयाः कुविडम्बनाः स्यु

स्तेषां न येषा मनुगामकस्त्वम" ।

स हि परमेश्वरोऽर्हदाख्यः । तस्य स्वरूपं यथा "सर्व्वज्ञो जितरागादिदोषस्त्रैलोक्य पूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः" ।

तेषांमुक्तिस्वरूपं, यथा । मृत्तिकाविलिप्त मलावुद्रव्यं जलेऽधः पतति—पुनरपेतमृत्तिकावस्थं सत् उर्द्धं गच्छति तथा कर्म्मबन्धविनिर्मुक्त आत्मा असङ्गतत्वात् ऊर्द्धं गच्छति । । अस्योपायः

"सम्यग् दर्शन ज्ञान चारित्राणि मोक्षवर्गः"

अस्यार्थः

येनरूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेण अर्हता प्रतिपादितेऽर्थे विपरीताभिनिवेशराहित्यरूपं श्रद्धानं सम्यक्दर्शनम् । येन स्वभावेन जीवादयो व्यवस्थिता स्तेनैव स्वभावेन संशयसम्मोहाद्यनाक्रान्तस्य जीवस्य गुरूपदिष्टपथा श्रवण मनना भ्यासपाठवेन 'ज्ञानावरकानां पूर्व्वोपपादितमिथ्यादर्शनाविरतिप्रमादाना मुपशमे सति स्वयमेव समुदेति । संसरणच्छेदोद्यतस्य श्रद्धानस्य ज्ञानवतो जीवस्य पापकर्म्मभ्यो निवृत्तिः सम्यक् चारित्रम् । एतानि समुदितानि मोक्षकारणम् ।

सूक्तम्—सम्पूर्णमृषिवाक्यन्तु सूक्तमित्यभिधीयते ।

ऋषिसूक्तानि यावन्ति सूक्तान्येकस्य वैकृतिः ।

स्तूयेतैकास्तु यावत्सु तत् सूक्तं दैवतं विदुः ॥

मण्डलं—तत्तदृषिदृष्टानां बहूनां सूक्तानां एकाधिकरणक: संग्रहो मण्डलम् ॥

महासूक्तं—दशर्कांताया-अधिकं महासूक्तं विदुर्बुधाः ॥ *

पतञ्जलिमते यजुर्वेदस्य शाखाः शतं चरणव्यूहमते पञ्चाशीतिः । अस्य परिमाणं । अष्टादश सहस्राणि मन्त्रब्राह्मणयोः सह यजूंषि यत्र पठन्ते सयजुर्वेद उच्यते ॥

सामवेदपरिमाणं—अष्टौ सामसहस्राणि सामानि च चतुर्दश । उह्यानि सरहस्यानि सामगणः स्मृतः ।

अथर्ववेद परिमाणं—द्वादशानां सहस्राणि मन्त्राणां त्रिशतानि च । गोपथं ब्राह्मणं वेदेऽथर्वणे शतपाठकम् ॥

विद्यापतिविल्हणः । अयं हि कश्चिन्महाकवि रासीत् । सम्प्रत्यस्य कृतिर्विक्रमाङ्कदेवचरितं नाम महाकाव्यं दृष्टम् ।

* शाङ्खायन, आश्वलायन, मण्डूक वाष्कलाः । यावन्ति सूक्तानि एकेन ऋषिणा दृष्टानि तानि ऋषिसूक्तानि एकदैव स्तव-पराणि सूक्तानि दैवसूक्तानि । एकच्छन्दो ग्रथितानि सूक्तानि छन्दः सूक्तानि ।

तर्कविचक्षणेन कविविद्यावत्ताया एवं परिचयो दत्तः ।

"साङ्गोवेदः फणिपतिकृतं शब्दशास्त्रे विचारः
प्राणा यस्य श्रवणसुभगा सा च साहित्यविद्या ।
कोवा शक्तः परिगणयितुं श्रूयतां तथ्यमेतत्
प्रज्ञादर्शो किमिति विमलेनास्य संक्रान्तमासीत् ॥

निबन्धस्य स्थूलकायत्वादत्रैव विरम्यतेऽस्माभिः ।

सङ्गीतकम्

जयति विजितकामा तनुरभिरामा, श्यामा मदयति हृदयमशेषा; प्रकटितभङ्गी, नेत्रविभङ्गी-नीतकुरङ्गीगर्वविशेषा, वनकुसुमशोभना चित्तविलोभना चूडाकलित-कलापितकेशा हृदयकमलाकरे कमलमिव राजति पीतवसनोज्ज्वलवेशा (१)

यामि, सखि यामुनतीरे, मधुसमयशोभन युवहृदयलोभन मञ्जुलकुञ्ज कुटीरे, भ्रमरकुलसङ्कुलचूतलतिकाकुलसङ्गतसुरभिसमीरे कोकिलकलरवोदञ्चितमाधव वेणु निनादगभीरे (२)

माधव हे, परिहर मम पन्थानम् हसति जनो ननु पश्यन् निन्दति तव महिमानम् ॥

रच विनयमयमञ्जलिरिह तव रच रच कुलमानम् नित्यमसूयति गुरु रसकोपनः कुरु कुरु तदितः प्रयाणम् ।

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भैः-लोकवृत्तानुशीलनैः।

विद्योदयोनिराकुर्य्यादविद्यातिमिरम्भुवि॥

खण्ड ८ * ] जनवरि इं १८१८ [ १ संख्या

सूची



लाहोर

एल्बर्ट नामके यन्त्रे दिलनागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मद्रिके पत्रिकया स्वाभि-लाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (व्याकरणप्रवेशोपयोगिग्रन्थः) लवपुरस्य संस्कृत पाठशालाध्यक्षाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।)

### नूतनपुस्तकम् ।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्जनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब युनिवर्सिटी कालेज) प्राप्तव्यः ।

---

### मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

„ पश्चाद्देयं ... ... ... ३।/०

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति ।

## दारिद्र्यकुटुम्बम् ।

दिगम्बरायाद्भुतविक्रमाय करालकालान्तकतुल्यवर्चसे ।
क्षुत्क्षामकण्ठाय भयङ्कराय नमो दरिद्राय मुहुर्गरीयसे ॥ १

अभूद्धरेर्नाभिसरोरुहात्पुरा धाता विधाता जगतोऽखिलस्य ।
तस्याभवन्मानस उत्तमप्रभः सुतो मरीचिस्सुमरीचिमाली ॥ २

अन्योऽपि पुत्रः कृतिकर्मदक्षो दक्षो बभूवाद्भुतकर्मशाली ।
याभ्यामुभाभ्यां जगतां गतिभ्यां प्रजापतिभ्यां जगदापुपूरे ॥ ३

तेपे मरीचिस्तप उग्रमग्रः प्रभञ्जनाहारपरस्तरस्वी ।
दक्षोऽपि चिन्ताबलकष्टचित्तस्तताप भीमं तप आत्मसिद्धै ॥ ४

तयोरथ प्रीतमनाः स्वयंभूस्तपोनिदाने-कृतचित्तयो र्मुदा ।
वरान्ददौ काङ्क्षितकार्यकर्तॄन् प्रजापती चापि चकार तौ ततः ॥ ५

अथो मरीचि स्तनयं कलायामुत्पादयामास तपःप्रभावात् ।
यं कश्यपं प्राहुरदीनसत्वं देवर्षिदैत्येश्वरसिद्धतातम् ॥ ६

तस्मात्तपः सोऽप्यगमत्कृतार्थतां समर्थ उत्पादयितुं वराः प्रजाः ।
कुर्वन् प्रजासर्जनमन्वहं महान् यो नाप वृद्धतामुदग्रतेजसा ॥ ७

दक्षः प्रसूत्यां सुतनूः कलाढ्या असर्ज्जयत्कोकनदप्रभाः सुताः ।
अदान्नृतिस्ता अथ कश्यपाय याभिः प्रसूतिः कृतकृत्यतां ययौ ॥ ८

अरीरमत्ताभिरनेकहायनान्सोऽथो ससर्ज्जाद्भुतविक्रमं सुतम् ।

सङ्कल्पनामान मशेषदेहिना माधारभूतं भवभूतिहेतुम् ॥ ९

तदात्मज स्वाजनि तिग्मतेजाः कामो मनोभू रमरार्चिताङ्घ्रिः ।
यं सर्वसौख्यस्य निदानभूतं नार्योनरा श्च प्रवदन्ति भूयः ॥ १०

जज्ञे ततः सर्वहरस्तरस्वी व्ययोऽव्ययस्यापि विभीषिकाकृत् ।
व्याप्तं जगद्येन चराचरं द्राक् स्वतःप्रभावेण भयस्य सख्या ॥ ११

व्ययः स्वस्वरूपं प्रजास्वव्ययासु व्ययीभावमुत्पादयिष्यंस्ततान ।
यदार्तं जगद्दै मुहुःसर्वलोकास्ततश्चुक्षुभे सोपि सङ्क्षुब्धचित्तः ॥ १२

अथ विचार्य चिरं विचरञ्जगज्जगतिसर्वजनस्य भयावहम् ।
जनयतिस्म समानगुणैर्युतं मिथुन मात्मविकारविशुद्धये ॥ १३

दरिद्रोदरिद्रेत्युभौ विश्रुताह्वौ वभूत.मुदाराख्यौ प्राप्तविद्यौ ।
दरिद्रः प्रविष्टौजसा मर्त्यलोकेऽतनोदात्मभावं द्रुतं लब्धलक्षः ॥ १४

दरिद्रां व्ययो वीक्ष्य पुत्रीङ्गुणाढ्यां वरान्वेषणे दत्तचित्तोथ धन्यम् ।
मुनिं नारदं यत्नतः पर्यपृच्छत्सुता विप्र कस्मै मया ब्रूहि देया ॥ १५

तद्वाक्यश्रवणेन जातकुतुको देवर्षिरत्यद्भुतः प्रावोचच्छृणु पुत्रक
प्रियतम त्रैलोक्यवीरात्मजाम् ।
विप्रेषु प्रतिपादयस्व न चिरादस्याः समःकोभुविस्वाध्यायप्रियस-
र्वशास्त्रविदुषी भूदेवहन्दात्पतिः ॥ १६

श्रुत्वा तद्वचनं चिरस्यमुदितः कन्यां व्ययः स्वांमुदाकुत्स्नाहाभरणा-
म्बरादिसहितां दर्पेन्दुपूर्णाननाम् ।

शुक्लेन्दीवरपत्रतुल्यनयनां मानाभि लम्बस्तनीं मेरोमध्यसमान
मध्यरुचिरां शुक्लक्रियाभासिताम् ॥ १७
योवाचस्पतितुल्यभाग्यसहितायायप्रधानाय भूदेवाघाय ददौ प्र-
सन्नमनसा देवाग्नितेजःपुरः ।
यत्पाणिग्रहणेन विप्रनिवहो याञ्चापरो वीभवत्सम्प्रत्यप्यग्रहीन ए-
व नितरां भूमौ दरीदृश्यते ॥ १८ ॥ युग्मकम्

कुलशीलवयोरूपै र्विद्यासद्वित्तनाथतामूलैः ।
गुणजालैस्संयुक्तप्राज्ञवरायार्पयेत्कन्याम् ॥ १९

इतिधर्मागमवेत्ता व्यग्रो विचार्य्याविप्रसङ्घे यो ।
कन्यां दत्वैव सुखं लेभे दौहित्रलिप्सया नूनः ॥ २०

कष्टो नष्टभ्रष्टो दुष्टानिष्टो यविष्ठपापिष्ठो ।
दंभानृतलोभभयक्लेशाः पुत्रादरिद्रायाः ॥ २१

अभवत्तयो दरिद्रः पीडामुद्दाह्य पुत्र मत्युग्रम् ।
सोहं स्वख्यातिमिचं जनयामास प्रसह्य कालन्त्वम् ॥ २२ ॥ युग्मकम्

एभि स्सर्वैं लोके व्ययप्रधानैरतन्द्रितं क्लिष्टः ।
मृत्युरमण्या क्षुधया परिपीडितमद्भवया भूयः २३

क्षुत्क्षामकण्ठस्वबलान्मृत्योः संहाररूपिणः ।
जनो यं विविधैः क्लेशैःप्रातराणायकल्पते ॥ २४ ॥ युग्मकम्

इतिदारिद्र्यकुटुम्बप्रशंसनं श्रीनिवासधारिणा ।
कृत मेतेन सुधियां मनःप्रमादोऽनिशम्भूयात् ॥ २५ ॥ इति

स्नेहः ।

स्नेहस्य स्वरूपं किमिति जिज्ञासायां दार्शनिकनां स्थितेऽपि विविधप्रकारके मतभेदे, स्नेहोनाम स्वार्थानुगतचित्त-धर्म्मविशेषः इत्येवास्माकं सिद्धान्तः । दृश्यते हि लोके यथा यथा-स्वार्थाधिक्यं तथास्नेहाधिक्यं स्वार्थाभावे च स्नेहाभावः । इत्यवि-नाभावेन स्नेहस्य स्वार्थानुगतत्वं स्फुटं प्रतिपद्यते मनुष्याणां परस्परस्य समानसम्बन्धावस्थितावपि सर्व्वोहि जनः उप-कारिणमेवानुधावति । शरीरमनोवचनै स्तस्य शुभानुष्ठानं करो ति । यावदुपकारस्तावदेवैवं व्यवहारः । अथदैववशेनोपकारा-शक्ते तस्मिन् न कोऽपि तमनुगच्छति । इयं जनपूर्णा वसुधा तस्या-रण्यानीभवति गृहञ्च कान्तारम् ।

एवंहि पितृपुत्रयो र्भ्रात्रोर्दम्पत्योश्च चिरविरूढस्य स्नेह-स्य प्रवर्द्धमानस्य च स्वार्थ एवमूलम् । पश्य पुत्राणाम्मध्ये योहि ध-नार्ज्जनक्षमः पितृचरणानुगतश्च पितरौ तमेव सततमाद्रियेते सर्व्वदा तस्य शुभ माकलयतः स्वजनगोष्ठीषु तस्य प्रशंसावा-देर्गगनमापूरयतः । तस्य शिरःपीड़ाक्रमे याद्दशीं कृपणतां दी-नताञ्च प्रकाशयतोन तथासन्नदेहपातेऽप्यपरेषां अर्ज्जनाक्षमाना-मर्ज्जनक्षमानाञ्चा विरुद्धाचारिणामभक्तानाम् । यथा पितरौ स्वा-र्थकारिणं पुत्र मनुवर्त्तेते तथा पुत्रोऽपि स्वार्थजनकं जनकं जननीञ्च

स्वार्थं-जननी मनुगच्छति सम्मानयति च तौ प्रत्यहं पादो-
दकपानेन । उपार्ज्जनक्षमोहि पिता पुत्राणां भक्तिभाजनं स-
म्मानपात्र ञ्चान्यथा केवल मवज्ञाभाक् भवति । पूर्व्वमर्थहीन-
त्वेन स्वजनैरवज्ञातस्य पश्चात् काच-खण्डनिनादेन स्वजनान्-
प्रलोभयतो वृद्धस्य वृत्तान्तो वचन मिदं सप्रमाणीकरोति ।

इत्थं यदा पतिः स्व धर्म्मिणीं सर्व्वान्तःकरणेन सर्व्वप्र-
यत्नेन च सुखयति तदैव तस्याः पातिव्रतस्य परमोत्कर्षः । सा
प्रत्यहं पुनःपुनरपि भर्त्तुश्चरणयुगं यत्नेन प्रक्षाल्य तदुदकं परम-
या भक्त्या पिबति । अन्यथा तु सम्मार्ज्जनी-सन्ताडनेन दुःसह-
वचनविषेण च तं विशोधयति । अतैतद्वगन्तव्यं यत्स्वार्थस्य-
हि जनानां विशेषतोऽवलानां द्विधैवाधिगमो भवति यथा शु-
भ-वसन-भूषणादि-प्रद-पर्य्याप्तधनाधिगमेन, सुन्दररूप-वचन दर्श-
न-श्रवणादिनाच । एको बाह्य स्वपरस्त्वान्तरीणः । अतेदमप्यनु
स्मर्त्तव्यं यत् स्वार्थन्नामात्मनः सुखलाभरूपः प्रयोजनविशेषः ।
सुखाभिलाष श्च मानवानां स्वरुच्यनुरूपो रुचिश्च प्रतिमनुष्यं भि
न्नरूपैएव । कश्चित् धनाधिगमेन सुखीभवति, कश्चित्सुन्दररूप
दर्शनेनापरो मनोहरवचनोपन्यासश्रवणेन । कश्चिदैहिकोपभोगा-
दिभ्यो जलाञ्जलिं दत्वा विजने समुपविश्य स्वमनसोज्ञानितामुष्मि-
कनित्यसुखसाधनतपश्चर्य्यादिकं कुर्व्वन्निहैवा-नन्दमग्नमनुभवति

इत्थं प्रति मनुष्यं सुखाभिलाषस्य भिन्नरूपत्वे सुखस्यापि रूपभेदता सुखस्य भिन्नतायां स्वार्थस्य च भिन्नता। तथाहि पर्य्याप्त वसनभूषणादिलाभेऽपि पत्यौ वृद्धे कुरूपे वा व्यभिचारमाचरन्ति वह्व्यः कुलस्त्रियः यतः केवलं वसनाद्यागमेन न तासां स्वार्थ-साधनम् । इति

वेदान्तमुक्तावली

पूर्व्वं परमात्मनः स्वरूपं कथितं कथ्यते हीदानीं श्रुतिपरम्परा प्रख्यातोऽस्य महिमा ।

तथाचमुण्डके—

"तस्माच्च देवा बहुधा संप्रसूताः
साध्या मनुष्याः पशवो वयांसि ।
प्राणापाणौ-व्रीहियवौ तपश्च
श्रद्धा सत्यं ब्रह्मचर्य्यं विधिश्च ।
अतः समुद्रा गिरयश्च सर्व्वे
ऽस्मात्स्यन्दन्ते सिन्धवः सर्व्वरूपाः ।
अतश्च सर्व्वा ओषधयो रसश्च
येनैष भूतैस्तिष्ठते अन्तरात्मा ।

वृहदारण्यके——

सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूल-

मनणुह्रस्व-दीर्घमलोहित मस्नेह मच्छाय मतमोऽवायुनाकाश-
मसङ्ग मरस मगन्ध मचक्षुष्कमश्रोत्र मवागमनोऽतेजस्क मप्राण-
ममुख ममात्र मनन्तर मवाह्यं न तदश्नाति किञ्चन न तदश्नाति-
कश्चन ।

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ
विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि द्या-
वापृथिव्यौ विधृते तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गा-
र्गि निमेषा मुहूर्त्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संव-
त्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि-
प्राच्यो ऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्यो ऽन्या यां-
याञ्चदिशमन्वेति ।

यः सर्व्वेषु भूतेषु तिष्ठन् सर्व्वेभ्यो भूतेभ्योऽन्तरो यं-
सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः स-
र्व्वाणि भूतान्यन्तरोऽयमत्येषत आत्मा अन्तर्याम्यमृतः ।

तैत्तिरीयोपनिषदि

भीषास्माद्वातः पवते भीषोदेतिसूर्य्यः ।

भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावतिपञ्चमः ।

श्वेताश्वतरे—

विश्वतश्चक्षुरुत विश्वतो मुखो

विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सम्पतत्रै
र्द्यावाभूमिं जनयन् देवएकः ।
ततः परं ब्रह्म परं बृहन्तं
यथानिकायं सर्व्वं भूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं
ईशं तं ज्ञात्वाऽमृताभवन्ति ।
यस्मात् परं नापरमस्तिकिञ्चित्
यस्मान्नाणीयो न ज्यायोऽस्तिकिञ्चित् ।
वृक्षइव स्तब्धो दिवि तिष्ठत्येक
स्तेनेदं पूर्णं पुरुषेण सर्व्वम् ।
सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः ।
सर्व्वव्यापी स भगवानन् तस्मात् सर्व्वगतः शिवः ।
सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम् ।
सर्व्वतः श्रुतिमल्लोके सर्व्वं मावृत्य तिष्ठति ।
अपाणि पादोजवनो ग्रहीता
पश्यत्यचक्षुः सशृणोत्यकर्णः ।
स वेत्ति वेद्यं नच तस्यास्तिवेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ।

स्पर्शानां, चक्षुषोः रूपाणाम्, रसनाया रसानां, घ्राणयोश्च गन्धानामिति, यस्यासाधारणो गुणो येन गृह्यते, तस्य सात्विकांशात् तदिन्द्रिय मुत्पद्यते यथा शब्दं गृह्णाति श्रोत्रम्, तदाकाशेन्द्रियम् यतः शब्द आकाशगुण इति, एवं त्वग्वायोः, चक्षुस्तेजसः, रसना रसस्य, घ्राणं भुवश्चेति।

गीतवक्तृत्ववचनानुकारादयो वाचः कर्म्माणि, तेषां वागिन्द्रियजन्यत्वात्,। संकल्पप्रेरितस्य मनसो वेगोत्पादे तज्जनितो वायुर्मूलाधारमाहन्ति, तज्जन्मा शब्दाख्योगुणः तत्तत्स्थानक्रियासम्पादित स्तत्तदाकारो भवति य एष सर्व्वव्यवहारहेतुः। एतेनाकारादि हकारान्तानां स्वरूपविप्रतिपत्तिरपि निरस्ता। यस्य यथा स्थानक्रियासम्पादितत्वं तस्य तथाकारत्वात्। अतएव नास्ति विपर्य्ययादि ध्वनीनां स्वरूपसंलेख इति। सच परा पश्यन्ती मध्यमा वैखरी नामभिश्चतुर्धा। यदा मूले सूक्ष्मस्तदापरा,ततः पश्यन्ती उदरे, मध्यमाहृदये, वैखरी कण्ठेचेति। मध्यमान्ता विषया ध्यायिनाम्। चरमा वहिर्मुखानामिति॥ वाद्यशिल्पलेखक्रियालाघवादयो हस्तयोः, आसनत्वोल्लम्फनादयः पादयोः एवं पायूपस्थयोरपि। दूरान्तिकादिसमस्त-शब्दग्रहणं श्रोत्रयोः सिद्धिः तथाहि एक-

एवैष आकाशः सर्वेषां शब्दानामाधारः ये यदा येन पर्यात्पद्यन्त-इति सच शष्कुल्याकारस्थानीपहितोऽखण्डोऽपि सखण्ड इव-प्रातिस्विकं केवलं स्वाभ्यन्तरस्थं ग्राहयति तदभिमानिनः पुरुषा-निति। यथा गृहान्तरो दीपः तदन्तरस्थं विषयं दर्शयति तदा-वृतान् पुरुषानिति। यदातु ध्यानवशात्तस्मिन्नेवाकाशमात्रे संय-तस्य उपाधिभङ्गे निरुपाधिके महाकाशे चेतसोऽवस्थानं भवति, तदा सर्वएव दूरान्तिकस्थाः सर्वे स्थूलाः सूक्ष्मा श्च शब्दा गृह्य-न्ते, यथा गृहावरण-भङ्गेन सर्वे वहिःस्था भावा दीपेनेति। छाया-पुरुष दर्शनं चक्षुषोः सिद्धिः तथाहि मध्याह्न निरावर-णे देशे समपतितायां स्वछायायां ग्रीवांशे स्थिरीभूतयो श्चक्षुषो-स्तत् संसर्गात् ऊर्ध्वावलोके पृथिव्या ज्योतिर्मयो महा-कायः पुरुष उदेति, तस्य शिरश्छेदा-वलोके मृत्यु, रक्तोत्कृतोच व्याधिरिति-ज्योतिर्दर्शनमपि तयोरेव सिद्धिः, तत्-प्रस्तारः,नासान्तिके चक्षु-षोः सन्निधाने स्वाङ्गुल्योर्योगेन शनैरामर्दे चक्षुस्थं तेजः शनैरुद्भू-तं महद्भूत्वा व्योम व्याप्नोति,यन्मुद्रितेनापि चक्षुषा ज्योतिर्म-यं विश्वमीक्ष्यते। एवमेव प्रणिधानेन संयमा-दन्येषामपि सिद्ध-यः सम्पादनीया इति।

इतिश्रीकाशिराजसागरे वाशिष्टे चारणे कलातत्वे द्विती-य पादस्य तृतीयमाह्निकम्॥

ततस्तेनेश्वरेण मनः सृष्टमिति । प्रकृतेः सामर्थ्यान्मन इति-महत्तत्वमुच्यते तच्चास्मितामात्र महङ्कारः यत्राहं ममेतिप्रत्ययः-शरीरमात्रपरिच्छिन्नः संसार इति गीयते । संकल्पवन्मनः निश्चयवद्बुद्धिः स्मृतिमच्चित्तमिति । अत्रैव महत्तत्वे स्वप्रकाशभूतात्मस्थितेः प्रथमं प्रतिबिम्बं । एतदेव मन आध्याकारेण परिणतमिन्द्रियप्रणालिकया विषयानालम्ब्य सुखदुःखाध्याकारेण परिणमत्प्रकृतेरनादि संयोगात् तादात्म्यात् पुरुषं संसारयति । इदमेव मनो महाबल मनिवार्य्यम् विश्वाकामि यावन्नसंकल्पयेत्, तावद्वागादीनि श्रोत्रादीनि च किमपि कर्तुं न शक्नुवन्ति । बलात् कारितान्यप्यन्यै-र्न लोष्ठादिवत् आदानादीनि साधयन्ति, यथा सुषुप्तौ प्रलये वा । रज्ज्वेव नटः पुत्तलिकां, मनसैवात्मा सर्वान् व्यापारयति । नैतस्य लज्जाभयादिकं संकल्पं निरुणद्धि,निराबाधं संकल्पयति, किन्तु व्यापारात् कथञ्चिन्निवर्तयति, यथा धर्मराजस्य कुन्त्यामभिलाषो,न व्यापारः, राज्यत्यागिनोऽपि राजर्षिविश्वामित्रस्य मेनकायां वन्धयेति । यदैवेदं स्वसंकल्पितं स्वव्यापारसाध्यं निराबाधं प्रमादाद्वा, भ्रमाद्वा, काकतालीयवत् याथार्थ्याद्वा कल्पयति, तदा तदापद्वि प्रमादः प्रवर्त्तयन्नपि न फलमुत्पादयति, यदाकाकतालीयवत् व्यापारन्नान्विताः, तदा फलं साधयति, कथमेत, दुच्यते । यतो नहिर्मुखाः सर्वं बा-

तानुगतिका नान्तर्दृष्ट्या इति । अस्मिन्नेवावसरे पुण्या-पुण्य फलानि अतएव ज्ञानिनाम् नास्ति दुःखम्, यतो विमृश्य कारिणस्ते ।

अस्यैव परिणामा धर्माधर्म-कामक्रोधलोभमोह-मद-मात्सर्य्यैश्वर्य्यानैश्वर्य्य-सुखदुःखभ्रमप्रमाद-तर्कनिश्चय-स्मृतिप्रेम-विचिकित्सादयः सर्वं एव, जाग्रत्सु विषयापेक्षाः, स्वप्नादौ तन्निरपेक्षा ऐहिका आमुष्मिका श्च भावाः । यदास्य भावः सत्वबहुलो-रजस्तमसी अभिभूय, यदेव संयमयति, तत्तस्यायत्तं तदा भवति-आयत्तीभूतं यावांस्तस्याधिकार, स्तावत् सम्पद्यति क्रमात्, यथा-यथायत्तं तथातथा सिद्धिमापद्य विराड्भूत्वा ब्रह्म भवति,-यच्चैताः श्रुतयः—

सस्वराड् भवति, विराड् भवति, यः सर्वज्ञः सर्वविद् य-स्य ज्ञानमयन्तपः, अपाणि पादो जवनो ग्रहीता पश्यत्यचक्षुः-सशृणोत्यकर्णः,,तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते-ऽयनाय, अभयं वै जनक प्राप्तोऽसि, ब्रह्मविद् ब्रह्मैव भवतीत्यादिकाः ॥ अतएवैतदुपदेष्टिनामाचार्य्याणाम् यथाधिकारं मनै रात्म-ज्ञानाय नानोपदेशे विरोधोऽपि परिहृत इति, यथा किमिदं सर्वं, कस्माद् भवति किम्भावयति वेति जिज्ञासुराचार्य्यवान् यस्मादाचार्य्यवान् वेदेति, सफलहेतुकमन्नस्वरूपमवधारयति, तदा स्यान्नगताः सर्वाः सिद्धयः प्रवर्त्तन्ते निवर्त्तन्ते च दोषा इति

कठे
अशब्द मस्पर्शमरूपमव्ययं
तथारसं नित्य मगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते ।
अग्निर्यथैको भुवनम्प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो वहिश्च ।
एकोवशी सर्व्वभूतान्तरात्मा
एकं रूपं वहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्तिधीरा
स्तेषां सुखं शाश्वतन्नेतरेषाम् ।
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीतिब्रुवतोऽन्यत्र कथन्तदुपलभ्यते ।

विद्यार्थी

(संस्कृतमासिक पत्रम्)

वांकीपुरे विहारवन्धुयन्त्रे मुद्रितः-

वयं पूर्व्वमेतस्य पत्रस्य संक्षिप्तसमालोचनं कृतवन्तः । पत्रमिदं सुगमसंस्कृतभाषाऽभिलिखितं विविधविद्याविषयकप्रस्ताव-संयुत ञ्च । पुनरप्यस्य परिचयं प्रदातुं विद्या नामकस्य प्रस्तावस्यांशमेकमतोद्धरामः । यथा

" विद्याविहीनः पशुः "

अस्यां पृथिव्यां जीवानां श्रेणीविभागे मनुष्या सम्यकतया प्राधान्येन वर्णिता विद्वद्भिः, परन्तु त एव विद्याया अभावात्

तस्या मुख्यताया निम्नगां द्वितीयां पशुनाम्नीं श्रेणीं समाश्रयंति। चाणक्ये नाप्युक्तं "स्वंच्छाटपटावृतः। तावद्विशोभते मूर्खो, यावत्किंचिन्न भाषते" एवं चैतद्वाक्यस्य साहाय्यक मिवेदं वचनं, यस्मादेव एतन्निश्चितं भवति यत् सत्यमेव ये विद्यया हीना स्ते पशुसमाना अपि न—यतस्तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वं सदृशत्वं। नचास्मिन् किंचिदपि अपूर्णत्वं केनापि हेतुना यत्र न्यूनीभूतत्वेन सदृशत्व मवलंवेत—किन्तु पशुरूपा एव। न केवलंतद्रूपा एव वा किन्तु पशुभ्योऽपि अधिकतरा इति वक्तुं न कश्चन बाधः प्रतिभाति, यतः पशवस्तु पोषकात्पोषं प्राप्य तदिंगितानि जानंति,तदाश्च तस्मै सर्वदा मुदं वितरंति। यावत् द्रव्यं वा परिश्रमः पशूनां पोषणे तत्स्वामिना विधीयते तावत् ततोप्यधिकतरं ते तन्निदेशं प्रतिपाल्य तस्य परिश्रमं सफलीकुर्वंति। हृथायं व्ययो ऽभूत्, अयं न कर्मसमर्थ इत्यादि स्वस्वामिनो हृदयस्य क्लेशकारिणो विचारान् स्ववर्तने र्निर्मूलान् वितनुतेच। परन्तु अविद्याः पुरुषास्तु-सर्वभावेन सर्वेषां क्लेशदायिनो भविष्यंति। न च ते पश्वादिवत् रज्जुदंडादिभि राक्रमणीयाः स्वमनोगतानुसारेण वर्तमाना वा भवितु मर्हंति। एकवारं पशवस्तु शिक्षया स्वस्वभावं परित्यजंति परमेते न। लोकेप्येषा प्रसिद्धि र्यत् "दास्यं तु विदुषः सौख्यं मूर्खाणां स्वामिभावत इति" अर्थात् विदुषां दास्यं, मूर्खाणां स्वामिभवनादपि सौख्यदं"

श्री Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विधिदाम्बुजवासिनी बुधजनाननसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरं भुवि ॥

खण्डं ८ ] दसम्बर ई १८८० [ १२ संख्या

सूची



लाहोर

ऐल्बर्ट नामके यन्त्रे दिवानाथराम नामधेयेन मुद्रितः

विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।

---

मूल्यादीनां नियमः।

| | | | | |
|---|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं ... | ... | ... | २।‌ ०|
| „ पश्चाद्देयं ... | ... | ... | ३।‌ ० |

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति।

नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगमहिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्षकार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे प्राप्तव्यः। कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं।

अस्मत्समीपे प्राप्तव्या।

॥ कलि धर्म्माः ॥

एतान्यक्षराण्यवलोक्य नैतन्मनसि विचार्य्यं, यदयं कलिकाले ये नवीना धर्म्माः खृष्टीयमाहम्मद-ब्राह्मार्य-प्रभृतयः सम्भूतास्तेषां स्वरूपमशेषतः कथयितुं प्रवृत्ताः ; यतो नवीनानामपि तेषामिदानीं पण्यशकटवत् विपणापणग्रामनगररथ्यावटवट्टप्रमुखेषु मानव सञ्चार स्थानेषु, बालवृद्धवनितानरेष्वपि च सर्व्वस्मिन्नेव समये विविधभङ्ग्या गुणदोष व्याख्यानेन सुदूरमेव तिरोहितम् नवीनत्वं। किं बहुना साम्प्रतमस्मद्यस्यास्मासु भारतकुलललनास्वपि लक्ष्यते तत्तन्नवधर्म्माणामभिव्यक्तिः, कासु च तासु सम्यगधिकार एव, तद्वशेन ताः सुचिराचरितां योषितां नैसर्गिकभूषणं त्रपां बलात्तिरस्कृत्य प्रागल्भ्यातिशयेन साधारण-सभाधिवेशनमुखेषु पुंस्थलनस्थानेषु प्रचरन्ति, यास्तु न तथा प्रागल्भ्य माचरितुं समर्थास्ताः श्वश्रुयाद्य प्रमुखान् स्वभर्त्तृपोष्यवर्गान् नियतं दुर्व्वचसाधिक्षिपन्त्यः कथंकथमपि बहिर्गमनावसरं प्रतीक्षन्ते ।

न वा कलिधर्म्मपदेन शठता, वञ्चना, बन्धुताऽभाव,स्वार्थपरतादयो वर्त्तमान मानवचारित्रलभ्यावगाह्या विद्वेषीयग्रिष्ठासहचरा धर्म्मा अस्माकं लक्ष्यीभूता किन्तु—

> समुद्रयातास्वीकारः कमण्डलुविधारणं ।
> द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
> देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।

मांसादनं तथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥

दत्ताया श्चैव कन्याया पुनर्दानं वरस्य च ।

दीर्घं कालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥

महाप्रस्थानगमनं गोमेधञ्च तथा मखम् ।

इमान् धर्म्मान् कलियुगे वर्ज्यानाहु र्मनीषिणः ॥

इति वृहन्नारदीये

॥ तथा ॥

दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः ।

देवरेण सुतोत्पत्ति र्दत्ता कन्या प्रदीयते ॥

कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।

आततायिद्विजाग्रयाणां धर्म्मयुद्धेन हिंसनं ॥

वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशितः ।

वृत्तस्वाध्याय सापेक्षमघसङ्कोचनं तथा ॥

प्रायश्चित्त विधानं च विप्राणां मरणान्तिकं ।

संसर्गदोषः पापेषु मधुपर्कें पशोर्वधः ॥

दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।

शूद्रेषु दासगोपाल कुलमित्रार्द्ध सीरिणाम् ॥

भोज्यान्नता गृहस्थस्य तीर्थसेवाति दूरतः ।

ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियाऽपि च ॥

भृग्वद्रि पतनञ्चैव वृद्धादि मरणं तथा ।

एतानि लोक गुप्तयर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्व्वकं बुधैः ॥

एतएव कलिधर्म्माः। साम्प्रत मेतेषां यथाशक्ति समालोचनं क्रियते।

अहो कीदृक्मनीषित्व मेतादृग्धर्म्म प्रवर्त्तकानां ! नैते कलि-धर्म्माः परमेतेषामेव फलं कलिः ; यावदेतेऽस्मद्धर्म्मपुस्तकेष्ववकाश मधिगतास्तावदेव कलिकालस्य प्रवृत्तिः, एतएव कलिकालस्य त-ज्जनितस्वार्थ्यगौरवनाशस्य च कारणं, अत्रैतदपि कथ्यते यन्नैषां सर्व्वं एवास्मदुपकारकाः। अथवा न ते कदापि कस्या प्युपकारका आसन्, ते नैसर्गिकासभ्यता-प्रभवाः तेषां निषेधस्तु सभ्यतावर्द्धनेन सह सम्भूत एव, कमण्डलुधारणा,नरमेध, गोमेध, भृग्वद्रिपतना, सवर्णविवाह, वृद्धादि मरणादयस्तु समाजस्य स्वास्थ्यस्य च महा-क्षतिकरास्तेषां निवृत्तिं प्रति सहजत एव सभ्यतावर्द्धनेन चेतो धावति न विधिमपेक्षते, तथापि वयं तादृशावनतधर्म्मनिवर्त्तकानां कलिधर्म्मप्रवर्त्तकानां समीपत एतन्निबन्धनाधमर्णाएव किन्तु ते महोपकारकरान् कति चिद्धर्म्मान्निषिध्य यन्महापकारं कृतवन्त-स्तत् सन्निधौ प्रागुक्ता शुभनिवर्त्तनरूपं कार्य्यमतीवाकिञ्चित्करमेव। पश्यत

समुद्रयात्रा स्वीकार निरोधनेन विगदपगतं ते रत्नमुसम्पदां, समूलं निहत मस्मद्वाणिज्यं, सुदूर मपगतो धनागमः, प्रकृतं सर्व्व·

तीङ्गततरं दारिद्र्येण ; ततःप्रभृत्येवापरदेशिनो भारत भूमिभाग-
त्यात्रत्यपण्यनिचयानन्यत्र नीत्वा प्रभूतधनागमं कर्त्तुं मारेभिरे ।

भारत वासिनस्तु वर्षाम्बुसिक्ता वानराइव सत्यपि साधने निश्चेष्टा बभूवु: ; किञ्च सांयात्रिकानां गमनागमनमन्तरेण साधु-परिखीभूतो भारत जलनिधिरनायासेनैवापरै रायत्तीकृत: ।

दीर्घकालं ब्रह्म चर्य्यं निषेधयद्भि: कृत एवास्माकमुन्नतिमूले सुदारुण कुठाराघात: । भारती ये राय्यै र्हिजैर्यत् सर्व्वशास्त्रेषु नै पुण्य मधिगम्य सर्व्वतो मुखी समुन्नति: कृता दीर्घं ब्रह्मचर्य्यानु-ष्ठान मेव तन्मूलम् । एतस्य निराकरणेन वेदाध्ययनं निराकृतम्, तेन मूर्खताया सम्यगाविर्भाव: । येनेदानीं चतुर्व्वेदीनां वंश्या गायत्री पाठमपि न जानन्ति तथा भट्टाचार्य्याणां पुत्रा: स्व नाम लेखना-वसरे गलद्‌घर्म्मकलेवरा भवन्ति । न केवल मेतावतैव पर्य्याप्तं वि-विधानर्थमूलस्याकालमरणहेतो र्महादारिद्र्य हचवीजस्य प्रजा-क्षय करमहाराचसस्य वाल विवाहस्य तावदेव प्रवृत्तिर्यावद्‌ दीर्घं ब्रह्मचर्य्या नुष्ठान पूर्व्वकं वेदाध्ययनस्य निवृत्ति: । पूर्व्वं पुत्रमुख दर्शने नैव जनानां चरितार्थता बभूव साम्प्रतन्तु पौत्रस्य पौत्रदर्श-नं विना बहूनां न तृप्ति मुपैति चेतस्तत एव वाल्यविवाहा नुष्ठान-स्यातीवाप्रवकं जातं । किन्तु न ज्ञायते यदेतेन न केवलमारब्धस्य पौत्रपौत्रदर्शन रूपस्य कार्य्यस्य वैफल्यं किन्तु स्वपुत्राकालमृत्यु रूपस्यानर्थस्य च सम्भव: ।

"गृहस्थस्य तीर्थसेवाति दूरतः"—

पूर्व्वोक्त विधिद्वयेनास्माकं ज्ञानं धनानि च दूरीकृतानि साम्प्रत मनेन दूरतीर्थसेवानिषेधरूपेण विधिना साहसशौर्य्यादयो ये चावशिष्टा आर्य्य धर्म्मा स्ते सर्व्वे एव निराकृताः। ततः प्रभृत्येव परदेश दर्शन ज्ञान वञ्चिता आर्य्यवंश्या दूषितानपि स्वस्वग्रामटीकाचारव्यवहारादीन् बहुमन्यमाना अन्येषां स्वाचारानपि दूषयन्तः परस्परं प्रति वैरिभावापन्नाः परस्परं सावज्ञचक्षुषा पश्यन्तो महतीं विशृङ्खलामुत्पादयामासु र्येन दूरं गतस्तादृक् दृढरूपं परम्परागत मेकतावन्धनं, दूरंगतः स सर्व्व त्राकुण्ठितो दुर्द्धर्षः साहसः, समधिकृतानि च भृशं चेतांसि भयेन, जातञ्च सर्व्वं शङ्कास्थानं येन कुटिलताया आविर्भावः।

एवमादिविषय पर्य्यालोचनेनैवोक्तपूर्व्व मस्माभि "दृश्यमनोचित्यं कलि धर्म्मप्रवर्त्तकानामिति" यान् यानुपायानवलम्ब्यार्य्याणां भारते ज्ञानधनमानगौरवभरा सर्व्वविध-समुन्नतिमासाः सर्व्व एव ते कलिधर्म्मप्रभावेन निषिद्धा अतएव विपरीत फलागमः। इत्यलं।

॥ शजाहद्धिः ॥

पूर्व्वं वयं विवाहशीर्षकं प्रस्तावे मैलयस साहिबस्य नामोल्लेखं कृतवन्तः परं तस्य कीदृशो सम्मति रिति न तत्र स्पष्टी कृतमस्मा-

भिः । अतएव पाश्चात्यशास्त्रविज्ञानरहितानां चेतस्यवश्यं महती जिज्ञासा वर्त्तते कोदृङ्मतं मैलथस साहिबस्येति ; अनेनैव कारणेन वयं सम्प्रति प्रजावृद्धि विषयकं तदीयाभिमतं संक्षेपेण प्रथयितुमुद्यताः ।

स हि स्वकीये प्रजावर्द्धनविषयके पुस्तके प्रथमं प्रजावृद्धि निरोधकान् हेतन् द्विधा विभेजे । यथा केचित् प्रतिबन्धकाः (preventive) अपरे प्राकृताः (positive) ; तत्र च प्रथम श्रेणीषु चिरकौमार व्यभिचार, वन्ध्यतावीजानुत्क्षेपादयो निवेशिता द्वितीयास्तु च श्रेणीष्व कालमृत्युहेतवः ; ते च यथाऽऽवश्यकाल्पाधिगमोऽतिश्रम, ऋतुषु यथोचितसावधानताराहित्यं, दारिद्र्यातिशयः, कुमाराणामपालनं निखिलकार्य्याणामत्यन्तानुष्ठानं, पीडा, महामारी, सांक्रामिकरोगप्रचारो, युद्धप्रवृत्ति, दुर्भिक्ष मेतान्येवाकाल मरण कारणानि स एवं विभज्य पुनस्तान् त्रिधा विभेजे। यथा केचिन् न्यायानुगताः केचित् पापकराः, केचिच्च दुर्द्दैवपरिपाकरूपाः ।

स चिरकौमारव्रतपालनं न्यायानुगतं प्रजावृद्धिप्रतिरोधकं कथयति, व्यभिचारवीजानुत्क्षेपादीन् पापकरप्रतिबन्धकश्रेणीषु गणयति, तथा पीडावन्ध्यतादीन् दुर्द्दैवपरिपाकस्यान्तर्निवेशयति । यत्र यत्रैतेषां प्राबल्यं तत्र प्रजावृद्धे र्दौर्बल्यं ; यत्र चैतेषां दौर्बल्यं तत्र प्रजावृद्धेः प्राबल्यम् । एवमेतेषामप्येकतमस्य प्राबल्येऽपरस्य दौर्बल्यं दृश्यते

सन्त्येतेभ्योऽतिरिक्ता अपि प्रजानां वृद्धेः क्षयस्य वा हेतवः; यथा देशस्वभावः। देशविशेषस्य प्रकृत्यनुसारतः प्रजावृद्धेः क्रमो लक्ष्यते तत एव कस्मिंश्चिद्देशविशेषे पञ्चपञ्चाशदधिकपञ्चशत वत्सरेषु प्रजासंख्या द्वैगुण्यमाप्नोति कस्मिंश्चित् पञ्चविंशति वत्सरेष्वेव प्रजासंख्याया द्विगुणता भवति। तथा देशविशेषस्य शस्योत्पत्ति संश्लिष्ट नियमानुसारेण च प्रजानां वृद्धेर्ह्रासस्य वा क्रमो जायते। यत्र प्रजासंख्यापेक्षयाऽधिकं खाद्यमुत्पद्यते। तत्र शीघ्रं प्रजासंख्या वर्धतेऽन्यथात्वे फलमप्यन्यथा भवति। देशाद्देशान्तरगमनपूर्व्वकोपनिवेशस्थापनमपि प्रजावृद्धे र्महत् प्रतिवन्धकम् साधनञ्च।

वस्तुतस्तु स्थिरीकृत मेतत् साम्प्रतं यत् यदि यथाऽवश्यक-खाद्यद्रव्यादीनां लाभो भवेत् न चाप्यन्यत् प्रतिवन्धकीभूतं महन्निमित्तं सम्भवेत् तदैव पञ्चविंशतिवत्सरेषु प्रजासंख्या द्वैगुण्य माप्नोति। (क्रमशः)

॥ श्री रामस्तोत्रम् ॥

(१८)

तपो वा, विद्या वा, नहि नहि तु हेतुर्द्विजनिता,
दयाया दैत्यारे, नंतु निखिल-तीर्थाटनमपि।
अनन्यप्रेमत्वं; विटपि मृगवन्धुस्त्वमसि यत्
हरे राम त्राहि त्रिभुवन गुरो! मामगतिकम्॥

(१९)

क्व वैकुण्ठस्वामी, क्व च नरजनुः, क्वापि गहनं ?
क्व तन्नित्यं धाम ? त्वमसि वनचारी सह मया ।
दयादीप्तोदीने, नरनयनगामी त्वमसि यत्
हरे राम इत्यादि—

(२०)

दया—दीप्ता दीने, द्रुपदनृपकन्या कुलवधू
रनाथा याता सा नृपसदसि दुःशासनकरे ।
भवन्तं त्रातारं निजवसनरूपं गतवती,
हरे राम इत्यादि—

(२१)

दया—दीप्ता दीने, लवणजलधेरोधसि, यदा
सहोदर्य्यः शत्रोः, सकृदकथयत् त्राहि मधुहन् !
असौ त्वत्तोभ्रातुर्भयमपहरन् राज्यमगमत्
हरे राम इत्यादि—

(२२)

पुरा शप्ता, भर्त्तुं श्वरणशरणा, गौतमवधू,
र्दुरापं, तं वन्दे वरममरणी, त्वत्पदरजः ।
कृपायाः किं चित्रं, तदिह धरणी सा गतवती !
हरे राम इत्यादि—

ङ्गेन स्योनन्त इत्यस्य सदनांगत्वं तस्मिन् सीदेत्यस्य सादनाङ्गत्वमिति निर्णयः, स्योनन्त इत्यस्य तस्मिन् सीदेत्यनेनैकवाक्यत्व बलाद्यथा कथञ्चित्सादनसामर्थ्यरूपं लिंगं कल्पयित्वा अनेन विशिष्ट मन्त्रेण सादनं कुर्य्यादिति श्रुतिः कल्पनीया, सदनप्रकाशन-रूप प्रत्यक्ष लिङ्गेन कल्पितया स्योनन्त इत्यस्य शीघ्रं सदने विनियोगे सति, तेनैव मन्त्रस्य नैराकाङ्क्ष्याद्वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते, विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः। एवं वाक्येन प्रकरणस्य, प्रकरणात् क्रमस्य, क्रमात् समाख्याया बाधोवेदितव्यः। तथा श्रुत्या वाक्यादेरपि बाधः। तदेव मङ्गता-बोधक प्रमाणानि श्रुत्यादीनि निरूपितानि ।

"कदाचनस्तरीरसि" "हे इन्द्र! तुम अपने आश्रितों (हमारा) का नाश नहीं करते हो" इस (ऐन्द्री) इन्द्र विषयक श्रुति (मन्त्र) के द्वारा गार्हपत्य अग्नि की उपासना करता है। यह बात अग्नि होत्र प्रकरण में है। देखो यहां मन्त्रका अभिधेय इन्द्र है, उस इन्द्रार्थको प्रकाश करने वाली शक्ति को हेत मान कर लिङ्ग अर्थात् अनुमान से 'यह मन्त्र इन्द्रोपसना का अङ्गी भूत है' ऐसा विचार होसका परन्तु "ऐन्द्र्यागार्हपत्यमुपतिष्ठते" "इन्द्र विषयक मन्त्र के द्वारा गार्हपत्य की उपासना करता है" इस वाक्य के अन्तर्गत "ऐन्द्र्या" इस पदमें तृतीया विभक्तिकी श्रुति में और "गार्हपत्यं" इस पदमें द्वितीया की श्रुति से यह मन्त्र गार्हपत्योप-

सना के अङ्गरूप से विहित होता है जिससे इन्द्रोपासना में इ का विनियोग नहीं होता है, क्योंकि श्रुति साक्षात् अन्वय बोध करा ती है, लिंग ऐसा नहीं होता जब अर्थ पर ध्यान देकर हम सम- झेंगे कि इसमन्त्र का अभिधेय इन्द्र है तबही लिंग की प्रवृत्ति होगी; और यह भी नहीं कहा जाता कि यहां "ऐद्रेयन्द्र मुपति- ष्ठते" "इस इन्द्रविषयक मन्त्रके द्वारा इन्द्रकी उपासना करता है" ऐसी श्रुतिकीकल्पना कर अर्थका नियोग करें क्योंकि ऐसी कल्पना का यहां सभव नहीं ऐसी कल्पना का स्थल और है जैसा "अग्नये जुष्टं निर्व्वपामि" यहां पहले इस मन्त्र का विषय निर्व्वाप है अर्थात् यह मन्त्र निर्व्वाप क्रिया को प्रकाश करता है ऐसा विचार कर ऐसी श्रुति की कल्पना की जाती है कि "अनेन निर्व्वापं कु- र्य्यात् "इस मन्त्र के द्वारा निर्व्वाप क्रिया करें" इस स्थल में श्रुति की कल्पना में किसी प्रकार का प्रति बन्धक नहीं है। ऐसे "स्यो- नन्ते सदनं करोमि । घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ" । घृत की धारा से मैं तुझ केलिये सुखकर आसन (बैठने का स्थान) बनावता हूं, मैं उसे तुम्हारे स्वीकार करने का योग्य बनाता हूं, उसमें तुम बैठो उस अमृत स्थली में तुम स्थित हो" इन मन्त्रों में से "तस्मिन् सीद उसमें बैठो इस वाक्यान्तर्गत तत् (तस्मिन्—उसमें) शब्द पूर्व्व वाक्य से इस का सम्बन्ध जनाता है अर्थात् मैं ने जिस आसन को बनाया उसीमें

वैठो ऐसा अर्थ प्रतीत होता है जिससे दोनो मन्त्रों की एक वाक्यता जान पड़ती अर्थात् वाक्य प्रमाण से इन मन्त्रोंका एक मन्त्रवत् आभास होता है, परन्तु लिङ्ग से उन को भिन्न भिन्न मन्त्र समझते हैं, इसलिये यहां वाक्यसे लिङ्ग का वाध हुआ। ऐसा वाक्य करके प्रकरण का वाध होता है, प्रकरण से क्रम का क्रमसे स्थान का इत्यादि।

यह नियम मीमांसकों के प्रमाणों को भली भांति जानने के-लिये मूलाधार स्वरूप हैं। शास्त्रके तात्पर्य्योंको स्थिर करने में वेही सब प्रमाण और इनके विनियोग में जो नियम (परदौर्वल्यरूप) कहा गया, वह प्रधान रूपसे उपयोगि है॥ यद्यपि पहिले मैं इन प्रमाणों का विषय स्पष्ट रीति से कह चुका तो भी यहां इतनामात्र कहने चाहता हूं कि श्रुतिसे साक्षात् अर्थका बोध होता है, उसी अर्थ बोधके वास्ते किसी प्रकारका तर्क वा विचारका आवश्यक नहीं होता, अथवा पदों की प्रकृति और व्युत्पत्ति आदि पर भी ध्यान नहीं देना पड़ता। लिङ्ग से अर्थबोध होने के पहिले शब्दों को व्युत्पत्ति प्रकृति आदि पर विचार करना पडता अर्थात् प्रथम उन सबको अच्छी तरह जानकर फिर अनु-मानसे शब्द के अर्थका विनियोग करना पड़ता। श्रुति को हम प्रत्यक्ष और लिङ्ग को अनुमान प्रमाण कहसके हैं, यहां मीमांसक और नैयायिकोंके बीच विशेष विभेद दिख पडता है मीमांसक

लोग श्रुति को प्रत्यक्ष सबसे बडा मानतेहैं और नैयायकों ने लिङ्ग (अनुमान) को मुख्य प्रमाण कहा है। परन्तु मीमांसकों की श्रुति और नैयायिकों का प्रत्यक्ष एक नहीं क्योंकि मीमांसक लोग चाहे पागलके मुखसे हो चाहे कविके मुखसे हो जैसा सुनते हैं उसी को हि श्रुति प्रमाण सिद्धमानते हैं, नैयायिक लोग भ्रम प्रत्यक्ष को प्रमाण नहीं मानते हैं। वाक्य वह है जो अनेक पृथक् पृथक् पद वा शब्द व्याकरण के नियमोंके अनुसार ऐसे एकत्र समाविष्ट होवें कि एक अर्थको बोधकरावें। इस प्रमाणसे वचनोंका तात्पर्य्य विशद किया जाता है। ऐसे श्रुति लिङ्ग और वाक्यसे जब किसी वचनका तात्पर्य्यग्रह नहीं होता तब प्रकरणसे अर्थ निर्णय करना पडता, प्रकरण शब्दका अर्थ सन्दर्भ वा प्रस्ताव तब जिस प्रस्तावमें वह वचन दिखपडता उसी प्रस्ताव के अनुसार उस वचन का प्रधानत्व, अङ्गत्व इत्यादि विषयों का निर्णय होता है। यह स्थिर है कि विषय सकल पर २ सन्निवेशित हो कर मनमें एक प्रकार के भाव उदित करते हैं और पृथक २ सन्निवेशित होकर दूसरे प्रकारके भावों को उदित करते हैं क्रम शब्द का अर्थ विषयों का पर २ (एक के पीछे दूसरे का) सन्निवेश, इस से भी अर्थका निर्द्धारण होता है अर्थात् जब पूर्व्वोक्त प्रमाणों से कुछ निश्चय नहीं होता तब उसके क्रम देख कर निश्चय होता है, और जब इनसे किसी विषय का सिद्धान्त

॥ प्राप्तपत्रम् ॥

(आर्त्तनादः)

"यज्ञोपवीतं, परमं पवित्रं, वृहस्पतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" ॥

पठ्यत इयं हि प्रार्थना यज्ञसूत्र धारणसमये भारत वासिभिः सर्व्वैरेव द्विजैः। न वय मत्रैतद्व्याख्यान प्रयासं स्वीकुर्म्मः। इदानीं भारत वासिनां सर्व्वमेव मन्त्रनिहित मित्यतः किं नु कष्टतरम् ? दुर्व्वाप्रकृतीनां वाक्यमेव वलमिति प्रतीयते सर्व्वदैवास्माभिः। अस्माकमुन्नतवृत्तयः कालेनैवमधोगतिं प्राप्ता यत्र वयं तन्मनसाऽपि चिन्तयितु मलम् । वय मधुना कार्य्यतः सर्व्वेषामहितमप्रियम्बा चरन्तोऽपि केवलं मन्त्रपूर्व्वकं जलगण्डूषमेकं विसृज्य यथोचित सेवामन्तरेण दुःखदुःखेन परित्यक्तजीवितान् पितॄन् तथाब्रह्मस्तम्ब पर्य्यन्त जगत् सन्तर्पयन्तः स्वकीय सदाचारस्य पराकाष्ठां दर्शयामः। अन्नदानेऽप्यस्माकमेवं व्यवहार एव परमार्थतो वुभुक्षिता निरुच्छायावैदेशिका अतिथयो द्वारि समेत्यो चैरार्त्तनादं कुर्व्वन्ति, नास्माकं तत्र कर्णपातः, कदाचित् भ्रमेण कर्णपाते जाते वयमति कुधा दारुणं वचः प्रयुञ्जाना स्तानातिथीन् गृहान्निष्कासयामः। परमन्न पूर्व्वकमेकघटकस्याप्यद्धसिकरा मार्द्रीचतान्, विश्वान्, देवान्, पितॄन्, पिपीलिकाप्रमुखान् कीटान्, पतङ्गान् भूतादींश्चोद्दिश्य विसृज्य गृहस्थेषु कृतकृत्यतालाभ मुपकल्पयामः। श्रूयते बहवो

वरिवस्यानन्तर मेव द्वारं पिधाय तथा विस्रष्टानप्यन्नान् घटकेभ्यो रक्षन्तीति ! ! एवं सर्व्वेष्वेवास्मन्नित्य नैमित्तिक क्रियाकलापेषु केवलं मन्त्रोच्चारण ( अर्थावबोधाभावात् तदप्यशुद्धतरं ? ) मेवावशिष्टम् । शिशूनां रोदनमिवास्माकं मन्त्रमेव बलं सञ्जातम् । श्रुति यत् यदसाध्यमस्ति तत्सर्व्वं साधयितुं यथोचित क्रियाक्षमता अनधिगतार्थानामत एवाशुद्धरूपाणा मसिद्धानोम्बा मन्त्राणां प्रयोगं कुर्म्मः । अहह ! नजानीमस्तावत् कदा कोऽयं बालभावो दूरं गमिष्यति । अहो विषमः संवृत्तो बालभावो भारतवासिनां येन क्रमेणा स्मासु सर्व्वेषामेव दोषाणा माश्रयो जायते येषां प्रधानतमः सर्व्वानर्थमूलं वाक्यविलासः । न ज्ञायते कथं महाराक्षसस्येव भयङ्करस्यास्य सर्व्वव्यापिनः समूल मुन्मूलनं भविष्यतीति । ब्राह्मणाः किं न यूय मेकदा तेजो वीर्य्य सपदा विजयिवेगेन भारत मलङ्कुर्व्वन्तोविजय पताकामुत्थापितवन्तः ? किं न युष्माकं शासनं हिमालयावधि कुमारिका पर्य्यन्तं सर्व्वैरेव शिरसि विधृतम् ? किञ्च न यूयं ज्ञानद्वारा पृथिव्याः सर्व्व जातीनामप्युद्देष्टारो गुरवः स्थ ? इदानीं क्व वस्तत्तेजः ? क्व तद्वीर्य्यं ? क्व सज्ज्ञान प्रभावः ? क्व च तद्गौरवम् ? अहोकष्टं ! इदानीं वो वृत्तिः = परपदलेहनं, धर्म्मो = वाक्यविवादः व्रतं = प्रतिनियतं न्याय पथस्खलनं, पौरुषं = चाटुकारिता ! अधर्मे श्रद्धा, तेजसिघृणा, मनुष्यत्वे वैराग्यम् । धिक् युष्मान् विस्मृतार्य्यभावान् ! इत्यलम् ❁ रा. भ.

❁ "एतेऽस्मिन् ग्रामविशेषवासिनो" द्विजाना माचार व्यवहा-

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ८ ] नवम्बर ई १८८१ [ ११ सङ्ख्या

सूची



लाहोर
ऐम्पट्टै नामके यन्त्रे दिवानराय नामधेयेन मुद्रितः

॥ लवपुरे ॥

॥ राज प्रतिनिधेः ॥

॥ शुभागमनम् ॥

(१)

जयतु जलधिसीमक्ष्मापते ! स्वागतं ते !
भवति विभवसारे ख्यितेऽन्या किमाशीः ? ।
स्फुरति न च नृपैषा स्तुत्यवाक् वश्यवाचि
त्वयि मम तनु वाचो भानु भासीव दीपः ॥

(२)

अथान्यद्वैचित्र्यं स्फुरति यदि वाणी न च पुन
स्तवौपम्यं स्वामिन् भुवि भवति दृग्गोचरगतम् ।
प्रतापैरादित्यं जलधिमपि गाम्भीर्य्य विभवैः
कलानाथं कीर्त्त्या गुरुममलबुद्ध्या जितवतः ॥

(३)

अतो व्यावृत्तोऽहं स्तुतिवचनगानात्तवविभो !
भवन्तं श्रीमन्तं शुभदमनु याचे विनयतः ।
कृपावृष्ट्यावृष्ट्या चिरमुकुलितज्ञान विटपं
सदाशा संसिक्तं कुरु नृप फलाढ्यं लवपुरे ॥

वर्त्तमान मासोहि भारत वर्षोयेतिहास प्रधानोपकरण

प्रसूर्विशेषतो पञ्चनददेशस्य त्वदीय प्रधाननगरस्य लवपुरस्य च गौरव सम्वर्द्धनहेतुः सुख्यातरूपः । निखिल भारतैकशासितृराजप्रतिनिधेः शुभाधिगमनं, समागमन च समस्तानां निम्ननृपतीनां, सानुचर सैनिकानां, ततो नृपतीनां चक्रवर्त्ति प्रतिनिधि सन्दर्शनं, तस्य च सकल राजक प्रतिदर्शनं, सभाधिवेशनं, कृत्रिमयुद्ध-प्रदर्शनमेवमाद्यशेषोत्साहानन्द-प्रवर्द्धनक्रिया-कलापदर्शनेन निमेषवद् व्यतीतान्यत्रत्यानां दिनानि ।

अन्यच्चैषां नृपतीनां प्रधानतमराजपुरुषस्य च स्वर्ण रजत-मणि-मालाद्यलङ्कृत विचित्रोपकार्य्याभिरामारामादि-पर्य्यवेक्षणेन नोपजाता तृप्ति र्नेत्रद्वन्द्वस्य । एतेषां पूर्व्वोक्तानां वृत्तानामेकैकस्याप्यशेषतो वर्णनेन, न जाने, कति पूर्य्यन्ते संख्या विद्योदयस्य, सर्व्वेषान्तु कथैव नास्ति । अतस्तत् कार्य्यं प्रशस्तपत्र सम्पादकानां हस्तेषु निक्षिप्य कतिपयैरभ्यर्थन वचनैरेव प्रबन्धमिमं कुर्म्मः ।

सर्व्वाशिषां फलजुषि त्वयि चक्रवर्त्तिन् !
स्तोत्रोपसाधन-वचो पुरतो निवृत्तम् ।
लोकोत्तरं तव गभीर दयार्द्र भावं
दृष्ट्वा जहाति न परं वचनञ्च वाक्‌ ।

(२)

एताश्च भूरमित साहस शौर्य्य वीर्य्यैः

राय्यैश्चिरं सुचरितैः परिरक्षिताऽभूत् ।
ये केवलं न निजयो र्भुजयो र्बलेन
विद्वत्तयाऽस्म निखिलं भुवनं हसन्ति ॥

(३)

घोरे तमस्तमसिगूढ मचिन्त्य रूपं
ये चिन्मयं पुरुष माद्यमनाद्यनन्तम् ।
सारस्वताम्बुपरिसेवन शुद्ध भावा
योगावरुद्ध मनसा ददृशु पुरस्तात् ॥

(४)

विद्याः किलाष्टदशधा रसनाग्र भूमौ
येषां पुरा ननृतुरुज्ज्वलभावरम्याः ॥
भक्तिप्रसन्नहृदया भवने सदासन्
सिद्धि प्रदाय दशधा ननु सिद्धविद्याः ॥

(५)

ये सम्मता जनपदेष्वखिलेषु येषां
नाम स्मृतेर्मनसि भीति रभूत् परेषाम् ।
रम्यं यशो नहि परं मनुजा धरायां
मुच्चैर्जगुः प्रतिदिनं दिवि किन्नराश्च ॥

(६)

तेषां प्रसूस्तुहिनभूधर-वेष्टितान्ता

विभ्राजते जलनिधिः परिखेव यस्याः ।

संहृष्टता भवनिभृत् धरणीव मद्य

त्वत्पाद पङ्कज रजोवहु मन्यमाना ॥

(७)

पूर्व्वं तथा समनुभूय सुखं श्रियं सा

दुर्दैव सन्ततमस्यधुना निमग्ना ।

हा कार्त्तिकी विमल-चन्द्र-सुधाव धौता

राका सुखाय सुचिरं न भवत्यसुष्याः ॥

(८)

विध्वस्त पूर्व्वं जयश्री ऽखिल वीर्य्य सम्पत्

सैषावनि र्निपतिता भवतां भुजेषु ।

मेवास्त वीक्षण लवं तदितो वितीर्य्य

संस्थापयाशु रिपुघ्न्! पुनरार्य्यभावम् ॥

(९)

हर नृप करभारं साम्प्रतं दुर्गतेय

मवनि रवनि नाथ प्राप्तवाधा सदैव ।

गत निज पर भावं न्याय मैत्रं विचिन्त्य

वितिमनिश मशेषां भारतीं त्वं प्रशाधि ॥

* रिपुघ्न 'रिपन' [illegible]

॥ श्री रामस्तोत्रम् ॥

(१४)

श्रुति, स्तीर्थं, चेतोऽच्युतपदयुग ; स्थितमिति न
शुभं सर्व्वं सेवाकृति दिशति वृन्दावनमपि ।
अयोध्या,सापि त्वत्पद-नलिन रेणोरनुमिता
हरे राम त्राहि त्रिभुवन गुरो ! मामगतिकम् ॥

(१५)

न मन्त्रो, नोगोत्रं, न च बुधविधि, र्नाम नहि वा,
यदुद्देश्यं पिण्डं प्रपतति गयायां स निरयात् ।
समुत्तीर्णस्तूर्णं ; तव चरण चिह्नस्य महिमा !
हरे राम इत्यादि—

(१६)

चरित्रं ते चित्रं, जलधि तट नीला-चलपुरि
प्रसादान्ने पुण्ये नहि नरविभिन्ने मतिभिदा ।
द्विजो भुङ्क्ते भक्त्या श्वपचकरस्पृष्टं स च हरि
हरे राम इत्यादि—

(१७)

द्विजोऽपि स्वाचारो विदितकुलजन्मा भवति चेत्
हरौ श्रद्धाहीनः श्वपच इव किं स्याद् द्विजतया ? ।

यदिस्याचाण्डालो हरिचरणवेवो, स हि वरो

हरे राम इत्यादि—

॥ भारतवर्षस्य दशापरिणामः ॥

अहो ! विषमं परिवर्त्तते जगच्चक्रम् । न केवल मेतदन्तर्गत जडानामनेन सह परिवृत्तिः परं तेषां दशाया, निसर्गस्यापि, तथा तदुभयपरिवृत्त्या जीवानां प्रकृताभ्यन्तरीणभावाना ञ्च परिवृत्ति र्जायते ; गच्छतीति व्युत्पत्तियुक्तस्य जगच्छब्दस्य यौगिक मिमाभिधानं । एतदन्तर्गतानि सर्व्वाण्येव सर्व्वदा गच्छन्ति ; न सन्ति क्वाप्यपि स्थिराणि, अस्यैतादृग्भङ्गुरभावमवलोक्य बौद्धाचार्य्यैः सर्व्वं क्षणिक मित्यनुमितम् ।

दृश्यतां तावत् कीदृगासीदवस्था भारतस्य प्रचीन समये, कीदृशी चेदानीं संवृत्ता । यदान्यत् सर्व्वमेव भूमण्डल मन्धतमसा समाछन्न मासीत् तदास्मिन् ज्ञानज्योति रुज्ज्वलं विरेजे । यदान्ये देशा जाङ्गल जीवैस्सादृश्ये च जडभावे मानवे निवासाधिकरणी कृतास्तदानीमत्र सभ्यतायाः कलानाञ्च सकलानां सम्यगुन्नतिर्जाता । साम्प्रतं आमेरिकादेशादागतेनार्थ्यधर्म्म तत्त्वजिज्ञासुना वैदिकाचारप्रेमातिरेकात्तिरस्कृताक्षधर्म्मेण च अलकौट नामधेयेन महोदयेन तत्रार्थ्य सभाया मेतद्विषयिनी पठिता काचिद् वक्तृता । कथित ञ्च तेन पुराङ्गतानां नाद्यापि सम्यक् सत्यता वर्त्तते । एके

नैतिहासिकेन यत् सत्यतया प्रतिपादितं भवति, तदपरेण युक्ति परम्परया मिथ्यात्वेन युज्यते, एतादृशि दशायामितिहासस्योपरि विश्वास निर्भरोऽनुचित एव। अतएव मिश्रदेशस्य प्राचीनतमत्ववादीनां मतं भ्रान्ति-सङ्कुलं नास्ति च तत्र कापि प्रबला युक्ति, यया तदुपरि विश्वासो भवेत्। प्रत्युत सर्व्वं प्रमाणै भारतवर्षस्य प्राचीनतमत्वं प्रतीयते, प्रतीयते च "पीरामिडा" स्थापनाभावानां भित्तिस्थापनादनेक सहस्र वत्सर पूर्व्वमेव भारते शिल्पकलादीनामत्युन्नतिः सम्वृत्तेति। स स्वमतदाढ्यार्य भूयसीं युक्तिं प्रमाणञ्च विविधं दर्शयामास। तस्य मते सक्रेतिस् प्लेटोपियागोरस सोलोमन प्रमुखानां यूरोपीय दार्शनिकानां पुस्तकानि गोतम कणाद पतञ्जलि व्यासप्रमुख भारतीय महर्षि प्रणीत पुस्तकानां छायामात्र मवलम्ब्य विरचितानि। ज्ञानसभ्यतादयो मनुष्यधर्म्मा भारतवर्षादेवापरत्र प्रसृताः, नास्त्येव सा विद्या कला वा या प्रथमं भारत भूमौ नावतीर्णा बभूव"।

अहो पूर्व्वं तादृश सुखोपनत मनोरथ परम्परा समुद्रिक्तोत्साहबलविक्रमादिकं, तज्जनिता मतुलां श्रियं सम्पदञ्च समनुभूय साम्प्रतं कीदृक् दुर्दैव सम्पातं वर्षमिद मनुभवति। दूरं गतः स समुन्नत उत्साहः, पलायितं तत्त्रिभुवन विजयि तेजो, न दृश्यते छायापि तस्याद्भुतविक्रमस्य, सुचिरमस्तंगता श्रोःस्तत् सहचरी

सम्यक् तदनुसरणं कृतवती । सम्प्रति हि भूमिरियं सर्व्वेभ्यो ज्ञा-
नोपदेशं वितीर्य्य स्वयं तदर्थमपरेषां मुख प्रेक्षिणी संवृत्ता, अथवा
न केवलं ज्ञानार्थं जीविकार्थं ञ्चापरेषां भोजनावशिष्टमभि-
लिषति ।

एतादृशावनतेः किं कारणं ? वर्त्ततेऽद्यापि सा हिमालयश्रेणी
दुर्द्धर्षं प्राचीरावलीव धनदरक्षितायां दिशि, वर्त्तते चाद्यापि जल-
निधि र्मंहती परिखेव दक्षिणस्यां काष्ठायां, वर्त्तन्ते च यथायथम-
न्यानि सर्व्वाणि प्राकृत वस्तूनि निवसन्त्यत्र च तेषामार्य्याणां वंश
सम्भूताः (पशुभावापन्नाः) मनुजाः सन्ति च वेदाः पुराणानि तथा-
न्यानि च दर्शन मुखानि शास्त्राणि ; तत् किमियं निपतिता
महान्धकारमये दुःखसागरे, ? कथमज्ञानान्धकारोऽस्मिन् प्रसृ-
तः ? किं कारणं वास्य मनुजानां पशुभावत्वस्य ?

एतेषां प्रश्नानां सदुत्तरं न दृश्यते ; अथवा "प्रतिकूलतामुपगते
हि विधौ विफलत्वमेति वहुसाधनता । अवलम्वनाय दिनभर्तुरभू
न्नपतिष्यतः कर सहस्रमपि"

न अस्माकं मनोऽदृष्टवादप्रवण मावस्था दृष्टवादमाकर्णयन्तो-
वयं स[illegible]त्रैव भवितव्यताया द्वाराणि पश्यामः । अतएव भारत दु-
र्गतिं प्रति भवितव्यमेव कारणत्वेनोपकल्पयामः । हा भगवति भा-
रत विमुखि ! भवितव्यते ! किमेतावताऽपि न ते मनस स्तृप्तिर्जाता

किमस्त्यन्यदप्यवशिष्टं, ? त्वं यूनानदेशं रोमनगरञ्च भारतवदसीम-दुःख सागरे निक्षिप्य पुनस्तयो रुद्धार मकरोस्तत् किं भारतं प्रत्ये-वं तव वैमनस्यतापातः ।

भो भ्रातरो भारतवासिनः ! किमदानीं युष्माभि रप्यालस्ये नावसरो नीयते, सम्यक् प्रतिकूलकारिण्यपि भवितव्यता युष्माक-मुपरि ब्रिटिशशासन माश्रित्य सम्पूर्णं हित माचरति, यस्य प्रसा-दात् युष्मासु वहवः कृतविद्या जाता । बहूनां दृष्टिर्हिताहितमभि वीक्षितुं समर्था । यदीदानीं राजपुरुषेभ्यः सद्गुणानादाय पूर्व्व पू-रुषाचरितं पन्थानमवलम्बेमहि वयं, तदैवास्माकं शिवं भवेत् । इत्यलम्

॥ पुराण कथा ॥

"सुरसरिदिवतेजो वह्नि निष्ठ्यूतमैशम्"

रघुवंशम्

वाक्यमिदं विशदीकर्त्तुं, निम्नलिखितायाः कथायाः साहाय्य मपेक्षितं भवति । ज्ञायते हि कुमार सम्भवाध्ययनेन दक्षकन्या भग-पूर्व्वपत्नी सती पूर्व्वदेहं योगेन विसृज्य स्वजन्मने हिमालयमहिषीं प्रपेदे, तत्राविर्भूय च तपसा शिवं प्रसाद्य पुनरेव तस्य पाणिग्र-हीतिः सम्वृत्ता इति । अतो वयं एतदन्तस्य वृत्तस्य अविस्तार कथनमपहाय प्रकृतोपयोगि परवृत्तं महाभारता दुद्धरामः । यथा

शूलपाणे र्भगवतो भद्रस्य च महात्मनः ।
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥
देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन ।
समागमे भगवतो देव्या सह महात्मनः ॥
ततः सर्व्वे समुद्विग्नाः देवा रुद्र मुपागमन् ।
ते महादेव मासीनं देवीञ्च वरदा मुमां ॥
प्रसाद्य शिरसा सर्व्वे रुद्रमूचु र्भृगूद्वह ।
अयं समागमो देव, देव्या सह तवानघ ॥
तपस्विनस्तपस्विन्या तेजस्विन्याति तेजसः ।
अमोघ तेजस्त्वं देव देवीचेयममा तथा ॥
अपत्यं युवयो र्देवबलवद्भविता विभो ।
तन्नूनं त्रिषुलोकेषु नकिञ्चिच्छेषयिष्यति ॥
तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन ।
वरं प्रयच्छ त्रैलोक्यहितकाम्यया ॥
अपत्यार्थं निगृह्णीष्व तेजः परमकं विभो ।
त्रैलोक्य सारौ हियुवां लोकं सन्तापयिष्यथ ॥
तदपत्यं हि युवयो र्देवानभिभवेत् ध्रुवम् ।
तस्मात् प्रसादं भगवन् कर्त्तुं मर्हसि नः प्रभो ॥
न देव्यां संभवेत् पुत्रो भवतः सुरसत्तम ।

धैर्य्या देवनिग्टह्णस्व तेजो ज्वलित मुत्तमम् ॥

एवं तेषां कथयतां भगवन् वृषभध्वजः ।

एवमस्त्विति देवास्तान् विप्रर्षे प्रत्यभाषत ॥

इत्युक्ता चोर्द्ध मनयद्रेती वृषभवाहनः ।

ऊर्द्धरेताः समभवत्ततः प्रभृति चापि स ॥

रुद्रस्तु तेजोऽप्रतिमं धारयामास वै तदा ।

प्रस्कन्नं तु ततस्तस्मात्किंचित्तत्रापतद्भुवि ॥

उत्पपात तदा वह्नौ ववृधे चाद्भुतोपमम् ।

तेजस्तेजसि संयुक्त मात्मनिसत्त्व मागतम् ॥

ततस्तथा विधाद्भुत तेजस्सम्पन्नो वह्निः सहसान्तर्हितो बभूव ।

देवाश्च वह्निन्विष्य तस्य निह्नवस्थान मुपलभ्य तत्र जग्मुः ।

अथाग्निर्दैवताद्दृष्ट्वा बभूव व्यथितस्तदा ।

किमागमन मित्येवं तानपृच्छत पावक ॥

तमूचुर्विबुधाः सर्व्वे ते सर्व्वे परमर्षयः ।

त्वां नियोक्ष्यामहे कार्य्यं तद्भवान् कर्त्तु मर्हति ॥

॥ अग्निरुवाच ॥

ब्रूत यद्भवतां कार्य्यं, कर्त्तास्मितद्हं सुताः ।

भवतां तु नियोज्योऽस्मि मावोऽत्रास्तु विचारणा: ॥

॥ देवाऊचुः ॥

असुरस्तारकोनाम ब्रह्मणो वरदर्पितः ।

अस्मान् प्रबाधते वीर्य्याद्वधस्तस्य विधीयताम् ॥

अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो ? ॥

यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ।

इत्युक्तः स तथेत्युक्त्वा भगवान् हव्यवाहनः ॥

जगामाथ दुराधर्षो गङ्गां भगीरथीं प्रति ।

तया चाप्यभवन् मिश्रो गर्भं चास्या दधे तदा ॥

ववृध सा तदागर्भः कक्षे कृष्णगतिर्यथा ।

अनुशासन पर्व्वणि सुवर्णोत्पत्तौ—

प्रसङ्गात् कार्त्तिकेयस्य शरजन्म कार्त्तिकेयस्कन्दगुहाद्याभिधानां यौगिकत्वं दर्श्यते ।—

अथ गङ्गा तस्य गर्भस्य धारणेऽसक्ता मेरु गृहे तं विससर्ज्ज ततश्च ।

"स तुगर्भो महातेजा गांगेयः पावकोद्भवः ।

दिव्यं शरवनं प्राप्य ववृधेऽद्भुत दर्शनः ॥

ददृशुः कृत्तिकास्तं तु बालार्क सदृशं द्युतिं ।

पुत्रं वै ताश्च तं बालं पुपुषुस्तन्यविस्रवैः ॥

ततः स कार्त्तिकेयत्व मवाप परमद्युतिः ॥

स्कन्नत्वात् स्कन्दतां चापि गुहावासाद् गुहोऽभवत् ॥

शरवनोत्पत्ति हेतोः शरजन्मा, कृत्तिकापालितत्वात् कार्त्तिकः, कार्त्तिकेयोवा, प्रस्कन्नाक्रिय तेजसः समुत्पत्तेः स्कन्दः गुहावासात् गुहः। कृत्तिकानां संख्या षट्, अतः षणां तासां युगपत् स्तन्यपानात् स षण्मुखोऽपि जातः। अथ तस्य कार्त्तिकेयस्य षाण्मातुरत्वे कथान्तरमस्ति। यथा

सप्तर्षिपत्नी-रूपदर्शनात् जातस्मरविकारस्याग्नेस्तेषां गार्हपत्य प्रवेशेन अनिशं तद्दर्शनेन जाताधिकविकारतया निर्व्वेद पूर्व्वकं वनगमनं जातं, अथ "स्वाहा तं दक्षदुहिता प्रथमं कामयेत्तदा॥ सातस्य छिद्रमन्वैच्छत् चिरात् प्रभृति भाविनी। अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता। सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतं तत्त्वतः कामसन्तप्तं चिन्तयामास भाविनी। अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकं कामयिष्यामि कामार्त्तं तासां रूपेण मोहितम्। एतत्कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत्। मार्कण्डेय उवाच शिवा भार्य्या त्वङ्गिरसः शीलरूप गुणान्विता। तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप। जगाम पावकाभ्यासं तञ्चोवाच वराङ्गना, मामग्ने कामसन्तप्तां त्वं कामयितु मर्हसि। करिष्यसि न चेदेवं मृतां मामवधारय। अहमङ्गिरसो भार्य्या शिवा नाम हुताशन। शिष्टाभिः प्रहिता प्राप्ता मन्त्रयित्वा विनिश्चयम्। वह्नि-

रुवाच । कथं मां त्वं विजानीषे कामार्त्तामितराः कथं । यास्त्वया कीर्त्तिताः सर्व्वाः सप्तर्षीणां प्रियाः स्त्रियः" ।

अरुन्धतीं विहाय सर्व्वासामेव सप्तर्षिपत्नीनां स्वरूपेण वह्निं कामयित्वा सा स्वाहा पूर्णमनोरथा तत्तेजःकाञ्चनमपि सुमेरोर्गुहायां निचिक्षेप । तत्र कुमारस्य समुत्पत्तिर्जाता । एवं तस्य षाण्मातुरत्वम् । परमयं षाण्मातुरोऽपि स शिवयोरपत्यमिति तत्रैव कथितं । यथा

ततोब्रह्मा महासेनं प्रजापतिरथाब्रवीत् । अभिगच्छ महादेवं पितरं त्रिपुरार्द्दनं । रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया । हितार्थं सर्व्वलोकानां जातस्त्वमपराजित !" ।

महाभारते-वनपर्व्वणि

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वैदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्याद्‌विद्यातिमिरम्भुवि ॥

खण्डं ८ ] अक्टूबर इं' १८८० [ १० सङ्ख्या

सूची



लाहोर

ऐंग्लो नामके यन्त्रे दिलमागराय नामधेयेन मुद्रितः



## विज्ञापनम् ॥

इत: पूर्व्वं विद्योदये क्रमश: प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाष: प्रकाशनीय:। विद्योदय कार्य्याध्यक्ष: लवपुरे॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थ:) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।

---

### मूल्यादीनां नियम:।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।०

„ पश्चाद्देयं ... ... ... ३।०

(प्रत्येकखण्डं।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्ति:/० परिमितमूल्येन मुद्रिता भविष्यति।

### नूतनपुस्तकम्।

छन्दोबोध: (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थ:) सुगमहिन्दीभाषायां लिखित: लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्षकार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे प्राप्तव्य:। कवितावली— (अत्युत्तमकविताग्रन्थ:) मूल्यं।

अस्मत्समीपेप्राप्तव्या।

वाक्य के विन्यास को पाठ क्रम कहते हैं, किसी पद वा वाक्य व्यवधान होने पर बुद्धि में जिस क्रम से एक के पीछे दूसरे अर्थ का उदय होता है उसे अर्थ क्रम कहते हैं। यथासंख्य और सन्निधि से प्रसिद्ध हैं।

समाख्या का अर्थ संज्ञा वा आचार्य कृत व्यवस्था है। अर्थात् प्राचीन आचार्योंने जैसा२ परिभाषा की है उन को समाख्या कहते हैं समाख्या शब्दका स्थूल अर्थ आचार्य कृत व्यवस्था जैसा अध्वर्यु काण्ड में प्रतिपादित किए हुए कर्म्म, समाख्या के बलसे अध्वर्यु के द्वाराही कर्त्तव्य है, यजमान स्वयं न करें, ऐसी आचार्य्यों की व्यवस्था है। तथा "ऐन्द्राग्न मेकादश कपालं निर्व्वपेत् प्रजाकामः" "सन्तति चाहने वालेको उचित है कि अग्नि और इन्द्र देवता को उद्देशकर ग्यारह कपाल से संस्कृत पुरोडाश अर्पण करें" इत्यादि काम्येष्टि (इच्छा पूरण करने वाला यज्ञ) रूप से समाख्यात अर्थात् प्रसिद्ध ऐन्द्राग्नियागों में काम्य यज्ञ के याज्य और अनुवाक्य (मन्त्र विशेष जो प्रधान हवने के समय पढ़े जाते हैं) काण्ड में जो समाख्या है, उसके प्रसङ्ग से प्रजाकाम यज्ञ में इन्द्राग्नि देवता विषयक मन्त्र याज्य एवं अनुवाक्य रूपसे निर्द्धारित किए जाते हैं। अर्थात् तैत्तिरीय संहिता में काम्य यज्ञों के याज्य और अनु वाक्य मन्त्र उल्लिखित हैं परन्तु किस काम्य यज्ञ का

वाक्य के विन्यास को पाठ क्रम कहते हैं, किसी पद वा वाक्य व्यवधान होने पर वृद्धि में जिस क्रम से एक के पीछे दूसरे अर्थका उदय होता है उसे अर्थ क्रम कहते हैं। यथासंख्य और सन्निधि वे प्रसिद्ध हैं।

समाख्या का अर्थ संज्ञा वा आचार्य्य कृत व्यवस्था है। अर्थात् प्राचीन आचार्य्योंने जैसा२ परिभाषा की है उन को समाख्या कहते हैं समाख्या शब्दका स्थूल अर्थ आचार्य्य कृत व्यवस्था जैसा अध्वर्य्यु काण्ड में प्रतिपादित किए हुए कर्म, समाख्या के बलसे अध्वर्य्यु के द्वाराही कर्त्तव्य है, यजमान स्वयं न करें, ऐसी आचार्य्यों की व्यवस्था है। तथा "ऐन्द्राग्न मेकादश कपालं निर्व्वपेत् प्रजाकाम:" "सन्तति चाहने वालेको उचित है कि अग्नि और इन्द्र देवता को उद्देशकर ग्यारह कपाल से संस्कृत पुरोडाश अर्पण करें" इत्यादि काम्येष्टि (इच्छा पूरण करने वाला यज्ञ) रूप से समाख्यात अर्थात् प्रसिद्ध ऐन्द्राग्नियागों में काम्य यज्ञ के याज्य और अनुवाक्य (मन्त्र विशेष जो प्रधान हवने के समय पढ़े जाते हैं) काण्ड में जो समाख्या है, उसीके बलसे प्रजाकाम यज्ञ में इन्द्राग्नि देवता विषयकमन्त्र याज्य एवं अनुवाक्य रूपसे निर्द्धारित किए जाते हैं। अर्थात् तैत्तिरीय संहिता में काम्य यज्ञों के याज्य और अनु वाक्य मन्त्र उल्लिखित हैं परन्तु किस काम्य यज्ञ का

कौन याज्य और कौन अनुवाक्य, इसका विशेष विभाग नहीं है उस अभावको हटाने केलिये आचार्य्य लोगों ने विशेष २ काम्य यज्ञ के लिये विशेष २ याज्य और अनुवाक्य मन्त्रों की व्यवस्था की है। जिसे समाख्या कहते हैं। माधवाचार्य्य ने याज्य और अनुवाक्य मन्त्रोंका स्वरूप ऐसा कहा है कि जिस मन्त्र के पूर्व भाग में उपास्य देवता का साक्षात् वर्णन है उसका नाम "पुरोऽनुवाक्य" है और जिस मन्त्र के पीछले भाग में उपास्य देवता का साक्षात् उल्लेख है उसका नाम याज्य है। किस स्थल में कौन देवता उपास्य है यह ज्ञान लिङ्ग से होता है। माधव ने जो याज्य और अनुवाक्य मन्त्रों की परि भाषा की वह सब स्थल में लगती नहीं क्यों कि अनेक स्थलमें उसका अन्यथा देखा जाता है। उनस्थलों में क्रमसे याज्य और अनु वाक्य का स्वरूप विदित होता है, क्रम यह है कि अनु वाक्य मन्त्र सदैव याज्य मन्त्रों के पूर्व रहते हैं। किसी के मतमें यह समाख्या दो प्रकार की है एक लौकिकीसमाख्या, दूसरी वैदिकी समाख्या ; फिर सामान्य समाख्या, और विशेष समाख्या ऐसे दो भागों में भी विभक्त हुई है।

पाठकों के हृदय में इस से भी अधिक रूपसे प्रवेश कराने केलिये मैं संक्षेप से उनका फिर उल्लेख करना चाहताहूं।

श्रुति शब्द से उस पद वा वाक्य को समझना चाहिए जिस के उच्चारण करते ही अर्थका बोध होता है अर्थात् जिस के अर्थ के बोधकेलिये किसी प्रकार तर्क वा कारण का उपन्यास नहीं करना पड़ता और न उस के समासपर ध्यान देना होता।

लिंग प्रमाण वह है जिस्से पद के प्रत्ययादि के विचार के पीछे अनुमान से अर्थ ज्ञान होता है।

नाना विभक्ति युक्त पद समुदय व्याकरण नियम के अनुसार एकत्र होकर मनमें जो एक अर्थ को प्रकाश करे वह वाक्य है।

प्रकरण अर्थात् किसी विषय का किसी दूर तक वर्णन। जिस विषय का वर्णन जहां तक चलता है वह उसका प्रकरण है।

स्थान शब्द का अर्थ आनुपूर्व्वी वा क्रम।

समाख्या का अर्थ प्रवीन पण्डित कृत व्यवस्था।

"श्रुत्यादीनामेकत्र समावेशे पूर्व्व-पूर्व्वस्य प्राबल्य मुत्तरो त्तरस्य दौर्ब्बल्यम्"

श्रुति, लिङ्ग, वाक्य, प्रकरण स्थान और समाख्या इन पूर्व्वोक्त भावार्थ-व्यवस्थापक छ प्रमाणों में से परपर के प्रतिपूर्व्व पूर्व्व बलवत् है अथवा परवर्त्ति पूर्व्ववर्त्ति की अपेक्षा क्रमसे दुर्ब्बल है, जैसा श्रुति लिङ्गसे प्रबल है, लिङ्ग वाक्य से बलवत् है वाक्य प्रकरण से, प्रकरण, स्थानसे और स्थान, समाख्या से, अपना श्रु-

कौन याज्य और कौन अनुवाक्या, इसका विशेष विभाग नहीं है इस अभावको हटाने केलिये आचार्य्य लोगों ने विशेष २ काम्य यज्ञ के लिये विशेष २ याज्य और अनुवाक्य मन्त्रों की व्यवस्था की है। जिसे समाख्या कहते हैं। माधवाचार्य्य ने याज्य और अनुवाक्य मन्त्रोंका स्वरूप ऐसा कहा है कि जिस मन्त्र के पूर्व भाग में उपास्य देवता का साक्षात् वर्णन है उसका नाम "पुरोऽनुवाक्य" है और जिस मन्त्र के पीछले भाग में उपास्य देवता का साक्षात् उल्लेख है उसका नाम याज्य है। किस काल में कौन देवता उपास्य है यह ज्ञान लिङ्ग से होता है। माधव ने जो याज्य और अनुवाक्य मन्त्रों की परिभाषा की यह सब ठीक है लगती नहीं क्यों कि अनेक स्थलमें उसका अन्यथा देखा जाता है। उनस्थलों में क्रमसे याज्य और अनु वाक्य का स्वरूप निर्णित होता है, क्रम यह है कि अनु वाक्य मन्त्र सर्वत्र याज्य मन्त्रों के पूर्व रहते हैं। किसी के मतमें यह समाख्या दो प्रकार की है एक लौकिकीसमाख्या, दूसरी वैदिकी समाख्या ; फिर सामान्य समाख्या, और विशेष समाख्या ऐसे दो भागों में भी विभक्त हुई है।

पाठकों के हृदय में इस से भी अधिक स्पष्ट दर्शन कराने केलिये मैं संक्षेप से उनका फिर उल्लेख करना चाहता हूं।

श्रुति शब्द से उस पद वा वाक्य को समझना चाहिए जिस के उच्चारण करते ही अर्थ का बोध होता है अर्थात् जिस के अर्थ के बोधके लिये किसी प्रकार तर्क वा कारण का उपन्यास नहीं करना पड़ता और न उस के समासपर ध्यान देना होता।

लिङ्ग प्रमाण वह है जिससे पद के प्रत्ययादि के विचार के पीछे अनुमान से अर्थ ज्ञान होता है।

नाना विभक्ति युक्त पद समुदय व्याकरण नियम के अनुसार एकत्र होकर मनमें जो एक अर्थ को प्रकाश करे वह वाक्य है।

प्रकरण अर्थात् किसी विषय का किसी दूर तक वर्णन। जिस विषय का वर्णन जहाँ तक चलता है वह उसका प्रकरण है।

स्थान शब्द का अर्थ आनुपूर्वी वा क्रम।

समाख्या का अर्थ प्रवीण पण्डित जन व्याख्या।

"श्रुत्यादीनामेकत्र समावेशे पूर्व्व-पूर्व्वस्य प्राबल्य मुत्तरो त्तरस्य दौर्बल्यम्"

श्रुति, लिङ्ग, वाक्य, प्रकरण स्थान और समाख्या इन पूर्व्वो-क्त वाक्यार्थनिश्चयव्यापक छ प्रमाणों में से परपर के प्रति पूर्व्व पूर्व्व बलवत् है अथवा परवर्त्ति पूर्व्ववर्त्ति की अपेक्षा क्रमसे दुर्व्वल है. जैसा श्रुति लिङ्गसे प्रबल है, लिङ्ग वाक्य से बलवत् है वाक्य प्रकरण से, प्रकरण, स्थानसे और स्थान, समाख्या से, अथवा श्रु-

तिसे लिङ्ग का दौर्बल्य है लिङ्गसे वाक्यका वाक्यसे प्रकरण का। इत्यादि अर्थात् जब किसी स्थल में छ प्रमाण मिलेंगे तब श्रुति से जैसा ज्ञान होगा उसीकोही स्थिर समझना ऐसा जब श्रुति छोड़ कर बाकी पांच मिलेंगे तब लिङ्गको मुख्य समझना इत्यादि। यथा "कदा चनस्तरी रसी त्वैन्द्रा गार्हंपत्य मुपतिष्ठत"। इत्यग्नि-होत्र प्रकरणे श्रुयते, अत्र मन्त्रस्य इन्द्र प्रकाशन सामर्थ्यरूपाल्लिङ्गा-दिन्द्रोपस्थानाङ्गत्वे प्राप्ते ऐन्द्र्येति तृतीया श्रुत्या गार्हंपत्यमिति द्वितीया श्रुत्या च गार्हंपत्योपस्थानाङ्गत्वेन विधिना वैङ्गिक इन्द्रो-पस्थाने विनियोगो बाध्यते श्रुतिर्हि स्वतोविनियोजिका लिङ्गन्त्वि-न्द्र प्रकाशन सामर्थ्यमालोच्य; ऐन्द्र्यान्द्र मुपतिष्ठते। इति श्रुति विनि योजक मिति वाच्यम्, तच्चन सम्भवति। यत्र श्रुति विनि-योगो नास्ति "अग्नये जुष्टं निर्व्वपामी त्यादौ" तत्र मन्त्रस्य नि-र्वाप प्रकाशन सामर्थ्य मालोच्य अनेन मन्त्रेण निर्व्वापं कुर्य्यादिति श्रुतिकल्पनद्वारा लिङ्गं विनियोजकं भवत्येव, श्रुतिकल्पनाप्रति ब-न्धकाभावात्। तथा स्योनन्ते सदनं करोमि तस्मिन् सोदेत्यत्र तस्मिन्निति तच्छब्दस्य पूर्व्व वाक्यार्थ सापेक्षतया एकं वाक्यत्वभा-नाद्वाक्य प्रमाणेन द्वयो रेक मन्त्रत्वं भाति लिङ्गेन भिन्नमन्त्रत्वं चावसन्दन प्रकाशन सामर्थ्यात्। तस्मिन् सीदेत्यस्य सादन प्रकाश-कत्वात्। तत्र वाक्या पेक्षया लिङ्गस्य प्राबल्या द्वाक्यं बाधित्वा वि-

॥ श्री रामस्तोत्रम् ॥

( ७ )

दृढः स्थैर्यात् साधोर्जनकतनयायां रघुमणौ
स्थितो यो विश्वासो न चलति कुतश्चोदनिलतः ॥
रघुर्मे विश्वास स्त्वदिह वस विश्वम्भर सदं
न भग्नः स्यादेव प्रबलतरनास्तिक्य पवनैः ॥

( ८ )

जनानां नानावाक् मतिरपि च नाना गतिमती
ध्रुवदृक् दिक् लोहायं न चलति बलादुत्तरदिशः ।
तथा चित्तैकाग्र्यं त्वयि मम हरो तिष्ठतु सदा
हरे राम त्राहि त्रिभुवन गुरो ! मामगतिकम् ॥

( ९ )

स्वयं शम्भुः सर्वं भवसुखमनित्यं परिहरन्
महायोगी तत्त्वं मनसि परतत्त्वं भजति यत् ।
सदास्तीति प्राहुर्यदपि मुनयस्त-त्वमधुना
हरे, राम, त्राहि, त्रिभुवनगुरो ! मामगतिकम् ॥

( १० )

तपस्तेपे ब्रह्मा बहुशत मुनीन्द्रैः सहपुरा
पुरस्कृत्याग्निस्थोऽनशन मपि कल्पं बहुशतम् ।
नवीनाभ्रश्यामो नयन-पथगामी स्वयम्भू
हरे राम इत्यादि—

( ११ )

सुराः सेन्द्राः पूर्व्वं पुरन्दर बलेनातिबलिना
हता रक्षोनाथे-न, गतशरणाः क्षीरजलधौ ।
ततस्त्वत्स्तोते विगतरिपुखेदा, स्त्वमधुना
हरे राम इत्यादि—

( १२ )

मुमूर्षोः काशीशः कलिकरग-जन्तोः करुणया
श्रुतौ वाराणस्यां कथयति सदा तारकमसौ ।
मृतो विष्णौ लीनः सक्ति तवसांन्निध्यः समुदयौ
हरे राम इत्यादि—

( १३ )

सुरापो वा स्तेयी परधन परस्त्री हरण कृत्

कतमोवा सोऽयं यदि हरिपदी तीरे मरण: ।

चतुर्व्वाहु: सद्य: सहि तव महिम्न: समुदयो

हरे राम इत्यादि—

तत: किम् ?

एकदा, एको युवा युरोपदेशान्तर्गते कस्मिंश्चिद् विख्यात विद्यालये पठितुकामस्तमाययौ, तत्रासो कतिपयदिवसेष्वेव राजनीत्यादि विविध शास्त्रेष्वति प्रवीणो बभूव, लेभे च तत्रत्य-रीत्याद्यनुसारेण प्रतिष्ठा पत्रादिकम्

तस्मिन्नेवावसरे, परोपकारनिरतस्त्यक्तानित्यविविधलौकिकसुखो दूरीकृतपुत्रकलत्रादिको नारायणभक्तावनुरक्त एको वृद्ध स्तमागत्य समाहूय च तं युवानं पप्रच्छ "भो विद्यार्थिन्, त्वया ऽधिगत विद्येन जगति किं कर्त्तव्यम्, यदेतावता परिश्रमेण विद्यामधीत्य किं करिष्यसी"ति ? अथासावुवाच, भो वृद्ध, अहं खलु विविधविद्या: सम्यगधीत्यास्मान्महाविद्यालयात्प्रतिष्ठापत्रादिकं प्राप्तवानिति ।

"किं तत: ?" पप्रच्छ वृद्ध: ।

असावब्रवीदहं हि सर्व्वविषयक जिज्ञासानां निवृत्तिं करिष्यामि । राजकुलं गत्वा राजनीत्या धर्म्मशास्त्रस्य च प्रचारेण राजानं प्रसादयिष्यामि ; करिष्यामि च लोकानां दायभागादि वि-

वयकं न्यायम् ; धारा प्रवाहवद् वचनोच्चारणेन विद्याया प्रकाशनेन च लोकेषु प्रतिष्ठां लप्स्ये ।

"किं तदा ?" पृष्ठवानसौ वृद्धः ।

"तदाहं धनादिकं प्राप्स्यामी" त्युवाच स युवा

ततोऽहं महतीं पदवीं प्राप्तः पुत्रकलत्रादिभिरैहिक विविधानन्दान् भोक्ष्ये, "ततश्च किमि"ति पृष्ठवति वृद्धे सोऽब्रवीद्हं तदा-तदाऽहं मृत्युं प्राप्स्यामि ।

अथासौ महात्मा भत्यु त्तैरवाच ततश्च किमिति" ? परन्तु तेन यूना न किमप्युत्तरं दत्तमगमि च यथेष्टं देशम् । नक्तं दिना तस्य यूनो हृदये विद्युदिवात्तर्दाही "ततः किं" इति प्रश्नो विरराजततः प्रभृत्यसावैहिक सुखादीनि सर्व्वाणि पदानि च विहाय केवल मीश्वराराधने परोपकारे च मतिं व्यधत्त ॥ इति

तदपि दिनं भविष्यति-यदा, यौवन, सौन्दर्य्य-विविधलौकिक-सुख-विख्याति-प्रतिष्ठा-धनै-श्वर्य्य-जीवन-स्वास्थ्यादीनि सर्व्वाण्य-निच्छानि वस्तूनि विहाय वयं सर्वे क्रमशो यमनगरातिथयो भविष्यामः, परन्तु तदापि "ततः किं" इत्ययमेव प्रश्नः ।

अस्मिन् खलु धरणीतले वहवः पुरुषाः सां सारिक भो गैरेव प्रमत्ताः परलोकविषयक किमपि कर्त्तव्यं न चिन्तयन्ति-

—०—

॥ संक्षिप्तयोगभाष्यम् ॥

अथ कति, किम्विधाश्च वृत्तय इतिजिज्ञासायामुच्यते "वृत्तयः-पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" । (१ अ । ५ सू) क्लिष्टाः-क्लेशहेतुकाः-क्लेशाः (अविद्यास्मितारागद्वेषाऽभिनिवेशरूपाः) पञ्च, हेतवः-प्रवृत्तिकारणं यासां ताः । यद्वा पुरुषार्थं प्रधानस्य (प्रकृतेः) रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशायैव प्रवृत्तिः अतः क्लिष्टं (क्लेशः), तदासामस्तीति क्लिष्टाः कर्म्माशय प्रचय क्षेत्रीभूताः, धर्म्माधर्म्म प्रचय प्रसवभूमयो वृत्तयः क्लिष्टा इति निष्कर्षः । अक्लिष्टाः ख्याति विषयाः, ख्यातिस्तु सत्त्व पुरुषविवेकरूपा तद्विषयाः सत्त्व पुरुष विवेक विषया इत्यर्थः । ताहि वृत्तय आगमानुमानाचार्य्योपदेशपरिशीलन लब्धजन्मनी अभ्यास वैराग्ये क्लिष्टच्छिद्रे तत्र पतिता अपि स्वयमक्लिष्टा एव । या वृत्तयः सांसारिकेष्टसाधनार्थं जनान् प्रवर्त्तयन्ति ताः क्लिष्टा एव याश्च परमार्थं साधनोपयोगिनी रभ्यास वैराग्ययोः पन्थानमभिदर्शयन्ति ता एव अक्लिष्टाः । ताश्च पञ्चधा वृत्तयः

"प्रमाण विपर्य्यय विकल्प निद्रास्मृतयः" तत्र-"प्रत्यक्षानुमानागमाः प्रमाणानि"-(१ अ ७) प्रमा-तत्त्वज्ञानं (पौरुषेय बोधः) तत्कारणं, प्रमाणं, तानि च चत्वारि ; तत्र इन्द्रियसंसर्गेण बाह्यवस्तूपरागात् चित्तस्य, बाह्यवस्तु विषया-तज्ज्ञान गोचरा तथा सामान्य विशेषरूपस्य पदार्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं,

चक्षुर्घ्राणत्वगादीन्द्रियाणां संयोगेन चित्तस्य बाह्य वस्तूपरागो भवति ततश्च तत्तद्वस्तूनां तत्तदिन्द्रिय संयोगेन विशेष निर्धारणं भवति। इन्द्रिय रूप प्रणालिकया बाह्य वस्तूनां प्रतिबिम्बितानि चित्ते निपत्य यत् स्वरूपं ज्ञानं जनयन्ति तदेव प्रत्यक्षं। नैयायिकानां मते तु "इन्द्रियस्यार्थेन सन्निकर्षा दुत्पद्यते यत् ज्ञानं तत् प्रत्यक्षं"। प्रत्यक्षे विशेष ज्ञान पूर्व्वकं सामान्य ज्ञान भवति। चित्तगताया अपि प्रत्यक्षवृत्तेः फलं पौरुषेयो बोधः यथाहु र्वाचस्पतिमिश्राः "नहि पुरुषोगत बोधो जन्यते अपितु चैतन्यमेव बुद्धिदर्पण प्रतिबिम्बितं बुद्धिवृत्त्या अर्थाकार तया तदा कारतामापद्यमानं फलम्। ग्रुयट नामधेयेन केनापि यूरोपीय दार्शनिकेन प्रत्यक्षस्यैवं लक्षणं कृतम् "The knowledge we obtain by means of our sensations of the qualities of matter" इन्द्रियाणां वस्तु गुणसन्निकर्षाद्यत् ज्ञान मुत्पद्यते तदेव प्रत्यक्षम्। इन्द्रियं ह्यस्माकं वस्तूनां गुणैरेव संसर्ग मालभते, नतु पारमार्थिकवस्तुभि; जायते च तेन तत्तद् गुणानामेवज्ञानं। यथा यदा वयं किमपि पक्व मलिमं प्रत्यक्षी कुर्मः तदा केवलमस्य गुणानेव यत् तत्तदिन्द्रियै र्गृह्णन्ते। यथा चक्षुषा रूपं, घ्राणेन सौरभ्य, त्वचा स्पर्शः। कम्लादि। एवमादि गुणनिचय मपहाय न किमप्यत्रादिन्द्रिय गोचरं भवति। गुणातिरिक्तवस्तु सत्ताया विचारो नैतत् प्रबन्धविषयः।

मिल साहिबस्य मते प्रत्यक्षशब्दः इन्‌ट्यूसन "Intuition" नाम्नाऽभिधीयते । तथाहि । "Truths are known to us in two ways, some are known directly and of themselves, some through the medium of other truths: the former are the subject of Intuition or consciousness; the latter of Inference" "द्विविधेनैवोपायेन वस्तूनां स्वरूपं ज्ञायते, प्रथमं साक्षात् तेषां स्वरूप ज्ञानं, द्वितीयन्तु परम्परया (पूर्व्वज्ञानमपेक्ष्य) तेषां ज्ञानं । तत्र प्रथमं प्रत्यक्षं, द्वितीयञ्चानुमितिः । वैलनटाइन साहेबेन प्रत्यक्षस्य व्याख्यावसरे कथितमेवं । A term which, like the expression employed by Mr. Mill, signifies not merely the means of knowledge constituted by the five senses but whatever means of knowledge are immediate (साक्षात्) in their operation. प्रत्यक्ष शब्दो न केवलं चक्षुरादीन्द्रिय पञ्चक जनित ज्ञान सामग्रीं प्रकाशयति परं यं कमपि साक्षात् ज्ञानोपायं व्यापारं । पञ्चज्ञाने-न्द्रियं कर्म्मेन्द्रियं, करणं ; तत्रैकादशविधं, त्वक्श्रोत्रनासारसनाचक्षुर-वागादयः पाणि पादपायूपस्थ मनांसि । तत्र नेत्रादि पञ्चकं ज्ञानेन्द्रियं ज्ञानसाधनमित्यर्थः ; वागादि पञ्चकं कर्म्मेन्द्रियं कर्म्म साधन मित्यर्थः । साक्षात् ज्ञान साधनेन्द्रिय पञ्चकेनान्येन वा व्यापा-

रेण वा यज्ज्ञान मुत्पद्यते तत् प्रत्यक्षमिति निष्कर्षः ।

इदानीं अनुमानं लक्षयति "अनुमेयस्य तुल्य जातीयेष्वनुवृ-त्तोऽतुल्यजातीयेभ्योव्यावृत्तः सम्बन्धी यस्तद्विषया सामान्यावधारण प्रधाना वृत्ति रनुमानं" जिज्ञासित धर्मविशिष्टो धर्मी अनुमेयः ; यस्य स्वरूप मनुमातुमिच्छा वर्त्तते सोऽनुमेयः, साध्यः predicate of the conclusion, तस्य तुल्यजातीयेषु तत् समानधर्मेषु अनुवृत्तः, स्थितः, तथा तस्यानुमेयस्य विरुद्ध धर्मेषु अस्थितो यः सम्बन्धः लिङ्ग (sign) हेतुरिति वा ; तद्विषया तन्निबन्धना वा सामान्य निश्चयात्मिका वृत्तिः, तदनुमानं । अनुमातुमिष्टस्य समानधर्मधर्मिषु वर्त्तमानं तथा विरुद्धधर्मेष्वनुवर्त्तमानं किमपि लिङ्गं चिह्न मुपलभ्य निमित्तीकृत्य यत् वस्तुसामान्य ज्ञान भवति साऽनुमितिः ।

॥ सर्विलियमजोनस् नामकस्य ॥

अयं हि विख्यातनामा विद्यासागर पारं जगाम । अयं न केवलं यूरोपदेशीयेषु नवप्राचीनेषु भाषानिचयेषु तत्तद्भाषारचित दर्शनादि शास्त्रेषु च निपुणो बभूव, परन्तु देशीयेष्वपि प्रचलिताप्रचलितेषु संस्कृतादिभाषा निचयेषु तत्तद्भाषा रचित शास्त्र निचयेषु च गाढामभिज्ञता मधिजगाम ।

अयं "सुप्रिम कोर्ट" नामक विचारालयस्याध्यक्षत्वमधिगम्य स्व-जीवनस्यैकादश वर्षाण्यस्मद्भूमौ व्यतीयाय । अत्रावस्थान-समये स्वभाषया विविधान्यद्देशीयग्रन्थाननूद्याभि-नवद्वैभाषिकाभिधानपु-स्तकं विरचय्य चास्माकं तथाऽस्मद्देशीयभाषाजिज्ञासूनां स्वदेशीयाना-मपरमोपकारं कृतवान् ।

अथ कथमस्यैतादृक् विद्यानुरागो जात इति जिज्ञासा चेदुच्यते । बाल्यावस्थायां मातास्य सर्वदैनमभाषत । "पठ पुत्र ज्ञास्यसि त्व"मिति "Read and thou wilt know" मातास्यं मुहु-र्मुहुरेतत् मातृवचो निशम्य विद्यार्जनार्थं तस्य महानध्यवसायो जातः । ततस्तस्य तादृगलौकिक विद्यानुरागित्व मवलोक्य केना-प्यस्य निदर्शितम् यथा " A boy of so active a mind that he should be left naked and helpless he would never-theless find the road to the riches and fame" "बालस्या-स्याध्यवसायमवलोक्य प्रतीयते मे यद्येनं नग्नं निःसहायं च विधाय परित्यजेत् तथाप्येष यशसां धनानाञ्च पन्थान मारोक्ष्यती"ति—

॥ समालोचनं ॥

वयमतीव कृतज्ञ हृदयेन "हरिश्चन्द्र मोहन चन्द्रिका नाम-धेयस्य विद्यार्थि सञ्चलित मासिक पत्रस्य प्राप्तिं स्वीकुर्म्मः । पत्र-मिद मधिगत्य चित्तं युगपदानन्दरसेन कृतज्ञेन च परिपूर्णं जातं ।

आनन्दकारणं तु यत् समागतैषा प्रसिद्ध नामधेया हरिश्चन्द्राचे-
स्वरा सम्पादकत्रयी ; मिलिता च तास्तिस्रः पत्रिकाः या सा मेक-
वैव हरिश्चन्द्रचन्द्रिकया चन्द्रिकयेव दूरी कृत महान्धकारस्य
हिन्दी भाषिजगत चिन्त्यमानात्तावत् कीदृगुदेष्यति ज्ञान ज्योतिः
पुनरेतासां सर्व्वासामैक्यभावेन । कविवर श्रीमती हरिश्चन्द्रस्य
सरस कोमलहिन्दी कवित्वेन सह दामोदर शास्त्रिणो जयदेवानु-
कारि संस्कृत कवितानां संश्लिष्टिं वेणुवीणयोः सम्मेलनमिव निः
सन्देहं मोहयिष्यति पाठकान् । अत एव साधु कथितं हिन्दी
प्रदीपेन "निःसन्देह पं मोहन लालजी की विद्या गुण रसि कता
सर्व्वथा अति प्रशंसनीय है, पर हमारी रही समझ में चन्द्रिका में
विशेष मोहन शक्ति तभी थी जो यह अपने जन्मदाता चन्द्रके अ-
धिकार में रह कर केवल उन्हीं के लेख से अलङ्कृत रहती"-क-
ष्टोदय कारणन्तु संस्कृत हिन्दी भाषयो र्व्याप्ये तादृशी दुर्दशा
वर्त्तते यदुत्कृष्टा भावा दैता न पृथक् प्रकाशमासं, सक्षमा बभूवुः ।
भवतु परमेश्वर प्रसादेन सम्मिलितैषा पत्रिका दीर्घायुषं प्राप्नुया-
दित्यस्माकं प्रार्थना ।

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाशि" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथक् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मद्न्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।

---

### मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।८०

" पश्चाद्देयं ... ... ... ३।८०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति।

### नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगमहिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्षकार्य्यालये (रेजिष्टार् स अफिस, पञ्जाब यूनिवर्सिटी कलेजे प्राप्तव्यः। कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं।

अस्मत्समीपेप्राप्तव्या।

यहां यद्यपि अवदान शब्दसे केवल वस्तुका-विभाग प्राप्त हुआ तथापि 'स्रुव' शब्दके सामर्थ्यसे घृतादि द्रव द्रव्यकाही अवदान विशेष विदित है अर्थात् ऐसा अवदानका अंग द्रवद्रव्य है क्यों-कि स्रुवसे पुरडाशका अवदान करना असम्भवहै। अर्थ विशेष प्रकाश करनेवाली शक्तिको शब्द-गत लिंग कहते हैं। जैसा "अग्नये जुष्टं निर्वपामि" "अग्निको जुष्ट (पूर्व्वसेवित) देताहूं" यहां निर्व्वपन रूपअर्थ प्रकाश करनेवाली-शक्तिसे यह मन्त्र निर्वापका अंगहै ऐसा जाना जाताहै क्योंकि जो जिसको प्रकाश कर-ता वह उसका अंगहै।

अब यह स्पष्टहै कि श्रुति साक्षात् अर्थबोध करानेवालीहै अर्थात् श्रुतिसे शब्दोच्चारण करतेही मनमें अर्थ बोध होता है। लिङ्गसे ऐसा झट अर्थबोध नहीं होता किन्तु बहुत विचार करने के पीछे अर्थ ज्ञान होता इसलिये मीमांसक लोग लिङ्गसे श्रुति प्रमा-णको प्रबल मानते हैं और इसलिये लिङ्ग प्रमाण को 'बहिर्न्याय' कहते हैं। दोतीन वा अधिक पद मिलकर जहां अर्थबोध करते-हैं उसे वाक्य कहते हैं। जब किसी मन्त्रके विचार में श्रुति और लिङ्ग इन् दोनों प्रमाण से अर्थ निश्चय नहीं होता तब वाक्यों से यह देखना होता कि पदान्तर के संयोगसे किन किन स्थलोंमे प्रधान क्रियाका कैसा परिवर्त्तन होताहै। जैसा "इषेत्वा" "छि-

नत्ति" वहांवाक्यसे "इषेत्वा" इत्यादि मन्त्र "छिनत्ति" इत्यादि मन्त्र के अंगरूपसे प्रतीत होता है। अथवा पूर्व्वोक्त "अग्नये जुष्टम् इत्यादि मन्त्रमें "अग्नये" "जुष्ट" इत्यादिपद वाक्यके बलसे "निर्व्वपामि" इत्यादि अभिलहोत्र "निर्व्वपन" क्रियाके अंगरूपसे प्रतीत होता है। वाक्यकेद्वारा अर्थस्थिर करने के लिये मनको लिंगसेभी अधिक श्रम करना पडता इसलिये वह प्रमाण पूर्व्वोक्त दोनों प्रमाणोंसे न्यूनवल है। मीमांसक लोग इसे "आरणिन्याय" कहते हैं। हमसबको जानना चाहिए कि वेद वा धर्म शास्त्रों में हमारे कर्त्तव्य कैसे निर्दिष्ट हुए हैं। अवयह प्रश्न होता है कि जहां पूर्व्वोक्त तीन प्रमाण काम में नहीं आसक्ते हैं अथवा अर्थ निश्चय करने में असमर्थ होते हैं तब क्या करना चाहिए? मीमांसक लोग कहते हैं कि ऐसे स्थल में प्रकरण को प्रमाण मानना उचित है। प्रकरण शब्दका अर्थ वाक्योंका आपस में ऐसा सम्बन्ध होना कि जहां एक के अर्थनिश्चय करने के लिये दूसरेकी आकांक्षा होतीहै। जैसा "दर्श पूर्णमासाभ्यां स्वर्ग कामो यजेतेति तत्र दर्श पूर्णमासाभ्यां स्वर्गापूर्व्वं कुर्य्यात् कथमित्याकांक्षा प्रयाजाभ्यां स्वर्गापूर्व्वं कर्त्तव्यमिति" "स्वर्ग चाहने वालेको उचित है कि दर्श और पूर्णमास यज्ञ करें यहां दर्श और पूर्णमाससे स्वर्गरूप अपूर्व्वं को साधनकरें ऐसे कहनेमें यह आकांक्षा होतीहै कि उन दो-

र्णी यज्ञोंद्वारा किसप्रकारसे स्वर्गरूप अपूर्व्व का साधनहोता है। ऐसा फलयुक्त "आग्नेयादि" यज्ञोंके साथ "समिधो यजति" तनूनपातं यजति, आज्यभागौ यजति, इडो यजति' बर्हिर्यजति, स्वाहाकारं यजति;, समिधोंका याग करता है, तनूनपातरूप अग्निसे यागकरताहै, आज्यभाग यज्ञ करता है, इडा नाम अन्नोंकायाग करताहै कुशोंका याग करताहै और स्वाहाकार मन्त्रोंसे याग करताहै" इत्यादि फलरहित यागों का श्रवण होता अर्थात् पूर्व्वोक्त "अग्नि देवताको उद्देशकर आठकपाल में संस्कृत पुरोडाशसे अमावस्या और पूर्णमासी में यज्ञ करनेसे अक्षय स्वर्ग लाभ होताहै "इसमन्त्रमें यज्ञ फल की श्रुति लिखी गई है किन्तु उससंबन्ध के साथही कहेगए "समिधोंका याग करताहै" इत्यादि मन्त्रोंमें किसीप्रकार फलकी श्रुति नहीं है तब ऐसी आकाङ्क्षा होतीहै इन समिध यागोंका प्रयोजन क्याहै? पहिले यह आकाङ्क्षा हुई कि दर्श और पूर्णमास यज्ञोंसे किस प्रकार स्वर्ग रूप अपूर्व्व का साधन होवै अब यह आकाङ्क्षाहुई कि ये सब समिध् यज्ञादि निष्प्रयोजन है? फिर प्रकरण के समालोचन से यह जाना जाता है कि समिध यज्ञादि जिसे प्रयाजादि यज्ञभी कहते वेसव दर्श पूर्णमास यज्ञोंका अंगहै अर्थात् जब इन सभों-के-साथ-दर्श पूर्णमास यज्ञ किए जावे तभी स्वर्गरूप अपूर्व्व-का-साधन होगा

अन्यथा नहीं । अबदेखो कि प्रकरणसे अर्थ निश्चय करने में मन-की पहिले कहेहुए तीन प्रमाणों (श्रुति, लिङ्ग और वाक्य) सेभी-दुःख उठाना पड़ताहै इसलिये उन तीनोंसे इसका बल कम है । यहां यहभी जानना उचितहै कि प्रकरणसे यहभी स्थिर हुआ कि प्रयाजादि केवल दर्श पूर्ण मासकाही अंगहै अग्निहोत्र वा ज्यो-तिष्टोमका नहीं ।

स्थान को मीमांसक लोग सन्निधि वा क्रम कहते हैं । जब पूर्व्वोक्त चारों प्रमाणोंसे अर्थका निश्चय नहीं होता तब इसकी उपयोगिता होतीहै इसमें यहकारण है कि जब मन में एकप्रकारकी चिन्ताके पीछे, और चिन्ताहोतीहै तब उन चिन्ताओंमें यथाक्रम सम्बन्ध रहताहै इस क्रमरूप सम्बन्धसे विशेष २ स्थलों-में अर्थका निश्चयहोताहै । जैसा सान्नाय्य पात्रके समीप "शुन्धध्व-म्" इसमन्त्रका उच्चारण होनेसे यह जाना जाताहै कि यह मन्त्र सान्नाय्य पात्रकी शुद्धिमें अंग है । स्थानशब्दका ठीकठीक अर्थ आनुपूर्व्वी, जब दोतीनवाक्य एकत्र होतेहैं तब उनकोस्थिति क्रम से अर्थ ज्ञानहोताहै । मीमांसक लोगोंने इस क्रम को दोनोंभागों मेंविभक्त किया है एकपाठ क्रम दूसरा अर्थ क्रम । उनमेंसे पाठ क्रमभी दोप्रकारकाहै एक यथासंख्य, दूसरा सन्निधि । एकशब्द के पीछे दूसरे शब्दका विन्यास, वा एक वाक्य के पीछे दूसरे

संशयः

ईर्षी घृणी ह्यसन्तुष्टः क्रोधनोनित्यशङ्कितः ।

परभाग्योपजीवीच षडेते दुखभागिनः" ॥

एतेन नित्यसंशयशीलस्य दुःख भागित्व मेव निर्द्धारितम् । वेकन साह्विन तु संशयस्यैवं कथितम् ।

पक्षिणां चर्म्मचटका इव मानसकर्म्मणां संशयाः सर्व्वदैवान्धकारे प्रदेशे परिभ्रमन्ति । चर्म्म चटका यथा ध्वान्तमये प्रदेशे विचरितुं प्रभवन्ति संशया अपि तथा वुद्ध्यनुद्भाविते ऽनिश्चिते विषये मनो-व्यापरान् वितन्वते । संशयाः सर्व्वथैव परित्यज्याः; तेषामुपरि सर्व्वदा च दृष्टिर्विधेया यतस्तैर्मनो ऽन्धतमसा समाच्छन्नं भवति, वान्धवाः परिह्रीयन्ते, कर्म्मणां च हानिर्भवति संशयाविष्टोहि जनो न दृढतया कार्य्यं सम्पादयितुं समर्थो भवति । संशयवशेनैव राजा दुराचारपरा भवन्ति, स्वामिनः स्वपत्नीं प्रत्यसूयाकर्कशदृष्टिं निदधति ज्ञानिनश्च दुःखोद्विग्ना, अविवेकपरा भवन्ति, संशया नान्तः करणस्य दोषाः किन्तु मस्तिष्कस्य । यतः सवलकायेषु प्रायः संशयानां वसति र्भवति । अंगल देशाधिपस्य हेनेरी सप्तमस्य चरितेलस्य विशिषदृष्टान्तो ऽवगम्यते । ततो ह्यधिकः संशयाविष्टोन कोप्यासीत्, नवा ततोऽधिकः सवलः ।

परं एवंविधस्थलेषु संशया नाधिकं पापमुत्पादयितुं समर्था भवन्ति ।

यतस्तादृशा हि मनुजा परीक्ष्यैव यथास्थानं संशयं कुर्व्वन्ति ।

भयशीले हि जने संशयस्य सद्यक् प्रादुर्भावो भवति अल्प-ज्ञा हि जनाः सततं संशयाना भाक्तर्द्दं भवन्ति । वस्तुज्ञानमेव संशय निराकरणस्य महौषधम् । सम्यग्ज्ञानवर्त्तिनि यस्मिन् संशया जाता तत् प्रकृत ज्ञानेनैव संशयस्योपशमः भवति । यथा योग्य स्थाने संशय करणेन न तादृक् हानिर्भवति किन्त्वस्माकं मनसि सर्व्वदैव अमोघकल्पिताः सन्देहाः जायन्ते । मिथ्योपन्यास श्रवणेन परेषां मृदुभाषितकर्णनेनच यः सन्देहोद्गमो भवति तेन हृदयं दुष्टं भवति । एवं विधस्थलेषु येषामुपरि सन्देहा जायते तेषां समीपे गत्वा स्फुटेन तद्विषय कथा वार्त्तालापः कर्त्तव्यो यतस्तेषा मुत्तरश्रवणेन सत्यं परिज्ञातं भवेत् । [illegible] कथनमस्ति । संशयेन विश्वासो ऽपनीयते । येषा-मुपरि एकदा संशयो भवति न ते पुनर्विश्वस्ता भवन्ति । इत्यलं ।

## संक्षिप्तयोगशास्त्रम्

सांख्यदर्शनं हि सेश्वर निरीश्वरभेदेन द्विविध । तत्र यन्नि-रीश्वरत्वेन प्रसिद्धं तत्सांख्यदर्शनं तच्चास्माभिः संक्षेपेणोक्तपूर्व्वं साम्प्रतं सांख्यस्यापर-भागं सेश्वरत्वेन विश्रुतं पातञ्जल दर्शनं योगशा-स्त्रापरपर्य्यायं संक्षेपेण विवरीतु मुद्यता वयम् ।

सांख्यदर्शने हि सत्त्वरजस्तमो मय प्रकृते स्तद्विकृतेर्म्महतोऽहङ्कार-

स्य स्थूलसूक्ष्मात्मकभूतवर्गस्य च तथा सचैतन्यस्य भोक्तृत्वेनोप कल्पितस्य पुरुषस्य च स्वरूप ज्ञानरूपं तत्त्व ज्ञानमेव परम पुरुषार्थत्वेनोपकल्पितं, समुदिते हि तादृशि विज्ञाने जनः संसार बन्धनाद्विमुक्तः परमानन्द मुपभुञ्जानस्तिष्ठति । अतस्तत्र तत्त्वज्ञान विषय---घटकी-भूतानां वाह्याभ्यन्तरेण पदार्थानां स्वरूप मभिहितं येग्रत सांख्य दर्शने तु चित्तवृत्ति-निरोध रूपेण योगेनैव पुरुषार्थलाभो भवतीति निरूपितं, निरूपितास्तत्र ततएव चित्तवृत्तय स्तन्निरो-धो पायादिविषयाः नतु तत्त्वात्मभूतादि वाह्यविषया इत्यनयो भेदः ।

योगस्य श्रेष्ठत्वमुक्तं गीतायां । यथा

"असावेव परोधर्मो यद्योगेनात्मदर्शनम्"

याज्ञवल्क्यस्तु "अयं हि परमो धर्मो यद्योगेनात्मदर्शन मिति ।
अथ कोऽसौ योग इत्याकाङ्क्षायामाह भगवान् पतञ्जलिः "योग-श्चित्तवृत्ति निरोधः" (१अ२)

चित्तस्य सात्विक राजस तामस भेदेन त्रिविधा अवस्थाः । तत्र सात्विकाः प्रसाद् लाघव प्रीत्यादयः, राजसाः परितापशोकादय, स्तामसा गौरवावरण दैन्यादयः । यदा चित्ते सत्त्वस्य प्राधान्यं भवति, तत् सत्वप्रधानं चित्तं प्रख्याशब्दे नाभिधीयते, तदा केवलं परमानन्द मनुभवतीदं किन्तु यदा तत् प्रख्यारूपं चित्तं रजस्तमोभ्यां संसृष्टिं प्राप्नोति तदा ऐश्वर्य्य विषय प्रियं ऐश्वर्य्यं (अणिमादि*)

* ऐश्वर्य्यमष्टविधं यथा अणिमा लघिमा, प्राप्तिः, प्राकाम्य

विषयाः शब्दादयस्तान्येव प्रियाणि यस्य तत् तथाभिधं। सत्त्व प्राधा-
न्यादि चित्तं तत्त्वे प्रणिधित्सति तत्त्वस्य तमसापिहितत्वादणिमा-
दिकमेव तत्त्व मभिमन्यमानं तत् प्रणिधित्सति प्रणिधत्ते च क्षणं
अथ रजसा क्षिप्यमानं तत्राप्यनवस्थिति तत्प्रियमात्रं भवति ।
शब्दादिषु पुनरस्य प्रेमा निरूढ एव । तदेव प्रख्यारूपं चित्तं तम-
सानुविद्धं तमः प्रधानं भवति, यदा चित्तं सत्त्वावरकतमः समुत्सा-
रणे रजोऽशक्तं भवति, तदा ऽधर्माज्ञाना वैराग्यानैश्वर्योपभोगप्रियं
भवति, तदेव प्रक्षीण मोहावरणं यदा रजोमात्रया ऽनुविद्धं तदा
धर्म्म ज्ञान वैराग्यैश्वर्योप भोगप्रियं भवति । रजसः प्रवर्त्तकत्वा-
द्भवति धर्म्मादौ प्रवृत्तिः किन्तु सत्वप्राधान्यान्नाधर्म्मादौ । एवञ्च
यदा चित्तं रजो लेश मलापेत भवति तदा स्वरूप प्रतिष्ठं विधूत
रजस्तमः विशुद्धज्ञान मयं निर्गतनिखिलवेदान्तरस्पर्शं ध्यान परञ्च
भवति । फलितार्थस्तु चित्तस्य सत्त्वं, रजस्तमश्चेति त्रयो गुणा
विद्यन्ते । तत्र सत्त्वं निर्म्मलत्वात् प्रकाशमयं परमानन्द साधनं,
रजस्तु चेष्टाकारकं विषय प्रवर्त्तकञ्च, तमो मोह कारण मावरकं ।
एषामेव गुणानां संक्षेप विक्षेप प्राधान्यादिभि रुल्लसन्ति चित्ते वि-
विधा वृत्तयः । तासां निरोधः सर्व्वतो निवर्त्तनं नाम योगः ।

। श्री रामस्तोत्रम् ।

( १ )

मनुष्यो ऽयं रामो वन गमन सीता विरहजे
महा दुःखे मग्नः कथ मघ्रत दाताङ्घ्रिभजताम् ।
अभक्ताना मेषा मति रपि च केषामिवमिति
महाविष्णू रामो न तु कथ मलीक व्यवहृतिः ॥

( २ )

अहल्याशापान्तं चरण रजसा बालवपुषा
चकारान्यः कोऽयं मख मपभवं कौशिकमुनेः ।
असाध्यं यद्देवासुरवरनराणां रघुवर
श्चकारैशं चापं तृणमिवहि भङ्क्त्वा तदपि सः ॥ †

( ३ )

भृगोः सूनोः कऽन्यो भुवन जयिनो दर्पमहरत्
पितुः सत्यं रक्षन्नविकृतमना राज्य मजहात् ।
पराद्दिवादन्यः कइह जलधौ सेतु मकरो
न्महाविष्णोरन्यो दशवदन जेता जगति कः ॥

( ४ )

पुमानादीरामः प्रकृतिरियमाद्या जनकजा
वशिष्ठे वाशिष्ठे ऽमलमनसि वा व्यासवचसि ।

---

† असाध्यं यद्देवा सुरनरवराणां तृणमिव वभञ्जैशं चापं नरः

स्वरूपं तत्सर्वं शुभमुखमिव स्वच्छ मुकुरे
नरौ तौ सामान्यौ प्रकृति पुरुषौ पापमनसि ॥

( ५ )

महामाया सेयं त्रिगुणमयकाया यदनया
हरिः पाति ब्रह्मा सृजति सकलं हन्ति च शिवः ।
यया पुष्टं विश्वं जनकतनयां तां यदवदत्
तिरोधान स्याविर्भवन मिह लोकोत्तरमिति ॥

( ६ )

स्वभावोऽस्या एषोऽसुरकुलमशेषं क्षपयितुं
परं रूपं कृत्वा स्मरशरसुविद्धं प्रकुरुते ।
निशुम्भः शुम्भो वा सुरमहिष एवं दशगिरा
ममाराध्या रूपे शलभ इव वह्नेरभि मुखे ॥

। समालोचनम् ।

"ईशोपनिषदां विमला नाम भाष्यम्—वाशिष्ठ श्री तारा चरण तर्करत्नेन विरचितं प्रकाशितञ्च" अहो ! ग्रन्थमिमं साभिनिवेश मधीत्य न मात्युद्वेलानन्द संवेगोऽस्मच्छरीरे ; धन्या सा संस्कृत भाषा या मृतप्रया ऽपि नाद्यापि विजहाति प्राक्तन महोदमभावं ; धन्यः स पुरुषः क्षणजन्मा, य एतादृगवस्थामापन्नाया मपि संस्कृतभाषाया मुपनिषद्भाष्यं विरचय्याक्षीनमक्षरपतञ्जलि

सायन वात्स्यायन विज्ञान भिक्षुप्रमुखैर्ह्याचार्य्यैः सहासनमभिल-
षति ; धन्याश्च वयं येषामद्योपनिषद्भाष्यसमालोचकस्यानाधिकार-
चिकीर्षा समुल्लसति । विशेषतो ग्रन्थकृतो वन्दनीयचरणाः श्री
ताराचरणशर्म्माणोऽस्मज्जातिशिरोरत्नभूता नापरिचितपूर्व्वाश्चास्मत्-
पाठकानामितः पूर्व्वं मेतन्निर्म्मितं कलातत्त्वं नाम पुस्तकं विद्योदये
प्रकाश मगमत् ।

अथ स्थितेष्वेषां मन्त्राणां श्रीमदद्वैत स्वामिकृत शोभन भाष्ये
किमस्ति प्रयोजनं पुनरेषां भाष्यकरणप्रवृत्तेरिति चेदुच्यते ।
अन्यदेवास्य प्रयोजनं शङ्करभाष्यात् । अथवा न केवलं प्रयोजनं
भिन्नं अधिकारी च भिन्न एव । तथाच प्राचीनरीत्याधिकारि
सम्बन्ध प्रयोजनानि ग्रन्थादावनिवेशितान्यपि मुखपत्रोपरि (title
page) विनिहितानि सन्ति यथा "स्वस्ति विविध विरुदावली वि-
राजमान मानोन्नत महाराजाधिराजद्विजराज योगिराज काशी
राज श्री महेश्वरी प्रसाद नारायण सिंह शर्म्म वीर पुङ्गव धर्म्म-
पाल प्रबोधितेन, तदीय कृपान्तर युवराज श्री प्रभु नारायण सिंह
शर्म्म वीर पुङ्गवानुमोदितेन तदीय कृपान्तर मपि पद्मानन
मादित्य समतेजसं चिरञ्जीवं कुमारं विनोदयिष्यता श्रीकाशीधर्म्म-
सभाध्यक्ष सर्व्वदर्शनाचार्य्य वाग्मि श्रीताराचरण तर्करत्नेन
विरचित, प्रकाशितञ्च—

अत्रत्यु "ईशावास्य मित्यादयो मन्त्राः कर्म्मस्वविनियुक्ता स्तेषामकर्म्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्व नित्यत्वाशरीरत्व सर्व्वगतत्वादि वक्ष्यमाणं ** ***तस्मादेते मन्त्रा आत्मनो याथात्म्य प्रकाशनेनात्मविषयं स्वाभाविकं विज्ञानं निवर्त्तयन्तः शोकमोहादि संसार धर्म्म विच्छित्ति साधन मात्मैकत्वादि विज्ञान मुत्पादयन्ति एवमुक्ताभिधेय सम्बन्ध प्रयोजनान् मन्त्रान् संक्षेपेण व्याख्यास्यामः" विचार्य्यतां तावदेकस्य प्रयोजनं स्वभावतो वेदशास्त्र विमुखस्य सुकुमारमतेः पञ्चाव-नस्य राजकुमारस्योप निषद्विद्यायां प्रबोधनरूपमतो ऽधिकारी तथाविध बाल एव। अपरस्तु कर्म्म फल विमुखानां परिणतबु-द्धीनां मुमुक्षूणामात्मतत्त्वोप देशरूपं प्रयोजनमधिकारिणश्च त-थाविध परिणत बुद्धयः।

विद्योदयस्य लघुगरीयस्त्वात् सम्यक् समालोचनं न सम्भवत्यत एव प्रथम मन्त्र व्याख्यान मुद्धृत्य ग्रन्थपरि चयो दीयते—

"सपद्दा साम्वया सोपपत्तिरर्थ बहुला निरूपमना विमलाना-म व्याख्या आरभ्यते श्रीसीतानाथ गीतये, तत्रोपनिषन्नाम वेदानां शिरोभागो, ब्रह्म विद्याप्रतिपादकोमन्त्र विशेषः। निरुक्तिश्च उप-समीपे ऽर्थाद् ब्रह्मणो वाचकतया निषण्णा या वाक्यावली, सोप निषदित्युच्यते। ऋग्यजुः सामाथर्व्वणा मुपासना कर्म्म भावप्रधानानां

सर्व्वैरेव व्यामिश्राणां सर्व्वेषां मन्त्रान् विभज्य ब्रह्मविद्याप्तये ब्राह्मण वहुषिभिर्गाथाभिः सङ्कल्य सङ्कलय्य सङ्गीता आत्मतत्त्वोपदेशक-प्रकाः मन्त्रा उपनिषदित्याभाणकः, ताश्चोपनिषदो ऽसंख्या, तत्रेश-केन कठप्रश्न मुण्ड माण्डूक्यैतरेय तैत्तिरीयकछान्दोग्य वृहदारण्य-कानीति दश प्रसिद्धाः । प्रसिद्धिरासा मेतासा मेवाद्वैत स्वामिना व्याख्या तत्वाद्वा ऽन्यस्माद्वीजाद्वा तत्राद्येशोपनिषत्, तत्राद्योम-न्त्रः । इशेति तत्र पदानि, इशा, वास्यं, इदं, सर्व्वं, यत्, किम् च, जगत्यां जगत् तेन, त्यक्तेन, भुञ्जीथाः, माग्टधः, कस्यस्वित् धनम्, इत्येतानि, । अन्वयस्तु यत् किञ्च जगत्यां जगत् इदं सर्व्वं मीशा-वास्यम्,, तेन, त्यक्तेन भुञ्जीथाः कस्यस्विद्धनं माग्टध इति । व्याख्या-नन्तावत् इष्टइतीट्, ऐश्वर्य्यवानीश्वरः, यः प्राक् सृष्टे रेकोहं वहु-स्यामित्यादिश्रुति वोधितं माया शवलितं ब्रह्म । तस्यैवैश्वर्य्यां ष्य-णिमाद्यष्टौ षडङ्गानि दशव्ययानि च तथा चाणिमा, लघिमा प्रा-प्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसा-यितेति, अनन्तशक्ति (क्तेः ? ) श्च विभोः षडाहु रङ्गानि महेश्वर-स्येति । ज्ञानं, वैराग्य, मैश्वर्य्यं, तपः, सत्वं, क्षमाधृतिः, स्रष्टृत्वमा-त्म सम्बोधो ह्यधिष्ठातृत्व मेवचेति । एतान्यै श्वर्य्यादीनि परमेश्वरे नित्य सिद्धानि अन्यतापेक्षि कानि, अत एव स सदैव मुक्तः सदैवे श्वर इति सृष्टेरनाद्य ऽ नन्तत्वात् तेनेशा इदं परिदृश्यमानं जगद् गमनशीलं नाम रूपाभ्यां व्याकृतं वस्तुजातं वास्यमाच्छादनीयं व्या-प्तमिति । न केवलमिदं वास्यं जगत्या मस्या मन्यस्याम्वा वर्त्तमा-नाया तथाभूताया भाविन्याश्च सर्व्वस्यां मन्यास्याम्वा वर्त्तमानायां

तथा भूतायां आविद्याच्च सर्व्वं तां परोक्षापरोक्ष रूपं यत् किञ्च तत् सर्व्वमेव वाच्य मिति । तस्मात् कारणेनैव कार्य्यं व्याप्तं न तु कार्य्येण कारणं यथा मृदा घटो न घटेन मृदिति । तस्य स्वप्रकाश मायया सर्व्वकारणत्वात् । तथा च मन्त्रौ यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभि संविशन्तीति, अजा मेकां लोहित शुक्ल कृष्णां वह्वीः प्रजाः सृजमाना मिति च । अत पादोऽस्य विश्वा भूतानि त्रिपादोऽस्या ऽमृतं दिवीति मन्त्रेण पाद एव सर्व्वं जगदभिधानात्, कथं पादेन सर्व्वं वाच्य मन्येषां मुक्तानां सत्त्वादितिचेन्न, जगत एव वाच्यत्वाभिधानात् । यस्माद्दोषा सर्व्वं वाच्यं तस्मात् त्यक्त वैराग्येण उपसर्जनस्यापि युक्ता समाकृष्य तदा परामर्शात् मुमुक्षोर्याः परमानन्द घन निर्विघ्न सच्चिदानन्द मात्मनैवानुभव । सुतरां अस्मिन्नित् कस्यचित् धनं भागमपि नाका-ङ्क्षेति । तेन त्यक्तेन जगतैतिया । अथवायं नारद ग्रासस्य त्या-गी रङ्कस्येव चक्रसम्पदामिति । तस्माद् यथाद्द्रि सम्यक् वैराग्याभ्यासाभ्यां विषयान् परिधाव मन्दादीनां स्वरूप मालोच्याक्षतत्वं साक्षात् कृत्वा मन्दादि विषय भोग मारब्धान्यथा ख्याति पर्य्यवसानायाः प्रकृतेः पारतन्त्र्यमपहाय यदाऽत्मात्मन्येव विद्वान् विश्रान्तो भवति, तदा सर्व्वमेवात्मनि पश्यन् दोषदर्शी विरक्तः स्वात्मरूपेणैव सर्व्वं मनु भवन् सन्तुष्टो भवति सुतरां कस्यचिद्धनं नाकाङ्क्षति । यस्य तु जन्मनैव वैराग्यं विनाऽपि विषय भोग मुपजायते तस्य जन्मान्तरीण उप भोगः कर्त्तव्यः ।

श्रीं Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्नम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः ।

चतुरराजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।

विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ९ ] अगष्ट इं १८८० [ ८ सङ्ख्या

## सूची



लाहोर

पिल्टै नामके यंत्रे दिलनागराय नामधेयेन मुद्रितः ॥

## विज्ञापनम् ॥

इत: पूर्व्वं विद्योदये क्रमश: प्रकाशितं "प्राकृतप्रकाशि" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितंभविष्यति । ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाष: प्रकाशनीय: । विद्योदय कार्य्याध्यक्ष: लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थ:) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।

---

## मूल्यादीनां नियम: ।

| | | | |
|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं ... | ... | ... | २।७० |
| „ पश्चाद्देयं ... | ... | ... | ३।७० |

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्ति:।० परिमितमूल्येन मुद्रिता भविष्यति ।

## नूतनपुस्तकम् ।

छन्दोबोध: (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थ:) सुगमहिन्दीभाषायां लिखित: लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्षकार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजे प्राप्तव्य: । कवितावली— (अत्युत्तमकविताग्रन्थ:) मूल्यं ।

अस्मत्समीपे प्राप्तव्या ।

समानां कल्पानिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तौ इतर-निवृत्ति फलकत्वादयं परिसंख्याविधिः । पूर्वं दर्शं पौर्णमासाङ्गत्वं प्रयाजा-दीनामुक्तम् ॥

किसी दोनोंको तुल्यरूपसे प्राप्ति होनेपर जिसविधिसे एक को हटाकर दूसरा इष्ट होता है उसका नाम परिसंख्या-विधि है । जैसाकि चयनप्रकरणमें लिखा है कि

"इमामगृभ्णन् रसनां ऋतस्य" इसको "जिह्वा लिये हैं" इसवाक्यसे अश्वकी जिह्वा गृहीतहोती है यहवाक्य अश्वरसना-ग्रहणको अंगरूपसे विधान करता है । यदि 'ऐसा विधि न होता तो जिह्वा ग्रहणकोप्रकाशकरनेवाला मन्त्र 'जिह्वालेना' रूपसा-मान्य अर्थ प्रकाशकर 'जैसा अश्वको' जिह्वालेनेमें उपयोगी होता-ऐसा गर्दभको जिह्वालेनेमें भी उपयोगी होसक्ता । परन्तु इसविधि-के होनेसे अश्वकी जिह्वाकोहीलेवे गर्दभकी नहीं ऐसा समझा जा-ता है क्योंकि उसे तृणों छीके (चूपकरके) लेना चाहिए, गर्दभकी जिह्वासे ग्रहणमें कुछ मन्त्र नहीं । अतएव गर्दभ और अश्व की जिह्वा ग्रहणरूप कार्य्य तुल्यरूपसे प्राप्तहोने पर परिसंख्या विधिसे गर्दभ जिह्वाग्रहणको हटाकर अश्वजिह्वाग्रहणरूप कार्य्य इष्टहोता है । प्रयाजादियाग दर्शपौर्ण मास यागोंके जो अङ्गहोते हैं यह पहिले कहि चुकेहैं ।

"तत्राङ्गत्व बोधक प्रमाणानि श्रुतिलिङ्ग वाक्य प्रकरण स्थान समाख्या भेदेन-षट्"।

श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान, और समाख्या, यह छः प्रमाण अङ्गत्व बोध करानेमें उपयोगी-हैं।

इनका स्वरूप क्रमसे लिखा जाताहै।

"तत्र दध्ना जुहुयादित्यत्राग्निहोत्र वाक्यगतं होमं जुहुया दित्यनेनोद्दिश्य तत् कारणत्वेन तृतीयाश्रुत्या दधि विधीयत इति श्रुत्या दध्नोऽङ्गत्वं। लिङ्गंनाम सामर्थ्यम्, तच्च द्विविधम्-अर्थगत शब्दगतश्चेति। आद्यं यथा "स्रुवेणावद्यती" त्यवदानसामान्यशे-षत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपाल्लिङ्गादाज्य सान्नाय्या-दि द्र-व द्रव्यस्यावदान विशेषाङ्गत्वं स्रुवेण पुरोडा-शाद्यवदानस्य कर्तु मशक्यत्वम्। शब्दगतन्तु लिङ्गमर्थ प्रकाशनसामर्थ्यम्, यथा अग्नये जुष्टं निर्वपामीति मन्त्रस्य निर्वाप प्रकाशन सामर्थ्यरूपा ल्लिङ्गात् निर्वापङ्गत्वम्। यस्य मन्त्रस्य यत् प्रकाशन-सामर्थ्यं तस्य तदङ्गत्वं। पदान्तर समभि-व्याहारो वाक्यम्, यथा इषेत्वेति छिनत्तीति शा-ख-छेदनाङ्गत्वेन इषेत्वेति मन्त्रवाक्येन विधीयते। यथा वा अग्नये जुष्ट मित्यत्रैव अग्नये जुष्ट मित्यादि पदानां निर्वपामीत्यनेनैक वाक्यता पन्नत्वान्निर्वापाङ्गत्वम्। प्रकरणं नाम परस्परा काङ्क्षा यथा दर्शपूर्णमासाभ्यां स्वर्ग कामो यजेतेति अत्र दर्शपूर्णमासाभ्यां

स्वर्गापूर्व्वं कुर्य्यादित्यक्ते भवत्याकाङ्क्षा कथमाभ्यां स्वर्गापूर्व्वं कर्त्तव्य-मिति, तथा फलवद्दर्शेत्यादिसन्निधौ समिधो यजति तनूनपातं यजति आज्यभागौ यजतीत्यादिभिः प्रयाजादयः फलरहिताः श्रुतास्तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजन मिति ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपूर्णमासयोः कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्व्वेषां दर्श पूर्णमासाङ्गत्व निश्चीयते। स्थानं नाम सन्निधिः, यथा सान्नाय्यपात्र सन्निधौ शुन्धध्वमितिमन्त्रस्य पाठात् सन्निधानात्, सान्नाय्यपात्र प्रोक्षणाङ्गत्वम्। समाख्या-संज्ञा यथा अध्वर्य्यु काण्डप्रतिपादिते कर्म्मजाते आध्वर्य्यव समाख्यावशादध्वर्य्योः कर्त्तृत्वेनाङ्गत्वम्। तथा "ऐन्द्राग्नमेकादशकपालं निर्व्वपेत् प्रजाकामः" इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्यत्वेन विनियोगः। विनियोगानामङ्गत्वेनान्वयः

इसजगतमें सर्व्वदा अच्छे कर्म्ममें लगा रहना मनुष्यका कर्त्तव्य है। परन्तु "कौनकर्म्म अच्छा और कर्त्तव्यहै" वह किस प्रकारसे जाना जाताहै? इसके उत्तरमें किसीने कहाकि ऋषि, ब्रह्मवादि और आचार्य्यलोगोंका वाक्य धर्म्म वा कर्त्तव्यज्ञानका साधनहै। यह सत्य, परन्तु प्राचीन आचार्य्यके वाक्य परस्पर ऐसे विरुद्धहै कि उनसे सत्यस्थिरहोना बहुत कठिन है। उनसे सत्यका

स्थिर करने केलिये जैमिनीने ऊपर कहे हुए श्रुति लिंग इत्यादि-
क प्रमाण स्वीकार किया है।

उनमेंसे 'श्रुति' शब्दका अर्थ श्रवण अर्थात् वाक्यश्रवण वा-
दर्शन होनेपर सहजसे जो अर्थज्ञान होताहै उसकानाम श्रुति, जै-
से। "दध्ना जुहुयात्" 'दधिसे होमकरे' पहिले "अग्निहोत्रं जुहु-
यात" इसवाक्यसे प्राप्तहुए होमके करणरूपसे दधिका विधान हो
ताहै और दध्नोयागविनियोजकश्रुति ही उसमें कारण है इसश्रुति
को पूर्व्वमीमांसामें गार्हपत्यन्याय कहतेहैं। लिङ्गशब्दसे शब्दका
अर्थाभिधान में सामर्थ्य (शक्ति) बूझा जाताहै। अर्थात् किसी एक-
वाक्यमें जितने पदहैं उनसबमेंही कोईना कोई अर्थबोध कराने-
वाली शक्ति रहतीहै। एक शब्दसे दो तीन अर्थों-का ज्ञान होताहै
परन्तु जिसस्थलमें जिस अर्थका ग्रहण उचितहै वह युक्तिसे नि-
र्णीत होता है। उस अर्थको यदि साक्षात नहीं देखतो लिङ्ग-
अनुमानसे जानलेतो। इसप्रकार अर्थनिश्चय करनेवाले व्यापार-
को मीमांसक लोग लिङ्ग कहतेहैं। वह लिङ्ग दोप्रकारकाहै, एक
अर्थगत, दूसरा शब्दगत। जैसा "स्रुवेणावद्यति" "स्रुव (खदि-
रादि काष्ठसे बनाएहुए हस्तपरिमितपात्रविशेष) से विभागकर-
ताहै"

## सती-परिणयम्

मयमनसिंह, सेरपुराधि-वासि श्रीचन्द्रकान्ततर्कालङ्कार-प्रणीतम् श्रीयुक्त बाबुगोविन्द कुमार चतुर्धुरीण महाशयस्याभ्यनु-ज्ञया-व्ययेनच-ढाका-गिरिशयन्त्रे मुद्रितम्।

पुस्तकमिदं १८७१ खृष्टाब्दे जुलाईमासस्य सप्तदश दि-वसे मुद्रितम्, तदा विद्योदयस्य गर्भाधान मपि न जातमत एत-स्य वयोवृद्धस्य सम्यक् समालोचने विद्योदयस्य वाक् प्रसरावत-रण-मनुचित मेव। अथवैयत् कालपर्य्यन्तमस्य सुविज्ञजन कृतसमा-लोचानि भूयांसि सन्त्येव तदत्र विद्योदयस्य उक्तिः पिष्टपेषण रू-पा भविष्यतीति तूष्णीम्भावे श्रेयस्करेऽपि वयं कर्त्तव्यानु रोधात् कि-ञ्चिदपि वक्तुमनसः संवृत्ताः।

इदानीं संस्कृत भाषाया यादृगवस्था जाता, तत्षोडश सर्गा-त्मकस्य काव्यस्य रचनैव स्पष्टतो ऽस्मत्कैतद्वचनं विशदविस्तारं करोति। यत्र, संस्कृताभिधाने येषां द्रव्याणां नामानि विद्यन्ते तेषामपि बहून्य ऽस्माभिर्न स्वरूपेणाधिगतानि केवलं द्रव्य विशेषरू-पेण परिचितानि, तथा यानिच द्रव्याणि कलिकाताद्यपणितानि, तेषा-मपि बहूनां संस्कृतनामानि, न लभ्यन्ते। यत्र पुष्पवृक्षलता जी-वदेहनदी पर्व्वतादि चराचरात्मक द्रव्य जातानामेवैतादृशी अव-स्था, येषां-संस्कृतनामानिज्ञायन्ते न तेषां स्वरूपज्ञान मस्ति, येषां

च स्वरूपं ज्ञातं न तेषां संकलनाकज्ञानम् । न केवल मेतन्मात्रं, व्याकरणालङ्कार प्रमुख भाषा विद्याङ्गीभूत शास्त्राणामपि नियमा न सम्यक् काव्येषु व्यवह्रियन्ते । अतएवोक्त मल्लानिरिताहृशि सप्तदि षोडशसर्गात्मकस्य काव्यस्य रचनैव रचयितुर्भूयसे यशसे प्रभवति । अतः परं यदि रसवत्तादिकं भवेत् तदा मणिकाञ्चनयोग एव । तादृशस्य काव्यस्य दोषदर्शनं क्रूरजनकार्य्य मित्येवास्मत् सिद्धान्तः ।

बहूनामेव विद्यार्थिनां कुमारसम्भवीयं "दक्षस्यकन्याभव पूर्व्वपत्नी, सतीसती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे" श्लोकमेक मधीत्य कथं दक्षकन्यया सत्या सह महादेवस्य विवाहः सम्वृत्त इत्येवंरूपा जिज्ञासा भवति तज्जिज्ञासानिवारणाय ग्रन्थकारेण काव्यमिदं विरचितम्, यथा नवाविष्कृतायां पृथिव्यां (आमेरिकाखण्डे) प्राचीन पृथिव्या बहुधा प्रतिरूपं दृश्यते तथैवास्मत्-समालोच्य सतीपरिणये कालीदास कृतस्य पार्व्वतीपरिणयस्य कुमार सम्भवे त्वपर पर्य्यायस्य छाया । अत्र च क्रमेण सतीजन्म, महादेवस्य तपश्चरणं, मदनस्य स्थाण्वाश्रमे प्रवेश ; वसन्तोदय इत्यादि विषया यथाक्रमं सन्निवेशिताः । इत्थमपि ग्रन्थमिदं कालिदासकृत सरस पार्व्वती परिणयस्य ट्रकापित्वे (अनुरूप प्रतिलिपित्वेन) नोपकल्पितुं नास्माकं मतिर्जायते । पाठका एतास्य परीक्षकाभवन्त्वितिधिया वयमस्मात् कतिचित् श्लोकानुद्धरामः ।

द्वितीयसर्गे सतीरूपवर्णनम्

"ववृधे रुचिरा दिने दिने धनलिप्सा विषयैषिणामिव ।
बहुलापगमे कलाविधौ दिनकान्त्येव रुचा रराज च ॥
स्फुटवर्णगिरं गरीयसीं कफमुक्ते धमनीमुखे क्रमात् ।
कृतसंस्कृत सद्गुणावली प्रतिपेदे परिवादिनीव सा ॥
ललिता मधुराक्षरावलीः कलकण्ठीकृतपञ्चमारिणीः ।
विततान यदाप्सरोवरा न तदा गीति मिताऽमतामरैः ॥
त्रिगुणाऽपि यदा, त्रिमोहिनी ननु तस्याः सरसा सरस्वती ।
पुनरुक्तवदच्युतान्तदा सगुणायाः किमिवान्यगौरवम् ॥
विगते समये, नवं नवा प्रति पेदे मद कारणं वयः ।
विरराज सती सताऽमुना मधुनेव व्रततिर्मधुप्लुता ॥
चपला खलु लोचनप्रिया सहजात्युज्ज्वलकान्तिमत्यपि ।
जलदेन विना न रोचते शशिलेखा रजनीमुखेन वा ॥
परिजल्पितवल्लसी यदा खभिजातस्वरसन्ततिस्तदा ।
प्रतिवाचमदात्सदोद्धता कलसैवाह्वय वामलोचना ॥
चरणाम्बुरुहद्वयादधः खल एवारुणराग रञ्जिता ।
उपरीन्दुकला दधौ मदाश्रिपतौ सौनखरश्मिपातिव ॥
चपलत्वयुतं वसुन्धरा गमने ऽस्याः कमनीयरोचिषः ।
कठिनेति भयेन विह्वला विदधौ कोकनदावली निव ॥

परिचिन्त्यगत रुचिराञ्चितं तदमुष्या इव मानसं सरः ।
कलहंस-वधूर्वधो, कुतः प्रतिपक्ष-क्षत-सम्पदां सुखम् ॥
निज-जानु-युगाग्र-सम्पदा करिणी-जानुयुगं जिगाय सा ।
इति वाष्पपरिप्लवे क्षणम् कुमहन्दं सततं विषीदति ॥
करभोरुगुणैर्गुणैस्त्विषः कदली येषु गुणेषु लज्जिता ।
मकरन्दमिषान्मनस्विनी ध्रुवमश्रूणि जहाति मुञ्चति ॥

तथा नवमसर्गे वसन्तवर्णनम् ।

तस्मिन् प्रपन्ने मदने प्रवेशम् स्वं माधवोऽपि स्वगुणैरुपेत्य
अनुक्तसाहाय्यकरो जजृम्भे समेषु सख्यं सममामनन्ति ।
विलंघ्य शैलं मलये मनोज्ञम् बभूव पौलस्त्यदिशं यियासुः
प्रालेयलोभादिव, चण्डरश्मिर्नित्योपभोगो हि विरागमूलः ।
श्रीखण्डशैलं रविरस्य हित्वा किमन्यतो याति गुणा[illegible] ।
इतीव तद्गन्धवहोऽपि शंसन् कलस्वनैरत्र शनैर्जगाम ॥
आस्पृष्टगंगासलिलैर्मरुद्भिः किञ्चिन्नतस्पन्नवहस्तसङ्घाः ।
कूजत्पतङ्गास्तरवस्तमुच्चैः सभाजयाञ्चक्रुरिवर्तुराजम् ॥
रविः समासाद्य नवप्रदेशम् नृपो नवं राज्यमिवाततान ।
असह्यकल्पं सहसा प्रजानाम् प्रतापमाविष्कृतदारुभावम् ॥
करै रिवास्त्रैरचिरप्रचारैराजेव सोद्यत्खरप्रतापः ।
चक्रे तुषारान् विरलानशेषं क्रूरानिवोच्छेत्तुमपारयन् सः ॥

हिमानि भान्तिस्म नभोन्तराले रवेः करात् पूततरे न तादृक्
तत्त्वावबोधाद्विमुक्तचित्ते समत्वबन्धाद्विरमहत्वात् ॥
सूर्यः प्रतिबन्धिहिमं विजित्य प्रभातकान्तं विमलं चकार ।
अयुक्तकारित्वमपक्षपाताः सन्तः प्रियाणामपि न क्षमन्ते ॥
असह्यकल्पे विगते रमण्यः प्रालेयकाले भवनस्थलेषु ।
संयोजयन्तिस्म सरोजवक्त्रा मदेन पूर्वोज्झितमेखलाभाः ॥
ज्योतींषि सर्वाणि तदा नितान्तं गतप्रतिबन्धितया विरेजुः ।
सुवर्णखण्डानि मलेऽपनीते समुज्ज्वलानीव कृशाऽनलस्य ॥
एभिरेवश्लोकैर्ग्रन्थस्य ग्रन्थकारस्य च सम्यक् परिचयो भविष्य-
तीति वयमत्रैव निवृत्ताः ।

अथ मदनमुखचपेटिकाप्रारम्भः ॥

द्विरदवदनमङ्के सन्दधानाङ्कुरस्य क्षितिधरवरकन्यां सन्दधानं निशाके
शशिनि[illegible]कटाक्षक्लिष्टमस्तम्भनूपं [illegible]-
मीडे ॥

का[illegible]तिः ।
कश्चिद्वदेशे परमेश्वरस्फुरा तस्मै हृदिध्यानुमता मुमुक्षुः ॥
सर्वाङ्गसौन्दर्यभराभिरामारामाभिरामाभरणा सखीलता ।
कामागमज्ञाऽथ विहर्तुं कामा दैवेन काचित्स मगात् प्रदेशम् ॥
अथातिपुष्टाङ्गमनङ्गकान्तं शान्तं रहस्थं समुद्वीक्ष्य साङ्गना ।

नसाऽबला यस्य मनोऽनुसारिणीमुधा इत्यादि

श्रियःपतिर्नूतनवारिदच्छविश्रीवत्सचिह्नोवरपीतवासाः ॥

न येन विष्णुर्हृदयाम्बुजे धृतोमुधा इत्यादि

भ्रुवौ यदीये असिते च सान्द्रे मनोजचापाभिमतिर्न्निवर्त्ति के ॥

यस्मै निजार्थम्परिसूचयेन्नसा मुधा इत्यादि

कापटयराशौ दृढदीर्घपाशे संसारवृक्षस्य दृढालवाले ॥

रागम्प्रकुर्वीत कदापि यस्त्रियां मुधा इत्यादि

अहर्मुखोष्णांशुसमानरोचिर्भालेऽस्तियस्यास्तिलकं विशालम् ॥

सा कामिनी यस्य गृहं नशोभयेन्मुधा इत्यादि

धर्म्मार्थकामानपिमोक्षमुच्चैर्द्ददाति याशुभ्रतराच्चकीर्त्तिम् ॥

सा येन विद्याधिगता न यत्नतोमुधा इत्यादि

शिरीषपुष्पन्दिनाभिमर्दीपक्ष्मत्रजस्यान्तरोऽस्तियस्याः ॥

न येन रागेण विलोकिताऽखिलामुधा इत्यादि

क्षतोऽधिकां येनसमां क्षतोऽवराम्परस्य कान्तामपिरन्तुकामाम् ॥

पयोधरोऽम्बामिवसोदरीं सुताम्मुधा इत्यादि

यदङ्घ्रिसम्पर्कहितेक्षपाम्बुजे वनाधिवासेऽपतपस्त्रिवापुरे ।

विलोकये येनहि साऽनुरागतोमुधा इत्यादि

यशस्करीन्दुःखतिरस्करीम्परां श्रेयस्करीन्दीर्घतपः फलप्रदाम् ॥

विद्यान्नपालायदिमेत्रयः कुधीर्म्मुधा इत्यादि

नासा यदीयाम्बुकचञ्चुरम्या समा मनोज्ञा मसृणा सुरम्या ।
वधूर्न सा यस्य रतिाधिदेवता मुधा इत्यादि
गुरौजनन्याञ्जनकेऽन्नदातरि च्छद्म प्रयुञ्जीत हृदा गिरापि यः ॥
छागस्य कण्ठ स्तन वद्धि सर्वथा मुधा इत्यादि
उच्चैर्वलक्षः पृथुदर्पणाभः कपोलदेशौ मसृणाश्च यस्याः ।
न चुम्बिता येन निपीड्य साऽङ्गना मुधा इत्यादि
समर्च्य यस्याङ्घ्रिसरोरुहञ्जनस्सहस्र जन्मार्जितपापराशितः ॥
विमुच्यते येन नसोऽर्चितोहरिर्मुधा इत्यादि
नवाम्रपत्रोपमितौ मनोहरौ सौवर्णं सत्कुण्डलकान्तिकारिणौ
कर्णौ यदीयौ रतिहीणौ न यस्य सा मुधा इत्यादि
यत्पादपङ्केरुहसम्भवञ्जलम्पुनातिनिश्शेषतया जगत्त्रयम् ।
स सेवितो येन नसिन्धुजापतिर्मुधा इत्यादि
सुधातिरस्कारपटुर्स्तदुर्मिगुस्सु पक्वबिम्बच्छविरङ्गनायाः ॥
नास्वादितो येन मनोहरोऽधरोमुधा इत्यादि
ब्रह्माहमस्मीति मधूत्तमङ्गुरोर्वेदान्तवेत्तुर्मुखकञ्जनिःसृतम् ।
आस्वादितं संसृतिहारियेन नो मुधा इत्यादि
स्मितेनरम्याऽतिशुचिर्यदीयारदावलीराजतिकोरकोपमा ॥
भाषित सा येनसमन्नकामिनीमुधा इत्यादि
विरूक्षवैकुण्ठगिरीश विष्णु शूलिन्मुरारे मकरध्वजारे ।

मुदेतिगायेन्नहि योरहस्थितोमुधा इत्यादि

कान्तामुखाम्भोरुहमातरिश्वना मनोहरेणाम्बुजगन्धशोभिना ॥

घ्राणेन्द्रियं येन भृशं नतर्पितम्मुधा इत्यादि

अशेषलोकेश्वरवाञ्छितस्य श्रीकान्तपादोधृतमाल्यकस्य ।

घ्राणं सुगन्धेन नवेन तर्पितं मुधा इत्यादि

लसज्जपापुष्पदलाभिरामा ताम्बुलरागाधिकराजमाना ॥

जिह्वा यदीयास्ति न ताम्भजेतयोमुधा इत्यादि

जगन्निवासङ्करुणारसाम्बुधिम्भृग्वङ्घ्रिपद्माङ्कितमीश्वरेश्वरम् ।

नारायणं योऽविरतम्भजेतनोमुधा इत्यादि

सुखोल्लसद्दर्पणरम्यवृत्तम्वृत्त म्मनोज्ञचिबुकन्तरुण्याः ॥

स्पृष्टङ्करेणेह न येन रागान्मुधा इत्यादि

पितुर्ज्जनन्याद्विजदेवयोश्च श्रीशार्च्चं नासक्तहृदोगुरोश्च ।

स्पृष्टम्पदाब्जंशिरसेह येन नोमुधा इत्यादि

यस्या मुखंसाचियुगंरुचाम्बुजं सभृङ्गयुग्मं विकचञ्जयत्यलम् ॥

न साऽङ्गना येनविलोकिता मुदा मुधा इत्यादि

कलत्रपुत्रादिषुरागहीनोऽहीनोऽच्युतश्यानुरतस्वभावः ।

पराङ्गनां योऽनविलोकयेन्मुदामुधा इत्यादि

सुकम्बुदर्प्पापनयायशक्ता रेखात्रयाढ्या सुखकाञ्चनालिका ॥

ग्रीवास्तियस्या वशगा न यस्य सा मुधा इत्यादि

यश्रोदयाङ्कितरसोपविश्रितोऽभिनीतिमनीहितदैतिशृणुन् ।
नम्रौत्सुक्योयेन नसंस्मृतोहरिर्मुधा इत्यादि
मनः प्रियसुन्दरसन्निवेशसुश्लिष्टपङ्केरुहजाक्षकीर्त्तिकत् ॥
कण्ठोऽस्तियस्या निलये न यस्य सा मुधा इत्यादि
हरेर्हरस्य प्रतिमा मनोरमा विलोकनादर्चनतोऽप्यवापहा ।
हृष्टेतनो यस्य सदैवमन्दिरेमुधा इत्यादि
अंसौयदीयावुपमानवर्जितौ सुवर्ण लोकेशभराभिनन्दौ ॥
आलिङ्गिता येनवराङ्गना न सा मुधा इत्यादि
औदार्यगाम्भीर्यगुणोल्लता दिशागुणावलम्बाश्रितकीर्त्तिहेतवः ।
अहोनयस्मिन्निवसेयुरालयम्मुधा इत्यादि
यस्याभुजौपङ्कजनालशोभिनौ पद्मोल्लसत्पल्लव वल्लिपेशलौ ॥
विलासिनी सापरिरम्भयेन्नयम्मुधा इत्यादि
विरिञ्चिरत्रापिपमुत्त्वमेत्यव्योम्नि भ्रमत्येवयथाऽस्तियाजितः ।
विश्वासपात्रं विदधीततांयोमुधा इत्यादि
अलङ्कृतौमृदुलौमनोरमौ करौयदीयौनखरत्नभूषितौ ॥
यं नाऽऽददीते हरतायसाङ्गनामुधा इत्यादि
यवाङ्कुशाब्जाशनिमीनमङ्कुध्वजाङ्कचक्रच्छवि वाञ्छितपदम् ।
येनस्मृतन्नोहरिपादपङ्कजम्मुधा इत्यादि
उरोयदीयं स्फटिकाभमायतं सुस्वर्णमुक्तकुपराजि हारकम् ॥

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्धनम्।
जयति सा विशदाम्बुजवासिनी सुमनसांमनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरंभुवि॥

खण्डं ८ ] जून इं १८८० [ ६ सङ्ख्या

सूची



लाहोर।

ऐल्बर्ट नामके यंत्रे दिलबागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इत: पूर्व्वं विद्योदये क्रमश: प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाष: प्रकाशनीय:। विद्योदय कार्य्याध्यक्ष: लवपुरे॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थ:) लवपुरस्य संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।

---

मूल्यादीनां नियम:।

| | | | | |
|---|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं | ... | ... | ... | २।/० |
| " पश्चाद्देयं | ... | ... | ... | ३।/० |

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्ति:/० परिमितमूल्येन मुद्रिता भविष्यति।

नूतनपुस्तकम्।

छन्दोबोध: (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थ:) सुगमहिन्दीभाषायां लिखित: लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयोध्यक्षकार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्य:। कवितावली— (अत्युत्तमकविताग्रन्थ:) मूल्यं।

अस्मत्समीपे प्राप्तव्या।

---

---

विरुद्धयो रेकसम्बन्धावगा-हि ज्ञानं संशयः, एकस्मिन् धर्म्मिणि विरुद्धनानाप्रकारकं तदिति सम्प्रदायः त्रिविधे ऽपिसंशये कोटिद्वयज्ञानं कारणं; विशेषदर्शनं निश्चयः, सामग्री निश्चयश्च, विरोधिनी विपरीत ज्ञानमात्रे विशिष्ट ज्ञानं कारणं; आरोपमात्रे साधम्यज्ञानं संशयो ऽपि सम्भावनातदितर भेदेन द्विविधः, तत्रोत्कट कोटिकः संशयः सम्भावना, कोटिः प्रकारः, उत्कटत्वं च कोटि व्याप्य वृत्तिर्जाति विशेषः, भूयः सहचारित्व मेव वा तथासति तोयदे तोयं भविष्यति नवेति, तदितरः स्थाणुरपि पुरुषो वेत्यादिकः; पुरुषं प्रवृत्तये युनक्तीति प्रयोजनं, तच्च द्विविधं, सुखं दुःखाभावश्चेति; वादि प्रति वादिनोः सम्प्रतिपत्ति विषयोऽर्थो दृष्टान्तः, स द्विविधः साधर्म्य वैधर्म्य भेदेन यथा योयो धूमवान् स वह्निमानित्यत्र महानसं, योऽसौ न वह्निमान् नासौ धूमवान् यथा-ह्रदः; अभ्युपगम्य मानोऽर्थः सिद्धान्तः अर्थस्याभ्युपगमो वा; न्यायैकदेशा अवयवाः न्यायश्चा-नुमिति चरमकारण लिंग परामर्श प्रयोजक शाब्दजनकं वाक्यं, यथा पर्व्वतो वह्निमान् धूमात् योयो धूमवान् स वह्निमान् यथा महानसः वह्निव्याप्य धूमवांश्चायं तस्मा.

वह्निमानिति, प्रथमावयवः प्रतिज्ञा, द्वितीयो हेतुः, तृतीय उदाहरणं, चतुर्थं उपनयः, पञ्चमो निगमनं । व्याप्यस्याहार्य्य प्रयोजनं तर्कः, आत्माश्रयान्यो न्याश्रय चक्रानवस्था लाघवानि तु तर्क प्रतिरूपकाणि, सचायं विरोधि शङ्काकालीन प्रमाणमात्र सहकारी यथा घटसत्त्वशङ्कायां यद्यत्र घटो ऽभविष्यत्तदा भूतलमिवाद्रक्ष्यत् । इत्यादि अस्यतु आश्रया-सिद्धिः, अनुकूलत्वं, मूलशैथिल्यं, इष्टापत्ति विंपर्य्ययः, अपर्य्यवसानं मिथोविरोध श्चेतिषट्दोषाः; विमृश्य पक्षप्रतिपक्षाभ्या मर्थावधारणं निर्णयः; तत्वबुभुत्सोः कथा-वादः, साधन दूषण विषयो नानाप्रवक्तृको वाक्यसन्दर्भः कथा उभय साधनवती विजिगीषु कथा जल्पः, जल्पभिन्न विजिगीषु कथा वितंडा, परपक्ष दूषणमात्रा सा चेति यावत् । अनुमिति कारण विघटक ज्ञानविषया हेत्वाभासाः, तत्रव्याप्ति पक्षधर्म्मताभ्यां-निश्चयः सिद्धिः, तदभावो ऽसिद्धिः आश्रया सिद्धिरपि आश्रय विशेषणा सिद्धया आश्रय स्वरूपा सिद्धया च द्विविधा हेतोराश्रये ऽभावः स्वरूपा सिद्धिः यथा घटो नित्यः चाक्षुषत्वात् । इत्यत्र चाक्षुषत्वं । साध्याभाव व्याप्यो हेतुर्विरुद्धः, यथा शब्दस्यानित्यत्वे साध्ये ऽजन्यत्वं, स्वयं विरोधिसंशय कोटिउपस्थापकत्वावच्छेदकरूपवाननैकान्ति-

कः, सपक्षविपक्षवृत्तिः साधारणः यथा धूमसाधकं वह्निमत्त्वं, धूमवदन्यस्मिंस्तप्तायःपिण्डे वह्निसत्वात्, साध्यवत्तया निश्चितः सपक्षः, साध्याभाव वत्तया निश्चितो विपक्षः, यथा वह्निमत्त्वस्य महानस ह्रदो; सपक्ष विपक्षव्यावृत्तो ऽसाधारणः, यथा भूर्नित्या गन्धवत्त्वा दित्यत्र गन्धवत्त्वं भूव्यतिरिक्त नित्यद्रव्येभ्यो व्यावृत्तं, भूमात्रवृत्ति; साध्याभाव साधकं हेत्वन्तरं यस्य स प्रकरणसमः, यथा शब्दोनित्यः श्रावणत्वात्, शब्दः अनित्यः कार्य्यत्वात् घटवदिति; साध्याभावप्रमा कालात्ययोप दिष्टः सएव कालातीत इति बाध इति चोच्यते यथा वह्नि रनुष्णः कृतकत्वा दित्यत्र त्वनुष्णत्वस्याभावस्योष्णत्वस्य परिच्छेदः। वचन विघातो ऽर्थविकल्पः छलं यथा नवकम्बलोऽयं देवदत्त इत्यत्र नवः कम्बलो यस्येति वक्तुरभिप्रायः तत्रायं छलवादी वक्तुरभि प्रेतादर्थान्तरं नवकंबलो यस्येत्येवं कल्पयन् निषेधयति।

नास्यैकोऽपि कम्बलःसम्भवति कुतो नवेतिच्छलवादितया पराजीयते। धर्म्मविकल्प निर्द्देशोऽर्थ सद्भाव प्रतिषेध उपचारछलं यथा मञ्चाः क्रोशन्तीत्युक्ते मञ्चस्थाः पुरुषाः क्रोशन्तीति नमञ्चा इति, दूषणासमर्थ मुत्तरं जातिः स्वव्याघातक मुत्तरं वा अ-

तत्र न्यूनाधिकोपसिद्धान्तो हेत्वाभासश्चेत्यष्टौ निग्रहस्थानानि साधर्म्य वैधर्म्योत्कर्षापकर्ष वर्ण्यावर्ण्य विकल्पसाध्य प्राप्त्यप्राप्ति प्रसङ्ग प्रतिदृष्टान्तानुपपत्ति अविशेषोपपत्त्युपलब्ध्यनुपलब्धि नित्यानित्य कार्य्य- समभेदेन चतुर्विंशति विप्रतिपत्तिश्च निग्रहस्थानम् ।

इतिव्रजभूषण मिश्रकृता लघुपदार्थरत्नमाला समाप्ता ॥

मर्पितवान । अथ प्रजाना मह्दुद्वेग मुत्पादयति तस्मिन् विन्चेष्ट-रनगरस्य धर्म्माध्यक्षो (bishop) पिटर डिरोचेसनामा राज्ञः प्रधान सचिवो वभूव । सहि पैक्तेवकूले जन्मग्रहणकार, अलङ्कृत आसीत् दयतोत्साहादि गुणैः ।

नृपतिः हेनरी नामाय तस्योपदेशवशाद्राज्ययानेकासंख्यकान् पैक्तेवजातीयानपरांश्च वैदेशिकान् निखिलदेशाधिकारेषु नियोजयामास । तेच वैदेशिका लोभपरतन्त्रा अहङ्कार दर्पभूयिष्ठा आसन् । नृपतिरेवं वैदेशिकान् प्रत्यनुग्रह बाहुल्य मवलोक्य प्रजा-तयश्चातीवेर्ष्याकुला बभूवुः । ततस्तासामग्रेसरा राजसमीप म-ध्यपेयोस्तुः "वैदेशिकाः स्वपदात् प्रचाव्य दूरोक्रियन्तां सन्यथा ते-सर्व्वं मिलित्वा तान् राजानञ्च देशान्निष्कासयिष्यन्तो" ति । अस्मि-न्नवसरे राज्ञः परदेश विजय यात्रा च विफलीभूता तेषां मन्युमु-द्दीपयामास । तदानीं वायूत्क्षिप्तसागर मध्यस्थितस्य जलयानस्येव आङ्गलदेशस्यदशा बभूव ।

ततः लिसेष्टरदेशस्य अरल पदाभिषिक्तो सिमनमण्टफोर्ड नामा राजानं च्युताधिकारं कर्त्तुं सभिनवशासनपद्धतिं प्रवर्त्तयितुञ्च कृतसङ्कल्पो बभूव । अथ अपरे च सर्व्वे महद्वंशसम्भूताः प्रकृतयस्तमनुजग्मुः । ते सर्व्वे शस्त्रपाणयो भूत्वा कस्मिन्नपि सदोगृहे मिलिता राजान माजुहुविरे । राजा तत्र प्रविशन् तेषां मभि

प्रायं पर्य्यपृच्छत् । ते प्रोचु रस्मन्मनोगताधिकाति-निमित्त मेवायं प्रयासः । यदि राजा तदुपशान्तिं कुर्य्यात्तदा वयमपि शान्तिं गच्छे म इति । तदाकर्ण्य नृपतिस्तेषा मभिलाप सङ्कोचकार ।

ततः स नृपतिः अक्स-फोर्डनगरे पार्लिमैण्ट नाम्नीं सभामेका माजुहाव । एतत् सभाह्वानस्य प्रयोजनन्तु राज्यशासनस्य नवीन पद्धति निर्धारणं, निखिलेषु राज कार्य्येषु योग्य पुरुषनियोजनञ्चासीत् । कियत् काला दनन्तरं साहि सभा उन्मत्तपार्लिमैण्टनाम्ना विश्रुता बभूव । एतत् सभात्य चतुर्विंशति संख्यकाः कुलीना राजकीयोच्चपदवीषु नियुक्ता बभूवुः । लिसेष्टरीपनामकस्तु तेषां प्रधान पदवीं प्राप । ते राज्यपरिपालन नियमानां सर्व्वाङ्गीनं परिवर्त्तनं चक्रुः बहूंश्च पूर्व्वभृत्यान् स्वपदाच्च्यावयामासुः । ते राज्याधिकारे स्वसम्मतान् नियुयुजिरे । ते न केवलं राजशक्ति ह्रासं विदधुः परं द्वादश मनुष्याणामुपरि समस्त राजकार्य्य पर्य्यवेक्षण भार मर्पितवन्तः । तेषामपि समये समये परिवर्त्तनं स्वीकृतं, इत्थं राज कृता-त्याचाराणां निवृत्ति रभत् पर तदाधिगत-प्रभुतानां धनिना मत्याचारः क्रमेण बहुप्रसरो बभूव ।

ओंकारः

ओंकारेनाम प्रागेव वेदवक्तुर्ब्रह्मणो मुखा न्निर्जगाम । अतएव वर्णोऽयं भारतीयार्य्यकुल जैर्वैदेश्योऽप्यतिक्रमाद्रियते, ओंकारस्तु वि-

ना विशुद्ध सुच्चरिता अपि वेदमन्त्रा नाभीप्सित फलाय प्रभवन्ति । नकेवलं वेदमन्त्रा अन्ये अपि स्तवपाठादय ओंकार पुटिता एव पठ्यन्ते । ओंकारस्य माहात्म्यं नैयत्तयावधार्यते; वेदपुराण, धर्मशास्त्रादिष्वोङ्कारस्य माहात्म्यं भूयो भूयः समुल्लिखितमेव । कथितमेवास्माभि रेकदोंकार व्याख्या पुस्तकान्यसंख्यान्यासन् । उपनिषत्स्वोंकारः परब्रह्मस्वरूपतया निर्दिष्टो विहितश्चास्योपसनाविधिः यथाच्छान्दोग्ये—

"ओमित्येतदक्षरमुद्गीथ, ओ मित्येतदक्षरमुपासीत"

अपिच उद्गीथापरपर्य्यायस्यों कारस्य सर्व्वोत्कृष्टत्वं तत्रैव ।

"एषांभूतानां पृथिवी रसः पृथिव्या आपोरसः । अपामोषधयोरस ओषधीनां पुरुषोरसः पुरुषस्य वागोवाचऋग्रस ऋचः सामरसः साम्न उद्गीथोरसः सएष रसानां रसतमः परमः परार्द्धो वद्गीथः ॥

अथक्रमेणैकस्य सर्व्वशक्तिमतः परमेश्वरस्य सृष्टिस्थितिप्रलयरूप कार्य्यत्रय कारणात्मक त्रिविधशक्तिमदनन्तरमभ्युदय ब्रह्मविष्णु त्रिरूपभेदतये क्षमाविति, मायोऽनत्यासङ्घोंकारस्य "अ, उ म, इति त्र्यवयवयुक्तत्वेनोपलक्षिते ओंकार स्त्रिदेव वाचकत्वे नोकल्पितः—यथा

"अकारेण जगत्पाता संहर्त्ता स्यादुकारतः, मा

कारस्य जपेन तदर्थस्य च परं ब्रह्मणो भावनया तद्वाप्तिः"

अथोंकारेण कथं ब्रह्म भावनेति प्रश्ने वयं ब्रूमः। ओंकारो-हि छान्दोग्योपनिषदि सुतीक्ष्ण वाणरूपेणोपकल्पितः; यथातिसुक्ष्माग्रेण वाणेन लक्ष्यभेदोभवति तथोंकार जपेन मनस्स्थैर्य्य विधानात् परं ब्रह्मणोऽज्ञानरूपं लक्ष्यं हस्तगतं भवति। अस्या कृतिरपि वाणेन साम्यभजते।

### यन्त्रव्यवहारः

पुरा भारतीयार्य्यजातीया नकेवलं मनोवृत्तीना मुन्नतिं लेभिरे वाह्यविषया अपि तैरद्भुत योगशक्तिसम्पन्नैरुत्कर्षस्य चरमसीमामवापिताः। प्राचीनग्रन्थादिदर्शनेन तेषां यन्त्रव्यवहारनैपुण्यं स्फुटी भविष्यति। पुरा सिफन (Shephon) नामकस्य जलनिर्झरणयन्त्रस्य प्रभूत व्यवहार आसीदिति भास्कराचार्य्यकृत सिद्धान्तशिरोमणि ग्रन्थीय यन्त्राध्यायपाठेनावगम्यते। यथा

"ताम्रादि मयस्याङ्कुशरूपनलस्य प्रपूर्णस्य एकं कुण्डं जलान्तर्द्वितीय मग्रमधोमुखञ्च वहिः युगपन्मुक्तश्चेत् कं नलेन कुण्डाद्वहिः पतति"

### अस्यटीका

ताम्रादि धातुमयस्याङ्कुशरूपस्य वक्रीकृतस्य नलस्य जल पूर्णस्यैक मग्रं जलभाण्डेऽन्यदग्र वहिरधोमुखं चैकवेलदा यदि

विमुच्यते तदा भाण्डजलं सकलमपि बहिः चरति तथयाप्युच्चक-
मल नलिनीनलस्य जलस्थभाण्डे छिन्नस्य जलपूर्णं सुषिरलोकमयं
भाण्डाद्बहिरधोमुखं धृतं यदि ध्रियते तदा भाण्डजलं सकलमपि न-
लेन वहिर्यातीति । इदं कुक्कुट नाडी यन्त्रमिति कथ्यते ॥

पुरा वर्षा जलमान यन्त्रमप्यासीत् । अधुना यत् "रेनगज" (Raingauge) इति नाम्ना ऽभिधीयते, संस्कृताभिधानमस्याढक-मिति यथा वराहमिहिरकृतवृहत् संहितायाम्—

"हस्तविशालं कुण्डकमधिकृत्याम्बुप्रमाण निर्देशः । पञ्चा-शत् पलमाढकमनेन मिनुयाज्जलं पतितम्"

अमित एकहस्त परिमितं कुण्डकमेकं कृत्वा वहिर्निरावर-णस्थाने स्थापयितव्यम् । तत्कुण्डं पञ्चाशत् पलैर्विभक्तव्यम् । अने-न यन्त्रेण वर्षापतितं जलं प्रमितम्भवति । यन्त्रमिद माढकमिति-कथ्यते । एकैकपलस्य तोला चतुष्टयमानम् ॥

हविक इंग्लस्य

महाकल्पः

अर्वाचीनविंशशताब्दीसमये भूतप्रेतमन्त्रादीनां नाम-धेयम् अपि परिहास कारणं जातम् । ये ईदृशं सत्त्वे विश्वस-न्ति विद्यासागरपारगामिनो ऽपि ते महामूर्खरूपेणावज्ञायन्ते ए-तद्विपरीतास्तु वर्णानभिज्ञा अपि पण्डितपदवी मागच्छन्ति ।

अनेनैव हेतुना इदानीं बहवो ऽल्पविज्ञानाः प्रकृत तत्त्वानभिज्ञा नव्याः स्वकीयविद्याबुद्धिमत्तादि प्रख्यापनार्थं भूतादिभयकम्पित-हृदया अपि वह्निभूतादिष्वविश्वासं दर्शयन्ति ।

अहो विचित्रा हि गति र्जगतः मन्वादीनां जन्मभूमि भा-रत वर्षात्त ऽपगच्छन्ति परं सर्व्वोत्तमसभ्यदेशे, आमेरिकाभिधेये यत्र स्त्रियो ऽपि पुरुषाधिक प्रागल्भ्य लाभं कुर्वताः, तेषां प्रत्य-हं प्रादुर्भावो लक्ष्यते । सम्प्रति आमेरिका-भिधेयादेशात् कश्चित् विख्यातनामा विद्वानागत्य मुम्बाई नगर्य्यां थियोसफिष्टनामकं मासिक पत्रिकं प्रकाशयितु मारब्धः । तत्र बाहुल्येन भूतप्रेत मन्त्रे-न्द्रजालादीना मुल्लेखो दृश्यते, सम्प्रति तत्रैकं अधिक इंगनस्य मन्त्र-मैतिहासं लिखितम् ।यथा—

१८४८ त्रिमिति खृष्टाब्दे कश्चित् वैरागी बाङ्गाल देशस्थि-तस्य ष्ट्रिकन नामधेयस्य कस्यापि यूरोपीय चिकित्सकस्य पार्श्वं स-मागात् । याचितश्च स चिकित्सक स्तेनागन्तुकेन दारचिनि-तैलम् । अथ तैले प्रदत्ते स वैरागी तस्मै मन्त्रमेकं प्रदातु मैच्छत् । सोऽपि-चिकित्सकः कस्याप्यसन्तोषोत्पादन मनुचितं मितिविविच्य सादरं लिलेख तम् । अथ कियत्स्वपि व्यतीते समये कश्चित् वृश्चिकदष्टस्त-त् पार्श्वमागतः । सोऽपिक्षुत्तृष्णाविष्टः प्रथमं किमप्यौषधमदत्त्वैव वैरागिप्रदर्शितदिशा काष्ठिकया सर्व्वमेव व्रणस्थान मुपस्पृशन् म-

न्त्रोच्चारणं कृतवान्। ततो मन्त्रस्यैकदोच्चारणेन तस्य व्यथां किञ्चिदुपशमिता मवलोक्य स पुनः पुनर्मन्त्रो च्चारण मकरोत् यावत् स निर्व्यथो ऽभवत्। ततस्तस्य स्वपत्न्यां वृश्चिकदष्टायां स मन्त्रोच्चारणे नैवता मपव्यथा मकरोत्। इत्थं स बहुशोमन्त्रप्रयोगेन कार्त्तार्थ्य मगमत्। स चिकित्सकमृत्युसमये ब्रौन नामधेयाय स्ववान्धवाय मन्त्रं तं ददौ। सोऽपि मन्त्र प्रयोगेन बहुशः सफलोभूत्वा इदानीं तस्य चिकित्सकस्य तनुजाय मन्त्रमेन मर्पितवान्। मन्त्रस्वरूपं यथा—

"ओं परथमे पाचामिन्या सरधामथ् कीत्वस् सम्पर्धा चू"

"Ong parathamay páchámínyá sardhámath keetvos Sampardhá choo."

इदमत्र अवश्य मवगन्तव्यं यत् वृश्चिकशब्देनात्र कर्कटाकृति वृश्चिको ग्राह्यो नतु वृश्चिक सामान्यं यतस्तज्जातीये ष्वेव वृश्चिकेषु मन्त्रस्य परीक्षा कृता। अन्यजातीयेषु वृश्चिकेष्वस्य किमपि फल का रित्वं भवत्ति न वेति नाद्यापिविदितं। परं परीक्षणे का-हानिः?

विशेषद्रष्टव्यम्

सम्प्रति १८८० खृष्टाब्दीय जुलाईमासात् सितम्बर मास पर्य्यन्तं (from July to September) मासत्रयं यावत् विद्योदय सम्पादकः कार्य्योपलक्षय वङ्गदेशे आगतः। अतएव विद्योदय स्यमूल्यादिकं तद्विषयकं पत्रादिकञ्च निम्न लिखितस्थाने प्रेषनीयं,

अन्यथा पत्नादीनां मूल्यस्य च व्यत्यये न कोऽपि प्रतिभूर्भविष्यति । इति सर्व्वं विशेषतो हृदये निधातव्यम् ।

बहवोऽहि सुचिरादेव विद्योदय मूल्य प्रदानस्य नामापि नगृह्णन्ति । नज्ञायते कीदृशो मन्यमानस्ते । तैरेतदवश्य मवगन्तव्यं यत् विद्योदय प्रकाशनेन नास्माकं प्रभूतधनः लिप्सान किन्तु मृतप्रायायाः संस्कृतभाषाया यत्नेन कर्म्मणा पुनरुद्धारे स्वल्पायिसह कारिता भवेदित्यस्माकं प्रयत्नः ।

स्थानं (ठीकाना) यथा

हृषीकेश शास्त्रि विद्योदय सम्पादके

भाटपाड़ा

नैहाटी मुलुक वंगाला

Editor, Vidyodeya,

Bhatparah Naihatty,

Bengal.

विद्योदय कार्य्याध्यक्षः

श्रीं Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः।

विद्योदयो निराकुर्य्या-दविद्यातिमिरं भुवि॥

खण्डं ८ ] मेइ जूं १८८० [ ५ सङ्ख्या

सूची



लाहोर

ऐक्लर्ट नामके यन्त्रे दिलबागरायनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मद्दन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।

---

मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

„ पश्चाद्देयं ... ... ... ३।/०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति

नूतनपुस्तकम् ।

छन्दोबोधः (संस्कृतछन्दोभाषारचनोपकारी ग्रन्थः) सुगमहिन्दीभाषायां लिखितः लवपुर (लाहोर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्जनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कालेजे प्राप्तव्यः । कवितावली— (अनुसमकविताग्रन्थः) मूल्यं ।

अस्मत्समीपे प्राप्तव्या ।

---

उत्क्षेपणादयो जातिविशेषा इति लीलावत्यां, ऊर्द्धदिक् संयोगजनकं कर्म्म उत्क्षेपणं, अधः संयोग-जनकमपक्षेपणं, निष्क्रिया-वयवाभिमुखसंयोगजनकं कर्म्माकुञ्चनं, निष्क्रियावयवा भिमुख्यविरुद्धनानादिक् संयोगजनकं कर्म्म प्रसारणं, उत्तरदेश-संयोग-जनिका क्रिया गमनं, उत्क्षेपणादिज-संयोग चतुष्टयान्य-संयोग-एवोत्तर संयोगः; तदिदं कर्म्म मूर्त्तमात्रवृत्ति, विनाशस्तु कर्म्मणः क्वचिदाश्रयनाशात् क्वचिदुत्तर संयोगा-दित्येवं त्रिचतुःक्षणस्थाय्यपि मन्यन्ते। सामान्यं किञ्चित्कार्य्यतावच्छेदकतया सिध्यति यथा धर्म्मजन्यतावच्छेदकतया सुखत्वं; ननु अदृष्टमपि दिष्टपदशक्यतावच्छेदकतया जातिः स्यात् तथाकाशत्वं, मूर्त्तत्व घटत्वत्व, पटत्वत्व, विशेषत्व-समवायत्वादीनां जातित्वं स्यात् इतिचेत्तत्र वाधक माह- "व्यक्तेरभेदस्तुल्यत्व, संकरोथानवस्थितिः। रूपहानि रसंवन्धो जातिवाधक संग्रह" इति।

तुल्यत्वं-अन्यूनानतिरिक्तव्यक्तिकत्वं; परस्परात्यन्ताभावसमानाधि-करणयोः सामान्याधिकरण्यं संकरः; स्यादित्यर्थः, यथा मूर्त्तत्वस्य भूतत्वेन सामान्ये चेत् सामान्यं तर्हि तत्रापितुल्य न्यायेनापरमेवं तत्रापि इत्यनवस्थानात्, रूपं विशेषाणा मत्यन्त व्यावर्त्तकत्वं तद्धानिः, समवाय जातेर्वृत्तिः समवायात्मिका न सम्भवति-

आत्मा-श्रयापत्ते रित्यर्थः, जातिवाधक संग्रहः संगृह्यमाणं जातिवाधक मित्यर्थः ।

भूतत्वं वाह्येन्द्रिय ग्राह्य विशेषगुणवत्त्वं व मूर्त्तत्वंत्ववच्छिन्न-परिमाणवत्त्वं, परिमाणे ऽवच्छिन्नत्व मपि नित्यं महत्वान्यत्वमेव द्रव्यत्वं समवायि कारणतावच्छेदकतया सिध्यति; गुणत्वं रूपादिनिष्ठं यज्जन्यत्वं, तदवच्छेदकीभूत यज्जन्य गुणत्वं तद्‌घटकतया सिध्यतीति केचित् कर्म्मत्वन्तूत्क्षेपणादिषु पामर साधारण चलतीति प्रतीत्या, पृथिवीत्वं गन्धजन्यतावच्छेदकतया, जलत्वं जन्यजल समवायि कारण तावच्छेदकतया, रूपत्वन्तु कार्य्यत्व कारणत्वोभयावच्छेदघटकतया, एवं रस-त्वादिकमूह्यम् । चोरत्व-दधित्वा-दिकं रसत्वावान्तर सामान्य मिति रत्नकोशकृतः, प्राभाकरास्तु आकृतिव्यङ्ग्यामेव जातिं मन्यन्ते, सामान्येन सामान्यत्वं-नाम सामान्य मन्यथासिद्धेः, यदि च सामान्यं सदिति प्रतीतिः सत्ताहत्तिरापद्यते, तदासत्ता सतीति वदेकार्थसमवायेन सिद्धसाधनं, साक्षात् सम्बन्ध मापद्यमाने सत्तया व्यभिचारः; अथ-तत्रापि सत्तान्तरं स्वीकार्य्य-मिति तदा नवस्थानं, विशेषेष्वपि न विशेषत्वं जातिः, उपाधिनान्यथासिद्धेः, ननु विशेषेषु किंमान मितिचेत् यावती भेदबुद्धिः न ह्ययं स्वतो व्यावर्त्तकं किञ्चित् भेदकं विनोपपद्यते ।

अथ समवाय: तस्य वृत्ति: सम्बन्ध: स्वरूपमेव अवच्छिष्ट धी-व्यावृत्त विशिष्टधीविषयत्वं सम्बन्धत्वं; सम्बन्धान्तर मन्तरेण वि-शिष्टधीजननयोग्यत्वं स्वरूपसम्बन्धत्वं, समवाये मानन्तु घट इति धीरेव निरूपिता अर्था: बुद्धिस्तक्ता मान्त:करणवृत्ति: प्रमैवा-ऽवि-द्यावृत्ति: शुक्तिरजतावा-कारा भ्रम 'इत्यौपनिषदा: आत्मग्राहक मिन्द्रियं मन:, तच्चाणमेव प्रवृत्तिर्धर्म्मा-धर्म्मौ; दोषारागद्वेषमो-हा:, प्रेत्य-मृत्वा-भवनं-जन्म, प्रेत्यभाव: मरणं प्राणशरीरविभाग:; जन्म अपूर्व्वाभि: कार्य्येन्द्रियवेदनाभि: सम्बन्ध: ।

कार्यस्य पूर्व्वकालत्वमिति नवीना: समान कार्य्यकाल मिति-प्रभाकरा:, तदुभयमपि वैयाकरणमहाश्च आनन्तर्यं मितिवाण-क्षत: उत्तर कालत्वमिति केचित् । उपसर्गा द्योतका एवेतिमत-मस्माकं केचित्तु-वाचकाइत्याहु: इवादिशब्दा अपि साद्दश्यादि-द्योतका ।

फलंभोग:, दु:खमेकविंशतिप्रभेदभिन्नं मोक्ष आत्यन्तिको-दु:खनिवृत्ति: साचैक विंशति प्रभेद दु:खहानि: ।

तानि च षडिन्द्रियाणि षड्विषया:, षड्बुद्धय:, शरीर दु:-खं चेति काम इच्छा, साच सुखतत् साधनयोर्व्यापिका, तत्र दुर्लभे-च्छा दु:खफलैव नित्यसुखाभिव्यक्तिर्मुक्ति रितिभट्टा:, आत्यन्तिको दु:ख प्रागभाव: सेतिप्रभाकरा:, निरुपप्लवो-विज्ञान सन्तान इति

वाद्या:, आत्महानि रिति तदेकदेशिन: दु:खात्यंताभाव इति लीलावती कार: अविद्यासानिर्वृत्तौ पनिषदा: एकविंशतिदु:खहानिश्च अनागतयो धर्म्माधर्म्मयो रनुपादेनोत्पन्नयोश्चोपभोगात् क्षय इति वार्त्तिककृत: उपभोगा-कायव्यूहेनेति टीकाकृत:, अयं तु मोक्षाय त्वरमाणस्यैव; वेदान्तविदस्तु तत्त्वज्ञानात् कर्म्मक्षयइत्याहु:। अचिन्त्यसामर्थ्यातिशयोहि समाधि: यदाहुरत्र भगवन्त: पातञ्जलिपादा: कोऽपि योगप्रभावाद्दते ऽगस्त्य इव समुद्रं पिबति जन्यद्रव्यानाधारकालत्वमेव खण्ड प्रलयत्वं। अत्र प्रलय इति चेन्महेश्वर संजिहीर्षासमकालं पृथिव्यादिचतुष्टयारम्भक-परमाणुषु नोदना-दभिघातादाक्रिया, ततोविभाग: ततो द्व्यणुकारम्भक-संयोग नाश: ततो द्व्यणुकनाशे समवायिकारणनाशात् त्रसरेणुनाशे स्थूलानां नाश इत्येक: प्रकार: स्थूलाना मवयव संयोगवशात्राश:, तत्रापि स्वावयवसंयोगनाशात् एवं तत् पूर्व्व मित्यपर: प्रकार:। सृष्टिस्तु अदृष्टवदात्मसंयोगेन महेश्वर सिसृक्षाया समकालीनायां परमाणुषु क्रियायां परमाण्वो: संयोगेद्व्यणुकं त्रिभिर्द्व्यणुकैस्त्रसरेणु:, तैश्चतुर्भिश्चतुरेणुक मित्येवं क्रमेण निरूपितं प्रमेयम्।

पूर्व्वोक्त तीन तीन यागों के अन्तर्गत जो याग हैं उनकेसाथ पूर्व्वोक्तयुक्तिसे उनकाभी आपसमें साक्षात सम्बन्ध नहीं होसक्ता है इसलिये कहा है कि तीन यागोंसे तीन उत्पत्ति नामक अपूर्व्व उपजते हैं,जिनकेद्वारा उनका अंगोंसे सम्बन्ध घटता है, और प्रयाजादि अंगोंकाभी प्रधानसे साक्षात् सम्बन्ध नहोनेसे उनसेभी 'उत्पत्ति' नामक अपूर्व्वकी उत्पत्ति मानीगई है। और उन अपूर्व्वों से उनकापरस्पर सम्बन्ध स्थिर हुआ है अर्थात् प्रधानयागों से उत्पन्न हुए 'उत्पत्ति' नाम अपूर्व्व से प्रयाजादि अगोंसे उत्पन्न 'उत्पत्ति' नाम अपूर्व्व का जो साहित्य है उसी साहित्य (मिलाप) से ही प्रधानोंको साङ्ग अर्थात् अगोंसे मिलेहुए कहते हैं। इसीप्रकार पौर्णमासीमें आग्नेयादि तीन यागोंसे जो तीन उत्पत्ति नामक अपूर्व्व उत्पन्न होते हैं वे, उनके अंग प्रयाजादिओंसे उत्पन्न उत्पत्तिनाम अपूर्व्व से मिलकर एक समुदय अर्थात अखण्ड अपूर्व्व को उत्पन्न करते हैं। अमावस्यायागोंमें भी यही वृत्त है। उन दोनों अखण्डअपूर्व्वों से फलापूर्व्व नाम, एकप्रकारका अपूर्व्व उपजता है जिस्से फलकी उत्पत्ति होति है। यदि ऐसा हुआ तो विचारिए कि समुदाय अंगोसे उपकृत दर्श औ पौर्णमास यागोंसे निष्पन्न अपूर्व्वकेद्वारा स्वर्गप्राप्तिरूपफलकेलिये जो अंगोंकेसहित प्रधानकी कर्त्तव्यताका बोध करानेवाला-विधि है उसीको-

हि 'प्रयोगविधि' कहते हैं यह वात सिद्ध हुई ।

"पुनरपि विधिस्त्रिविधः । अपूर्व्वविधि नियमविधिः प-रिसङ्ख्या-विधि श्चेति" तत्र यो विधिरत्यन्तमप्राप्तमर्थं प्रापयति स अ-पूर्व्वविधिः, यथा दर्श पौर्णमास प्रकरणे 'व्रीहीन् प्रोक्षतीति'; ए-तद्विध्यभावे दर्श पौर्णमासीय व्रीहिषु प्रोक्षणं कथमपि न प्राप्नो-ति एतद्विधिसत्त्वेतु तत् सम्बन्धिव्रीहिषु प्रोक्षणं प्राप्नोत्येवात्यंता प्राप्तप्रोक्षण प्रापकत्वादय मपूर्व्व विधिः" ।

फिर वह विधि तीन प्रकारका है एक अपूर्व्वविधि, दूस-रा नियमविधि, तीसरा परिसंख्याविधि; उनमें से जिस्से पहिले नहीं विदित हुए अर्थ का वोध होता है उस्का नाम अपूर्व्व विधि है जैसा "व्रीहिन् प्रोक्षति" "व्रीहि अर्थात् धान्य विशेषका संस्का-र करें" ऐसा विधि (आदेशवाक्य) नहोता तो व्रीहियोंमें प्रोक्षण-रूप संस्कार कीप्राप्ति नहोती इसविधिके होनेसेही व्रीहिमें प्रो-क्षणकीप्राप्ति हुई ।

"योविधिः पक्षे प्राप्तमर्थं नियमयति सनियमविधिः तत्रैव व्रीहिनवहन्तीति । एतद्विध्यभावे दर्श पौर्णमासिकेषु व्रीहिषूत्प-त्ति वाक्या-वगत पुरोडाशो पयोगितण्डुल-निष्पत्त्यनुकूलवैतुष्य-कार्य्यायावहननवत् कदाचिन्नखविदलन मपि प्राप्नुयादिति त-स्मिन् पक्षेऽवहननस्य प्राप्तभावात् कार्य्यान्यथोपपत्ते रवहननस्य

पाक्षिकी प्राप्तिः स्यात् तस्मिन् विधौ अवहननेनैव वैतुष्यं का-र्य्यमिति नियमे सति विदलनं सर्व्वात्मना निवर्त्तत इति नियमवि-धिरयम्। नच वैतुष्यस्य नखनिर्दलनेनापि सम्भवादवहनन-नि-यमो व्यर्थः प्रयोजनाभावा दिति वाच्यम्। अवघातेनैव वैतुष्यकर-णे किञ्चिददृष्टं जन्यते इति नियमादृष्टाङ्गीकारात्। नियमेन दृष्ट-कार्य्यलाभे ऽप्यदृष्टस्योत्पत्तेः। तच्चापूर्व्वं यागोत्पत्त्यपूर्व्वं द्वारा फला-पूर्व्वे उपयुज्यते तेन नियमापूर्व्वाभावे फला ऽपूर्व्वमेव नोत्पद्यते इति कल्पनान्नियमापूर्व्वस्य न वैयर्थ्यम्। एवं व्रीहि सोमादिनि-यमविधिषु बोध्यम्"।

जोविधि नानारीतिसे सिद्धहोनेके योग्य वस्तुको-एकरी-तिसे सिद्धकरनेकेलिये नियमकरता है उसकोनाम नियम विधि है,जैसाउसीप्रकरणमें "व्रीहीनवहन्ति""आघातकेद्वारा धान्यसे चा वल निकालें" जैसायहप्रयोग है। यदि यह प्रयोग न होता तो दर्श पौर्णमास यज्ञमें पुरोडाश बनानेकेलिये धानसे चावल निकाल-ना, जैसा अवघात अर्थात् उदूखल और मुषलके आघातसे सिद्ध-होता है, ऐसे नखद्वारा भी-होसक्ता है किन्तु उसपक्षमें अवघात की प्राप्तिनहीं है। अतएव चावल निकालनारूप कार्य्यकी उभ-य रीतिसे प्राप्तिहोनेका कारण अवघातसे चावल निकालना पा-क्षिक हुआ अर्थात इच्छानुसार रहा। परन्तु "व्रीहीनवहन्ति"

"आघातकेद्वारा धानसे चावल निकालें" ऐसे विधिहोनेसे उ-दूखल और मुषल के आघातसे ही चावल निकालना यह नियम हुआ और नखसे फाड कर चावल निकालनारूप कार्य सम्पूर्ण रूप-निषिद्धहुआ। ऐसा कहना उचित नहीं है कि जब नखके द्वारा भी चावल निकाला जाता है, तो उदूखलके आघातसे ही चावल निकालना चाहिए ऐसा नियम करना व्यर्थ है। क्योंकि अवघात के द्वारा चावल निकालने से एकप्रकारका अदृष्ट उत्पन्न होता है, और वह अपूर्व यागोत्पत्तिरूप अपूर्वके द्वारा यागफल रूप अपूर्वको पुष्ट करता है अतएव नियम जन्य अपूर्व न होने से फलरूप अपूर्व को प्राप्ति नहीं होती है। इसलिये नियम करना व्यर्थ नहीं। और नियमोंमें भी ऐसी उपपत्ति जानलेना।

"द्वयोः समुच्चित्य प्राप्ता वितर निवृत्तिफलको विधिः परिसंख्या विधिः। यथा चयन प्रकरणे "इममगृभ्णन् रसना मृतस्येत्यश्वाभिधानी मादत्त" इत्यश्वरसना ग्रहणाङ्गत्वेन मन्त्रविधिः, एतद्विध्यभावे हि रसना ग्रहण प्रकाशको मन्त्रो रसनादानप्रकाशनरूप सामर्थ्य रूपाल्लिङ्गादश्वरसनादान इव गर्दभ रसना दानेऽपि नियमेन प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेणाश्वरसनामेवाददीत नतु गर्दभरसना, सातु तूष्णी मेव ग्राह्येति गर्दभर-

## पार्लिमेण्ट महासभा।

यदा मानवकुलं बाल्य क्रीडारतमासीत्, यदा जगतीतले शारीरबलमेव प्रभुता मतनोत्, मानसवृत्तीना मङ्कुराण्यपि नाविर्भवु: तदानी मेव सर्व्वतो भयात् विद्रुते ऽस्मिन्नराजके लोके प्रजारक्षार्थं मिन्द्रानिलयमार्कप्रमुख-सुरेन्द्राणां मात्राभ्यो नृपति र्निर्मितोऽभवत्, तदानीमेव "बालोऽपिनाव मन्तव्यो मनुष्य इति भूमिप: महती देवता ह्येषा नररूपेण तिष्ठती" त्यादिरूपा सूक्ति: प्रादुरभूत्।

अथ कालेन क्रमशोऽङ्कुरितासु बुद्धिप्रमुखचित्त वृत्तिषु सार्द्धञ्च ताभि: प्रवृद्धि मानतायां धर्म्मनीतौ तथा भूतस्याप्येकस्य राज्ञो यथावत् यावत्कार्य्य पर्य्यालोचनं न सम्भवतीत्येवं बुद्धिरुदिताऽभवत्, उदितानि च तदानी मेवंविधानि वचनानि।

यथा मनु:

"ब्राह्मणान् पर्य्युपासीत प्रातरुत्थाय पार्थिव:
वृद्धान् त्रैविद्य विदुषस्तिष्ठेत्तेषाञ्चशासने।
वृद्धांश्च नित्य सेवेत विप्रान् वेदविद: शुचीन्
तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपिनित्यश:।
विनीतात्माहि नृपतिर्न विनश्यति कर्हिचित्" ॥

तदा देवतारूपस्यापि तस्य न केवलं विनयनं विहितं तदुपरि शासन वाक्यानिचोल्लसितानि यथा मनुः

"इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ॥
जितेन्द्रियोहि शक्नोति वशे स्थापयितुं प्रजाः ॥
दशकाम समुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत् ॥
कामजेषु प्रसक्तोहि व्यसनेषु महीपतिः ।
वियुज्यते ऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥
मृगयाक्षो दिवा स्वप्नः परिवादः स्त्रियोमदः ।
तौर्य्यत्रिकं वृथाटयाच कामजो दशको गणः ॥
पैशुन्यं, साहसं, द्रोह ईर्ष्यासूयार्थदूषणम् ॥
वाक्दण्डजञ्च पारुष्यं क्रोधजो ऽपिगणो ऽष्टकः" ॥
एवमादिवचनैः प्रतिहत मस्य स्वातन्त्र्यं ।

ततः क्रमादुन्नति मवाप्तासु हृदयशक्तिष्ववयवोपचयमवगतायां नीतौ शरीरपोष मनुप्राप्तायां सभ्यतायामुन्मीलितायाञ्च दृष्टौ क्रमशो ऽवनमितु मारब्धा राजशक्ति र्भक्तिस्तु तस्मिन् पूर्व्ववदेव दृढा स्थिता । तदानीं निखिलेषु राजकार्य्येषु तस्यापरसाहित्य मवश्य कार्य्यत्वेन प्रतिपादितं, यथाह कात्यायनः ।

"सतु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः,

धर्म्मशास्त्रार्थ कुशले रर्थशास्त्रविशारदैः ॥

स प्राड्विवाकः सामात्यः स ब्राह्मण पुरोहितः,

ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः" ॥

सभ्यानाञ्च लक्षण मुक्तं याज्ञवल्क्ये—

"श्रुताध्ययन सम्पन्ना धर्म्मज्ञा सत्यवादिनः,

राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः" ॥

अस्मद्देशीया राजनीति स्तु नातः परं वृद्धिं प्राप्ता । भारतमिदं सर्व्वदैव राजतन्त्रमतिष्ठत् नचात्र प्रजातन्त्रताया अपरतन्त्रताया वा कथाप्युदिता । राज्ञि कार्य्यवशान्निखिल प्रजातन्त्रण कार्य्य पर्य्यवेक्षणाऽसमर्थेत्वपरस्योपरि प्रजापालनभारो न्यस्तव्यत्वेनाभिहितो यथाह याज्ञवल्क्यः-

"अपश्यता कार्य्यवशाद्व्यवहारान्नृपेण तु ।

सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्व्वधर्म्मवित्" ॥

इत्यन्तएवास्मद्राज नीतिवृत्तान्तः, अपरदेशीयानां प्राचीन वृत्तान्तः प्रथममेवं विध इतो वा निकृष्टतर आसीत् । वय मपरेषां देशानां राजनीतिगत वृत्तान्तस्य सम्यगनुसन्धान मितिहासेषु निक्षिप्य, इङ्गलण्ड देशस्यवृत्तान्तानुसन्धानरूपं प्रकृतमनुसरामः ।

इङ्गलण्डदेशस्यपुरावृत्तं हि रोमकाणां समाक्रमणादनन्त-र मेवाधिगम्यते; ततः पूर्व्वमस्य कीदृश्यवस्थासीत् दैवं जानाति। भवतु घोरतिमिरावृते तस्मिन् रोमदेशीया हि प्रथमं ज्योतिः प्रकाश्यापरेभ्यः पन्थानं प्रदर्शयामासुः। ततः प्र. भृति यवना भारतभूमिमिव सैकसन् नर्म्मान् प्रमुखा अपर देशीयाः क्रमेणाङ्गल-भूमिमधिचक्रुः। यवनाधिकारे भारतस्येव इङ्गलण्डस्यापि तदानीन्तनी दुःखबहुला-दशा प्रबभूव।

तत्रापि प्रथमं राज्ञां सर्व्वतोमुखी प्रभुता स्थिता। अथ तेषा मसद्व्यवहारैरभित उपद्रुताः प्रजाः कौनसेलाभिधेयां सभां राजकार्य्यपर्य्यालोचनार्थं निर्म्ममुः। इयं हि सभा सैक्सनाधिकारसमये निर्म्मिता बभूव, नर्म्मानाधिकार समये तस्या मह्दानादरः सम्वृत्तो हन्त च राज्ञां पुनरेवानिरुद्धप्रभुता।

अथ जान नामकस्य कस्यापि यथेच्छा-चारिणो नरपतेः शासनसमये प्रकृतयः सर्व्वत उद्वेगं भजमाना एकीभूय नृपतेः प्र.. तिकूल माचरितुं प्रवृत्ता। ततोनृपतिस्तेभ्यो भीतिं प्राप्तस्तद्वशता मगमत्। ते चावसरं प्राप्य राज्ञो यथेच्छाचारनिरोधके मैगनाचार्टा नामके कस्मिन्नपिनियम पत्रे राज्ञा स्वसम्मति सूचकानि नामाक्षराणि लेखयामासुः। वृत्तमिदं १२१५ विमिते खृ-

छाव्दे संवृत्तं, तदानीमेवाङ्गलभूमौ पार्लिमेण्ट नामक- सभायाः सुप्रासनस्योन्नतभावस्य च भित्तिस्थापनं बभूव ।

मैग्नाचार्टापत्रिकैव इङ्गलण्ड देशस्य वर्त्तमान शासन विधीनां मूलम् । पूर्व्वं राज्ञो यथेच्छाचारः अनियन्त्रित एवासीत्, तन्निवारणमेव मैग्नाचार्टा पत्रिकायाः प्रयोजनं, अत्र कतिचिदेवं विधा-नियमाः संस्थापिता यैरपहृता सा सर्व्वतोमुखी प्रभुता नृपतीनां, ततः प्रभृति प्रजातिपुन्नतपदस्थितानां धर्म्माध्यक्षाणाञ्च सम्मतिं विना कस्याप्यपूर्व्वस्य शासन विधे र्नवीनाकारस्य करस्य वा स्थापने राज्ञः सामर्थ्यं न भवेदित्येवालिखितं तस्यां पत्रिकायां । अत्रैतदप्यवश्यं वक्तव्यं यत् मैग्नाचार्टा पत्रिकया धनिना मुन्नतजनानां धर्म्माध्यक्षाणाञ्च किञ्चित् स्वातन्त्र्यं जातं । पृथग्जनाना मवस्थातु पूर्व्ववदेव दुःखमयी स्थिता; अनीति स्रोता सुपरि पूर्व्ववदेव प्रभुता मतनोत्, तेषामश्रु प्रवाहः पूर्व्ववदेव वेगेन वहतिस्म ।

भद्राणि
~~वस्तुमयवस्तु~~

'जीवन् जनो भद्रशतानि पश्यति" आयुः परिवर्द्धनेन स-ह सुकस्यैतस्य सर्व्वाणि तत्त्वतो ऽवगतानि भवन्त्वस्मा कम् ; नाद्याप्य स्मदायुषि यत्सङ्ख्या मजिगत परमेतावत् कालाध्वना येषा संख्या-नि भद्राणि नयनपथ मायातानि न भावते भविष्यन्ति च कल्पराणि भद्राणि भविष्यति चायुषि ।

पशु पक्षिसरीसृपादीनां मनुष्यवाचा जल्पनस्य विद्यन्ते भूयांस्युदाहरणान्यस्मत् पुराणोपन्यास काव्यग्रन्थेषु; किन्तु जडानां मनुष्य वाक्य कथनं न श्रुत पूर्व्वं नवा दृष्टपूर्व्वमस्माभिः सम्प्रति तदपि सम्वृत्तं । हार फेवर नामा कश्चित् मनुष्यभाषि यन्त्रमेकं निर्म्मितवान् । यन्त्रमिदं यथावत् परिचालितं सन्मनुष्य वाक्योच्चारणेन विस्मय मुत्पादयति सचेतसाम् । यन्त्रस्यास्य मनुष्य वदेव दन्तौष्ठ रसना नासाद्यङ्गानि नैपुण्येन निर्म्मितानि येनेदं सर्व्वाण्येवाक्षराणि विस्पष्टमुच्चरितं पारयति । श्रूयते १८१५ खृष्टाब्दे जोसेफफेवरनामा कश्चिदत्र प्रथम मुद्यमं चकार । सतु १८४१ खृष्टाब्दे यन्त्रमेकं निर्म्माय वै भेरिआ (bavaria) देशाधीशस्य समीपे प्रेरितवान् । अथ मृत्युसमये स निज भ्रातुष्पुत्राय यन्त्राधिकारं ददौ । अयं भ्रातुष्पुत्रोऽहि वर्त्तमान यन्त्राधि कारी हार फेवर नामधेयः । इत्यलं

ओँ Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः।

विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्ड ८ ] अप्रैल इं १८८० [ ४ सङ्ख्या

सूची



लाहोर

ऐल्बर्ट नामके दिलबागरायनामयन धेयेन तिमुद्र :

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये अस्माभिः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति । ग्रहीतुमिच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।

---

### मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

" पश्चाद्देयं ... ... ... ३।/०

(प्रत्येकखण्डं ।० परिमितमूल्येन ग्राह्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति

---

इन्द्र सम्बन्धिपय:" (अमावस्या में इन्द्रदेवताको उद्देश कर दुधसे याग करें) इनवाक्यों से विहित हुए जो दो सान्नाय्ययाग † तथा "यदाग्नेय" इत्यादि वाक्य में विहित आग्नेय याग ये तीन-अमावस्या में प्रधान हैं। परन्तु "यएवं विद्वानमावस्यां च यजते" (जो-ऐसा जानता है अमावस्या—याग करता है) इसवाक्य में द्वितीया के एकवचन में प्रयुक्त अमा-वस्या शब्दसे पूर्व्वोक्त तीन्नोंकाहि. संग्रह होता है। वेदमें जहां जहां दर्श वा अमावस्या का-प्रयोग है। उन्स्थलों में उस दर्श वा अमावस्या शब्दसे पूर्व्वोक्त तीन-प्रकार यज्ञों को समझना उचित है। पहिले यह कहचुके हैं कि-एकवचनान्त पौर्णमासी शब्दसे "अग्नीषोमीय" प्रभृति तीन प्रकार यज्ञोंका ज्ञान होताहै, अवकहते हैं कि एकवचनान्त अमावस्या शब्दसे भी 'सान्नाय्या' दि तीन यागोंका ज्ञान करना है। एकवचनान्त दर्श और पौर्णमासी शब्दसे तीन तीन यज्ञोंके अनुवाद होने से "दर्श पौर्णमासीभ्यां स्वर्गकामो यजेत" (स्वर्ग चाहने वाले

† सान्नाय्य याग आठ प्रकारका है और इसमें मन्त्रबहुत थोरे से पढ़ा जाता है।

प्रधान यज्ञारम्भात् पूर्व्वं केवलेन घृतेन पञ्चविधा प्रयाज्ययागा: क्रियन्ते।

आज्य भाग यज्ञे सर्व्वानिन्द्रादीन् देवानुद्दिश्य घृतं दीयते। अनुयाज्य यागोऽपि त्रिविधः। तत्रापि केवलेन घृतेन हवनं क्रियते।

मनुष्य को उचित है कि दर्श और पौर्णमासीमें यागकरें) इसवाक्यमें दर्श और पौर्णमासीशब्दपर द्विवचनकी सिद्धि हुई। यदि एक वचनान्त दर्श वा पौर्णमासी शब्दसे ऊपर कहे हुए तीन तीन यज्ञों का अनुवाद नहीं किया जाता तो "दर्श पौर्णमासीभ्यां" इस पद "दर्श पौर्णमासैः" ऐसा बहुवचनान्त होता।

"मानान्तरेण ज्ञातार्थस्य पुनःश्रवण मनुवादः"।

किसी प्रकार प्रमाणसे विदितहुए अर्थके फिर कहने को 'अनुवाद' कहतेहैं।

"तथा फलवदाग्नेयादि सन्निधा-वाम्नातानि प्रयाज्याज्य-भागानुयाज्यादीनि षण्णां यागानां मङ्गभूतानि। एवं स्थिते दर्श पौर्णमासीभ्यां स्वर्गकामो यजेतेत्यस्यायमर्थः—दर्श पौर्णमासीभ्यां समुदायाभ्यां परस्पर सहिताभ्यां स्वर्गापूर्व्वं कुर्य्यादिति"

ऐसा, फलको उत्पन्नकरानेवाले 'आग्नेयादि' यज्ञके साथ-जो प्रयाज्य, 'आज्यभाग,' और अनुयाज्य प्रभृति यज्ञ कहे गए हैं वे सब पूर्व्वोक्त छ यागोंका अंग हैं॥। जब ऐसा हुआ तब "दर्श" पौर्णमासीभ्यां स्वर्गकामो यजेत" इसवाक्यका ऐसा अर्थ हुआ कि समुदय अगों के सहित दर्श और पौर्णमास यज्ञोंसे (पूर्व्वोक्त छयज्ञोंसे) स्वर्गप्राप्तिकेलिये उपाय करें।

"तत्र कथं कालद्वयवर्त्तिनोः समुदाययोः परस्पर-साहित्य

नित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्त्रिकादेकैकम-पूर्व्वं जायते, तद्द्वारा द्वयोः समुदाययोः साहित्य मित्युच्यते । एकैकस्य त्रिकस्य त्रिकस्यापि त्रिका-पूर्व्वं जनकत्वं कथ-मित्याकाङ्क्षायां प्रयाजानुयाजादि-पूर्व्वोत्तराङ्ग कलाप विशिष्टस्यैकैकस्य त्रिकस्य समुदायापूर्व्वजनकत्व मुच्यते ॥

अब यह शङ्का होतीहै, कि दर्श याग अमावस्या में होता-है और पौर्णमास यज्ञ पूर्णिमा में होताहै, ये दो भिन्नकाल वृत्ति-हैं अर्थात् इन दोनों में १५ दिनका अन्तर है, तो इन दोनोंका सा-हित्य अर्थात मिलाप किसी तरह नहीं-होसक्ता, अतएव दर्श पौर्णमास यागोंसे स्वर्ग प्राप्ति के लिये यत्नकरें यह कहना सङ्गत नहीं होता ? इस शङ्काको निवृत्तिकेलिये कहते हैं कि यद्यपि-इनदोनों में साक्षात् (directly) साहित्य (मिलाप) नहीं है तो-भी दर्श के अन्तर्गत पूर्व्वोक्ततीन यागों-से,और पौर्णमास के अन्तर्गत पूर्व्वोक्त तीन यागोंसे जोअपूर्व्व होते हैं उन अपूर्व्वों के द्वारा दो-नोंका परस्पर साहित्य है इसका तात्पर्य्य यह है कि यद्यपि भिन्न-कालमें अनुष्ठित होनेसेएक यागके अनुष्ठानके समय दूसरेका नाश होता है, उनका परस्पर सम्बन्ध नहीं होसक्ता तोभी इन-मेंसे प्रत्येकसे जो अपूर्व्व उत्पन्न होते हैं उनका विनाश न होनेसे उन अपूर्व्वों के द्वारा आपसमें साहित्य होता है और दो मिलकर

स्वर्गरूप फलका कारण होते हैं। अब जिज्ञासा यहहै कि पहि ले जो एक एक के अन्तर्गत तीन तीन याग कहे गए उनमेंसे एक२ तीनोंसे किसप्रकार एक एक अपूर्व्व उत्पन्न होताहै ? इसका उत्तर यहहै कि एक एक यागके पहिले औ पिछे होनेवाले जो प्रयाज-अनुयाज प्रभृति अंग हैं उनअंग समुदयसे युक्त एक एक तीनोंसे-समुदय (एक = अखण्ड) अपूर्व्व उपजाता है।

"एकैकत्रिकस्य सर्व्वाङ्ग साहित्यं स्वरूपेण न सम्भवतीति-त्रिभिर्यागै स्त्रीण्युत्पत्त्यपूर्व्वाणि जायन्ते। तद्द्वारा सर्व्वांग साहित्यं, अंगानामपि प्रयाजादीनां स्वरूपेण प्रधान साहित्याभावात्तदुत्पत्यपूर्व्व द्वारा साहित्यं वाच्यम्। तथाच प्रधान जन्योत्पत्यपूर्व्वाणां प्रयाजादि जन्योत्पत्यपूर्व्वैः साहित्यं यदस्ति तदेवप्रधानानामङ्गविशिष्टरूपसाङ्गत्वं, एतच्च पौर्णमास्यां आग्नेयादि जन्योत्पत्यपूर्व्वैः प्रयाजादि जन्योत्पत्य-पूर्व्व-सचिवैः समुदायापूर्व्व मेकं जन्यते, तथा दर्शेऽपि आग्नेयैन्द्रिद्वयजन्यै स्त्रिभिरपूर्व्वैरङ्गोत्पत्य-पूर्व्व सचिवै रेकं त्रिकाऽपूर्व्वं जन्यते, ताभ्यान्त्रिकापूर्व्वाभ्या माग्नेया द्युत्पत्यपूर्व्व त्रितय-जन्याभ्यां फलजनकीभूत महापूर्व्वं फलाऽपूर्व्वं नामक जन्यते ततश्च फलमिति। तथाच सर्व्वाङ्गोपस्कृताभ्यां दर्शपौर्णमासाभ्यामपूर्व्व द्वारा स्वर्गं कुर्य्या दिति फलापूर्व्व निष्पत्तये साङ्गप्रधान कर्त्तव्यताबोधको विधिः प्रयोगविधिरिति सिद्धम्"।

गुणोगन्धः, त्वङ्मात्रग्राह्योगुणः स्पर्शः। एते च रूपादयः स्पर्शान्ता उद्भूता अनुद्भूताश्च, उद्भूतत्वं जातिविशेषः, उद्भूतत्वं नानेति सम्प्रदायः, मणिकृतस्तु उद्भूतत्वानुद्भूतत्वे न जाती किन्तु रूपत्वादिव्याप्य जातिमत्व मेवोद्भूतत्वं तदभावोऽनुद्भूतत्वं;

परमाणु पीलुपाक वादिनो वैशेषिकाः नैयायिकास्तु एकस्मिन् घटे श्यामे श्यामस्य पक्वेच रक्तस्य दर्शनात्तत्राप्यनियम माचक्षते, मीमांसकास्तु एकैका एवहि नीलादिव्यक्तय' इतिमन्वाना रूपादीनां पाकजत्वमपाकजत्व ञ्चोभयमपि नेच्छन्ति। रूपादिपरावृत्तिः पाकः।

संख्यात्व सामान्यवती संख्या साच द्वेधा तत्रैकत्व मव्यासज्यवृत्ति, द्वित्वादिकन्तु व्यासज्यवृत्त्येव, यावदाश्रय-निरूप्यत्वं व्यासज्यवृत्तित्वं द्वित्वादिकन्त्वनित्यमेव। तत्र द्वित्वं स्वाश्रय-गतैकत्व द्वयासमवायिकारणकं, तदुभय गोचरापेक्षाबुद्धिनिमित्तकं, अपेक्षाबुद्धिनाशात्-द्वित्वस्य नाशः, तथाहि एकत्वद्वयज्ञानं अथ द्वित्वोत्पत्तिः अथद्वित्वनिर्व्विकल्पकं अथापेक्षाबुद्धि-नाशः अथद्वित्वनाश इत्येक प्रकारः; यदा अपेक्षाबुद्धेः स्वाश्रयसमवायि विभागस्यचैकदोत्पत्तिः ततो विभागतः संयोगस्य नाशोऽपेक्षा बुद्ध्या च द्वित्वोत्पत्तिः, अथ द्रव्यनाश द्वित्वबुद्धी ततोऽपेक्षा-बुद्धित्वयोर्नाश इत्यपरः। परिमाण सामान्यवत् परिमाणं, परमाणु परिमाणं पा-

रि-माण्डिल्य मित्याचक्षते । इदमस्मात् पृथक्, इति व्यवहार हे-
तुर्गुणः पृथक्त्वं जन्याप्राप्तिः संयोगः अव्याप्य वृत्तिर्व्याप्यवृत्तिया-
यं, लीलावतीकृतस्तु व्याप्यवृत्तिः भट्टास्तु एकमात्रवृत्तिरिति तं
मन्यन्ते, विभूनान्तु नास्ति परस्परं संयोगः अन्यतर कर्म्मादे रभा-
वात् मीमांसकानां मतेत्वस्ति अपरेतु तेषामस्त्येव संयोगः किन्तु-
नित्य एवेति विशेषमाचक्षते; विभागत्वं जातिविशेषस्तद्वान् वि-
भागः; परापर प्रत्यय साधारण कारणे परापरत्वे सन्निकृष्टं मव-
धिं कृत्वा अयमस्माद्विप्रकृष्टः इतिरवं परथारे या वुद्धिः, विप्रकृष्ट
मवधिं कृत्वा अयमस्मात् सन्निकृष्ट इति या-मतिः, कालकृतयोस्तु
अयमस्मात् प्रचुरतर काल-जन्मेतेरवं युवान मवधिं कृत्वा स्थविरे
विप्रकृष्ट वुद्धिः, अयमस्मा दल्पतर तपन परिस्पन्दान्तरित जन्मेतेर-
वं यूनि सन्निकृष्ट वुद्धिः; गुरुत्वं पतनासमवायि-कारण मतीन्द्रिय
यावद्‌जल-वृत्ति द्रवत्वं स्पन्दना-समवायि, स्नेहत्व जातिमान् स्ने-
हः, मृदादीनां संग्रह हेतुः वुद्धित्वजातिमती वुद्धिः; साच नित्याऽ-
नित्याच आद्येश्वरस्य अन्त्या जीवानां पुनश्च सा द्विधा स्मृति रनु-
भवश्च, अन्त्या द्विविधा भ्रमः प्रमाच भ्रमस्त्रिविधः तर्कसंशय निर्ण-
य भेदेन । स्वप्नः पुनर्धर्म्म विशेष प्रभवश्चेत् प्रमायां अधर्म्म विशेष प्र-
भवश्चेद् भ्रम एव निवेशते, वैशेषिकाणां च स्वप्नोऽविद्येवेति । स्व-
प्न-वाह-नाडी मनः संयोगजज्ञानं स्वप्नः । साचेयं वुद्धि परीक्षा प-

रोक्षात्वाभ्यां द्विविधा, आद्या चतुर्द्धा स्मृत्यनुमित्युपमिति शाब्दो-
भेदेन, साचेयं वुद्धि रतीन्द्रियेति भट्टाः स्वप्रकाशेति प्रभाकराः ।
अस्माकं तुकाश्चिदतीन्द्रियाः निर्व्विकल्पादिकाः काश्चित् प्रकाश-
मयाः सर्व्वविषयका अपरातु परप्रकाश प्रत्यक्षा-च साचेयं वुद्धिः.
क्वचिन्न.रावाश्चिक्यपि यथाघटोऽयं घटोऽय मित्याकारा-समान.
विशेष्यकान्यूनानतिरिक्त-प्रकारा प्रत्यक्षवुद्धिः यथा वह्नि व्याप्य धू-
मत्वेन पर्व्वतस्य पक्षताया मनुमित्साधीना वह्निव्याप्यधूमवान् पर्व्व-
तो वह्निमानितिरव माकारा नानाधीरिति स्वाश्रयसमानाधि-क-
रण समान कालीन साक्षात्कार विषयता-व्याप्य दुःखेतरजातिमत्.
सुखं इदं चतुर्विधं किञ्चिदाभ्यासिकं यथा मृगयादिषु,किञ्चिदाभि-
मानिकं यथा चुम्वनादिषु, किञ्चिद्वैषयिकं यत्सुरभिगौराङ्गाधारा-
दि सन्निकर्षाज्जायते, किञ्चिन्मानोरथिकं यथा-भावि पुत्रादि जन्मा-
दिनो-त्सवचिन्तनादिषू त्पद्यमानमिति सुखदुःखवुद्धित्वादएव ध-
र्म्माधर्म्म रूपयोगी-न सुखदुःखो.त्यादइति सुखमेवच धर्म्ममात्र ज-
न्यशरीरोपभोग्यं स्वर्गइति सुखं ज्ञानविशेष इति वाह्याः । सुखल-
क्षणमेव सुखत्वेतरपदं दुःखलक्षणं, इदं च द्विविधं; ऐहिक मामु-
ष्मिकञ्च आद्यं यत् दुर्वीक्षरोपसर्पणादि प्रभवं अन्यं अधर्म्ममात्रज-
न्यं, शरीरोपभोग्यं यन्नरक इत्याख्यायते इच्छात्वजातिमतीच्छा,
साचनित्या ऽनित्याच, आद्या परमेश्वरस्य अन्या जीवानां; द्वेषो न-

यनादि वैकल्य हेतुर्गुण:, तस्यतुद्रोह:, क्रोधो, मन्यु: क्षमा अम-र्षइति भेदा: । प्रयत्नत्व जातिमान् प्रयत्न:, सएवचाऽ तुरुत्साह इति-कृतिरिति च सैव पूर्व्वापरी भूता भावनेति चोच्यते सचद्विविध:-कश्चिज्जीवन योनि:, सुप्तस्य प्राणाऽपानादि सन्तान प्रेरक:, कश्चि-दिच्छायोनि: पटाद्युपादाने तन्त्वादौ कुविन्दादे: करादिव्यापारहे-तु:, अत्रचेष्टसाधनता ज्ञानमेव हेतु: न फलज्ञानं तदाहुराचार्य्या:-फलज्ञानस्याऽ प्रवर्त्तकत्वादिति, सुखदु:ख कारणता वच्छेदक जा-तिमन्तौ धर्म्माधर्म्मौ, विहित निषिद्ध क्रियैव धर्म्माधर्म्मा वितिमीमां-सका:, मनस: परिणाम विशेषो ताविति सांख्या:, चित्तस्यैव चिन्तासन्तरेणा-हिते शुभा शुभ वासने ताविति शाक्या:; आर्हतास्तु, कायारम्भकान् सूक्ष्मान् मूर्त्तिमत: पुद्गल नामधेयान् तावाचक्षते । संस्कारत्व जातिमान् संस्कार:, सत्रिविध: वेगो, भावना, स्थिति-स्थापक:, सचायन सेक:, भावनानुभव हेतु भूतात्मगुण:, तृतीयस्तु धनु: शाखा सूत्रवस्त्रादिषु भुग्नसंवर्त्तितेषु तस्य कार्य्य मनुभूयते, शब्दत्व जातिमान् शब्द:, सचायं द्विविध:, धुनिर्वर्णश्च आद्योमृदं-गादि निमित्तक:, वायवीय: संयोगविभागएवहि ध्वनय इति शाव-रभाष्यं, अन्त्योऽकारादि: । विशेषगुणाश्च रूपादय:, रूपंगन्धो रस-स्पर्श:, स्नेह: सांसिद्धिकोद्रवा: बुद्ध्यादिर्भावनान्तश्च शब्दो वैशेषि-का गुणा इति जीवन योनि यत्नस्तु नविशेषगुणा इतरके निरूपि-ता गुणा: ।

## देशाटनं

देशाटनं हि वालानां विनयनं सम्वर्द्धयति, वृद्धानान्तु ज्ञानं; युवानः खलु तत्तद्देशानां स्वभावं रीतिञ्च सम्यगधिगन्तुं प्रेप्यन्तेऽ-परदेशेषु, वृद्धास्त्वात्मनः पूर्व्वार्ज्जितज्ञानेन सह प्रत्यग्र-लब्ध-विज्ञानं देशाटनेनातुलयितुं समर्था भवन्ति। यस्तु तत्तद्देशभाषायां प्रवेश-मलब्ध्वैव कमपि देशं प्रयाति सहि विद्यालयान्तरमेव गच्छति न-तु देशान्तरं। तस्य तद्देशावस्थान समयोहि तदीयभाषाभ्यासेनै-वातीतोभवति न तत्रत्यरीत्यादिक मधिगन्तु मवसरो जायत इ-ति। अतएव यत् कोऽपि युवानः कमपिशिक्षकं वहुदर्शिनं भृत्यम्वा आत्मसहचरं विधाय देशान् पर्य्यटन्ति, तदस्मदभिमतमेव। यत. इत्थं सत्यामपि तेषां भाषानभिज्ञतायां तादृशस्य ज्ञातिनःशिक्षकस्य भृत्यस्यवा साहचर्य्यात् प्राप्नुवन्ति ते तत्रत्यभाषाभिज्ञेन तत्रपूर्व्वावस्थि-तेन जनेन सादृश्यम्। तेहि तादृशस्य शिक्षकस्य भृत्यस्य वा साहा-य्येन तत्तद्देशानां दृश्यवस्तुषु, शिष्टाचारेषु, लोकव्यवहारेषु, मनो-वृत्त्युन्नतिषु चाभिज्ञतां लभन्ते। तादृशा एकाकिनस्तु युवानो ऽन्धा इव देशाटनं कुर्व्वन्ति न ते किमपि परदेशव्यवहारादिकं ज्ञातुं समर्था भवन्ति।

एतदतीव विचित्ररूपं प्रतिभाति यत् समुद्रयात्रायां, यत्रा-तिविस्तृतं जलनिधिमसीमनभोमण्डलञ्च विहाय नान्यत् किमपि-

दृश्यवस्तु नयन पथमायाति, मानवा यथायथं दैनिकात्तेव परिवर्त्त-नादिकं स्वचेष्टितञ्च यत्नेन पत्रेष्वारोप्य (लिखित्वेतियावत्) रच-न्ति, परं स्थलवर्त्मना पर्य्यटन समये सत्स्वपि भूरि द्रष्टव्य जातेषु न-ते तथा कुर्व्वन्ति। एतेन मानवानां वातविपरिणामादिप्रकारक-ज्ञानेच्छाहि दैशिकव्यवहारादि-विषयक जिज्ञासां विजित्य वर्व-र्त्तीति प्रतीयते।

भवतु, देशभ्रमणा-वसरे ऽपि तत्तद्देशगत-व्यवहारादिक-ञ्च पत्रेष्वारोप्य रचणीय मिति। नवाभ्यागतानां परदेशस्थैता एवा-वश्य ज्ञातव्यविषया-राजसभा, राजानपरराष्ट्र दूतैः सह व्यवहारः, अधिकारस्थानं, तत्र च विवादयन्त्रणं, धर्म्मसभा, धर्म्मशाला, धर्म्मा चरणस्थानं, चैत्यं, नगरवप्रं, समुद्रयानवसतिः, छात्राणा मालोकर्पं विवादः, यथासम्भवं व्याख्यानानि (Lectures where any are) नौसमवायः, गृहाणि, वृक्षवाटिका, नगरसन्निहितारामाः, अस्त्रा-गाराणि, धनागाराणि, वणिक्व्यवहाराः, समागमस्थानानि, पण्य-शाला, अश्वविद्यानैपुण्यं, सैन्यशिक्षा, एवम्विधा अपरे विषया, तथा शिष्टानामाचरणं, रङ्गमन्दिराणि, चित्रशाला अपराण्यपि तद्दे विशेषवस्तूनि।

अपिच यत्र यत्र गम्यते, द्रष्टव्यानि तत्र यानि कानि चित् स र्व्वाण्यपितानिस्मरणीयानि; विचार्य्याणि च ततः परं शिक्षकं र्तव्येव

यानि साभिनिवेश मनुसन्धीयन्ते, जयोत्सव, कूटकार्य्य, बन्धुभो-
जन पाणिपीडनान्त्येष्टिक्रिया, गुरुदण्ड प्रयोग प्रमुखानितु का-
र्य्याणि न प्रयत्नेन स्मृतौ निधातव्यानि परं न तान्युपेक्षणीयानि।
अल्पसमय कल्पित पर्य्यटनेन कमपि वाल लब्धप्रदुर्शिल द्रष्टुमि-
च्छसि चेत् प्रथमः कल्पः, तदवश्यं भवता करणीय मित्यर्थः, पूर्व्वमु-
क्तमेतदस्माभि र्यत्तथाविधेन वालेन प्राक् परदेशगमना दधिगन्त-
व्यस्तत्रत्य भाषायां प्रवेशः, कर्त्तव्यश्च तद्देशाचार-व्यवहारादिषु
लब्धज्ञेन केनापि शिक्षकेन भृत्येन वा सार्थमिति। इदानी मेतदभि-
धीयते यद्दीयतामस्मै स्वभ्रमिकर्म्मी-कृतत्वेनावधारित-देशविवरण
परायणं किमपि पत्रं पुस्तकम्वा यदि समये तस्योद्घाटनाद्यन्वमिव
सर्व्वं जिज्ञासितविष्करणे साहाय्यं विधास्यति। अनुमन्यताञ्च तं-
दैनिकवृत्तान्तपुस्तकमेकं यत्नेनात्मपार्श्वे रक्षितुं। एकस्मिन् नगरे न-
चिरं स्थातव्यं-किन्तु यत्र यावत् काल मवस्थान मुचितं तत्र तावदेवा
वस्थातव्यंअपिचैक नगरावस्थान समये अप्यस्यैक प्रदेशादपर प्रदे-
शेषु स्वा-वासपरिवर्त्तनं विधेय-मित्यपि तं प्रत्युपदेशो-विधेय एवमा
दयोहि तद्देशाभिज्ञतालाभोपायाः। तत्र तेनात्मदेशीयानां सङ्ग प
रिहृत्य तत्रत्यैः सज्जनैः सहैकत्र भोक्तव्यम्। देशाद्देशान्तर गमन-
समये, यस्य साहाय्ये नासावागन्तुकः सर्व्वमेवाभिलषितं वस्तु द्र-
ष्टुं ज्ञातुम्वा समर्थोभवेत्, गन्तव्यस्थानस्थितं तथाविधं कमपि प्र-

भाविनं जनं प्रति स्वपरिचायक पत्रमेकं यत्नेन संकलय्य गन्तव्य-म्। एवमादि नियमान् प्रतिपालयता पान्थेन देशभ्रमणस्य सम्य-क् फलं लभ्यते।

पुराणकथा।

"अथनयन समुत्थं ज्योतिरत्रेरिव द्यौः"

रघुवंशम्

इत्यादि बहुष्वपि काव्य ग्रन्थेषु चन्द्रस्यात्रिनेत्रसमुद्भवत्वं प्रतिपादितं, तत्तु किम्मूलक मितिजिज्ञासायां वयं हरिवंशात् कथामिमा-मुद्धराम:।

"पिता सोमस्य वैराजन् अत्रिर्भगवानृषि:।
ब्रह्मणोमानसात् पूर्व्वं प्रजासर्गं विधित्सत:॥
तत्रात्रि: सर्व्वभूतानां तस्थौ स्वतनयेहित:।
कर्म्मणा मनसा वाचा-शुभान्येव चचार स:॥
अहिंस्र: सर्व्वभूतेषु धर्म्मात्मा संशित व्रत:।
काष्ठकुड्यशिला भूत ऊर्द्ध्वबाहुर्महाद्युति:॥
अनुत्तरं नाम तपो येन तप्तं महत् पुरा।
त्रीणिवर्षं सहस्राणि दिव्या-नीतीह न: श्रुतम्॥
तत्रोर्द्ध रेत सस्तस्य स्थितस्यानिमिषस्य ह।
सोमत्वं तनुरापेदे महासत्त्वस्य भारत॥
ऊर्द्धमाचक्रमे तस्य सोमत्वं भावितात्मन:।

नेत्राभ्यां वारि सुस्राव दशधा द्योतयन् दिशः ॥

तं गर्भं विधिना हृष्टा-दश-देव्यो-दधुस्तदा ।

समेत्य धारयामासु-र्नच ताः समशक्नुवन् ॥

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः ।

पपात भासयन् लोकान् शीतांशुः सर्व्वभावनः ॥

यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ।

ततस्ताभिः सहैवांशु-र्निपपात वसुन्धराम् ॥

पतितं सोम मालोक्य ब्रह्मालोक पितामहः ।

रथ-मारोपयामास लोकानां हितकाम्यइतिया ॥

कावुलवासिनां

अथकीदृक-स्वभावाः किंहत्ताश्च ते आफगान देशनिवासिनो येद्य-आद्राजपुरुषैः सहैयत्तिथं कालं युध्यमाना न पराजय मापुः पर पूर्व्वादप्यधिकं भयस्थानं भजन्त ? इत्येवं जिज्ञासा वारणार्थं सम्प्रति डक्टर बेल्युनामधेयो महोदयो आफगानस्थान वासिनां मानवानां स्वभाववृत्तादिकं सर्व्वमशेषतो निर्व्वर्ण्य पुस्तकमेकं रचयामास । तस्य सारस्तु—

अक्सस (नदी) पारसीक कान्तार, वूचिस्थान, सिन्धुनदै-तत् सीमाचतुष्टयान्तर्गतभूविभागः आफगान नाम्ना ऽभिधीयते- निवसन्ति तत्र विविध जातीयाः प्रजाः येषां परस्पर मन्व-

वायकतो राजनैतिक विषयको वा नकोऽपि सम्बन्धी विद्यते प्रत्यु
त तएव नादि विषये परस्पर मध्यन्ति चरन्ति च परस्परं प्रति
प्रतिद्वन्दिताम् । परनैकरू-पो धर्मस्तं, प्रतिग्रहातिशयश्च-तेषामे-
कता बन्धनकारणं । प्रायस्ते सर्व एव विश्वासघा-तका उन्मार्गगा-
मिनः पशुवत् केवल-मिन्द्रियसेवा निरता-श्चेत्यस्तु संक्षेपः ।

नूतनपुस्तकम् ।

छन्दोबोधः ( संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः ) सुगम-
हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-
धेयस्य संस्कृतपुस्तकापिपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-
कार्य्यालये (रेजिष्टार् स अफिस, पञ्जाब यूनिवर्सिटी कलेजे
प्राप्तव्यः । कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं ।

अस्मत्समीपे प्राप्तव्या ।

---

श्री     Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भैः-सौजन्यानुशीलनः।

विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ९ ]     मार्च इं १८८०     [ ३ सङ्ख्या

सूची



लाहोर

रिफार्ट नामकि दिलबागरायनामयन घोषेन मुद्रितः॥

सोम (चन्द्रमा) देवता कोउद्देशकर पूर्णमासी में एकादश कपाल नामक यज्ञ करना चाहिए" इस वेद वाक्य से अग्नीषोमीय* यज्ञ का विधान हुआहै ।

ऊपर निर्दिष्ट हुए वेद वाक्यों से विहित आग्नेय, उपांशु और अग्नीषोमीय यागों में से पूर्णिमा में विहित क्रिया प्रधान है। इस लिये "यएवं विद्वान् पौर्णमासीं यजते" "जोऐसा जानता है-पौर्णमासी याग करता है" इस वाक्य में केवल 'पौर्णमासी' पद से ही पूर्व्वोक्त समुदाय यज्ञों का बोध होता है । ऐसे वेद में जहां जहां केवल 'पौर्णमासी" इस पदकी उक्ति है वहां आग्नेयादि समुदय कर्म्मों की उपस्थिति होती है ।

"ननु यदाग्नेय इति वाक्ये यागवाचक पदस्याश्रवणात् कथं यागविधायकत्वमिति चेन्नैवं अग्नि र्देवता यस्य पुरोडाशस्येति अर्थे विहित देवता तद्धितान्त आग्नेय शब्दः; तस्य पुरो-डाशपदसामा नाधिकरण्यात् द्रव्य देवता सम्बन्धोऽवगतः स यागमन्तरा न सम्भ-वति, द्रव्य देवता सम्बन्धस्य यागादन्यत्र क्रियाया मसम्भवात् याग क्रियायामेव सम्बन्धो वाच्यः, देवतोद्देशेन द्रव्यत्यागस्य-यागरूपत्वाङ्गी कारात् । अतः श्रुत द्रव्य देवता सम्बन्धानुमितो यागो यजेतेति क ल्पितपदेन विधीयते,"अग्निदैवत्य-पुरोडाश-द्रव्यकागावस्यादिकाल कर्त्तव्य यागेनेष्टं भावयेदि"ति, एवं यत्र यत्र द्रव्यदेवता सम्बन्धमात्रं

* ग्यारह मिट्टी के वर्त्तनमें संस्कृतहुए पुरोडे जो यज्ञकियाजाता-है उसका नाम एकादश कपाल

श्रूयते "सौर्य्यं चरुं निर्वपेदि"त्यादौ तत्र सूर्य्य देवता सम्बन्धानुमितो यागो विधीयत इति न कश्चिद्दोषः" ।

अब यह शङ्का होती है कि पूर्वोक्त "यदाग्नेयो ऽष्टाकपालो" इत्यादि वाक्यमें 'याग' ऐसे पदका कथन नहीं है तो क्योंकर इस-वाक्यको 'यागविधायक' (यागको विधान करनेवाला) समझा जाता-है? इसके उत्तरमें कहते हैं कि ऐसा मत कहो क्योंकि "अग्निदे-वता जिस(पुरोडाश) का है" इस अर्थमें विहित तद्धित प्रत्ययसे "आग्नेय" इसपदकी सिद्धि हुई, इसलिये 'आग्नेय' यहपद 'पुरो-डाश' केसाथ 'सामानाधिकरण्य' (बराबरि) रखता है, और इस-प्रकार इसपदमें द्रव्य और देवताका सम्बन्ध विदित होता है, तो देखो कि यागके विना और किसी क्रियामें द्रव्य और देवताका-सम्बन्ध नहीं होसक्ता किन्तु यागक्रियामें ही ऐसा सम्बन्धहोता है क्योंकि किसी देवताको उद्देशकर द्रव्यत्यागकोही याग कहते हैं । इसलिये यहां द्रव्य और देवताके सम्बन्ध के अवगमसे अनुमित (जानेगए) हुए यागका ही 'यजेत' (यज्ञकरै) ऐसे एक कल्पित क्रियापदसे विधान होताहै ऐसा समझना उचितहै । तो "यदा-ग्नेयः" इत्यादिवाक्यका तात्पर्य्यार्थ अब ऐसा हुआ कि अग्निदेव-ताकेलिये आठ कपालसे संस्कृत पुरोडाशके द्वारा अमावस्यामें कर्त्तव्य यज्ञसे इष्टसाधन करै । ऐसा जहां जहां केवलद्रव्य और

देवताका सम्बन्ध सुना जाता है जैसा "सौर्य्यञ्चरुन्निर्वपेत्" "सूर्य्यसम्बन्धि (सूर्य्य जिसका देवता है) चरु देवैं, इसवाक्यमें सूर्य्यदेवता के सम्बन्धसे अनुमित हुए यागका विधान होताहै अर्थात इसवाक्यसे यह जाना जाता है कि 'सूर्य्य देवताको उद्देशकर चरुसे यागकरें, अब यह सिद्धान्तहुआ कि यागादि पदोंका कथन न होवे तोभी कुछदोष नहीं ।

"नन्पांशुयागवाक्ये यजिश्रवणेऽपि विधिप्रत्यय लिङादेरभावात् कथं विधायकत्व मिति चेन्नैवं; यजतीत्यस्य यजेतेति विपरिणामे विधायकत्व सम्भवात् । एवं यत्रलिङादिर्न श्रूयते "ब्रीहीन् प्रोक्षति" "समिधो यजतीत्यादौ" तत्र विपरिणामो बोध्यः । केचित् "यजती" त्यस्य पञ्चमलकारत्वाङ्गी-कारात् विधायकत्व मेव इत्याहुः" ।

कोई शङ्काकरताहै कि "उपांशु यागमन्तरा यजति" "बीचमें उपांशु यज्ञ करें" इसवाक्यमें यद्यपि यजधातुका श्रवण होताहै किन्तु उसपर विधि अर्थ प्रकाश करने वाले लिङ के न होनेसे यह वाक्य किसी प्रकारसे विधायक नहीं होसका अर्थात् 'यजति' इसका अर्थ 'यज्ञकरता है' इससे 'यज्ञकरें' ऐसा अर्थ नहीं निकलताहै । इस शङ्का की निवृत्ति केलिये कहते हैं कि ऐसा न कहो

क्योंकि 'यजति' इसपदका अर्थ 'यजेत' (यज्ञकरें) ऐसे वदलनेसे विधिका अर्थ समझा जाता है। ऐसा "व्रीहीन प्रोक्षति" "समिधो यजति" इनस्थलोंमेंभी लटका-अर्थ लिङमें परिवर्त्तित होता-है अर्थात इनकाअर्थ, व्रीहि (धान्य) से याग करें, 'समिधसे याग करें, ऐसा होताहै। कोई कोई कहते हैं कि 'यजति' इसपदको-ही लिङ्गप्रत्ययान्त समझने से अर्थवदलना-नहीं पडता इसीसेही-'विधि' अर्थ माना-जाता है।

"तथा ऐन्द्रं दध्यमावस्यायां" "ऐन्द्रं पयोऽमावस्यायां" इति-वाक्य विहितौ सान्नाय्य यागौ, 'यदाग्नेय' इति वाक्य विहिताग्नेय-श्चामावस्यायां प्रधानानि; एषां त्रयाणां 'यएवं विद्वानमावस्यां यजते' इति वाक्ये अमावस्या मिति नाम्ना द्वितीयैक वचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र दर्श शब्दोऽमावस्या शब्दो वा श्रुतस्तत्र याग समुदायोपस्थितिः। त्रिक त्रिकस्यामावस्या-पौर्णमासीभ्यां समुदाय रूपेण विद्वान-स्यानुवादस्य प्रयोजनन्तु दर्श पौर्णमासीभ्यां स्वर्गकामो यजेते-त्यादौ द्विवचनोप-पत्तिः। अन्यथा षणां माक्षयादि-यागानां बहुत्वात् दर्श पौर्णमासे रितिवहुवचनं स्यात्।

ऐसाही "अमावास्या में इन्द्रसम्बन्धि दधि" अर्थात्, अमावस्यामें इन्द्रदेवता को उद्देश कर दधिसे यागकरें, और अमावस्यामें

णीतु लक्षणाविशेषो यत्र सादृश्यमेव सम्बन्धः, यथा गौर्वाहीक
इति, लक्षणाबीजं मुख्यार्थान्वयानुपपत्तिरिति मणिकृतः, तात्पर्य्यानु-
पपत्तिरिति संप्रदायः, शाब्दबोधे असाधुत्वनिश्चयाभावो हेतुः नचै-
वमपभ्रंशादेरन्वयबोधो नस्यादितिवाच्यं इष्टापत्तेः व्युत्पन्नानां
तत्स्मारित साधुशब्दादन्वयबोधः पामराणां तु शक्त्यारोपादेवेत्य
तो नानुभवविरोधः, किन्तत् साधुत्वं ? व्याकरण व्युत्पाद्यत्वं साधुत्वं,
यः शब्दो यत्र व्याकरणेन व्युत्पादितः स तत्र साधुः अतएव गावी-
शब्दो गवि न साधुः, व्याकरणं तु शब्ददोषगुणवित्- कल्पक
प्रकृतिप्रत्ययविभाग कल्पनापुरस्सर शब्दान्वाख्यापकं वाक्यं, प्रकृति
र्द्विविधा धातुप्रातिपदिक भेदेन, भूवादयोधातवः श्तिप् प्रकृतित्वं
धातुत्वं, सुपप्रकृतित्वं प्रातिपादिकत्वं, तदाश्रयश्च द्विविधः, सख-
ण्डोऽखण्डश्च; आद्यो दण्डिनित्यादि अन्त्यो गवित्यादि तस्य च जाति
व्यक्त्याकृतयः शक्याः, मीमांसकमते तु जातिरेव शक्या व्यक्तिस्त्वा-
क्षेपलभ्या ; वैयाकरणानां तु मीमांसकमत परिवृत्तिमात्रं ; इमा
वेव भेदौ यौगिकरूढाविति क्रमेण व्यवहरन्ति, योगः सम्बन्धः ;
तत्प्रवृत्तिनिमित्तो यौगिकः नचेह समुदायशक्त्यात्मिका रूढि-
रस्ति प्रकृत्या दण्डस्य प्रत्ययेन सम्बन्धस्य सम्बन्धिनो वा स्थितावेव
विशिष्ट प्रतीत्युपपत्तौ तत्कल्पनाभावात्, प्रातिपदिकस्य पञ्च-
विधत्वं, तथाद्यो यदृच्छाशब्देन नाम्ना विशिष्टोऽर्थं उच्यते यथा

डित्थ इति, जाति शब्देन गौरिति, गुणेन शुक्ल इति, क्रियया पाचक इति, द्रव्येण दण्डीति ; प्रत्ययः सुप्तिङादि भेदेन बहुविधः. तत्र द्वितीयादीनां कर्म्मत्वादिकं शक्यं सुब्विकाराणां च पुंस्त्वादिकं परसमवेतक्रियाफलशालित्वं कर्म्मत्वं. करणत्वं तूक्तमेव, कृत्याश्रयत्वं कर्तृत्वं, प्रतिग्रहव्याप्तं कारकं सम्प्रदानं, विश्लेषावधिरपादानं, अधिकरणता स्वरूपसम्बन्धविशेषः, यत्नत्वेन यत्नः शक्यः इति नव्याः, अन्योन्यानुकूलो व्यापारो भावना परनामा शक्य इति भट्टाः कृतिमात्रपेतो धात्वर्थं कथ्या, व्यापारस्तु धात्वर्थं इति तिङर्थस्तु वर्त्तमानत्वादीनीति प्रभाकराः, लिङ् लोट् कृत्य पंचम लकाराणां विधायकानां विधिः शक्यः प्रवर्त्तनाभिधः स इति भट्टाः. कार्य्यमपूर्व्वापरपर्य्यायं कार्य्यत्वविशिष्टं तत्, कार्य्यत्वं च कृति साध्यत्वे सत्युद्देश्यत्वमिति प्रभाकराः, इष्टसाधनत्वं तत् इति टीका कृतः, इष्ट साधनत्वे च इष्टान्वय व्यतिरेकानुकृता न्वयव्यतिरेकित्वमेव, शाब्दप्रमायां तात्पर्य्यं प्रमा गुणः योग्यता प्रमा वा तात्पर्य्यं च लिङ्गानि "अर्थः प्रकरणं लिङ्गशब्दस्यान्यस्य सन्निधिः सामर्थ्यं मौचिती देशः कालो व्यक्तिः स्वरादय" इत्येवं क्वचित् उपक्रमोपसंहारावभ्यासो पूर्वता फलं अर्थ वादोपपत्ती च लिङ्गं तात्पर्य्य निर्णय इत्यपि क्वचित् ।

अथ प्रमेयम्-, तच्च द्वादश विधं आत्मा, शरीरे, न्द्रिया, र्थ, बुद्धि, मनो, प्रवृत्ति, दोष, प्रेत्यभाव, फल, दुःखापवर्ग, भेदेन; तत्रात्मत्वजातिमात्मा, प्रति

विषयं नाना नित्यो विभुश्च ; सच द्विविधः स च ईश्वरो जीवश्च, तत्र नित्यज्ञानेच्छा प्रयत्नवानीश्वरः, सुख दुःखाद्याश्रयो जीवः स च स्वस्यैव प्रत्यक्षः तंत्वौपनिषदाः सुखरूपमाहुः, वयं तु यदुभयाश्रयं सुखिन मह मात्मानं जानामीति प्रतीति प्रमाणक माचक्ष्महे, भोगायतनं शरीरं, भोगश्च सुखदुःख साक्षात् कारः आत्मविशेषगुण कारण मनः संयोगवदन्त्यावयव वृत्तिजातिमत्त्वं शरीरत्व मिति प्रकाशकृतः, विशेष गुणाः रूपादयः, द्रव्यानारंभकावयवित्व मन्त्यावयवित्वं, इदंच द्विविधं योनिज मयोनिजञ्च शुक्रशोणित सन्निपातजं योनिजं, तत्तु पार्थिव मेव तच्च द्विविधं जरायुज मण्डजञ्च आद्यं मानुषादीनां अन्त्यं पक्षिसरीसृपादीनां; शुक्रशोणितानपेक्ष मयोनिजं, पार्थिवादिभेदेन चतुर्विधं, इन्द्रियं, षड्विधं, पार्थिव मिन्द्रियं घ्राणं गन्धव्यञ्जकं इत्यादिज्ञेयं, अतीन्द्रियं मनः सुखादिग्राहकं वहिः परतन्त्रं अन्यथा अन्धवधिरा द्यभावप्रसङ्गात्; सांख्यास्तु त्वगेव वुधीन्द्रियं, सैव विचित्र शक्तिमत्तया रूपादिसाक्षात् कारकारिणी कर्मेन्द्रियाणिच अधिकान्याहुः चक्षुस्त्वङ् मनांस्येव द्रव्यविशेषक साक्षात्कारणमिति । अथाभ्युपगमसिद्धाः सप्त द्रव्य-गुण कर्म सामान्य विशेष समवायाभावाः; द्रव्यत्वं जातिः गुणवत्त्वं गुणः योग्यता वा साच गुणात्यन्ताभावाभावः गुणत्वमपि जातिः कर्मभिन्ना समवायिकारणत्वं वा संयोगविभाग मपेक्ष्य कारणत्वं क-

मेत्वं जातिविशेषो वा नित्यत्वे सत्यनेक समवेतत्वं सामान्यत्वं नित्यद्रव्यवृत्तयोव्याविशेषाः समवायस्सूक्ष्मएव द्रव्यत्वादि षट्कात्यं ताभाव एवाभावत्वं अभावत्व मखण्डो पाधिरित्यप्याहुः नास्त्यभावः पदार्थान्तरं किन्तु केवलमधिकरणं अधिकरणादभिन्नो भिन्नस्वाभावः इति भट्टाः । द्रव्याणि, पृथिव्यप्तेजो वायू काशकाल दिगात्मा मनांसि सुवर्णमपि द्रव्यान्तरं मित्येकदेशिनः पृथिवीत्वसामान्यवती पृथिवी अप्सामान्यवत्य आपः तेजस्त्वसामान्यवत्तेजः वायुत्वजातिमान् वायुः शब्दसमवायिकारणमाकाशं, तदेव शब्दसाक्षात्कारजनकादृष्ट विशिष्ट कर्ण शष्कुल्यवच्छिन्नं श्रोत्रमिति न्यायाचार्याः, आलोकमंडल एवायं सत्यश्चेति मंडनमिश्राः, मूर्त्तद्रव्याभाव एवाकाश इति वाह्याः कालः परत्वा परत्वविशेषहेतुः सचैकोप्युपाधिभेदेन भूतादि व्यपदेशं लभते स्वप्रागभावाधि करणकालत्वं भावित्वं स्वावच्छिन्नः कालोवर्त्तमानः ।

पूर्वापरादिप्रत्यय निमित्तं दिक् साचैकापि तपनपरिस्पन्दात्मकोपाधि रभेदेन माहेन्द्री त्यादि दश संज्ञां लभते ।

आत्मोक्त एव, सुखादिकारण साक्षात्कारण मिन्द्रियं मनः तच्च प्रतिशरीरं नाना परमाणु च

औपनिषदास्तु मध्यम परिमानं संकोच विकाशवच्च तद। चक्षुमात्र ग्राह्यो गुणोरूपं रसनाग्राह्यगुणोरसः घ्राणग्राह्यो-

स्कन्धपञ्चकम्

"सर्व्वं कार्य्यं शरीरेषु मुक्ताङ्गस्कन्धपञ्चकं ।
सौगतानां मिवात्मा-न्यो नास्ति-मन्त्रो महीभृताम्,, ॥

शिशु पालवधम्

स्कन्धपञ्चकं विहाय यथा सौगतानां मन्य आत्मा नास्ति तथा सर्व्वेषु कार्य्यरूपेषु शरीरेषु सहाय साधनो पाय प्रभृतीनि * पञ्चाङ्गानि विहाय महीभृतां नान्यः कश्चिन्मन्त्रो विद्यते । अथ केते बौद्धानां पञ्चस्कन्धाः इति जिज्ञासायां ब्रूतेस्म भगवान् मल्लिनाथः

"रूपवेदना विज्ञान संज्ञा-संस्काराः पञ्चस्कन्धाः । तत्र विषय प्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञान सन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासना प्रपञ्चः संस्कार स्कन्धः । एवं पञ्चधा परिवर्त्तमानो ज्ञान सन्तान एवात्मा-इतिबौद्धाः" ।

तत्रभवतो मल्लिनाथस्यैतद्वचसा स्कन्धपञ्चकस्य न सम्यक्ज्ञानं जायत इति वयं प्रमाणान्तर मुद्धर्त्तुं मिच्छामः ।

"किमस्ति प्राणिनां नित्यो ध्रुव आत्मेति प्रश्नो जगति प्रचलितो वर्त्तते । तत्र तथा जीवात्मा वर्त्तत इत्युक्तिर्वहुषु मतेषु स्वा-

* "सहायाः साधनो पाया विभागो देश कालयोः विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्ग-मिष्यते" कामन्दके

ताऽपि न तथा-बौद्धमते, यतस्सुगतोऽनात्मवादी। बौद्धमतेतु-शरीरिणां स्कन्ध पञ्चकं मुक्ताऽन्य आत्मा नास्तीति व्याख्यातम्। प्राणिनः पञ्चस्कन्धाः रूपवेदना संज्ञा संस्काराः विज्ञान मिति। तत्र म. हाभूतादिभेद भिन्नं, शीतोष्णा-दिभिर्विकार्यं शरीरं रूपं, समुदायार्थात् स्कन्धस्य रूपस्कन्ध इत्युच्यते रूपसमूह इत्यर्थः। सुखादिभेद भिन्नं सर्व्वं भिन्नं वेत्तव्यं वा वेदनास्कन्धः। बुद्धीन्द्रियजं सर्व्वं संज्ञान लक्षणं संज्ञास्कन्धः। साधारण-शोभनादिभेद भिन्नाः सर्व्वे संस्क्रियमाणाः स्पर्शचेतना-द्यः संस्काराः संस्कार स्कन्धः। कुशला-दि भेदभिन्नं विषय ज्ञान लक्षकारि सर्व्वं मनः विज्ञानस्कन्ध इति प्रोच्यते,,। (The Theosophist)

"तत्र च वेदनादय श्चत्वारो नाम, शरीरं रूपं तन्नामरूपद्वयं मुक्त्वा कश्चिदात्मा पुरुषो वा प्राणिनि नास्ति। रूपादयः पञ्चस्कन्धाः सर्व्वे अनित्या विनश्वराः तेषां मध्ये कश्चिन्नित्यो ध्रुवोन वर्त्तते, सर्व्वे अध्रुवा अस्थिरा अध्रुवै रस्थिरैः फेणादिभिस्समाः (see the above) *

* रूपं अनिच्चं, वेदना अनिच्चा सञ्ञा-अनिच्चा, संखारा अनिच्चा-विञ्ञाणं अनिच्चं।

फेण-पिण्डू-पमं रूपं, वेदनाबुब्बुलू-पमा, मरी-चिकूपमा-सञ्ञा, संखारा कदलूपमा मायूपञ्च-विञ्ञाणं।

सर्वदर्शनसंग्रहे स्कन्धपञ्चक मेवं व्याख्यातं यथा—

"एवं चित्तचैत्तात्मस्कन्धः पञ्चविधः, रूप विज्ञान वेदना संज्ञा संस्कार संज्ञकः। तत्र रूप्यन्त एभिर्विषया इति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। * आलयविज्ञान प्रवृत्तिविज्ञान प्रवाहो विज्ञानस्कन्धः। प्रागुक्तस्कन्धद्वयजन्यः सुखदुःखादि प्रत्यय प्रवाहो वेदना-स्कन्धः। गौरित्यादि शब्दोल्लेखि संविज्ञान प्रवाहः संज्ञास्कन्धः। वेदना-स्कन्ध-निबन्धना रागद्वेषादय क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः"।

कालक्षेपः

भाग्यवान कदाचित् पल्लवीवि-कया साहस्य मालभते, यत्तावसरेषु किञ्चिद्विलम्ब-स्थितानां स्वल्पेनैव मूल्येनाभिलषितानि करतल मायान्ति द्रव्याणि,। कदातु सिबिलानामकायाः प्रार्थन-यौपम्यं भजते, पुरा द्वितीय टारक्विन नामकस्य राज्यशासन-समये रोमनगरे सिबिल सम्प्रदायस्थितानां काचिन्नव खण्डानि पुस्तकान्यादाय समागता। याचितञ्च तया तेषां क्रते मूल्यानर्घं। नाङ्गी कृतः स टारक्विननामधेयेन। तत स्तत्क्षण मेव साऽन्तरिताभूत्वा तेषां त्रीणि वह्निसात् कृत्वा पुनर्हस्ततरं प्रत्याहृत्य चावशिष्टा-

* आलय-विज्ञानं नामाहमास्पदं विज्ञानं, नीलाद्युल्लेखि च प्रवृत्ति-विज्ञानं बाह्यार्थनिषयकज्ञान-मित्यर्थः

नां पश्चामर्धं तदेवमूल्य मयाचत, नाङ्गीकृतं नरपतिना ततः सा पुनर-पि तेषु त्रीणि दग्ध्वाऽवशिष्टानां त्रयाणां कृते तदेव प्रथम प्रार्थितं मूल्यं प्रार्थितवती । तस्या स्तदन्यो-क्तिक-क्रियया विस्मयावि ष्टः सम्राट् जग्राह तानि त्रीणि तेनैव मूल्येन । भाव्य मप्येवं कदाचित् समग्रस्य वस्तुनो मूल्ये न तस्यांशमपि प्रददातीतिभावः । एतदपिप्रवाद वाक्यं वर्त्तते,यदवसरः प्रथम मात्मनो रुचिरं काकपक्षं प्रदर्श्य पश्चादकेशं मुण्डं प्रदर्शयति, ततः पश्चात्तस्य शिरो न केनाऽपि ध्रियत इत्यर्थः । अथवा स प्रथमं पुटग्रीवस्य (bottle) सुग्रहां ग्रीवां ग्रहणार्थं प्रदाय पश्चादतिदुर्ग्रहं मध्यभागं प्रयच्छतीति,

वस्तूना.मुपक्रमावस्कन्दनं विहाय नान्यदस्ति किमपि सुविवेक कार्य्यं । एकदोत्तीर्णं विपदां विपत् न भयं जनयितुं समर्था भवति; अनेकदा मनुजाःपीड्यन्ते यथा विपदां भयेन न तथा साक्षात् विपत् पातेन अतएवोक्तं "अग्नेः पतनेन वेदना पतनज्ञान मतीव-दुस्सहमिति" असम्भाविते ऽपिविपदां सन्निपाते अर्द्धपथ एव तासामुपरि दृष्टिर्विधेया.नतु सुचिरादेव ता मनस्युद्भाव्य सावहितेन भवितव्यं, यतोभवति प्रायो ऽतिदीर्घा-वधानशालिनां कार्य्य काले निद्रागमः प्रत्युत तथा विधातिदीर्घावधानेनासम्भाविता अपि विपदोद्रुततरमापतन्ति ।

अतएवावसरस्य बलाबले सर्व्वदैव प्रेक्षणीये स्मर्त्तव्य-

नीतिवचनं शुभस्य शीघ्र मशुभस्य कालहरण मिति । इन्द्रइव सह-स्र-दृष्टिभिः कार्य्योपक्रमकालमीक्षेत, तथा कार्त्तवीर्य्य इव सहस्र बाहुभिः प्रारब्धं कार्य्यं सम्पादयेत् । उचितावसरं प्राप्य वितन्द्रिणा भवितव्य मितिसिद्धान्तः

## काबुलयुद्धम्

अहो सार्द्धैकवत्सरी-व्यतीतप्रायो ऽस्य काबुल महा-समरस्य, नद्यय मद्यापि निर्व्वाणोन्मुखोजातः, न प्रतीयतेऽतः कीदृगस्य विषमा भविष्यति परिणतिरिति । देवासुरयुद्ध-प्रमुखान् कतिचिद्दूनानिव समरान् विहाय नासीय भूमिष्वेतादृग दीर्घयुद्धं स्वल्पोद्देश्यप्रवर्त्तितं पुराणेष्वपि वर्णित मस्ति, यतैकादशा-क्षौहिणीनां संचयः संवृत्त स्तदपि भारत-युद्धं न मासपर्य्यन्तस्थायि बभूव, किं वहुना यत्रामरभूमि विलुण्ठनोच्छूनभुजस्य मेघनाद-जनयितू रावणस्य समूलोन्मूलन मभवत् तदपि महायुद्धं दशमासाऽभ्यन्तरेव समता मगमत्; किन्त्वस्मद्धन्यतया भारतस्याकाल-प्रजाक्षयकरं दुर्भिक्षाद्युपद्रवद सहस्त्रं गुरु-करभार-प्रवर्त्तनमशेषदुःख जननञ्च जन्यमिद गतेष्वप्यष्टादशमासेषु न स्तोकमपि प्रशमोन्मुखं संवृत्तम् । अद्यापि पूर्व्ववदेव दुर्भिक्षोद्रिक्तक्षुधां भारतीय प्रजानां करवात् वलेनाकृष्य नीयन्ते विविधान्यन्नानि प्रत्यहं समरभूमिषु, पूर्व्ववदधुनापि दुर्भिक्ष महामारी कराल कवलावशिष्टानां भार-

तीव प्रजानां सारभूतानि सैन्यानि पञ्चनदा-प्रदेशे भिमिकाद्युर्वाह्य-
प्रेष्यन्ते दलप्रबोधमयो :स्वल्पतरेणोपायेन काबुलयुद्ध-कालाग-
लाभिमुखम् ।

नास्ति काबुल भूमिविजयेतु कोऽपि लाभविशेषोऽङ्ग्रेज-
पुरुषाणां जायते च युद्धप्रचारे बहुविधैव हानिः प्रजास्तु राज्येभि-
ति प्राक् भूयोभूयः प्रतिपादित मस्माभिः परं न ज्ञायते कथमिदा-
नी मध्यलक्ष्यहेतौ वैदेशिकीप्रारूपा-निवारकभूतता ऽङ्ग्रेज पुरु-
षान्न परित्यजतीति ।

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन

प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।

जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः।

विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ९ ] फब्रुवरी इं १८८० [ २ सङ्ख्या

सूची



लाहोर

ऐल्बर्ट नामके [illegible] यन्त्रेण मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाशि" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथक् मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभि-लाषः प्रकाशनीयः । विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं ।

---

### मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।✓०

" पश्चाद्देयं ... ... ... ३।✓०

प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।

विज्ञापनस्य प्रत्येकपंक्तिः/० परिमितमूल्येन मुद्रिता भविष्यति

### नूतनपुस्तकम् ।

छन्दोबोधः ( संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः ) सुगम-हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कालेज प्राप्तव्यः । कवितावली— (अत्युत्तमकवितायन्थः) मूल्यं ।)

अस्मत्समीपे प्राप्तव्या ।

आशुतर विनाशी है अर्थात् जिस समय कर्म किया जाता उसी क्षनमें ही उसकी समाप्ति होती है और स्वर्ग लाभ कालान्तर भावी है अर्थात् मृत्यु के पीछे स्वर्ग लाभ होता है अतएव अग्नि होत्र हवन और स्वर्गलाभ इन दोनों में किसी प्रकारसे कार्य्य कारण सम्बन्ध नहीं घटता है। इस शङ्का की निवृत्तिकेलिये कहता है कि ऐसा मत कहो। क्यों कि जिस २ स्थल में विहित वा निषिद्ध-कर्मों के फल की उक्ति है उन स्थलों में यह सिद्धान्त स्थिर हुआ है क्रियाओं से प्रथम पुण्य वा पाप रूप अपूर्व उत्पन्न होता है, उस अपूर्व से स्वर्ग वा नरक की प्राप्ति होती है, अर्थात् आशुतर विनाशि कर्म और उस्के फल, स्वर्ग वा नरक के साथ साक्षात् कार्य्य कारण सम्बन्ध नहीं है, उन के बीच में पुण्य वा पाप रूप अपूर्व की कल्पना होती है। अब तोमारी शङ्का का समाधान होगया, क्यों कि आशुतर विनाशि कर्म साक्षात् स्वर्गादि का कारण नहीं, किन्तु अपूर्व के द्वारा स्वर्गादि का कारण है। कर्म से जो अपूर्व उत्पन्न होता है, उस अपूर्व से स्वर्गादि की प्राप्ति होती है। समुदय अंग विशिष्ट प्रधान कर्म को उस अपूर्व के कारण रूप से कल्पित किया गया है। यदि केवल प्रधान कर्म ही अपूर्व का कारण होता तो उसीसेही फल की सिद्धि होती,

अंगों का कथन विफल होता।

ननु सर्व्वाङ्ग विशिष्टस्य प्रधानस्यापूर्व जनकत्व मयुक्तं, आशु तर विनाशिनः प्रधानस्याङ्गसाहित्याभावादितिचेन्न प्रधान कर्म्म-णः स्वरूपेणाङ्ग साहित्याभावेऽपि उत्पत्त्य पूर्वद्वारा साहित्य सम्भ-वात् प्रधानस्य सर्व्वाङ्ग साहित्य सिद्धर्थं प्रधानकर्मपरमापूर्वयो-र्मध्ये प्रधान मात्र जन्य मुत्पत्ति नामकं किञ्चिदपूर्वमस्तीत्यङ्गी कारात्; एवमङ्गानामपि परस्पर सहितानामेव प्रधानोपकार-कत्वात्तेषां स्वरूपेण साहित्याभावात् तदुत्पत्त्यपूर्वद्वारा साहित्य बोध्यम्।

अब यह आशङ्का होती है कि तुम कहते हो सर्व्वाङ्ग वि-शिष्ट प्रधान क्रिया अपूर्व का कारण है ऐसा कहना भी अयुक्त है, क्यों कि प्रधान कर्म्मभी सद्यो विनाशी है अत एव अङ्गों से इसका मिलाप होना असम्भव है अर्थात् कोइ २ अङ्ग प्रथम हो सम्पूर्ण होते हैं कोइ २ अङ्ग पीछे से। अब देखो पहिले समा-स हुए जो पीछे होने वाले अङ्गों से प्रधान का साहित्य होना असम्भव है, तो निखिल अंगों से मिला हुआ प्रधान कर्म किसी प्रकार से अपूर्वका कारण नहीं होसक्ता है। इसका समाधान यह है कि यद्यपि प्रधान कर्म्मका स्वरूप से अंगों से साहित्य नहीं तो भी उत्पत्ति नामक अपूर्व के द्वारा ऐसा साहित्य होसक्ता है। क्यों

कि समुदय अंगों से प्राधान कर्म्म के साहित्य की सिद्धि के लिये प्रधान कर्म्म और सर्व्वाङ्ग युक्त प्रधान कर्म्म जन्य प्रधान अपूर्व के बीच केवल प्रधान कर्म्म से उत्पत्ति नामक एक प्रकार के अपूर्वकी

उत्पत्ति स्वीकार करते हैं। ऐसे अंगों के भी आपसमें साहित्य सिद्धिकेलिये उनके बीच उत्पत्तिनामक अपूर्व्व का स्वीकार किया गया है।

अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलाऽपूर्व्व जनन सामर्थ्याधायको करणमेव, अंग समुदय प्रधान के उपकार हैं इसका तात्पर्य यह है कि अंगसमुदाय प्रधानको फल और अपूर्व्व उत्पन्नकरनेवाली शक्तिको बढाते हैं।

दर्शपौर्णमासयोस्तु विशेषः। यदाग्नेयोऽष्टा-कपालो ऽमावस्यायां पौर्णमास्यांचाच्युतो भवतीत्याग्नेययागो विहितः। उपांशुयाजमन्तरा यजतीति उपांशुयागः ताभ्यामेवाग्नीषोमीयमेकादश कपालं पूर्णमासे प्रायच्छदित्यग्नीषोमीय यागो विहितः। तादवृता

अग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजेरन्निति वाक्यात् पौर्णमास्यां विहितः स तानि पौर्णमास्यां प्रधानानि एषा आग्नेयाग्नीषोमीयोपांशुयागानां तत्तद्वाक्यगत पौर्णमासीकालस्य निमित्तीकृत्य, य एवं विद्वान् पौर्णमासीं यजत इति विद

हाक्ये पौर्णमासी पदेनैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र यत्र पौर्णमासीशब्दः तत्र तत्राग्नेयादिसमुदायोपस्थितिः।

दर्श अर्थात् अमावस्यामें विहित, यज्ञ, और पौर्णमास, पूर्णिमामें विहित हुआ यज्ञ, ये दो इसके विशेष उदाहरण हैं अर्थात् इन दोनों स्थलों में प्रधान क्रियासे उत्पन्न अपूर्व, अंग समुदायसे उत्पन्न अपूर्वों से मिलकर परम अपूर्व रूप से परिणत होता है, और स्वर्गादि फलोंको सम्पादन करता है। जैसा "आग्नेयोऽष्टाकपालो*ऽमावस्यायां पौर्णमास्याञ्चाच्युतो भवति" 'अग्निदेवताको उद्देश करके अमावस्या वा पूर्णमासी में जो अष्टाकपाल याग किया जाता है वह अक्षय स्वर्ग फल के लिये होता है" इस वेद वाक्य से आग्नेय यज्ञका विधान हुआ; फिर "उपांशुयाजमन्तरा यजेत" 'बीच में उपांशु नामक यज्ञ करना अवश्य है' इस वाक्य से उपांशु नामक यज्ञ का विधान हुआ है,इसके पीछे 'ताभ्यामेवाग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" पूर्वोक्त अष्टाकपाल और उपांशुयागों के द्वारा अग्नि और

* अग्नि देवताऽस्येत्याग्नेयः। अग्निजिसका देवता है उसका नाम आग्नेय।

अष्टसु कपालेषु मृत्पात्रेषु संस्कृतः पुरोडाश.

तत्साध्ये यज्ञे च। आठ कपाल अर्थात् मृण्मय पात्रों में पके हुए हवि से जो यज्ञ किया जाता है उसकानाम अष्टा कपाल

तत्र प्रत्यक्षं द्विविधं, अलौकिकं लौकिकञ्च, आद्यं ईश्वरीयं अन्यं पुनर्द्विविधं निर्विकल्पकं सविकल्पकं च ; वैशिष्ठ्यानवगाहि ज्ञानं निर्वि-कल्पकं, तन्नास्त्येवेति प्राभाकराः ; वैशिष्ठ्यावगाहि ज्ञानं सविकल्पकं, तच्च नाम जाति गुण क्रिया द्रव्यात्मक विशेषण वैशिष्ठ्यविषयतया पञ्चविधं, यथा डित्थोऽयं, ब्राह्मणोऽयं गौरयं शुक्लोऽयं गच्छत्ययं कमण्डलुमानिति ।

लौकिकः सन्निकर्षः षड्विधः—संयोगः, संयुक्त-समवायः, संयुक्त- समवेतसमवायः, समवायः, समवेतसमवायः, विशेषणताचेति, यथासंख्यं घट, तद्रूपत्व, शब्दत्व, अभावेषु ; भावविशेष्यक चाक्षुषे विषयालोकचाक्षुषे विषयालोक संयोग-चक्षुरालोक संयोग चक्षुरालोकयोरूपं हेतुः । भ्रमसंशयोत्तर प्रत्यक्षेतु विशेषदर्शन मपिहेतुः प्रामाण्यं स्वतएवोत्पद्यते ज्ञायते चेतिमीमांसकाः, परत एवोत्पद्यते ज्ञायते चेत्यस्मत्सिद्धान्तः, जन्यप्रत्यक्षप्रमामात्रे अदृष्टविशेषो गुण इति रत्नकोषकृतः, भ्रम विरोधि सन्निकर्षो गुण इति तु वयम्, अनुमान मपि त्रिविधं केवला न्वयि, केवलव्यतिरेकि,अन्वयव्यतिरेकि, भेदात् । केवलान्वयि साध्यक केवलान्वयि केवलान्वयि यथाभिधेयत्व ज्ञेयत्व प्रमेयत्वादि-भगवदिच्छा रूपशब्द शक्ति विषयत्वं प्रथमं,भगवज्ज्ञान-विषयत्वं द्वितीयं, भगवत्प्रमाविषयत्वं तृतीयं ; वृत्तिमदत्यन्ताभावाप्रतियोगित्वं

केवलान्वयित्वं ; पृथिवी गन्धवती पृथिवीत्वात्, अत्र या पृथिवी सा गन्धवतीत्यत्र दृष्टान्ताभावात् पृथिवीमात्रस्य पक्षत्वेन साध्य निश्चयस्य पृथिव्यामभावात् जलादौ साध्यस्यासत्वात् ; व्यतिरेक सह चारमात्रगृहीत व्याप्ति बलेन यदनुमानं तद्व्यतिरेकि यथा "यन्न-गन्धवत्र सा पृथिवी यथा जलादि" न च पक्षातिरिक्ते जलादौ साध्यसाधनयोः साहचर्य्यमस्ति निश्चीयते वा तदुक्तं भट्टैः "व्याप्य व्यापकभावोहि भावयोर्यादृगिष्यते तयोरभावयोस्तस्माद्विपरीतः प्रतीयत" इति यत्तोभय सहचारेण गृहादनुमानं तदन्वयव्यतिरेकि "यथा पर्वतो वह्निमान् धूमात्" योयो धूमवान् स वह्निमान् यथा महानसं योन वह्निमान् नासौ धूमवान् यथा जलह्रदः अनुमिति मात्रस्य लिङ्गज्ञानं कारण मिति बहवः, ज्ञानमात्रं कारण मिति केचित् ।

उपमितिस्तु साधर्म्यं वैधर्म्यं भेदात् द्विधा यथा गौरिव गवय इति वाक्यं श्रुतवतो दृष्टवतश्च गवयपिण्डं गवयत्वं गवयपद प्रवृ-त्ति निमित्त मिति मतिः । सेयं साधर्म्य ज्ञान जन्यतया प्रथमा, अधिकरभ मतिदीर्घ ग्रीवं प्रलम्बलोष्ठं कठोरतरकण्ठ काशिनं-कुत्सितावयव सन्निवेश मपसदं पशूना मितिश्रुतवतः करभपिण्ड-दर्शनानन्तरं करभत्वं करभपदप्रवृत्तिनिमित्त मिति या मतिः सा वैधर्म्य ज्ञानजन्या द्वितीया ; —

उपमितिमात्रे धर्म्ममात्रज्ञानं कारणं,साधर्म्योप-मितौ साधर्म्यज्ञानं वैधर्म्योपमितौ वैधर्म्यज्ञानं तत्प्रमायां साधर्म्यं प्रमादिकं पूर्व्ववत्।

शाब्दं द्विविधं वैदिकं, लौकिकं च आद्यं स्वर्गदेवतादिविषयं, अन्त्यं भोज्यपेयाद्या-लम्बनं उभयत्रापि योग्यताज्ञानं संशयनिश्चयसाधारणं कारणं तथाकाङ्क्षानिश्चयः, आसत्तिनिश्चयः; प्रकरणादीनामेव तात्पर्य्यनिश्चयव्याप्यत्वेनानुगतानां निश्चयो हेतुरित्यन्ये विध्यानुपूर्व्वीज्ञान मपि; पदजन्यपदार्थोपस्थितिरपि; अतएव द्वारमित्यादौ पिधेहीति पदमेवाध्याह्रियते, प्रभाकरास्तु तत्राप्यर्थाध्याहारमेव मन्यते भट्टास्तु शाब्दीह्याकाङ्क्षा शब्देनैव शाम्यतीति पदोपस्थापिते एकपदार्थे अपरस्यापि पदजन्योपस्थितिरपेक्षा; यत्रपुनः सर्व्व एवार्था प्रमाणान्तरोपस्थापिता स्तदपेक्षा नास्त्येव यथा "पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धी" रित्याहुः। ननु महावाक्यस्य न प्रत्यक्षं सम्भवति, तस्य वर्णघटितमूर्त्तिकतया तेषाञ्च श्रोत्रेण निर्व्यापारेण प्रत्यक्षासम्भवात् श्रोत्रमनः संयोगएव व्यापारः,वर्णश्रोत्रशष्कुलीसंयोगोवेति चेत्तथा प्याशुतर विनाशिनां क्रमिकाणां मेलकासम्भवेन वर्णसमूहात्मनः पदस्याप्रत्यक्षतया-तद्‌घटितस्वैकार्थावच्छिन्नपदसमूहरूपस्य वाक्यस्य कथं प्रत्यक्षत्वमितिचेन्न क्रमिक तत्तद्वर्णविषयश्रोत्रप्रत्यक्षोत्पादित संस्कारेण स्मृत्या वा प्रत्यासत्या अन्त्यवर्ण सम्ब-

ह्रेन श्रोत्रेण तावद्वर्णात्मक पदप्रत्यक्षस्यैवमेव पद प्रत्यक्षजनितेन संस्कारेण तज्जन्य-अन्त्यान्तपद प्रत्यक्षकाले महावाक्य प्रत्यक्षोत्पाद-स्यापि सम्भवात्, वर्णसमूह आनुपूर्व्वी विशेषविशिष्ट एव पदं, आनुपूर्व्वी च पौर्व्वापर्य्यं, तथाहि घटेतिपदे घकालीन प्रागभाव प्रतियोगित्वं टस्य, टकालीन ध्वंसप्रतियोगित्वं घस्यानुपूर्व्वी, पदस्यान्वयाविरोधित्वमाकाङ्क्षा, अतएव घट कर्म्मत्व, मानयनं, कृतिरित्यादिपदकदम्बान्नान्वयबोधः; मणिकृतस्तु अभिधानपर्य्यवसान माकाङ्क्षा-यस्य येन विना न स्वार्थान्वयानु भावकत्वं तस्य तत्-पर्य्यवसान मित्यर्थमित्याहुः यदानन्तर्य्य मासत्तिः, तात्पर्य्यन्तु तत्प्रतीतिविषयोच्चरितत्वं पदार्थत्वविशिष्ट वृत्त्या पदप्रतिपाद्यत्वं; शाब्दबोध हेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिः, साच द्विविधा सङ्केतो लक्षणाच, आद्योऽपि द्विविधः सादिरनादिश्च, तत्र प्रथमोयदृच्छा परिभाषादिशब्दाभिलप्यः, अन्त्यस्तु शक्तिरित्याचक्षते व्यञ्जनातु लक्षणैव; अस्माच्छब्दादयमर्थो बोध्य इतीश्वरेच्छाशक्तिः, शक्यसम्बन्धो लक्षणा साच द्विधा निरूढा, सांप्रतिकीच; शक्तिवदनादि प्रसिद्धा निरूढा यथा वहुव्रीहिस्थपदस्यान्यपदार्थे, घटं करोत्यादौ घटादि पदस्यानुपादाने; तदितरा सांप्रतिकी, यथा गङ्गादिपदानां तीरादौ सा पुनर्द्विधा, जहत्स्वार्थाऽजहत्स्वार्थाभेदेन ; वेदान्तविदस्तु जहदजहत्स्वार्थामपि लक्षणां मन्यन्ते । गौ-

अथ यत्कैश्चित् गवाद्यूधोनिसृत निर्यासानुकारि द्रव्यसाध्य (वैक्सिनेशनाख्य) कर्म्म आर्य्यार्भकेषु "प्रागुपनयनात्कामचारः कामवादः कामभक्षः" इत्यादि वचनाभिप्रायमापाततोऽवधार्य्य न दुष्यतीति निरूप्यते तदसत्। तथाहि।

"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्ध-मर्हन्ति स्त्रियो रोगिण एव च" त्यंगिरसः, अर्वाग्द्वादशवर्षादशीतेरूर्द्धमेव वा अर्द्धमेव भवेत् पुंसां तुरीयं तत्र योषिता मिति,स्त्रीणामर्द्धम्प्रदातव्यं वृद्धानां रोगिणान्तथा पादो बालेषु दातव्यः सर्व्वपापेष्वयं विधिः, इति विष्णोः, "जनैकादशवर्षस्य पञ्चवर्षात्परस्य च। प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सुहृज्जनः" इति शङ्खस्य, च वाक्यै र्बालस्यापि चतुर्थभागार्द्धांशयोः प्रायश्चित्तस्य विधानम्."प्रागुपनयना" दित्यादि वाक्यमप्यल्प प्रायश्चित्तपरतयैव निर्दिष्टाङ्गिरः प्रभृतिवचनजातैस्त्वल्पयोगक्षेमपरतयैव नेयम् ॥

यद्यपि शङ्खे "अतो बालतरस्यास्य नापराधो न पातकं इति वचसोनपञ्चवर्षस्य पातकाद्यभावस्त्वोक्तस्तथापि तादृशस्य स्वयमशक्तस्य (वैक्सिनेशनाख्य) कर्म्मणः करणात्तमस्य पित्रादय एव कारयेयुरिति तेषां प्रयोजकानुमन्तृत्वयोरन्यतरत्वापत्तौ "प्रयोजितानुमन्ता कर्त्ता चेति स्वर्गनरकफलेषु कर्म्मसु भागिनः" इत्यापस्तम्बवाक्येन प्रायश्चित्त भागित्वं स्पष्टमेवेति कथमपि (वैक्सिनेशनाख्यं) कर्म्म बालेष्वपि न निर्दोषत्वमाप्नोति इति दिक् ॥

---

## COMMISSION OF SINS OR CEREMONIAL IMPURITIES BY CHILDREN THE AGED AND WOMEN.

That before the investiture of the holy thread a boy of twice-born caste can say, do, and eat what he likes, is true but that vaccination is allowable without prejudice to such boys is a faulty argument Because it is clearly mentioned in the *Mitakshara* that every one, whether a little child or an old man, is liable to sin, if he commits any prohibited action. Moreover, *Angira* says that he whose age is eighty years or who is below sixteen must expiate a crime by undergoing half penance and the same is the case with women and diseased persons. It is also said, that a boy before he completes his twelfth year and a man after his eightieth year, is liable to half sin, and a woman in such case to a quarter sin only.

*Vishnu* says that in all crimes half the punishment is to be awarded to women, old men and diseased persons, and only a fourth part to children. *Sankha* enjoins that if the criminal be under the age of eleven and above five years, then his elder brother, father, or any guardian, or friend should undergo the penance for him.

From the above, it is manifest that boys are generally liable for their actions, though in their case the punishment is not so severe. By the quotation "that boys can do whatever they like" in the above argument is not meant that they are altogether free from punishment for sins and are not liable to sin, but that they are liable to a small degree only.

Although from the following passage of Sankha 'that a boy under five years is not liable, to any punishment for sin,' it appears that such a boy may do everything prohibited, nevertheless, in such a case the abettor of the crime, whether he be a father or a brother is liable to punishment according to the following passage of *Apastomaba*. 'That an abettor is liable for his action.' Therefore, if a parent causes his child to commit any ceremonial impurity, the sin is on the parent, who must make expiation.

समस्यापूर्त्तिः

समस्या-"नजानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः" समस्येयं विगत कविसभाधिवेशने कृष्णोक्तेश भट्टाचार्य्यैरेभिः श्लोकैः पूरिता—यथा—

प्रचण्डा दोर्दण्डोद्यत विकटवीर्य्योच्छ्रितमदे अखण्डाभ्युत्क्रान्ताखिलजनपदोद्दीप्तमहसि। भ्रमत्युग्रारम्भे दिशि दिशि नृपाणां समुदये, न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः॥ १॥

वसन्त्यस्यां भूमौ कति परहितोन्मूलनपराः शठा दृष्टिर्येषां भवत इव क्षुद्रा परगुणे। तथां दोषां चापि श्रुतिरपरदोषश्रुतिविधौ नजानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः॥ २॥

कियन्तो वा सन्ति प्रबलमदवेगान्धितधियो महामूढा येषां निजपरविवेकोन च मनाक्। भ्रमन्त्यत्युद्दामं त्वमिव नियतं येच भुवने न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः॥ ३॥

गणा श्चेन्द्रियाणां विषयनलिनीकाननचराः दुरन्तुश्चानीपक्षमवभुवो मानवकुले। चरन्त्येते नित्यं त्वमिव मलिना पापरजसा न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः॥ ४॥

सदा लज्जां धत्ते तव गति रहो यस्य गमनात् यदीयोर्व्वीदूरे निवसति तुलायां तवकरः। कुरङ्गाक्षीसार्थे जयति जितकुम्भस्तनयुगे-न जानीमोऽत्यर्थं द्विरद वद कस्मात्तवमदः॥ ५॥

भारतरत्नोद्धारः

वयमतीव कृतज्ञहृदयेन सहृदय श्रीमत्तारिणी प्रसाद नियोगि महोदय प्रकाशितस्य भारतरत्नोद्धार समभिधस्य कस्यापि विज्ञापन पत्रस्य प्राप्तिं स्वीकुर्म्मः ।

अनेनोक्त श्रीमन्नियोगि महोदयस्य "कालाप कर्षात् नृपविप्लवाद्वा निसर्गतोवाऽ वनतिङ्गतस्य समुद्धृतौ भारतरत्नराशेः"—

—सम्यगनुष्ठीयमानः प्रयत्नोऽनुमोद्यते ।

प्रकृतिर्यथाऽगाधरत्नाकरपरिखापरिरचिता मिमां भारतभूमिं विविध खनिजवज्राद्युज्ज्वल रत्नजाते रलंकृतवती, तथैवा र्य्यवंशावतंसाः प्रजाः स्वोज्ज्वल प्रतिभावलेनासीम सारस्वत रत्नाकरेण घोराज्ञान तिमिरच्छन्नेऽप्यखिलभुवन तले वर्द्धयामासुर्यशः प्रभामस्याः । तथैव तत्तदुज्ज्वल रत्नराशि प्रदीप्तया प्रभया क्रमशः प्रससार जगतां दृष्टिः परितः स्थितेषु वस्तु-निचयेषु, परमस्मदधन्यतया कालवशादन्तर्हिता-नि तानि रत्नजातानि । निष्प्रभाचसंवृत्ता भूमिरियं साम्प्रत मखिल भुवन तलेषु । अतएव तादृश रत्नानां-पुनरुद्धारे प्रवृत्ताः श्रीमत्तारिणी प्रसादमहोद[illegible] न कस्य धन्यवाद-पात्रं ? तस्यैवं विधे साधुप्रयत्ने वर्त्तमानस्य सर्व्वै रेवार्य्यकुलाभैर्क्षोःसाहाय्यं विधेय मित्यस्माकं मतिः ।

तत्रभवन्तस्तु प्रथमं चरकसुश्रुतात्रेय धन्वन्तरि, वाभट्ट कमाद, हारितादि ग्रन्थान् सङ्कलय्य संस्कृत टीकया संयुज्य वङ्गभाषयाऽनुगद्यच प्रतिमासं खण्डशः प्रकाशितुमीप्सवः ।

कलिकातानगरे, इण्डियनमिरर, नामक संवादपत्र सम्पादकस्य समीपे पत्रिकाया प्रेषितायामेतद्गतं सर्व्वं विदित भविष्यति ।

इत्यलं——

प्राप्तग्रन्थादीनां

संक्षिप्तसमालोचनम् लक्ष्मीश्वरचम्पू

मैसूरान्तर्गत गङ्गामूल निवासि—रमाबाई कृतिः-

श्रीनिवास शास्त्रिणा प्रकाशि

ग्रन्थकर्त्री तत्रभवती श्रीमती रमाबाई नाऽपरिचिताऽस्माकं पाठकानां, साम्प्रतः पूर्व्वं, श्रीकृष्ण लीला, वर्णनप्रमुखेन तथेदानीमपि भारतेश्वरीस्तवादिना काव्येन विद्योदय मलङ्कृतवती । सा-ऽपि वशीकृतसरस्वती रमाबाई सरस्वती निपुणतरा ऽमानुषप्रगल्भ-रचनासु, ग्रन्थानायको दरभङ्गाधिपतिश्च "प्रखरतर-प्रेक्षावन्मण्डल मण्डन गुरुगुरुप्रेमरसपात्रीकृतः कृतस्तया मित्रीकृताखिलसतीर्थगणो, धर्म्मन्याय व्याकरणार्थ शास्त्रेषु कलास्वखिलासुचाधीतिः स्वदेश विदेश भाषा कुशलश्च" । काव्य मिदञ्च कलिकातापु रागमेन श्रीमिथिलापालिताङ्कय सभायां कृतदरया ऽतितुष्ट हृदयया ग्रन्थकर्त्र्या तत् पुरतो यथाप्रतिश्रुतं तद्राज्याभिषेक महोत्सवे विरचितं लक्ष्मीश्वरचम्पू-नामधेयम् । अतएवास्मद् भाग्योपचयात् समुदितो ऽत्रसर्व्वोगुणानां, गणः ।

"गद्य पद्य मयं मिश्रं चम्पू रित्यभिधीयते" इत्येतदुक्त चम्पूलक्षणस्यात्र विविध वन्धाडम्बर लम्बमान हृत्ति मद्यपद्यमये काव्ये यथावदवकाशोऽस्त्येवेत्यस्माकं निश्चयः परं क्षुद्रकाय मप्येतत् काव्यं नानाविध गोमूत्रिकामुरज पद्मचक्रवन्ध्याद्युपचितावयमवसंश्रय माह्वयते महाकवि रचितानि महाकाव्यानि ।

काव्यस्यास्य विषय प्रसर-दुरवगाहत्वजन-दुर्बोधार्थं भा-
सित्वादक्षमा वयं गुण-दोषविचारे रसानुसन्धानन्तु दूरत एवास्मि-
ष्विय: । भवतु काव्यमिदं पठित्वा—

"सदा मध्ये यासामियममृत निस्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिता: केन महतां महाकाव्य व्यो-
म्निस्फुरित मधुरा यान्तु रुचय: ॥ एतस्या: कवितायाः—

यासां कविरवीनां मध्ये सुकुमारविचित्र मध्यमात्मका त्रि-
मार्गा भारतीचमत्कारं वहति,ता: गभीर काव्यपरिचिता: कथ-
मितर काव्यवत् प्रसन्ना भवन्तु, यासामादित्य प्रभाणां मध्ये त्रिपथ-
गा वहति ता मेघ परिचिता: कथं प्रसन्ना भवन्तीति प्राचीनार्थद्वया-
दति रिक्तो ऽपर: कोऽप्यर्थ: प्रतीयते ऽस्माकं यथा-बहुमार्गा-बहुभा-
षाप्रसर धौरेणशालिनी, अमृत-निस्यन्द सरसा-,सुधामयवचन-प्रयोग
निपुणा सरस्वती-रमाबाई सरस्वती,यासां कवितानां मध्ये परिम-
ल मधिक-तरनैपुण्यरूपं वहति प्रकाशयति ता घनपरिचिता गाढ
बन्धादियुक्ता: कविता: कथं प्रसादं (श्रुतिमात्रतो ऽर्थबोधकरूपं
गुणं ) यान्तु भजन्तु ॥

वयमुपसंहार समये तस्या भारतललनाकुल ललामभूताया-
ग्रन्थ कर्त्र्या: सर्वाङ्गीनमङ्गलं प्रार्थयामहे । यथा सा लोकोत्तरविद्या-
वत्तादि-गुणवती महती सरस्वती न हीयता मिति । अलंपल्लवितेन ।

श्री Registered No. 12.

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

लाहोर स्थित-श्रीहीरालाल चट्टोपाध्यायेन
प्रकाशितः।

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं ९ ] जनवरी इं १८८० [ १ संख्या

## सूची



लाहोर

रिखटैनाम की यन्त्रे दिवाकरनारायणनामधेयेन मुद्रितः॥

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाश" नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योदय-सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव कालेन पृथङ् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मद्दन्तिके पत्रिकया स्वाभि-लाषः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे ॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।)

---

मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।৶०

„ पश्चाद्देयं ... ... ... ३।৶०

प्रत्येकखण्डं।० परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः৴० परिमितमूल्येन मुद्रिता भविष्यति

नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थः) सुगम-हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्टार्'स अफिस, पञ्जाब यूनिवर्सिटी कलेजि) प्राप्तव्यः। कवितावली— (अत्युत्तमकविताग्रन्थः) मूल्यं।)

अस्मत्समीपे प्राप्तव्या।

॥ विद्योदयः ॥

॥ मीमांसा परिभाषा ॥

श्रीं नमो गणेशाय ॥

॥ गणेशजी को नमस्कार करता हूं ॥

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तर महं भजे ॥
बालानां शास्त्रसिद्धार्थं लेशबोधाय धीमता ।
मीमांसा परिभाषेयं क्रियते कृष्णयज्वना ॥

निर्विघ्न से ग्रन्थ परिसमाप्ति के लिये मैं, सूर्यनारायण, त्रिपुर सुन्दरी देवी और सर्वतत्त्व जानने हारे गुरुओं की वन्दना करता हूं। मैं, कृष्णयज्वन नामी पण्डित, बालकों को शास्त्रके द्वारा स्थिरी कृत अर्थों को संक्षेप से बोध कराने के लिये इस मीमांसा परिभाषा पुस्तक को बनाता हूं।

इह खलु महर्षिणा जैमिनिना द्वादश लक्षण्यां पूर्व मीमांसायां धर्म्माधर्म्मावेवानुष्ठानोपयोगितया विचारितौ तत्र वेद बोधितेष्टसाधनताको धर्म्मः, यथा यागादिः; वेद बोधिताऽनिष्ट-साधनताकोऽधर्म्मः, यथा कलञ्जभक्षणादिः; तयोश्च वेदः स्मृति राचा रश्च प्रमाणम्। तत्र वेदः स्वतन्त्र प्रमाणं, इतरोतु वेद मूलक-तया प्रमाणम्।

मीमांसा शास्त्र का प्रवर्त्तक महर्षि जैमिनिने बारह लक्षण युक्त पूर्वमीमांसा ग्रन्थमें धर्म्म और अधर्म्म के स्वरूप का निर्णय किया है। उनमे से, जिस्के अनुष्ठान से वैदिक मार्ग के अविरुद्ध सुख की प्राप्ति होती है उसका नाम धर्म्म है, जैसा यज्ञादि; और वेदनिषिद्ध दुःखदेने वाले कर्म्मों को अधर्म्म कहते हैं। जैसे विषसे हत हुए पशुओं को खाना। इत्यादि। वेद, स्मृति और आचार ये तिन धर्म्म और अधर्म्ममें प्रमाण हैं अर्थात् इन तिनो में जिन् कार्य्यों का विधान है वे धर्म्म कार्य्य हैं। और जिनका निषेध है वे अधर्म्म हैं। वेद आपही प्रमाण है, इस्की उक्ति में किसी-प्रकारका भ्रम नहीं देखा जाता है, और वेदके अनुगामि होने से स्मृति और आचार ये दो भी प्रमाण हैं इन् पर भी कुछ संशय नहीं करना चाहिये।

तत्र वेदो द्विविधः, मन्त्र रूपो ब्राह्मण रूपश्चेति; तत्र प्रयोग कालीनार्थ स्मरण हेतुतया मन्त्राणां उपयोग इति वक्ष्यते प्रयोगो-ऽनुष्ठानं तत्कालीनेत्यर्थः। विधायकं वाक्यं ब्राह्मणं ब्राह्मण शेष-स्यार्थ वादस्तस्य विधेय प्राशस्त्य प्रतीति जनन द्वारा विधि वाक्यैक वाक्यतया प्रामाण्य मिति वक्ष्यते।

यह वेद दो अंशमें विभक्त है, पहिला मन्त्र, दूसरा ब्राह्मण; कर्म्मानुष्ठान के समय अभीप्सित अर्थ मन्त्रसे स्मरण किया

जाता है अर्थात् कर्म्मों के उपकारी जो वस्तु हैं और जिस्को उद्देश कर कर्म्म किया जाता है मन्त्रमें उन सभोंका स्वरूप ठीक ठीक वर्णित हुआ है जैसा कि पढते ही उनका स्मरण हो। जिन वाक्यों से किसी विषय का विधान होता है उन को ब्राह्मण कहते हैं । अर्थ वाद भी ब्राह्मण का अंग विशेष है इस्का स्वरूप आगे भलि भांति कहा जायगा ।

तच्चानेक विधम्—कर्म्मोत्पत्तिवाक्यं, गुणवाक्यं, फल वाक्यं, फलायगुण वक्यं, सगुण कर्म्मोत्पत्ति वाक्य मित्यादि भेदात् । तत्र येन वाक्येनेदं कर्म्म कर्त्तव्य मिति बोध्यते तत् कर्म्मोत्पत्ति वाक्यम्, यथा "अग्नि होत्रं जुहोति" इति अग्नि होत्र होमः कर्त्तव्यतया विधीयते इति कर्म्मोत्पत्ति वाक्यम् । विहिते कर्म्मणि तदङ्गतया द्रव्य देवतादि-विधायकं वाक्यम् गुण-वाक्यम्—यथा "दध्ना जुहुयादिति" गुणवाक्यम् इदं, कर्म्माङ्गतया विहितत्व मेव दध्यादेर्गुणत्वं, उत्पन्नस्य कर्म्मणः फलाकाङ्क्षायां फल-सम्बन्ध बोधको विधिः फल विधिः यथा — "अग्नि होत्रं जुहुयात् स्वर्ग कामः" इति अन्वयः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्र-नामकं होमं भावयेत् कुर्य्यादित्यग्नि होत्र वाक्योत्पन्नस्य कर्म्मणः फलसम्बन्धो बोध्यत इति फल वाक्यमिदम् कर्म्मा-श्रित्य फलायगुण विधौ फलाय गुणवाक्यम् । यथा "दध्नेन्द्रिय

कामस्य जुहुयादिति" अत्राग्निहोत्र वाक्योत्पन्नं होम माश्रित्येन्द्रि-य फलाय दधिरूपो गुणो विधीयते, होमाश्रितेन दध्ना इन्द्रिय-रूपं फलं भावयेदिति होमाश्रितेन होम कारकी भूतेनेत्यर्थः अय-मेव गुण फल विधिः, गुण कामविधि रपि चोच्यते। द्रव्य देवतादि गुण विशिष्ट कर्म्म विधायकं वाक्यं = सगुण--कर्म्मोत्पत्ति-वाक्यम् । यथा"सोमेन यजेतेति" अत्र सोमल-ताविशिष्टो यागो विधीयते विशिष्ट विधाव-पि-विशेषणस्य अर्थाद्विधिः ।

वह ब्राह्मण ; कर्म्मोत्पत्तिवाक्य ; गुणवाक्य ; फलवाक्य ; फलायगुणवाक्य ; सगुण कर्म्मोत्पत्तिवाक्य; इत्यादि भेदसे बहुप्रकार का है। उनमेंसे जिस वाक्यसे यह कर्म्म अवश्य करना चाहिए, ऐसा बोध होताहै उसकानाम कर्म्मोत्पत्ति वाक्यहै, जैसा 'अग्निहोत्रं जुहोति,। इसवाक्यसे अग्निहोत्रनामक होम करना चाहिए ऐसी प्रतीति-होतीहै इसलिये इसवाक्यको 'कर्म्मोत्पत्ति-वाक्य' कहतेहैं। जिस वाक्यकेद्वारा किसी-वि हत-कर्म्मके अंगरू-पसे किसीद्रव्य वा देवतादिका विधान किया जाय तो-उसवा-क्यको' गुण-वाक्य' कहतेहै अर्थात् जिसवाक्यसे पहिले विहित हुए किसी-कर्म्मके गुणोंका विधान किया जाताहै उसका नाम गुण वाक्यहै जैसा "दध्ना जुहुयात्" 'दहीके द्वारा होम-करना चाहिए' यहां देखो कि 'अग्निहोत्रं जुहुयात्' इत्यादि वाक्य से होम-

स्वरूप पहिलेही विदित हुआथा, दहीसे होमकरना चाहिए, इस वाक्य से दही होमके साधन रूपसे विहित होताहै अत्र देखो होम प्रधान-है और दही 'साधन' अर्थात् उस्का-अंग है। इस वाक्यसे विशेषकर्के उस अंगकाही विधान होताहै। जो वाक्य किसी विहित कर्म्मके साथ उस्का फल भी कहता है उस्का नाम 'फल-वाक्य'-है, जैसा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इस्का तात्पर्य्य यह है कि जो मनुष्य स्वर्ग प्राप्ति चाहते हैं उनको अग्नि होत्र नामक होम करना चाहिए। इस वाक्य में अग्निहोत्र रूप कर्म्म के साथ उसी फलका भी सम्बन्ध कहा गया है, इसलिये यह फल वाक्य है। जिस वाक्य से किसी विदित कर्म्मको आश्रय कर किसी विशेष फलके लिये गुण का विधान होता है उसका नाम 'फलाय गुण वाक्य' है जैसा "दध्ना इन्द्रिय कामस्य जुहुयात्" इन्द्रिय कामी मनुष्य दही से होम करें' इस वाक्य में पूर्व प्रसिद्ध होम रूप फल के लिये दही रूप गुण का विधान होता है अर्थात् जब दही से होम करेगा तब ही इन्द्रिय लाभ होगा यही इस्का तात्पर्य्य है। इसको कोई २ "गुण फल लाभ विधि" कोइ २ 'गुण काम विधि' यह भी कहते हैं। जिस वाक्य से द्रव्य, देवता, और गुणादि युक्त कर्म्मका विधान होता है उसका नाम "सगुण कर्म्मो-त्पत्ति वाक्य" है। जैसा 'सोमेन यजेत' सोम लता से याग

करना चाहिए इस वाक्य से सोमलता विशिष्ट याग का विधान हुआ, विशिष्ट अर्थात् किसी विशेषण युक्त वस्तु के विधान होने से उस विशेषण का भी विधान होता है।

क्वचित् कर्म्मोत्पत्ति वाक्यमपि फलसम्बन्ध बोधकं भवति, यथा "उद्भिदा यजेत पशुकाम" इति अत्रोद्भिन्नामको यागो वाक्यान्तरा विहित एव पशुकामस्य पशुफलाय विधीयत इत्येकमेवेदं वाक्यं फलसाधन याग कर्म्म विधायकं।

किसी स्थल में कर्म्मोत्पत्ति वाक्य से ही फलसम्बन्ध का बोध होता है, जैसा "उद्भिदा यजेत पशुकामः" 'जो पशु चाहते हैं उसको उद्भिद् अर्थात् लतादि से यज्ञ करना उचित है' इस वाक्य में पशुरूप फल लाभ के लिये उद्भिद यज्ञका विधान होता है, इस लिये यह वाक्य कर्म्मोत्पत्ति वाचक है और फल सम्बन्ध बोधक भी है; इस वाक्य से पशुरूप फलप्राप्ति के उपाय रूप से उद्भिद यज्ञ का विधान होता है।

प्रधानविधिरेवाङ्गविधिभिरेक-वाक्यता मापन्नः सन् सर्व्वाङ्ग-विशिष्ट प्रधान प्रयोग विधायकत्वात् प्रयोगविधि रित्युच्यते। यथा "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यत्राग्निहोत्र होमेन स्वर्गं भावयेदित्यर्थः प्रतीयते, भावयेत् कुर्य्यादिति यावत्। अत्र कथ मनेन होमेन स्वर्गं कुर्य्यादिति कथम्भावाकाङ्क्षा; यथा कुठारेण

काष्ठच्छेदं कुर्य्यादित्यत्र कथमनेन द्वैधीभावं कुर्य्यादिति तत्रोद्यमन निपतनादि सहायेनेति गम्यते तद्वदत्राप्यग्निं प्रणयत्यग्निषु समिधः आदधातीत्याद्यङ्ग विहित प्रणयन समिदाधानायतन शोधनादिकाङ्गकलापजनितोप कारसहिते नाग्नि होमेन स्वर्गं कुर्य्यादिति प्रकरण कल्पितेन महावाक्येन स्वर्गाय सांगाग्निहोत्र प्रयोगो विधीयते, इत्थं तादृशः प्रयोगविधिः अङ्गजात मितेत्थं भाव इति कर्त्तव्यताचेति चोच्यते अत्राग्नि होत्रहोमः प्रधानं प्रणयनादिकं सर्वं अङ्गं ।

प्रधानविधि, अङ्ग अर्थात सहायक विधियों से मिलित होकर एक महावाक्य वनता है वह महावाक्य सर्व्वाङ्ग विशिष्ट प्रधान क्रिया का विधान करता है इस लिये उसे प्रयोग विधि कहते हैं। जैसा "अग्निहोत्रं जुहुयात् स्वर्गकामः" स्वर्ग कामी मनुष्य को अग्निहोत्र यज्ञ करना अवश्य है इसका तात्पर्य्य यह है कि अग्निहोत्र यज्ञ से स्वर्ग साधन करे। इस में यह आशङ्का होती है कि होमसे स्वर्ग-साधन कैसे होसक्ता है? इस का समाधान यह है कि जैसा "कुल्हाड़से लकडी फाडो" ऐसे कहने से कुल्हाड़ का उठाना और लकड़ी पर उसे गिराना इत्यादि सहायक क्रियाओंका भी बोधहोता है; ऐसा "अग्निहोत्र यज्ञ से स्वर्गसाधन करे" इस वाक्यसे अग्निस्थापन, अग्निमें समित् दान, स्थलशोधन

इत्यादि सहायक क्रियाओंका भी इसमें अन्तर्भाव होता है अर्थात् "उन् सहायक क्रियाओं से युक्त अग्निहोत्र हवन से स्वर्गसाधन करें" ऐसा तात्पर्य्यार्थ निकालता है। ऐसे २ वाक्यों को 'प्रयोग विधि कहते' हैं और उसकी सहायक क्रियाओंको 'इत्थभाव' वा 'इतिकर्त्तव्यता' कहते हैं। यहां अग्निहोत्र हवन प्रधान है, और अग्निस्थापनादि सहायक कार्य्यों को अङ्ग वा अप्रधान कहते हैं।

नन्विद मनुपन्नं। आशुतर विनाशिनां कर्म्मणां कालान्तर भावि स्वर्गादि फलसाधन त्वानुपपत्ते; रितिचेन्नैवं—विहित निषिद्ध कर्म्मणां तत्तद्वाक्यैस्तत्तत्फल साधनत्वेऽवगते आशुतर विनाशिनां कर्म्मणां कालान्तर भावि फलसाधनत्वस्योपपत्त्यर्थ-मन्तरा पुण्यपापरूपमपूर्वं कल्प्यते ततश्च यागादे रपूर्वद्वारा स्वर्ग साधनत्वं, न साक्षात्; तदेव फलापूर्वकारणत्वञ्च प्राच्योदी-च्यांग विशिष्टस्य प्रधानस्य भवति, न प्रधानमात्रस्य; प्रधानमात्रा-देव 'फला पूर्व जननें' फलस्याऽपि तत एव सिद्धे रङ्गाना मानर्थक्यापत्तेः

अब आशङ्का होती है कि, तुमने जो कहा "अग्निहोत्र होम से स्वर्ग साधन करें" यह कथन तो युक्ति युक्त नहीं है क्यों कि जो कारण होता है वह सर्वदा कार्य्य का अव्यवहित पूर्ववर्ती (immediate antecedent) होता है, इस नियम से अग्निहोत्र हवन तो यज्ञका कारण नहीं होसक्ता क्यों कि कर्म्म समुदय,

॥ लघुपदार्थ रत्नमाला ॥

ओं श्री गणेशाय नमः । अथ किं पदार्थत्वं ? पदजन्य ज्ञान विषयत्वं तत् ; किं तद्विषयत्वं? ज्ञानस्वरूप मेव तत्, इच्छा प्रयत्नयोस्तु समानाधिकरणं ज्ञान मेव विषयत्व मित्याचार्याः ; ज्ञानेच्छा प्रयत्नसंस्काराणां स्वरूपं तदिति नवीनाः, विषयता च विषयाकार-प्रतीति साक्षिकः स्वरूपाख्यविशेषः, पदार्थान्तर मित्येकदेशिनः स्वजन्य प्रतिपत्ति निरूपकत्वं प्रमाण विषयत्व मिति निष्कर्षः ।

अथ के तदाश्रयाः ? प्रमाण, प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्ता, वयव, तर्क, निर्णय, वाद, जल्प, वितण्डा, हेत्वाभास, छल, जाति, निग्रह स्थानानि । इति षोडश ।

तत्र प्रमायाः करणं प्रमाणं ; तद्वति तत् प्रकारको भ्रमभिन्नो वाऽनुभवः प्रमा ; तदभाववति तत् प्रकारकं ज्ञानं भ्रमः । अनुभवत्वं तु जातिः, स्मृत्यन्यज्ञानत्वं वा । ननु तद्वतोति सप्तम्यर्थो विशेष्यत्वं किं तत् ? किं च प्रकारत्वं ?

---

ननु विषयत्वस्य ज्ञान स्वरूपत्वे किं प्रमाण मित्यत आह इच्छेति ।

चतूर्णा मेव विषयत्वं तदाह ज्ञानेति । ज्ञानीयविषयता ज्ञान स्वरूपा, इच्छीय विषयता इच्छा स्वरूपा, प्रयत्नीय विषयता प्रयत्न-स्वरूपा, संस्कारीय विषयता संस्कार स्वरूपा । इति निष्कर्षः ।

प्रमाज्ञानं विना, प्रमाकरणस्य ज्ञानं न सम्भवति, अतः प्रमां निरूपयति । प्रमात्वं च तद्वति तत् प्रकारकत्वं भ्रमभिन्नत्वं वा, यथा घटवति भूतले घटप्रकारकत्वात् घटवद्भूतल मिदं ज्ञानं प्रमारूपं ; शुक्तौ रजत मिदं ज्ञानं तु न प्रमारूपं, रजता भाववति रजत प्रकारकत्वात् ।

भासमान वैशिष्ट्यानुयोगित्वं विशेष्यत्वम् । भासमानवैशिष्ट्य प्रतियोगित्वं प्रकारत्वम् । यद्वा अयं घट इति ज्ञाने विशेषणस्य घटत्वादि विशेषणत्वाऽपरनामा विषयताविशेषः । भट्टास्तु ज्ञातो घट इति प्रतीतेः ज्ञान जन्य विषय निष्ठः प्राकट्या परनामा पदार्थो ज्ञातता सैव विषयता ज्ञान विषय सम्बन्ध स्वरूपा वैशिष्ट्यं सम्बन्धः उभावपि स्वरूप सम्बन्ध विशेष इति तत्त्वम् ।

अथ किं करणत्वं व्यापारवत्त्वमिति बहवः, केषांचित्तु करण मुपाधि सामान्यं कर्मत्वादिवत् ; द्विविधं हि सामान्यं जाति, रूपाधिश्च ; समवेतं जाति रसमवेत उपाधिः । तदेव द्वितीयादीनां शक्य मिति । व्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्य जनकत्वं । तच्चानन्यथासिद्ध नियतपूर्ववर्त्तित्वं ; घट जनकताया अवच्छेदकी

---

तथा च तद्वन्निष्ठ विशेष्यता निरूपित प्रकारता शालि ज्ञानत्वं प्रमात्वम् । यथा घटवत्भूतल मित्यादौ घटप्रकारता निरूपित भूतल निष्ठ विशेष्यताऽनुयोगिता रूपा प्रमा ।

नित्यत्वे सत्यनेक समवेतत्वं जातिरूपत्वं, यथा सत्ता द्रव्यत्वं, पृथिवीत्व घटत्वादिः, तद्भिन्न मुपाधि रूपं यथाऽऽकाशत्व, कालत्व, सामान्यत्व, विशेषत्व, समवायत्वाऽभावत्वादि ।

दण्डत्वादावनवच्छेदके च दण्डरूपादावतिव्याप्ति वारणा यानन्य थासिद्धेति रासभादिष्वतिव्याप्ति वारणाय नियतेति जनकत्वं च शक्त्याख्यं पादार्थांतर मिति मीमांसकादयः, भेदे सति व्यापकत्व मेव कारणत्व मिति प्रभाकरः, स्वरूप सम्बन्ध विशेष इति केचित्।

तदाश्रयश्च त्रिविधः, यत् समवेतं कार्य्य मुत्पद्यते, तत्समवायि कारणं, यथा कपालं घटस्य, समवायि कारणप्रत्यासन्नं कारण मसमवायि, यथा घटस्य कपलाद्वय संयोग स्तद्रूपस्य च कपालरूपं, प्रत्यासत्तिर्द्वयी कार्य्यैकार्थ समवायः कारणैकार्थ-समवायश्च । सा च यथासंख्य मुदा हरण द्वये, समवाय्यसमवायिभिन्नकारणं निमित्तं यथा घटादेर्दण्ड, घटप्रागभावादि ; ननु कः समवायः ? अयुत सिद्धयोः सम्बन्धः, कौ पुनरयुतसिद्धौ अवयवावयविनौ, गुण गुणिनौ, क्रिया क्रियावन्तौ, जातिव्यक्ती, विशेष नित्यद्रव्ये च । सर्वं च भावकार्य्यं कारणत्रयजन्यं । ननु कार्य्य मुत्पद्यत इत्युक्तं तत्र का उत्पत्तिः ? आद्यक्षणसम्बन्ध इतिचेत् आद्यः क्षणः कः ? स्वक्षण ध्वंसासमानधिकरण स्वक्षणः सः । स्वक्षणावृत्ति प्रागभावप्रतियोगि-

---

तदेवेति उपाधिरूप मित्यर्थः, तथा च ग्रामं गच्छतीत्यत्र ग्राम पदोत्तर द्वितीयायाः कर्म्मत्व वाचकत्वेन तत्र कर्म्मत्व धात्वार्था वच्छेदक फलशालित्व रूपमुपाधि रित्यर्थः ।

स्वचरीया स्ववृत्ति पदार्थं प्रागभावानाधारत्वे सति प्रागभावाधारः समयः क्षणः ।

प्रमा चतुर्विधा प्रत्यक्षानुमित्युपमिति शाब्दी भेदात् । प्रत्यक्ष मिन्द्रियादि । अनुमानं लिङ्गपरामर्श इति । उपमानं सादृश्यानुभवः, सादृश्यज्ञानं वा । शब्दः पदज्ञानं । व्यापारस्तु प्रत्यक्षस्य संयोगादि, अनुमानस्य परामर्शः, उपमानस्य स्मृतिरिति । ननु किमिदं प्रत्यक्षत्वं ? यदाश्रयकारणतया चक्षुरादेर्यदाश्रय विषयतया च घटादेरपि प्रत्यक्षव्यवहारः । यथा इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमित्यादि इन्द्रियत्वं च स्मृत्यजनक ज्ञानहेतु मनः संयोगाश्रयत्वं । व्याप्तिश्चानौपाधिकः सम्बन्धः उपाधिश्च जातिभिन्नोऽनिरूक्त-वृत्ति धर्मः । स च पाकानुगुण ज्ञानादि पुरस्कारेण वर्तते इत्यौपाधिकमुच्यते, सिषाधयिषा विरह सहकारि बाधकमानाभावः प्रतिबन्धकः साध्यनिश्चयाभावो वा तदाश्रयत्वं पक्षधर्मता ; सादृश्यन्तु तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं, सङ्केतवत्त्वं किम त्यन्ताः पदमित्यत्र चरण-सूत्रानुसारेण तानि च दण्ड घट सण्ड-पादीनि ।

॥ ओं स्वस्ति श्री गणपतये नमः ॥

सुधाध्यायस्यान्यङ्कृतमनितयावञ्चितजना

प्रियम्पश्यत्यन्यं स्मितलसदपाङ्गाञ्चिसुभगा ।

सुधाधारा सारप्रविजयि पदन्यासचतुरा

प्रति श्रूतेऽन्यं या वहुरति रसौ कस्य दयिता ॥ १ ॥

दिवा रात्रौ वापि त्वयि दयितमग्नं मम मनो

विना त्वांग्लायेय व्ययित मिव वीक्षे जगदिदम् ।

मदक्षिद्वन्द्वात्त्वं क्षणमपि न दूरं व्रज सखे

वदत्येवेत्थं या प्रतिसुहृदसौकस्य दयिता ॥ २ ॥

विधातुं स्वङ्कार्यं महदपि विना या समभित-

स्त्रिलोकीचातुर्यप्रवरललिताभूमिरिव या ।

अथाऽस्मादन्यस्मिन्नतिलघुनिकार्येऽपि शिशुभि-

स्सुसाध्येऽत्युत्सैर्या हतमतिरसौ कस्य दयिता ॥ ३ ॥

प्रसन्ना याऽत्यर्थं स्तुतिकटुसहाकष्टजनित-

स्तनुर्भिन्नैस्स्वङ्गैर्व्यथितमपहृत्येव सुकृतम् ।

निहन्ति स्वच्छन्दं स्फुटनिभृतवैरासिलतिका-

पतिव्राताग्लीन्या विकसदनसौ कस्य दयिता ॥ ४ ॥

स्वगोत्रायामत्यन्तक्षयमतितुदुत्पाद्यतिगुणै-

र्विधत्ते न्यायक्षायुपरतिपथस्थानपि नरान् ।

ओं Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १० ] डिसम्बर १८८१ [ १२ सङ्ख्या

सूची

| | पृष्ठे |
|---|---|
| रसकचन्द्रिका ... | ४१— ४८ „ |
| भाषाकालमाधवः ... | ११७—१२० „ |
| श्रीरामस्तोत्रम् ... | १२१—१२२ „ |

लाहोरे

ऐल्बर्ट नामके यन्त्रे लालादित्यनागराय नामधेयेन मुद्रितः

भवन्तीति। आर्षेण ऋत्व्युक्तेन परिग्रहेण जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणा भवन्तीत्यर्थः व्यक्तमुक्तं द्व्यामुष्यायणका ये स्युर्दत्त क्रीतादयः सुताः। गोत्रद्वये ऽप्यनुद्वाहः शुङ्ग शैशिरयोर्यथेति । नच दत्तकस्य द्व्यामुष्यायणत्वं न घटते, जनकस्यापि तत्र स्वत्वानपायेन "माता पिता वा दद्याता"मिति दानविध्यनुपपत्ते रिति वाच्यम्। "सामान्यं सर्व्व भूतेभ्यो मयोत्सृष्टमिदं जलम्। रमन्तु सर्व्वभूतानि स्नानपानावगाहने रित्यादौ स्वमात्र स्वत्वनाशक सर्व्वभूतोद्देश्य कत्यागादेव नद्यादिवत् सधारणीकृते जले स्वामिनो ऽपि उद्दिश्य तया स्वत्ववत् अत्रापि तादृशाभि सन्धि पूर्व्वकादेव दानात् तादृश दत्तकस्य साधारण्य सिद्धि रित्यास्तां विस्तरः ।

और पैठीनसिने कहाहै कि दत्तक,क्रीत, कृत्रिम और पुत्रिकापुत्र वे यदि आर्षविधिसे अर्थात् उत्पादक और लेने वाला इनदोनोंके उसपर पुत्रत्व स्वीकार रहने पर गृहीत होवें, तो वे द्व्यामुष्यायण कहे जातेहैं। यह भी स्पष्टरूपसे कहा गया कि, जो दत्तक औरक्रीतादि पुत्र द्व्यामुष्यायण नामसे प्रसिद्ध होते हैं अर्थात् जिनपर द्व्यामुष्यायणत्व धर्मउत्पन्न होता है, उत्पादक और लेने-वाला इन दोनोंके गोत्रमेंसे उनका विवाहनहीं होगा, जैसा शुङ्ग और शैशिरा का विवाह नहीं हुआ; यहां किसीने आशङ्का की कि, दत्तकमें द्व्यामुष्यायणत्व नहीं घटता है। क्योंकि यदि उसपर अपने उत्पादक पिताका स्वत्व रहे तो "माता पिता जिसको देते

हैं "इस दानविधिकी उपपत्ति नहीं होती क्योंकि अपने स्वत्व (right)कोत्यागकर जो देना उसीकोहि'दान'कहते हैं। कहते हैं कि ऐसी आशङ्का न करनी,इस्का उत्तर यहहैकि "जो लोग जलाशय (तालाव) उत्सर्ग करतेहैं वह ऐसा अङ्गीकार करतेहैं" कि मैंने जो जलत्याग किया, इसमें सारे प्राणी का समान अधिकार है अतएव सारे प्राणी स्नानादि क्रिया का अनुष्ठान कर इसे भोग, करें अवदे-खो जल सारे प्राणीको उद्देश कर दिया जाता है इसलिये नदी आदिकी न्याई उसमें समुदाय प्राणियोंका समान अधिकार होता है; समुदाय प्राणियोंमें लेने वाला भी है इसहेतु उसमें उस्का भी अधिकार होताहै ऐसा यदि किसी दत्तक में उत्पादक पिता और लेनेवाला इन दोनों का यह अभिसन्धिरहे कि इस पुत्रमें हम दोनों का पुत्त्रत्व रहेगा तो तादृश दत्तकमें भी द्व्यामुष्यायणत्व सिद्ध होताहै ।

अथदत्तक कर्त्तृक श्राद्धनिर्णयः ।

अब दत्तक किसरीतीसे श्राद्ध करेगा

उस्कानिर्णय किया जाता है ।

"तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्व्वंरुत्पन्नत्वेऽपि सत्योरसेनाधिकारः ।" "औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं नविद्यते" । इतिदेवलेन ज्यैष्ठत्व प्रतिषेधात् । "पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः पर इति याज्ञवल्क्य वचनाच्च । अन्यत्र सर्व्वत्रौरसवत्"

यदि दत्तक लेने के पीछे औरस पुत्र उत्पन्न होवे, तो वह दत्तक पुत्र,लेनेवाले के आद्यसे लेकर सपिण्डी करण पर्य्यन्त षोडश श्राद्ध में अधिकारी नहीं होता, और स पुत्र ही उन् श्राद्धोंमें अधिकारी होता है क्योंकि देवलने कहा है कि, "औरस पुत्र जव उत्पन्न होता है तव पूर्व्व गृहीत दत्तकादिमें ज्येष्ठत्वनहीं रहता," और जव ज्येष्ठत्व नहीं रहता तव उन आद्यसे लेकर सपिण्डी करण पर्य्यन्त षोडश श्राद्धोंमें भी उस का अधिकारित्व नहीं रहता; याज्ञवल्क्यने भी कहा कि सवसे पहिले औरस पुत्रकाहि श्राद्धमें अधिकार होता है,और उस्के अभाव पर उस्के पीछे जिस्का नाम लियागया * उस्का अधिकार होता है। उन सोलह श्राद्धसे अतिरिक्त श्राद्धमें दत्तक और औरस का समान अधिकार होताहै।

क्षयाहे तु विशेषो यथा जातूकर्णिः "औरस क्षेत्रजौ पुत्रौ विधिना पार्व्वणेनतु। प्रत्यब्दमितरे कुर्य्यु रेकोद्दिष्टं सुता दश। इतरे दश दत्तकादयः; तथा पराशरः "पितुर्गतस्य देवत्व मौरसस्य त्रिपौरुषम् सर्व्वत्रानेकगोत्राणामेकोद्दिष्टं क्षये ऽहनीति। अनेक गोत्राणां, द्विगोत्राणां। औरस क्षेत्रजयोरपि साग्न्योरेव पार्व्वणाधिकारः। "पार्व्वणेन विधानेन देयमग्निमतासदे" ति जावाल मत्स्य पुराणैक -वाक्यत्वात्। औरस क्षेत्रजव्यतिरिक्तानान्तु साग्निनिरग्निसाधारणानामेकोद्दिष्टमितिसिद्धम्।

क्षयाह अर्थात् मृततिथिमें विहित श्राद्धके लिये जातुकर्णिने

ऐसी व्यवस्था की है कि, पिताकी मृततिथिमें औरस और क्षेत्रज पुत्रको पार्व्वणश्राद्ध अवश्य करनाहै; और बाकी दूष दत्तकादि पुत्रों का केवल एकोद्दिष्ट श्राद्धमें अधिकार है । पराशरने कहा कि पिताके देवत्व लाभ होने पर उसकी मृततिथिमें केवल औरस पुत्र पार्व्वण श्राद्ध करें, और अपर 'अनेकगोत्र' अर्थात् स्वभावसे दो गोत्रवाले दत्तकादि केवल एकोद्दिष्ट श्राद्ध करें । ऊपर जो औरस और क्षेत्रजके लिये पिता की मृततिथिमें पार्व्वणश्राद्धका विधान किया गया, वहविधान केवल 'साग्निक' औरस और दत्तक के लिये है क्योंकि जावाल और मत्स्य पुराणमें भी ऐसा लिखा है कि साग्निक मनुष्य सदैव पिता की मृततिथमें पार्व्वणश्राद्ध करें एकोद्दिष्ट क्रियामें साग्निक और निरग्निककी कुछ व्यवस्था नहीं, केवल साग्निक औरस और क्षेत्रजका पिताकी मृततिथिमें पार्व्वणा धिकार कहा गया इससे निरग्निक औरसकाभी केवल एकोद्दिष्टमें अधिकार समझना ।

द्व्यामुष्यायणस्येतिकर्त्तव्यतायां विशेषमाह संख्यायन सूत्रं— "पिण्डान् यथावनेजनं निधाय उभावेकस्मिन् पिण्डे पितृ भेदे" इति पितृ भेदे एकस्मिन् पिण्डे उभौ जनक ग्रहीतारौ कीर्त्तयेदिति शेषः । प्रवराध्याये पितृव्येण चैक कार्य्यजातास्ते परीग्रहीतुरेव भवन्ति । अथ यदेषां भार्य्यास्वपत्यं नस्यात् तदा रिक्थं हरेयुः पिण्डं तेभ्यः त्रैपूरुषिकं दद्युः; यद्यपि स्यादुभाभ्यामेव दद्युरित्या

चार्य्य वचनं; द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनूद्दिश्य एकपिण्डे वा द्वावनु कीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितानारं आतृतीयात् पुरुषा दिति। ग्रहीतुः क्रियानियमाभावे पुत्रान्तराभावे च तस्यैव;क्रियानि-यमे अपत्य सद्भावे च द्विपितृकत्व मित्यर्थः अत्र श्राद्ध भेदाभेदयो विकल्पः। नचेदं क्षेत्रजविषयं, सत्याषाढेन दत्तकादीनांद्व्यामुष्यायण वदिति सूत्रेण दत्तके ऽपि तद्धर्म्मातिदेशात्।

द्व्यामुष्यायणको कर्त्तव्यतामें सांख्यायन सूत्रमें यह लिखा है कि द्व्यामुष्यायण पुत्र, उत्पादकपिता और लेने वाला इनदोनों का नाम लेवे; प्रवराध्यायमें लिखा है कि; यदि कोई प्रतिनिधिपुत्र पितृव्य अर्थात् पिताके भाईसे गृहीतहोवे;और उसमें उत्पादकका अभिसन्धि न रहे तोवह पुत्रलेनेवालाकाही होताहै, और यदि उन पितृव्यों की भार्य्यामें अपत्य न होवे तो वह प्रतिनिधिपुत्र उनके धन को हरे, और उन का तैपुरुष अर्थात् पार्व्वण श्राद्धकरें और यदि अपत्य होवे तो अपना उत्पादक पिता और लेनेवाला इन दोनोंका ही पार्व्वण श्राद्ध करें आचार्य्यका वचन ऐसा है और पहिले यहभी कहा गया कि दोश्राद्धकरें वा एक श्राद्धमें दोनोंका नाम लेवे वा एक पिण्डमें दोनों का उल्लेख करें इत्यादि। यदि लेनेवालेका क्रियानि यम न रहे ,और न उस्का कोई अपत्य रहे तो वह पुत्र लेनेवाले का हि होताहै, और यदि क्रियानियम न रहे और लेनेवाले का पुत्र रहे तो वह पुत्र [illegible]वाले का होता है तथा यदि क्रियानि यमरहे और अपत्यभी रहे तो वह द्व्यामुष्यायण [illegible] होताहै; यह

नियम यद्यपि क्षेत्रज पुत्रके विषयमें है तथापि सत्याषाढने इसवि-धि को दत्तकादिमें भी प्रवर्त्तितकिया है।

तथा हारीतः—तेषामुत्पादयितुः प्रथमं प्रवरो भवति, द्वौ द्वौ पिण्डौ निर्व्वपेत् एकपिण्डेवा द्वावनु कीर्त्तयेत् द्वितीये पुत्रः, तृतीये पौत्रः लेपिनस्त्रीन् वाचयाण आसप्तमादित्येक इति। तेषां पितॄणां मध्ये वीजिनः प्रथममार्षेयं क्षेत्रिणो द्वितीय मिति द्विप्रवरता। एक पिण्डे वेत्यत्र वीप्साध्याहारः। यदि द्विपिता स्यादेकैकस्मिन्न व द्वौ वा नुपलक्षये दित्यापस्तम्ब वचनात्; द्वितीये पितामह पिण्डे द्व्यामु-ष्यायणस्य पुत्रः, तृतीये प्रपितामहपिण्डे द्व्यामुष्यायणस्य पौत्रः इति। उन पिताओंमेंसे उत्पादन कर्नेवाले अर्थात् "वीजी" का प्रथम अर्थात् आर्षेय प्रवर होताहै, और क्षेत्रवाले का द्वितीय प्रवर होताहै, यदि वह द्विपितृक (द्व्यामुष्यायण) होवे तो दो २ पिण्ड देवे वा अथवा एक २ पिण्डमें दोनों का नाम लेवे (आपस्तम्बने भी ऐसा कहा); द्व्यामुष्यायण के पितामह के पिण्डमें द्व्यामुष्यायणका पुत्र, और उस्के प्रपितामहपिण्डमें उस्का पौत्र, सप्तमपुरुष पर्य्यन्त तीन पुरुषों का उल्लेखकरें।

यदितु ग्रहीता प्रथमं मृतः, तदा तस्मै दद्यात्, अथ यदि जनक स्तदा जनकाय, यद्युभौ तदादौ जनकाय पश्चाद् ग्रहीत्रे दद्यादित्या ह मरीचिः। सगोत्रादन्यगोत्राद्वा योभवेद्विधवा सुतः। पिण्डं श्राद्ध विधानञ्च क्षेत्रिणे प्राक् प्रदापयेत्। वीजिने दद्यु रादौतु मृते

पश्चात् प्रदीयते, उभौ यदि मृतौ स्यातां वीजिन्यादौ ततो ददेत्। क्षेत्रिण्यादौ न दत्तं स्यात् वीजिने नोपतिष्ठते इति। एतेनैक तरोपरतावपि द्विपिण्डकस्य पार्व्वणं दर्शितम् तथातुल्यन्यायेन मातृभेदे ऽपि द्व्यामुष्यायण दत्तकस्य पितरो यत्र पूज्यन्ते, तत्रमातामही भूव मित्यनेन प्राप्तपितामह श्राद्धे जननी पितृणां प्रथम निर्द्दिष्टस्ततः प्रतिग्रहीत्री या माता तत् पितृणां।

यदि लेनेवाला पहिले मृत होवे और उत्पादक पिता जीवित रहे, तो द्व्यामुष्यायण पुत्र लेनेवालेके श्राद्धमें अधिकारी होता है, और यदि लेनेवाला जीवितरहे और उत्पादक पिता मरजावे तो वह पुत्र उस पिताके श्राद्धमें भी अधिकारी होताहै और यदि उत्पादक और लेनेवाले दो हो मृतहोवें तो प्रथम उत्पादक पिता का श्राद्ध करे, पीछे लेने वाले का, क्योंकि उत्पादक पिता का प्राधान्य रहता है। यह वचन है कि "विधवाके गर्भमें निजगोत्र वा भिन्नगोत्र पुरुषद्वारा जो पुत्र उत्पन्न होता है वह पहिले "क्षेत्री" का पिण्डदान और श्राद्धादिकार्य्य करै पीछे उत्पादनकर्नेवाले का यदि कदाचित् किसी सधवाके गर्भमें दूसरेके द्वारा पुत्र उत्पन्न होवे और क्षेत्रवाला भी जीवित रहे तो वह पुत्र उत्पादन कर्ने वालेका श्राद्धादि करसक्ताहै फिर क्षेत्रवाले के मृत्यु होनेपर उसका श्राद्धादि करेगा यदि दोहो मृत होवे पहिले उत्पादक का श्राद्धादिकरे पीछे लेने वाले अर्थात् 'क्षेत्री' का क्योंकि यदि पहिले लेनेवाले

(स्त्री)का श्राद्ध किया जावे तो पीछे दियाहुआ उत्पादकको पहुच ता नहीं।" इन वचनों से यह भी दिखलाया गया कि साग्निक द्व्यामुष्यायण पुत्रके पिताओंमेंसे यदि एक मर जावे तो उसका पा र्वण में अधिकार होताहै, ऐसी रीतिसे पहिले अपनीगर्भधारिणी के पितरोंका श्राद्ध करना पीछे लेनेवालीमाताके पितरों का।

शुद्धदत्तकस्तु प्रतिग्रहीत्र्या एव मातुः पित्रादि पिण्डदानं तस्य तन्मात्र स्वधाकरत्वादिति। एवञ्च सहि सन्तानाय पूर्व्वेषामि ति हेतुवन्निगद स्वरसान्नैकं पुत्रं दद्यादिति निषेधो द्व्यामुष्यायणाति रिक्तविषयः, सन्तानविच्छेदाभावादित्युक्तमेव।

जो दत्तक द्व्यामुष्यायण नहीं है वह केवल अपनी लेनेवाली माता के पितरों का श्राद्धादि करसक्ताहै,गर्भधारिणी के पितरों के श्राद्धा दिमें उसका अधिकार नहीं होता। पहिले यह भलीभांति कहागया कि "नैकं पुत्रं दद्यात्" "एकमात्र पुत्रको दत्तक न देवे" इस वचन का विषय द्व्यामुष्यायणसे अतिरिक्त है।

अथास्य सापिण्ड्यं। जनक कूले अवयवा न्वयेन प्रतिग्रहीत्ट कुलेच पिण्डान्वयेन त्रिपौरुषं यद्राह कार्ष्णाजिनिः। यावन्तः पितृ वर्गाः स्यु स्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्युः स्वकीयैः पितृ भिः सह। द्वाभ्यां सहाथ तत् पुत्राः पौत्रायैकेन तत्समं। चतुर्थे पुरुषे छेदं तस्मादेषा त्रिपौरुषीति। अस्यार्थः दत्तकादयः पुत्राः प्रेता नां प्रतिग्रहीत्रादीनांपितृणा औरसत्वं दत्तकत्वे द्व्यामुष्यायणत्वे वा

## भाषाकालमाधवः

नास्ति कश्चिदेवं संस्कृत-शास्त्रतत्त्वाभिज्ञो विद्वान् योमाधवाचा-र्य्यं न जानाति । सहि श्रुतिस्मृतीतिहास पुराण दर्शनादिशास्त्राण्यङ्गानि चापराण्यधीत्य निर्म्ममे तत्र शास्त्रेषु केषाञ्चिद्वृत्तिं केषाञ्चिन्मत माकलय्य ग्रन्थविशेषान् । कालमाधवो ऽयं तद्ग्रन्थानामन्यतमः । अत्र शास्त्रोक्त क्रियाकलाप सम्पादन-समयानां यथा-यथं निर्णयः कृतः ।

साम्प्रतं हि योगानुष्ठान तपश्चर्य्याणामतीवदुष्करतया केवलं केषाञ्चित् सुखानुष्ठेयानां श्रौतस्मार्त्तं कर्म्मणा मनुष्ठानमेव हिन्दु धर्म्मस्य प्राणरूपेण स्थितं । तथाविध कर्म्मानुष्ठानेतु समयस्य प्राधान्येनोपयोगिता वर्त्तते असमये समनुष्ठित मपि कर्म्म भस्माहुतमिव विफलं भवति । ततः समयस्य सम्यक् परिज्ञानं समुचित मेव सर्व्वेषां धर्म्मपरायणाना मार्य्याणां ।

ग्रन्थो ऽयं संस्कृतभाषायां लिखित इति नेदानीन्तनानां सर्व्वेषां बोधविषयीकर्त्तुं शक्यते इति संस्कृतभाषानभिज्ञानामुपरि दया-परतन्त्रैः पूज्यपादैः पण्डितश्रीगुरुप्रसाद महोदयैःलखनुरस्थित प्राच्यविद्यालयप्रधानसंस्कृताध्यापकै रानूदितो हिन्दीभाषायां । अनुवादश्चायमेवं नैपुण्येन सम्पादितो यत्र केवलं संस्कृतानभिज्ञानां परमोपकारं सम्पादयिष्यति परं संस्कृताभिज्ञानामपि विशिष्टसहा-यतां करिष्यति ।

वयमत्रतदनुवादांश्च विशेषानुद्धृत्य पाठकेभ्य उपहरामः। पञ्चप्रकरणान्यत्र तेषूपोद्घातवत्सरोप्रतिपच्छिष्टतिथयोनक्षत्रादिरिति क्रमः अब्दःपञ्चविधश्चान्द्रोव्रतादौ तिलकादिके सुजन्मादिव्रतेसौरो गोसत्रादिषुसावनः त्रयोप्याचार्य्यसेवादौ विकल्प्यन्ते निजेच्छया आयुर्दायेतु नाक्षत्रोवार्हस्पत्योधिवत्सरे चान्द्रानाम्प्रभवादीनाम्पञ्चके पञ्चकेयुगे सम्परीदान्विदित्येतच्छब्दपूर्वास्तुवत्सराः मासास्तुसावनस्सौरश्चान्द्रोनाक्षत्रइत्यमी।

---

इसग्रंथमें पांच प्रकरण हैं उन्मेंसे पहिला प्रकरण उपोद्घात (अर्थात् प्रकृत निर्वाहक साधारण परिभाषाओंको बतलाता)है, दूसरा वत्स-र(वर्षनिर्णय कर्नै हारा)है तीसरा प्रतिपत् चौथा शिष्टतिथि और पांचवां नक्षत्रादिकोंका निर्णायक यही क्रमहै इन्में से अब्द पांचप्रकारका है १ ला चान्द्र अब्द है सो व्रत और तिलकादिमें लेना चाहिए, (२)रा सौर अब्द है सो सुजन्मादि व्रतों में लेना, गोसत्रादि में (२) रा सावन अब्दलेना, आचार्यसेवादिकार्यों में इन तीनों में से एक चाहे सो ले लेना आयुष्य निर्णय में नाक्षत्रअब्द ४ था और अधिक वत्सर के निर्णय में (५) वा वार्हस्पत्य अब्द लेना चाहिए प्रभवादिक जो साठ चांद्रअब्दहैं उन्में से हरएक पांच (२) बरस संवत्सर, परिवत्सर, इदावत्सर, अनुवत्सर, और इद्वत्सर यों बोले जातेहैं। महीने चार प्रकार के होतेहैं, अर्थात् सावन, सौर चान्द्र और नाक्षत्र।

दर्शान्तःपूर्णिमान्तोवाचान्द्रोऽसौविप्रवैश्ययोः सौरोराज्ञस्सावनस्तुय-ज्ञेज्योतिषिकेपरः। चान्द्रोऽधिमासोऽसङ्क्रान्तस्तोऽन्तर्भवति चोत्तरे। असङ्क्रान्तावेकवर्षे द्वौचेत्संसर्पआदिमः क्षयमासोद्विसङ्क्रान्तः सचांहस्पतिसञ्ज्ञकः। शुद्धाविद्धातिथिः शुद्धाहीनातिथ्यान्ययाहनी उदयेपूर्वयातिथ्याविध्यतेत्रिमुहूर्तकैः सायन्त्वुत्तरयातद्वन्यूनया तुनवि

इनमेंसे चान्द्रकी गिन्ती अमावस (२) अथवा पूनो (२) तक होती है और ब्राह्मण तथा वैश्यलोगोंके व्यवहारमें यह आताहै, सूर्यकी संक्रान्ति(२)तक सौर मास होताहै और राजाओं के काममें आताहै, तीस दिन का सावन मास होताहै वह यज्ञके काम में आता और नाक्षत्र मास सताईस दिन का है वह ज्योतिष के विचार में काम आताहै, जिस चान्द्रमास में सूर्य की संक्रांति न लगे वह अधिमास कहाता है और उसकी गिन्ती उससे अनन्तर जो संक्रान्ति वाला महीनाहै उसके नाम से होतीहै, यदि एकहीवर्षमें दो महीने संक्रान्ति रहित हों तो पहिला संसर्प कहाता है और दूसरा अधिमास, और जिस चान्द्रमास में दो सूर्य संक्रान्तियां हों वह क्षयमास होताहै, उसे अंहस्पति कहते हैं तिथि दो प्रकारकी होती है एकशुद्धा दूसरी विद्धा तो शुद्धा वह है कि जिस दिन दूसरी तिथि उसके साथ नहो (अर्थात् जिस दिन दूसरीभी तिथि आमिले उसे विद्धा समझना) उदय कालमें यदि पूर्वातिथि तीन मुहूर्त (घंटे) होतो उस से विद्धा होती है और

ध्यते वेध्यापित्रिमुहूर्तैव न न्यूना वेधमर्हति

उपवासश्चैवभक्तनक्तञ्चायाचितव्रतम् दानञ्चषड्विधं दैवं क्रमादत्रवि

विच्यते । एकोद्दिष्टंपार्वण ञ्चपित्र्यं द्विविधमीर्यते प्रातस्सङ्गवमध्याह्ना

पराह्णाः सायमित्यसौ अन्हाः पञ्चधा भागोमुख्योद्विनयादिभागतः

मुख्यतिथ्यन्तरायेतुतिथिशेषोऽपिस्वीकृताम् मध्याह्नोभयपूर्वेनवैषम्ये

त्वधिकेष्यताम् अन्याङ्गस्यैकभक्तस्य कालस्याङ्गानुसारतः;

---

सायंकाल में यदि तीन मुहूर्त उत्तरा तिथि हो तो उसके विद्धहोती है यदि तीन मुहूर्त से पूर्वा वा उत्तरातिथिन्यून हों तो उनकावेध नहीं होता ।

उपवास, एकभक्त, नक्त अयाचितव्रत, और दान ये षडविध देवकर्म इसी प्रकरणमें विवेकपूर्वक कथित हो ते हैं एकोद्दिष्टतथा पार्वण दो प्रकारके पितृकर्म भी कहे हुए हैं । इस तिथि निर्णय के विषय में दिन के पांच भाग अर्थात् प्रातः, संगव, मध्याह्न अपराह्ण और सायम् ये ही श्रेष्ठहैं नकि दो भाग अथवा तीनभाग प्रभृति ।

यदि उपवासादिकों में मुख्य तिथि न मिलें तो तिथि शेष अर्थात् थोडा बहुत भी उस तिथिका शेष जहां मिले उसी समय व्रतादि को करना अंग साम्यके तो पहिलेही दिनकी तिथि एक भक्तमेंलेनी यदि वैषम्ये पक्षमें दोनोदिन मध्याह्न व्यापिनी हो तो जिस दिन अधिक हो वहीलेनी यदि किसी अन्यव्रत (अनंतादि )का अंग एक भक्त हो तो उसमें तिथि उस व्रतकी सी लेनी

श्रीरामस्तोत्रम्

स्वयं जाते सिद्धौषधितरुलते शैलशिरसि

स्वयं ते वर्द्धंते नच भवत एते नरपतेः ।

सुयत्नादारामे, तदतिगतिहीनं त्वमवसि

हरे राम इत्यादि ।—

( ९८ )

जगन्नामाभिधं रमयतु सरामं श्रुतिगुणं

विरामं वाणासं द्विगुण मपितस्मादृतवतः ।

तया मूर्च्छां शम्भो स्तमसि वससि ह्यच्चरतया

हरे राम इत्यादि ।—

( ९९ )

रविश्चन्द्रो वह्नि र्मरुदपिच पृथ्वी जलमपि

जगन्नाथस्यैतज्जगदिति तु मत्वा तदवति ।

भक्तेष्वे तेषु स्वयमवसितुष्टो ऽसि यदि हे

हरे राम इत्यादि ।—

( १०० )

जले मात्स्यन्याय श्चरति चिरमारण्य नियमो

भवत्येवं साधो कलवलखलो ऽयं प्रभवति

कृपालो यावत्तं तमद्यवहि भाणोरनुदये

हरे राम इत्यादि ।—

( १०१ )

अस्मर्व्वं श्री रात्रि ज्ञपयितु मशक्ता: स्वविपदो
जना: साध्वै, र्लेख्यै: प्रतिनिधि जनैर्वा पि सकला:
अशेषान्तर्यामिन् त्वयि मदभियोग: सुफलतु
हरे राम इत्यादि ।—

( १०२ )

भवानेको वन्धुर्भवतु भगवन् किं वहुगतै
रनात्मीयैरार्त्तिप्रदविरह दु: खै रपि च तै:
भविष्यामि प्रीतो भवसि जगदात्मन् ! यदि सुहृत्
हरे राम इत्यादि ।—

( १०३ )

पुरा जीवस्येव स्वकृत कृतित: संसार जननं
पुनर्व्वारम्वारं प्रकृति कृतित: संसारसरणं ।
तरिष्यामि स्वामिन् कथमिद मनाद्यन्तगहनं
हरे राम इत्यादि ।—

( १०४ )

शुभं सर्व्वं तेषां तव चरणपद्मार्चनवलात्
न दु:खानां लेशो भवति भवतो मन्त्र जपताम्,
न धर्म्मानुष्ठानं मम पुनरधर्म्मै: प्रतिदिनं
हरे राम इत्यादि ।—

नियम किया और कहा कि उपनयनके पहिले चाहे चूडादि संस्कारसे संस्कृत पुत्रको ग्रहण करे तौभी उसमें लेनेवालेका पुत्रत्व सिद्धहोता है, इस शिष्टपरम्परागत पुत्रत्व व्यवहारकी अनुपपत्ति होती है क्योंकि कल्पना करो कि किसी पुत्रको पञ्चम-वर्षके अनन्तर अपने उत्पादकपिताने किसीको दे दिया और कुछदिन के पीछे लेनेवालाभी मरगया हो तो वह पुत्र लेने वाले के श्राद्धादि कार्य्यमें अधिकारी नहीं होसक्ता है, कारण यहहै कि जब देने वाला उसे दे चुका तबउसपुत्रमें उस्का कुछ स्वत्व न रहा और ऊपर कही हुई व्याख्यासे उसमें लेने वालेका पुत्रत्वभीनहीं होता।

किन्त्वयं वचनार्थः। जनक गोत्रेण कृत चूडा संस्कारस्य पुत्रत्वं निषिध्य प्रति ग्रहीत्रा पुनश्चूडादि करणे तत् प्रतिप्रसूतं, ततश्च कृत संस्कारस्यातीत पञ्चवर्षस्यच ग्रहीत्रा चूडादि करणात् पूर्व्वं दासत्वाक्षेपात् चूडादि करणानन्तरं पुत्रत्वं लभ्यम्। अकृत संस्कारस्यानतीत-पञ्चवर्षस्यतु परिग्रह-मात्रादेव तत् प्राप्तं तच्च विततं। अथवा जनकेन चूडान्त संस्कृतोऽपि पुत्रो न पुत्र इत्य-पुत्रत्वादेषः, यतो ऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः। तथाच एकस्य पुत्रपदस्य चकारस्यच वैयर्थ्यं दूषणमपि परिहृतम्। एवञ्च चूडाद्या इत्यतद्गुण सम्विज्ञान बहुव्रीहिणा द्विजातीना मुपनयन-लाभः; शूद्रस्यतु विवाहादि लाभः। “ अन्यगोत्रोद्भवो दत्तः

नियम किया और कहा कि उपनयनके पहिले चाहे चूडादि संस्कारसे संस्कृत पुत्रको ग्रहण करे तौभी उसमें लेनेवालेका पुत्रत्व सिद्धहोता है, इस शिष्टपरम्परागत पुत्रत्व व्यवहारको अनुपपत्ति होती है क्योंकि कल्पना करो कि किसी पुत्रको पञ्चम-वर्षके अनन्तर अपने उत्पादकपिताने किसीको दे दिया और कुछदिन के पीछे लेनेवालाभी मरगया हो तो वह पुत्र लेने वाले के श्राद्धादि कार्य्यमें अधिकारी नहीं होसता है, कारण यहहै कि जब देने वाला उसे दे चुका तबउसपुत्रमें उस्का कुछ स्वत्व न रहा और ऊपर कही हुई व्याख्यासे उसमें लेने वालेका पुत्रत्वभीनहीं होता।

किन्त्वयं वचनार्थः। जनक गोत्रेण कृत चूडा संस्कारस्य पुत्रत्वं निषिध्य प्रति ग्रहीत्रा पुनश्चूडादि करणे तत् प्रतिप्रसूतं, ततश्च कृत संस्कारस्यातीत पञ्चवर्षस्यच ग्रहीत्रा चूडादि करणात् पूर्व्वं दासत्वाक्षेपात् चूडादि करणानन्तरं पुत्रत्वं लब्धम्। अकृत संस्कारस्यानतीत-पञ्चवर्षस्यतु परिग्रह-मात्रादेव तत् प्राप्तं तच्च विततं। अथवा जनकेन चूडान्त संस्कृतोऽपि पुत्रो न पुत्र इत्य-पुत्रत्वादेशः, यतो ऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः। तथाच एकस्य पुत्रपदस्य चकारस्यच वैयर्थ्यं दूषणमपि परिहृतम्। एवञ्च चूडाद्या इत्यतद्गुण सम्विज्ञान बहुव्रीहिणा द्विजातीनां मुपनयन-लाभः; शूद्रस्यतु विवाहादि लाभः। “अन्यशाखोद्भवो दत्तः

पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्त विधिना स स्वशाखभागि ति" प्रागुक्तैकवाक्यत्वात्। पञ्चमाद्वर्षादिति-ब्रह्मवर्चसफलार्थि वि-प्राभिप्रायं, "ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे" इति मनुव-वचने तत्कालस्य पञ्चमवर्षस्यैव उपनयन मुख्यकालत्वेन तदेकमूल-त्वात्। तदर्थिनस्त्वाष्टमाब्दादिति। चत्रियादेरप्युपनयन तत्तन्मुख्य कालादरः। मुख्यकालेऽपि सिद्धाधिकार योग्यत्वस्यैव गौणकालेऽपि संस्काराधिकारादित्युक्त प्रायम्। चूडायां गौणकालादरस्तु वचन बलादेव पुत्रेष्टि मिति वर्णत्रयस्यैवाधिकारात् तेन पुत्रेष्टि पूर्व्वक चूडादिभिःपुत्रत्वं सम्पाद्यम् शूद्रेणतु तदापि संस्कारमात्रादेवेति सर्व्वमनवद्यम्। एवञ्च सर्व्वेषामेव प्राचां काल विशेष मन्तर्भाव्यैव पुत्र परिग्रहविधान मुपपद्यते। उक्तार्थस्य स्वतःसिद्धत्वात्।

अथैवमुक्तवचन परव्याख्याने कृतचूडस्य दत्तकस्य जनकमात्र पुत्रत्वं निषिध्य अन्यतश्च पुत्रत्वं यातीत्यत्र चकारेण जनक प्रतिग्रही त्वसा धारण्य लब्धं उभयोरेव संस्कारकत्वात्;तच्च उभयो रावयो रयंपुत्र इ-त्यभिसन्धाने,बोध्यं। अयमेव द्व्यामुष्यायणो नाम द्विपिता द्विगोत्रश्च।

"पितुर्गोत्रेण यः पुत्रः" इत्यादि ऊपर कहे हुए वचनों का अपने मतके अनुसार व्याख्या करते हैं, कि "पितुर्गोत्रेण यः पुत्रः" इसवचन से "उत्पादकपिताके गोत्रके नियमोंसे चूडापर्य्यन्त संस्कार कर्म्मोंसे संस्कृत हुए पुत्रमें लेने वालेका पुत्रत्व नहीं होता" ऐसा निषेध करके फिर * "पुत्रतां याति चान्यतः" अर्थात् लेने वाला

यदि चूडादि संस्कार कर्म्म करे तब दत्तकमें उस्का पुत्रत्व होताहै" इसविधानसे पूर्व्वार्द्धसे जो पुत्रत्वकानिषेध हुआथा उस्का प्रतिप्रसव हुआ (निषिद्धके पुनर्विधानको प्रतिप्रसव कहते हैं)। तव यह सिद्ध हुआ कि अपने उत्पादकपितासे न संस्कृत हुआ। और पञ्चमवर्षके ऊपर जिसका वयस हुआ, ऐसे दत्तककी, जबतक लेनेवालो चूडादि *संस्कारकर्म्मसे संस्कृत नकरे,तबतक दासकहते हैं और चूडादि * संस्कारके अनुष्ठानके अनन्तरउसमे लेने वाले कापुत्रत्व उपजता है जिस्का कुछ संस्कारनहीं किया हुआ; और वयस भी पञ्चमवर्षसे ऊपर न हुआ ऐसे दत्तकमें लेनेवालेका तो निर्व्विवाद पुत्रत्व सिद्धहोता है। अथवा"पितुर्गोत्रेण" इस वचन कातात्पर्य्य यह है कि केवल अपने उत्पादकपितासे संस्कृत हुए पुत्रमें पुत्रत्व नहीं होता किन्तु अपर उपनयनादि कार्य्य से भी उसमें पुत्रत्व होताहै। ऐसी व्याख्यामें" न पुत्रः सः" इस पुत्रपदकी और "पुत्रतां यातिच "इस चकारकी व्यर्थता नहुई। "चूडाद्याय-दि संस्काराः "इस वचन के अन्तर्गत चूडादिपद अतद्गुण सवि-ज्ञान बहुव्रीहिसमाससे सिद्ध हुआ इसलिये उसपदसे ब्राह्मणादि द्विजातियोंके उपनयन का और शूद्रोंके विवाहादिका लाभ हुआ है और ऐसे होने से पहिले कहेहुए "अन्यशाखोद्भवोदत्तः"

---

"चूडादि" इसपदमें अतद्गुण संविज्ञान बहुव्रीहिसमास हुआ इस लिये उसपदसे उपनयनादि संस्कार कर्म्मोंकाज्ञान करना।

इत्यादि वचन से भी इस वचन की एकवाक्यता हुई।
"पञ्चमाद्वर्षात्" इस वचनसे जो पञ्चमवर्षके पहिले दत्तकलेनेका
विधान हुआ उसविधान को साधारण नहीं समझना किन्तु जो
ब्राह्मण अपने "ब्रह्मवर्चस" को सफल करना चाहते हैं उन कोलि
येही ऐसा विधानहुआ है,मनुजीने भी कहा कि जो ब्राह्मण "ब्रह्म
वर्चस" चाहते हैं पञ्चमवर्ष उनका मुख्यउपनयनकाल है। और
जो "ब्रह्मवर्चस" को नहीं चाहता अष्टम वर्ष उसकामुख्यउपनयन
काल है; ऐसा क्षत्रियादि काभी अपने अपने उपनयन का मुख्य
काल समाहृत होता है।

"चूडाकार्य्या यथाकुलं" "अपने कुलके अनुसार चूडा करनी" इस
वचन से चूडामें गौणकाल काभी आदर होता है। जिस्कीचूडा
की हुईहो ऐसे दत्तक के ग्रहण में पहिले पुत्रेष्टि याग का अनुष्ठा-
न उचित है और जिस्को चूडा नहीं हुई हो उस्के ग्रहण करनेमें
पुत्रेष्टि की आवश्यकता नहीं शूद्रपुत्रेष्टिमें अधिकारीनही केवलवि
वाह संस्कार सेही उस्कापुत्रत्व सिद्धहोता है। अबदेखो प्राचीनोंने
जो किसीकालविशेष को मुख्य नहीं मानकर पुत्रग्रहणका विधान
कियाउसमें किसी प्रकारका दोषनहीं क्यौंकि उपनयन योग्य कालके

"विवाह मात्र संस्कारं शूद्रो ऽपिलभतांसदे"त्यनेन तस्यविवाहरूप
संस्कारस्य प्राधान्यादित्यर्थः शूद्रकाविवाहप्रधानसंस्कार है और
उस्कामुख्यकाल षोडशवर्ष है इसलिये सोलह वर्ष कीबीच शूद्रको
दत्तक बनाना उस्के पीछे नहीं

वोचमें ग्रहण करना स्वतः सिद्ध अर्थात् आपसे प्रकाशित होताहै ।

जहां किसी कृतचूड पुत्रमें उत्पादक और लेनेवाला, इन दोनों का ऐसा अभिप्राय रहे कि यह हम दोनों का पुत्र होवे, ऐसे पुत्र को द्वयामुष्यायण कहते हैं । उस्के पिता भी दो और गोत्रभी दो होते हैं ।

ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते, तथा हारीतः "जीवति क्षेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणं अगुप्तवीजत्वात् । जीवत्यपि क्रियाभ्युपगमाद्द्विपितृको भवतीत्याह मनुः, " क्रियाभ्युपगमात्त्विदं वीजार्थं यत् प्रदीयते तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एवचेति" अपुत्र वीजिक्षेत्रिकयोर्मम क्षेत्रे तव वीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः । तथा अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसावृक्थी पिण्डदाता च धर्मत इति । दत्तकस्य तु तद्दृष्टचरं प्रत्युत "गोत्ररिक्थे जनयितु र्नहरेद्दत्रिमः सुत" इति प्रागुक्त मनुवचनं तद्विपरीतार्थ-ग्राहकमेवास्तीति चेन्न दत्तकादिष्वपि सर्व्वेषामेकधर्म्माणामेकस्यापि यदुच्यते । सर्व्वेषामेव तत् कुर्य्या देकरूपाहि ते स्मृता "इति वौधायन दर्शनेन क्षेत्रजधर्म्मलाभात् । द्वे श्राद्धे कुर्य्यादेक श्राद्धे वा पृथगनुद्दिश्य एक पिण्डे वा द्वावनुकीर्त्तयेत्, प्रतिग्रहीतारं चोत्पादयितारं आत्रतीयात् पुरुषादिति साङ्ख्यायन प्रवराध्याये सामान्यतो दर्शनाच्च दत्तकस्यापि द्विपितृकत्वसिद्धिः । अतएव सत्याषाढो ऽपि नित्यानां द्व्यामुष्यायणानां द्वयोरितिसूत्रे च

नित्यद्व्यामुष्यायणानां क्षेत्रजानां सप्रवरगोत्रद्वय सम्बन्ध मुक्ता दत्तका
दीनां द्व्यामुष्यायणवदिति सूत्रेण तद्धर्ममतिदिशति । विवृतञ्चत-
द्भाष्यकारैः-नित्यद्व्यामुष्यायण प्रसङ्गेनानित्यानाह दत्तकादीनामि-
तितावदेव नोत्तर सन्ततौ प्रथमेनैव संस्कारः परिगृहीता चेत्तदा
उत्तरस्यैव पूर्व्वत्वात्तेनैव उत्तरत्रेति । एतद्भाष्यार्थस्तु क्षेत्रज वत्
उभयो रभिसन्धौ दत्तकस्योभयगोत्रभागित्वं, अन्यथा जनकेनैव
सर्व्व संस्कार करणे जनक गोत्रभागित्वं नग्रहीतृगोत्रभागित्वं ग्र-
हीता संस्कार करणेतु उत्तरस्य ग्रहीतुः पूर्व्वत्वात् प्राधान्यात्तेनैव
उत्तर सन्तते र्गोत्रमिति ।

अब किसी की यह शङ्का है कि क्षेत्रजपुत्रका द्विपितृत्व (दो हैं पिता जिस्के उस्का धर्म्म) देखा जाता है जैसा हारीतने कहा कि पतिके जीते रहतेही उस्की अनुमतिसे उस्के क्षेत्रमें दूसरे के द्वारा जो पुत्र उत्पन्न होता है ऐसे पुत्र को क्षेत्रज पुत्र कहते हैं जिसक्षेत्रमें वह पुत्र उत्पन्न होता है वह क्षेत्रस्वामिका सम्पूर्ण अधीन है इसलिये उसमें उत्पन्न पुत्र को क्षेत्रज कहते हैं अर्थात् किसीके क्षेत्रमें उत्पन्नहुआ पुत्र । पति अर्थात् क्षेत्रस्वामि के मरणे पर वह पुत्र "द्व्यामुष्यायण" कहा जाताहै क्योंकि तब अगुप्त अर्थात् स्वामी के अभाव होने से अरक्षित क्षेत्रमें वीज का आरोप किया गया, और स्वामिके रहने पर ही वह पुत्र द्विपितृक (दो पिता जिस्के) होता है क्यों कि क्षेत्रवाले और वीजक्षेपकर्नेवाले के वीच

क्रियाभ्युपगम इसमें (हमदोनों का पुत्र होगा ऐसा स्वीकार) होता है, जैसा मनुने कहा कि क्रियाभ्युपगम करके बीजवपन केलिये जो क्षेत्र दिया जाता है उस क्षेत्रमें उत्पन्न पुत्र के दोस्वामी होते हैं एक "क्षेत्री" अर्थात् जिस्के क्षेत्रमें वह पुत्र उत्पन्न हुआ, दूसरा "बीजी" अर्थात् जिस्के बीज से वह उत्पन्न हुआ; अपुत्र क्षेत्रवाले और बीजी के बीच जो अङ्गीकार किया जाता कि मेराक्षेत्र और तुमारा बीज,इनके संयोग सेजोपुत्र उत्पन्न होगा वह हम दोनोंका पुत्र होगा, उसअङ्गीकार को क्रियाभ्युपगम कहते हैं। और वचन भी है कि"यदि कोई अपुत्र मनुष्य किसीदूसरेके क्षेत्रमें उसके नियोग से यदि पुत्र उत्पन्न करें तो वह पुत्र उनदोनोंका (क्षेत्रवाले और बीजीका, धन भागी और पिण्ड दाता होता है।"यदि कहो कि तब दत्तकको भी द्विपितृक क्यों नहीं कहते हो? इसका उत्तर यहहै कि दत्तकके विषयमें वहबातनहीं घटती क्योंकि "दत्तकपुत्र अपने उत्पादकपिताके गोत्र और धन को नहीं पाता है"इस मनु वचन से उसका द्विपितृकत्व निषिद्ध हुआ है यह उत्तर कुछ अच्छा नहीं; कारण बौधायन ने कहा कि"पुत्रप्रतिनिधिरूपएक धर्मवाले दत्तकादियोंमेंसे एकके विषयमें जो कहा जायगा,उस कथन को सबके ऊपर लगाना और सांख्यायनके प्रवराध्यायमें साधारण रूपसे जो श्राद्धका निर्देश कियागया कि"प्रतिनिधि पुत्र अपने उत्पादक और लेने वाले को पृथक् पृथक् उद्देश कर दो श्राद्धकरे

अथवा एकश्राद्धमें उन दोनोंका नाम लेकर दोनोंको एक एक पिण्ड देवे वा एकपिण्डमें दोनोंका नाम लेवे, तृतीय पुरुष तक जो श्राद्ध होताहै उसीमेंभी अर्थात् पार्व्वण श्राद्धमें भी यही नियमहै,जैसाम-त्र हो वैसा करें,यह नहीं कि अपनी इच्छासे करे इस वाक्यसे दत्तकका भी द्विपितृकत्व सिद्ध होता है। इसलिये सत्याषाढने "नित्यानां द्व्यामुष्यायणानां द्वयोः" इस सूत्रसे नित्य द्व्यामुष्यायण क्षेत्रजादियों का दोप्रवर और गोत्रोंसे सम्बन्ध कह कर "दत्तकादीनां द्व्यामुष्या-यणवत्" इस सूत्रसे दत्तकादीयोंमें द्व्यामुष्यायण धर्मका अतिदेश किया है; भाष्यकारोंने भी उनसूत्रोंको ऐसी व्याख्या की है कि, नित्य-द्व्यामुष्यायणों के प्रसङ्गमें "दत्तकादीनां" इत्यादि सूत्रसे "अनित्य-द्व्यामुष्यायणोंकाभी निर्देश करते हैं अर्थात् यदि क्षेत्रजादिकीन्याई किसी एकदत्तकमें उत्पादकपिता औरलेनेवाला इनदोनों का ऐसा अभिसन्धिरहे कि यह दोनों का पुत्र होवे तो वह पुत्र उन दोनों के गोत्रको प्राप्तहोताहै, यदि ऐसा न होवे तो जनक अर्थात् उत्पा-दकपिता जब समुदय संस्कार कर्त्ता है तो वह उसके गोत्र को पाता है और लेनेवाले के गोत्र को नहीं पाता है, और यदि लेने वाला उसका संस्कार करें तो उसके गोत्र को पाता है क्योंकि तब उसी काही प्राधान्य होता है।

तथाच पैठीनसिः। अथदत्तकक्रीत कृत्रिम पुत्रिका पुत्राः पर—परिग्रहेणार्षेण येऽत्र जाता स्ते ऽसङ्गतकुलीना द्व्यामुष्यायणा

## सिद्धान्तकौमुदी

वयं सिद्धान्तकौमुदीसमा—लोचन-प्रसङ्गेन व्याकरणशास्त्राचार्य्याणां यथा ज्ञानमितिवृत्तानि लेखितुं प्रवृत्ताः स्मः। अस्ति हि चास्मद्देशीयानां बहूनां संस्कृतशास्त्रतत्त्वानभिज्ञानां चेतसि सुदृढोऽयं संस्कारो यत् पाणिनिरेव वैयाकरणाचार्य्याणामादिमः अथवा न केवलं तथाविधाना मज्ञानां पण्डितानामपि केषाञ्चिदिस्य मेव धारणा विद्यते तत एव सुपद्मकारेण पद्मनाभदत्तेनोक्तं "पाणिनीयादिशब्दस्मृतौ रुपलब्धे"ति प्रतीयते।

वयं यदा संस्कृत भाषाया वयोवस्थां प्रति दृष्टिक्षेपं कुर्म्मः, तदा पाणिनिर्नाम तदङ्के वार्द्धक्योत्पन्नसद्योजातशिशुरिव प्रतीयते। पाणिनिर्ह्यतो वाधुनिकः कुरुपाण्डवराज पुत्राणां स्वर्गगमनादप्यत्यन्तानन्तर कालजातः। कलिकातासंस्कृतविद्यालयस्य भूतपूर्व्व व्याकरणाध्यापकैः श्रीतारानाथ तर्कवाचस्पतिभिः स्वमुद्रित सिद्धान्तकौमुदी भूमिकायां पाणिने र्वृत्तान्त इत्थं लिखितः; सचवृत्तान्तः कथासरित् सागर नामकाद् ग्रन्थादुद्धृतः। सच वृत्तान्तः कथासरित्सागरसारेऽस्मत् संगृहीते सम्यगुद्धृतः प्रकाशितश्च विद्योदय पत्रिकायां तथापि प्रसङ्गानुरोधेन तमत्र संक्षिप्य प्रकाशयामः।

पुराकिल पुष्पपुरे 'नन्द' नामा नरपतिर्बभूव। भागवते तन्नामोल्लेखो विद्यते यथा "महानन्दि सुतो राजन्। शूद्रागर्भ समुद्भवः। महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत्" ततः परं नकोऽपि क्षत्रियः

ससागर भारत धरां शशासेतिच प्रवादो नन्दान्ताः क्षत्रियाश्रेयाः”

इतिवचन मवलम्ब्य वर्त्तते ।

तस्य नन्दस्य राज्यकाले उपवर्ष पण्डितस्य कात्यायनपर पर्य्यायो वररुचिर्व्याडिः,पाणिनिश्चेति त्रयो मुख्यान्छात्रा बभूवु : । तेषु पाणिनि रल्पबुद्धितया सब्रह्मचारिभिर्वादे पराजितो निर्व्वेद-मापन्नो महादेव माराध्य तत्-सकाशादधीत्य च कृतविद्यस्तत्प्रसा दात् सूत्रपाठ, गणपाठ,धातुपाठ, लिङ्गानुशासनात्मकं चतुर्धाविभक्तं व्याकरणागमं निर्म्मायोपवर्षादि समीपे प्रकाशयामास । तदुक्तं “येनाक्षरसमाम्नाय मधिगम्य महेश्वरात् कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ।”

प्राक्तनवृत्तान्तेन पाणिनेरपि व्याकरणाध्ययनं प्रतीयते, ततः पूर्व्वं व्याकरणशास्त्र—सत्तायां न को ऽपि सन्देहो भवितु मर्हति, विशेषतः “इन्द्र,चन्द्र,: काशकृत्स्ना, पिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः”

इत्यनेन पाणिने रपि पूर्व्वं मिन्द्रादीनां शब्दशास्त्रविदा मवस्थानं प्रतीयते । अपिच “लोपः शाकल्यस्य,” “ओतोगार्ग्यस्य,” “हलि सर्व्वेषां”

“तृतीयादिषुभाषित पुंस्कम्पुंवद्गालवस्य” एवमादि पाणिनीयसूत्रेष्व-पि पाणिनेः प्राक् तदवस्थानसमये वा बहवो व्याकरणाचार्य्या आसन्निति प्रतीति र्भवति ।

भवतु कस्मिन् काले पाणिनिः स्वजन्मना भुव मलङ्कारेति जिज्ञासायां वयं प्रथमं श्रीतारानाथ तर्कवाचस्पति कृतसिद्धान्त मत्र प्रकाशयामः,

तत्रहि "आरभ्य भवतोजन्म यावन्नन्दाभिषेचनं । एतद्वर्षसहस्रञ्च शतं पञ्चदशोत्तरम्"

"इतिभागवत (१२) स्कन्दे (२) अध्याये परीक्षितं प्रति शुकवाक्यं । एतेनहि परीक्षितो जन्मनो ऽनन्तरं १५१० मितवर्षेषु, गतेषु नन्दराज्यमिति निर्णीयते । अत्र पञ्चपद सामानाधिकरण्यानुरोधेन शतमित्यस्य शतानीत्यर्थः, एकत्वं छान्दस मेतच्च स्कान्दैकवाक्यता लभ्यम् । "तेनैव रूपयोयुक्तास्तिष्ठन्त्यब्दशतं नृणामिति सप्तर्षीणां प्रति नक्षत्रं शतवर्षात्मक भोग कालमुक्त्वा ते त्वदीये द्विजाः काले अधुना चाश्रिता मघा" इति यदा देवर्षयः मघासु विचरन्ति हि तदा प्रवृत्तस्तु कलिरिति च भागवते(१२)स्कन्दे(२)अध्याये सप्तर्षीणां मघास्थिति काले कलि प्रवृत्तेः परीक्षितः समये ऽपि तत्रैवस्थिति रुक्तत्वात् कलेः शतवर्ष कालमध्ये परीक्षितो जन्मेति निर्णीयते; तत्रच कलेः प्रायेणाशीति वर्षेषु गतेषु परीक्षितो जन्म; ततः १५१० मितवर्षेषु गतेषु नन्दाभिषेचनम् । पुत्र सहित नवनन्दानां राज्यकालश्च शतवर्षात्मकः । एवञ्च कलेः १६९० मितवर्षे पर्यन्तनन्दराज्यचरमावधिरित्यनुमीयते स एव कालः स्कान्दे विनिर्णीतः । यथा तत्राऽपि त्रिसहस्रेषु दशाधिकशतत्रये । भविष्यनन्दराज्यञ्च चाणक्यायान्

हनिष्यतीति" द्विसहस्रेषु द्विसहस्रवर्षं मध्ये निर्द्धारणसप्तमी। धि-कशतत्रये स्थिते सतीति शेष स्तथाच नवत्यधिकषोडषशतवर्षेषु १६९० कलेर्गते ष्वित्यर्थलाभः। साम्प्रतं कलेर्गताब्दाः ४९ ८२ तत एव तन्मतेन इतः (३२९२) वत्सरपूर्वं पाणिनि र्वर्त्तमान आसीदिति सुनिश्चितं। सचारोह क्रमेणच पाणिने र्मेधातिथि भर्त्तृ हरि प्रभृतिभ्यो ऽपि पूर्ववर्त्तितां निश्चिकाय ।

वशीकरणौषधम् ।

अथैकदाबाल्यकाले बालजन-सुलभकौतुहलवशेन संसृष्टोमया कश्चित् ब्रह्मचारी "किमस्ति भगवन्? जगतीतले तथाविधौषधं येन सर्वं जगत् वशीभूतं भवेदथ स्मयमानेन तेनाभि हितं अस्ति औ "मुद्रे" ति ।

तत आरभ्य मुद्रायाः स्वरूप ज्ञानार्थमतीव कौतुहलं जातं पृष्टाश्च बहवः का सा "मुद्रा" नाम यया सर्वं जगत् वशता मेति। अथब्रह्मचारिनाम श्रवणेन केचिन्मुद्राशब्दस्य पञ्चमकारान्तर्गत म-कारविशेषरूपमर्थं कृतवन्तः अपरे च तदति दुस्साध्यं वस्त्विति कथ यि त्वामां कथमपि प्रबोधयामासुः। परमत्यन्तोत्कण्ठा पीडितस्य मे तेषां प्रबोधनमेकेन कर्णेन प्रविश्य क्षणमविलम्बमानएवापर-स्मात् कर्णात् निर्गन्तु मारेभे ।

किं कर्त्तव्यविमूढोमुद्रावगत्यर्थं कतिपयै र्बन्धुभि र्विमृश्य मुद्रायन्त्रमेकं स्थापयामास अहो दैवं तेनहि मुद्रायन्त्रेण

मुद्रादर्शनं दूरे ऽस्त्वावाल्यसञ्चिता यावतो मुद्राः कवलिताः ।

ततो भग्नोत्साहः शयानस्तन्द्राविष्टोदैववाणीमिमां शुश्राव "नहि भो भवदहष्टे मुद्राप्राप्तिरस्ति प्रविश्य जगदन्तर्मुद्रायाःप्रभावं द्रक्ष्यसि" इति । ततः प्रभाते दैववागनुसारतः कूपमण्डूकतां परिहृत्य जगदन्तः परिभ्रमणार्थं मतिञ्चकार ।

अथ पथि गच्छतो मे सन्निहित पाठशाला भ्यन्तरच्चरितः शब्दो ऽयं कर्णविवरे प्रविष्टः "तस्मादर्थमुपार्ज्जय प्रियसुहृत् चार्थेन सर्व्वे वशाः" ततउत्थित श्चापरः; शब्दो "नहि नहि ह्यर्थेन सर्व्वे-वशाः" अथचिन्तित मया अहो मुद्राशब्दस्यार्थ एवार्थः । "तस्माद-र्थमुपार्ज्जय प्रियसुहृत् ।" अर्थोपार्ज्जनस्य क उपायः ततः कियत्-कालं दैववाणीं विस्मृत्य "जनस्थाने भ्रान्तं कनक मृगतृष्णान्वित-धिया वचो वैदेहीति प्रतिपदमुदश्रुप्रलपित । कृतालङ्काभर्त्तु र्वदन परिपाटीषु घटना एवं कृत्वा ऽपि यदा "कुशलवसुता नत्वधिगता तदा सामरवाक् स्मृतावुदिता"नास्ति भो भवद दृष्टे मुद्रा प्राप्ति" रिति । तेन हि साम्प्रतं स्वयं निर्दिष्टः परिलोकयामि जगदन्तर्मु-द्रायाः प्रभावं । जगदन्तरवलोकनेन ज्ञानस्य यथा यथा वृद्धि र्भवति तथातथैव नञ्चाचाविनाक्यस्य प्रामाण्य मनु भूयते मुद्रैव जगतो वशीकरणौषधमिति । पठन्तिचात्र प्रचीन गाथाः ।—

"धनै र्निष्कुलीना; कुलीना भवन्ति,

धनैरापदं मानवा निस्तरन्ति

धनेभ्यो परो बान्धवो नास्ति लोके

धनान्यर्ज्जयध्वं धनान्यर्ज्जयध्वम् ।

दुन्दुभिस्तु सुतरामचेतन

स्तन्मुखादपि धनं धनं धनम् ।

इत्थमेवनिनदः प्रवर्त्तते

किं पुन र्यदि जनः सचेतनः ?

त्यजन्ति मित्राणि धनैर्विहीनं

पुत्राश्च दाराश्च सुहृज्जनाश्च

तमर्थवन्तं पुनराश्रयन्ति

अर्थोहिलोके पुरुषस्य बन्धुः ।

विशेषवार्त्ता

अहो । प्रथमतो विद्योदयस्य ग्राहक संख्या परिमितैव तत्रापि बहुभिर्मूल्य प्रदाने वदमुष्टिता वलम्व्यते सत्यमुक्तं खञ्जस्य पदं गर्त्ते तिपततीति । " भवतु भावि संख्या सु क्रमशस्तेषां नामो ल्लेखे प्रवृत्ता भविष्यामः ।

श्रीं Registered No. 12

# विद्योदयः

## (मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

---

खण्डं १० ] अक्टोबर १८८१ [ १० संख्या

---

सूची



लाहोरे

ऐल्वर्ट नमके यन्त्रे लालादित्तवागुराय नामधेयेन मुद्रितः

उनको को ही बोलावेगा। यदि देशकी दूरता और भाषाके प्र-भेदके कारण दूर स्थित बन्धु पर सन्देह होवे, और ऐसा सन्देह सदैव होताभी है, तो जबतक अच्छीरीति से निर्णय न होवे तब-तक उसकेसाथ बन्धु की न्याई व्यवहार नहीं करना चाहिए क्योंकि शास्त्रमें लिखा है कि यदि एकभी विज्ञात बन्धुका लाभ होवे तो उसकी सेवासे पितरोंका उद्धार होता है।

ततश्च शौनकः। दक्षिणां गुरवे दद्यात् यथाशक्ति द्विजोत्तम नृप राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम्। शूद्रः सर्व्वस्वमेवापि अशक्तस्वेद्दो यथाबलम्। राज्यार्द्ध मर्द्धराज्योत्पन्न मेकवर्षीयद्रव्यम्। प्रदद्यादर्द्धरा ज्योत्थ मेकवर्षाहृतम् धन मिति वृद्धगौतमस्मरणात्। उत्तममध्यमा-धम भेदेन वित्तानां सुवर्ण रजत ताम्राणा मिति ज्ञेयम्। शतत्रयं नाणकानां सौवर्ण मथ राजतं। प्रदद्यात् ताम्र मथवा उत्तमादिष्वव स्थयेति वृद्धगौतमस्मरणात्। सर्व्वस्वमेकवर्षं भृतिलब्धमिति यावत्।

शौनकने कहा कि पुत्रलेनेवाला यदि ब्राह्मण होवे तो अपने गुरुको यथाशक्ति दक्षिणा देवे,यदि राजा होवे तो एकसाल में अपने राज्यार्द्धके द्वारा जितना उत्पन्न होता है उतना साराही दक्षिणादेवे, वृद्धगौतमजीने भी एसा कहाहै कि "एकवर्षमें अर्द्ध राज्य से जितना उत्पन्न होता है उतना साराही दक्षिणा देवे। "वैश्यका मुख्य कल्प तीन सो सुवर्ण,(मोहर)दान,मध्यमकल्प तीन सो रुपैये और अधम कल्प तीन सो पयसे, और शूद्रको एकवर्षमें

जितना वेतन मिलेगा सबको दक्षिणा देना चाहिए। मूलसंस्कृतमें जो नाणक पद है उसका अर्थ मोहर।

तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः। अथ पुत्रपरिग्रहविधिं व्याख्यास्यामः प्रतिग्रहीष्यनुपकल्पयते, द्वे वाससी, कुण्डले, अङ्गुलीयकं, आचार्यं च वेदपारगं कुशमयं वर्हिः, पर्णमय मिध्म मित्यथ वन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि चागारमध्ये ब्राह्मण-वागालब्धेन उपविश्य पुण्याहं स्वस्ति ऋद्धमिति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे "पुत्रं देही"ति भिक्षेत ददानीतीतर आह तं,परिगृह्णाति धर्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामि इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधान-प्रभृत्यग्निमुखं कृत्वा पक्वा जुहोति यस्त्वा हृदाकीविणामन्यमान इति पुरोऽनुवाक्य मनूद्य यस्मैत्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत् प्रभृति सिद्धमाधेनुवर प्रदक्षिणां ददाति, एतेच वाससी एते कुण्डले एतच्चाङ्गुरीयकं यएवं लौरस उत्पद्यते तुरीयभागे सम्भवतीति आहस्म बौधायनः इति। एवमुक्तविध्यभावे परिगृहीतस्यतु विवाहोचितधनमात्रभागित्वं, नत्वंशभागित्वमिति वक्ष्यते।

तैत्तिरीय शाखानुसारियों केलिये बौधायनने ऐसी व्यवस्था की है पुत्र लेने वाला प्रथम दो वस्त्र, दो कुण्डल, एक अङ्गूठी, कुश, बर्हि, पर्ण इत्यादिवस्तुओंका संग्रह करे; वेदशास्त्रोंके पारंगत आचार्यको,

अपने बन्धु ओंको, और राजाको आमन्त्रण कर गृह वा सभाके बीच बैठावें। अनन्तर उनकी और उपस्थित ब्राह्मणों की अनुमतिसे बैठकर क्रमसे "पुण्याह" "स्वस्ति" और "ऋद्धि" वाचन मन्त्रों को पढ़ें; फिर "यद्देवयजनोल्लेख" प्रभृति मन्त्रोंसे विहित कार्य्यांका अनुष्ठान कर, देनेवाले के समीप जावे और कहे कि "मुझे पुत्र दे ओ" इसके पीछे देनेवाला कहे "मैं देताहूं" इसके अनन्तर लेनेवाला पुत्रको लेकर "तुमको धर्मकेलिये ग्रहण करताहूं" "तुमको वंशकी रक्षाके लिये ग्रहण करताहूं" इनमन्त्रोंसे वस्त्र और कुण्डलादियोंसे भूषितकरें और अग्निके समीप उसको लेजाकर चरु पकाके होमकरें और यथोक्तमन्त्र से दक्षिणा देकर क्रिया समाप्त करें। बौधायनने यहभी कहाहैकि,जो ऐसे नियम से नहीं गृहीत होता है वह लेने वाले का सम्पूर्ण अंश-भागी नहीं होता, उसे केवल विवाहमें जितना धन आवश्यक होता उतनाहि मिलता।

तथामनुः। "गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति"। एतेन दाढ्यर्थे दानादेव पुत्रत्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्ति र्दातृ-गोत्र निवृत्तिश्च भवतीत्युच्यते। तथाच गोत्रादिनिवृत्ते रेव दर्शनात्, संस्कुर्य्यात् स्वसुतान् पितेति स्मरणात् ग्रहणानन्तर सम्भाव्य माना एव दत्तकस्य संस्काराः प्रतिगृहीत्रा कार्य्या न पुनर्जनकेनकृत पूर्व्वा

अपि निवर्त्तनीयाः। एवमेनः शमं याति वीज गर्भ-समुद्भवमिति। चित्रं कर्म्म यथानेकै रङ्गै रुन्मोल्यते शनैः। ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधि पूर्व्वकै रिति वचन वोधितस्य तत्तत् क्रियातो वीजादि दोषनाशस्य ब्राह्मण्याधानस्य च जातत्वे न तदावृत्तौ प्रमाणाभावात्। अन्यथा अष्टौ संस्कार कर्म्माणि गर्भाधान मिव स्वयं। पिता कुर्य्यात्तदन्योवा तस्याऽभावेऽपि तत्क्रमादित्यनेन पुंसवन सीमन्तोन्नयनयो रपि करणापत्तेः। तच्चायुक्तं असांप्रदायिकत्वात्। किञ्च ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात् तत् पूर्व्व भाविषु प्रतिग्रहीतुरनधिकार एवायाति कालाभावात्। यदि च तत्पूर्व्व भाविनो ऽपि संस्कारा जनकेन न कृता स्युः वीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः। एवञ्च उपनयन मात्रकरणे ऽपि प्रतिग्रहीतुर्द्दत्तकपुत्रसिद्धिः। "अन्यशाखोद्भवो-दत्तः पुत्रश्चैवोपना-यितः। स्वगोत्रेण स्वशाखोक्त-विधिना स स्वशाखभागिति वशिष्ठ स्मरणात्। एतच्चाष्टमाब्दरूप तन्मुख्य कालाभ्यन्तरवर्त्ति परिग्रहे वोध्यं, अन्यथामुख्य काले ऽधिकारयोग्यत्वाभावे-गौणकाले अनधिकारान्न तत् सिद्धि-रिति।

मनुजीने कहा है कि "दत्तक पुत्र अपने जनक अर्थात् उत्पन्न करने वालेके गोत्र और धन को नहीं प्राप्त होगा, और उसदेनेवाले पिताका श्राद्ध भी उससे निवृत्त होगा, अर्थात् वहपुत्र उसका श्राद्ध न हीकरेगा" इसवाक्यसे यह जाना जाता है कि, दान करनेवाले के

धन और गोत्रमें दत्तक पुत्रका किसी प्रकार का सत्त्व (Right) नहीं रहता है क्यों कि दानके समयही उसका पुत्रत्व छूट जाता है अब यह आशङ्का होती है कि यदि दत्तक पुत्र अपने उत्पन्नकरने वाले पिताके गोत्र, धन और पिण्डसे रहित होताहै तो उसके(अपने प्रथम पिताके) किये हुए संस्कारसे भी रहित होजावे; इसके उत्तरमें कहाहै कि गोत्रादिकी निवृत्ति तो प्रत्यक्ष है, परन्तु "पिता अपने पुत्रों कोसंस्कृत अर्थात् शुद्ध करे" इसस्मृतिके वचन से यह सिद्ध हुआ है कि उत्पादकपिताके किए हुए संस्कारोंकी निवृत्ति नहीं होती है, किन्तु दानके अनन्तर होनेवाले संस्कार ग्रहण करने वालेपिताकेकरणीयहैं क्योंकि ग्रहणके पीछेहि उसका पितृत्व होता है प्रथम नहीं ।

इसमें हेतु यह भी है कि,उन् संस्कारोंमेंसे कोइ एक संस्कार ऐसे हैं कि जिससे गर्भ का शोधन होताहै और वीज वा गर्भका यदि कोई दोष (वा पाप) रहे उसकोभी निवृत्ति होती है, अपिच "जैसा नानाविध रङ्गके मिलापसे क्रमश: चित्रकर्म निष्पन्न होताहै कोइ तसवीर खेंचा जाताहै)ऐसा यथा विधि संस्कार कर्म्मोंसे क्रमश: ब्राह्मणकी भी उत्पत्ति होती है । " इसवाक्यसे उन् उन् कार्य्योंसे वीज वा गर्भके दोषोंका नाश और ब्राह्मण्य की जब एकवेर उत्पत्ति हुई तब पुनर्व्वार उनके करने में कोई प्रमाण नहीं; यदि ऐसा होवे तो " पिता आप वा उसके अभाव होनेपर कोई दूसरा

गर्भाधान को छोड़ क्रमसे आठ संस्कार भी करे" इससे पुंसवन और सीमन्तोन्नयन कर्म्मोंको पुनर्व्वार करना उचितसमझाजाता है परन्तु यह अयौक्तिक है और किसी सम्प्रदाय में ऐसा आचार नहीं। तथा ग्रहण के अनन्तर लेनेवालेका पितृत्व होता है। इसलिये ग्रहण के पहिले कर्त्तव्य संस्कारों में उसका अधिकार नहीं, हां यदि उत्पादकपिता से किसी प्रकार का संस्कार न किया हुआ हो तो बीज और गर्भसंश्लिष्ट दोषों को दूर करनेके लिये लेने वाले को चाहिए कि वह उनका सम्पादन करे; अत एव यह सिद्ध हुआ कि यदि लेनेवाला उपनयन मात्र करावे तोभी दत्तक पुत्र की सिद्धि होतीहै जैसा वशिष्ठजीने कहा अन्यशाखीय पुत्र को अपनी शाखोक्त विधिसे उपनीत करने पर वह अपनाशाखीय होताहै। इसविधानको भी मुख्यकाल विषयक समझना अर्थात् उपनयन का मुख्य काल अष्टम वर्ष है उसी के बीच यदि ग्रहण किया जावे तो लेनेवाले का उपनयन में अधिकार होता है अन्यथा नहीं क्योंकि मुख्य काल में यदि अधिकार न हुआ तोगौणकालमें कभि अधिकार नहीं होसक्ता।*

* आठ संस्कारकर्म्म-गर्भाधान, पुंसवन, सीमन्त, जात कर्म्म निष्क्रम, अन्नप्राशन, चूडा, यथा याज्ञवल्क्यः "गर्भाधान मृतौ पुंसः सवनं स्पन्दनात् पुरा, षष्ठे ऽष्टमे वा सीमन्तः प्रसवे जात कर्म्म च अहन्येकादशे नाम चतुर्थेमासि निष्क्रमः, षष्ठे ऽन्नप्राशनं नाम चूडाकार्य्या यथा कुलम्

अतच जनक प्रतिग्रहीत्रो रुभयो रपि पुत्राभिसन्धाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वं । विशेषो वक्ष्यते, यत्तु पुराण नाम्ना पठन्ति " पितुर्गोत्रेण यः पुत्रः संस्कृतःपृथिवीपते । आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः । चूडाद्या यदिसंस्कारा निजगोत्रेण वै कृताः दत्ताद्यास्तनयास्तेस्यु रन्यथादासउच्यते,यदि स्यात् कृत संस्कारो यदि वातीतशैशवः । गृहणे पञ्चमाद्वर्षात् पुत्रेष्टिं प्रथमं चरेदिति । तदमूलं । समूलत्वे ऽपि यज्जनकगोत्रेण चूडान्त संस्कार-संस्कृतस्य न गृहीतुः पुत्रत्वं,गृहीत्रैव चूडादि संस्कार करणे तत्; यदि च कृतचूडो ऽतीतपञ्चवर्षो वा गृह्यो भवति न तदा स्य पुत्रत्वं सम्भवतीतिच विवृण्वन्ति तन्न । अनुवादापत्तेः ।

पञ्चवर्षाभ्य-न्तरगृहीतस्याप्यु पनयनात् पूर्वं सकलशिष्टानु मोदित पुत्रत्वव्यवहारानुपपत्तेः तदानीं गृहीतरि मृतेतच्छ्राद्धान धिकारापत्तेश्च ।

इसदत्तक के प्रकरणमें यहभी अवश्य ज्ञातव्य है कि जब किसी एकपुत्र पर देनेवाला और लेनेवाला भी ऐसा अभिसन्धान करें कि इसमें दोनों का ही पुत्रत्व रहे उसपुत्र को 'द्व्यामुष्यायण' कहते हैं यह द्व्यामुष्यायण पुत्र उभयगोत्र भागी होता है । जोकिसीने कहा कि "हे पृथिवीपते जोपुत्र, चूडापर्य्यन्त अपनेउत्पादक पिताके गोत्रानुगत नियमों से संस्कृत हुआ, वह लेनेवाले का पुत्र नहि, होसक्ता । वह उत्पादक पिताकाहि पुत्र होता है

और चूडादि संस्कार यदि अपने अर्थात् लेनेवाले के गोत्र के निय मोंसे किए जावे तो दत्तादि की पुत्रत्व होताहै नहीं तो उनपुत्रों को दास कहते हैं। अर्थात् यदि पुत्रका चूडापर्य्यन्त संस्कार कर्म्म किया हुआ हो और उसका शैशव काल अतीत हुआ हो तो उसका ग्रहण नहीं होसता। क्योंकि यह नियम है कि पञ्चमवर्ष के पहि-ले ग्रहण करें और पुत्रेष्टि याग भी करें" इत्यादि। इसके उत्तरमें क हते हैं कि ये सब वचन असूलक हैं। और यदि किसीप्रकारसे समू लक भी हो तथापि उसका अभिप्राय ऐसा नहीं "कि उत्पादक पिता के गोत्रके नियमों से चूडादि संस्कार से संस्कृत हुए पुत्रसे लेनेवा-ले का पुत्रत्व नहीं होता किन्तु लेनेवाला यदि अपने गोत्र नियमों से चूडादि संस्कार करे तबही उस पुत्रमें लेने वाले का पुत्रत्व होता है। फिर यदि चूडादि संस्कार कर्म्म से संस्कृत और अतीत शैशव पुत्र को ग्रहण करे तो उससे लेने वाले का पुत्रत्व नहीं होता" ऐसी व्याख्यामें अन्तिम वचन प्रथम वचन का पोषक नहीं किन्तु अनुवादकमात्र होताहै। अत एव उन वचनों का ऐसा अभिप्राय नहीं, यदिपांच बरस के बीच ग्रहण का नियमहो तो समुद्रयष्टि लोगोंने जो उपनयन के पूर्व * ग्रहण काल का

* अष्टम वर्ष तक शैशवकाल, षोडश वर्षतक बाल्यकाल, वा पौगण्ड। यथा "गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सरात् शिशुः। बाल आषो डशाद्वर्षात् पौगण्ड श्चेतिकथ्यते।"

* ब्राह्मणों का उपनयन केलिये मुख्य काल ७ वर्ष ३ महीने, क्षत्रियों का १० वर्ष ३ महीने, वैश्यों का ११ वर्ष ३ महीने,

# वैयाकरणसिद्धान्तकौमुदी

अर्थात्:

महामहोपाध्याय श्रीभट्टोजिदीक्षित विरचित वृत्तिसहितं तद्दीयक्रमानुसृतञ्च, "पाणिनि" व्याकरणं, श्रीनागोजि—भट्टकृत लघुशब्देन्दुशेखर नामटीकया समलङ्कृतम्

प्रथम—खण्डम् *

श्रीवाटीवास्तव्य वणिग्वंशावतंस श्रीयुक्त बाबुपरमसुखचन्द्रमहो-दयस्य आनुकूल्येन श्रीहृषीकेश व्याकरणसरस्वतीकृतवङ्गीयानुवा-दसहितञ्च, कलिकाताराजधान्यां घोषमतीलेन्थ्ये १६ संख्यभवने सत्यग्रन्थालये श्रीविधुभूषण गङ्गोपाध्यायेन मुद्रितं प्रकाशितञ्च ।

सिद्धान्तकौमुदीवङ्गानुवादकेन महात्मनामधेयसाध्येनैतः पूर्व्वं बहूनि विद्योदयाङ्कैरपरैश्च महोदयैर्वङ्गानुवादसहित सिद्धान्त-कौमुदीग्रहणेच्छामस्मत् समीपे मकाश पत्राणि प्रेषितानि । परमेत कामनमस्यजानन्निर आमि "दृष्टो किञ्चिदनुपश्यता" मित्यन्तर्जि-ज्ञासमानैरीप्सासितं । अपिच कियत् पूर्व्वं मस्माभिःसिद्धान्तकौमु-दीस्थाःकतिचिदंशांश्चैवङ्ग भाषया व्याख्याय कलिकाता राजधानी स्थित संस्कृतविद्यालयाध्यक्षेभ्यः श्रीमद्भ्यो महेशचन्द्रन्यायरत्नेभ्यो प्रदर्शितास्ता: । जिज्ञासिताश्च ते महोदया एवं कृते को ऽप्युपकारो भविष्यति नवेति तत्स्तैकता, संस्कृतभाषया यद्यपं व्याख्या भवेत्

* द्वितीयसंख्यमप्यचिरस्वागतं जातम् ।

तद्दोपकारःसम्भवेदिति; संस्कृतभाषायां तथाविधव्याख्यावाहुल्य सद्भावादस्माकंसम्यगवकाशाभावाच्च नास्माकमुद्यमः सफलो जातः, ततश्च निरुद्यमाएव स्थिता वयम्। अत्रावसरे तथाविधान्यधिगत्य पत्राणि चिन्तितमस्माभिः कथमेष मनसि निगूढो ऽप्यर्थोवहुलीभूत-इतिसाम्प्रतन्तुपुस्तक मेतदवलोक्य दूरमपगताः सर्व्वे सन्देहाः जातास्माकमविततसमालोचने प्रवृत्तिः,

तथा विध समालोचनात् प्राक् ग्रन्थस्यास्य मुख पत्रस्य सम्यक् परीक्षणमुचितं प्रतिभाति; तथाहि तत्र—

"वैयाकरणसिद्धान्तकौमुदी"

अर्थात:

महामहोपाध्याय श्री भट्टोजिदीक्षित

—विरचितवृत्तिसहितं

तदीयक्रमानुसृतञ्च

"पाणिनि" व्याकरणम् ।

वयं तत्त्वबोधिन्यां "वैयाकरण-सिद्धान्त कौमुदी" पदस्येत्थमर्थंज्ञातवन्तः व्याकरणं विदन्तीति वैयाकरणाः; तत्सिद्धान्तानां कौमुदीयं प्रकाशिकेत्यर्थः शब्देन्दुशेखरेऽपि सिद्धान्त प्रकाशकत्वेनाति दुरूह ग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम् ।

अनेन वैयाकरणसिद्धान्तो विषयः तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुर

धिकारीत्यादि सूचितम् कलिकाता राजकीय-संस्कृत-पाठशालायाः भूतपूर्व्वाध्यापकैः श्रीतारानाथ तर्क वाचस्पतिभि रपि "वैयाकरण सिद्धान्तकौमुदी" पदस्यैव मर्थः स्वीकृतः। वस्तुतः सिद्धान्तकौमुदीयं न केवलं पाणिनीयव्याकरणस्य तात्पर्य्यार्थप्रकाशिकाकिन्त्वियंपाणिनीत आरभ्य भट्टोजि दीक्षित पर्य्यन्तं यावन्तोव्याकरणाचार्य्या जातास्तेषांसिद्धान्तानां प्रकाशिका तथैतेन्द्रचन्द्रादीनामपि व्याकरणविदां सिद्धान्तान् प्रकाशयति अपिच "महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचितवृत्ति सहितं तदीयक्रमानुसृतञ्चे"त्यत्रतदीयपदेन किंभट्टोजि दीक्षितस्याक्षेपः ? अथवातद्रचितायावृत्तेः ? उभयस्यापिसमासे गुणीभावात् तच्छब्दे नसहसमान रूप एव सम्बन्धोभवितुमर्हति।

ततश्च "पाणिनि" व्याकरणं—श्रीनागोजिभट्टकृत लघुशब्देन्दुशेखरनामटीकया समलङ्कृतम् "अत्रहि "गुणप्रधान सन्निधौ प्रधानस्य विशेषण साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्तः "इतिपरिभाषा वलेन "श्रीनागोजिभट्टेत्यादि विशेषण पदं पाणिनिव्याकरणेनसह सहजत एवान्वयं लभते; तच्चप्राकृतविरुद्धंयतोलघु शब्देन्दुशेखरं हि सिद्धान्तकौमुद्याष्टीकारूपं नतु पाणिनि व्याकरणस्य ।

ततश्च संख्या शब्दस्य स्त्रीलिङ्गत्वेन "प्रथमसंख्य" मिति पद मवश्यं पाणिनिव्याकरणस्य विशेषणत्वेनोपन्यस्तं ततःप्रथमसंख्यं पाणिनि व्याकरण मित्यनेन पाणिनि व्याकरणस्य संख्यान्तराक्षेपो भवति परं पाणिनिनैकमेव व्याकरणं विरचितम् , नतु वहूनि;तच्च

सन्धित्सूना च यदनुरूपं तथानुतिष्ठत । तथा तमवाङ्मनोगोचरं परं ब्रह्मसमुपतिष्ठध्वं । यं ममान्यास्तत्ववादिभि रूपतिष्ठन्ते परं-ज्ञानिनस्तन्यायानुवर्त्तनेन सदानुष्ठाणेन चाराधयन्ति ।

संक्षिप्तसमालोचनम्

श्रीचैत्र चित्र भारतकल्पद्रुमः कार्य्यकारणकाण्डं प्रथमखण्डं श्रीअनङ्ग मोहनगुहराय श्रीसुखमय वसुदेवाभ्यां प्रकाशितः । ढाका वाङ्गलायन्त्रालये श्रीलछमनवसाक् नामधेयेन मुद्रितः——वयं समधिक कृतज्ञहृदयेन पुस्तकस्यास्यावगतिं स्वीकुर्मः । पुस्तकमिदं वङ्गभाषया रचित मिति विद्योदये नास्य सम्यक् समालोचनं भवितु मर्हति तथाप्येतच्चित्रकरस्य श्रीचैत्र चित्रकरस्य विशेषानुरोधपरतन्त्रा वयं कतिचित् पदान्यनुकूलानि प्रतिकूलानि वात्रसमुपन्यस्तुं प्रवृत्ताः स्मः ।

अयथोचितादिमरसवह्नि नीरसैर्वा ऽपरिपक्वबुद्धिविरचितैः काव्योपन्यास निचयैः सं पूरिते वङ्गीय साहित्यागारे ढाकानगरीस्थितेन श्री काली प्रसन्नघोषमहोदयेन स्वकीयं दर्शनशास्त्रसाररूपं गभीरार्थं लेखनं प्रकाश्य वङ्गभाषाया जीवितं सुदृढ मिव कृतवान् । इदमपि पुस्तकं तल्लेखनरीत्याश्छायामात्रमवलम्ब्य रचितमतएवात्र वागाडम्बरस्ययादृक् प्राचुर्य्यं न तथार्थगौरवस्य । सन्त्यत्र वहूनि स्थानानि यत्र वयं पूर्व्वापरसम्बन्धज्ञान पूर्व्वक मर्थं न ज्ञात-वन्तः; अथवा सत्य मुक्तं स्वयमेवग्रन्थकृता पूर्व्वभाषे "गुणी गुणं वेत्ति न वेत्तिनिर्गुणः

बली बलं वेत्ति न वेत्ति निर्व्वलः । पिकी वसन्तस्य गुणं न वायसः करीच सिंहस्य बलं न वायसः" । नास्माक मेतस्य गुण ग्रहण योग्या गुणा विद्यन्ते यद्येतत्पुस्तकं वसन्तरूपेणोपकल्पितं तदा केवलं मालतीपुष्पाणि दृग्गोचरीभूतान्यस्माकं नतु चूतमञ्जरी तत एव वयं वायसा नतु पिकाः ।

श्रीरामस्तोत्रम्

( ९४ )

कृतात् पापात् भीतं चणमनुभविष्यत्फलचयात्
हरे त्राहि त्राहि त्रिजगदघसंघैक—दमन ।
स्वनाम्ना रामेणारुण—तनुजभीतिप्रहरण
हरे राम इत्यादि ।—

( ९५ )

समाहूतस्तात; सतत मवशीभूततनयैः
शृणोत्येष क्वापि क्वचिदपिच ताम् पश्यति सुतान् ।
दिवारात्रं रात्रिन्दिवमपि तथा ब्रूहिरसने
हरे राम इत्यादि ।—

( ९६ )

पिता पुत्रस्येव प्रबलममराधं हर मम,
यथा माता बालं प्रतिदिनममुं पालय विभो ।
सखेव त्वं सख्युः शमय मम दुःखं रमयच
हरे राम इत्यादि ।—

५६ प. शालङ्कृष्ण

श्री Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण मासिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विपदाम्बुजवारिणी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भी-लोकतत्त्वानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १० ] सितम्बर १८८१ [ ९ संख्या

सूची



लाहौरे

ऐल्वर्ट नामके यन्त्रे लालादित्तारामरा नामधेयेन मुद्रितः

जाना गया कि पार्व्वण में पितरोंका श्राद्ध प्रधान है और माता महों का श्राद्ध अप्रधान है। अर्थात् यदि कोई पितरों का श्राद्ध करे तो उसे मातामहोंका भी श्राद्ध करना उचित है, मातामहों का श्राद्ध पृथक् रूप से नहीं करना होता। फिर और एक नियम है कि "अमावस्यां क्षयो यस्य प्रेतपक्षे ऽथवा पुनः सपिण्डी करणादूर्द्ध्वं तस्योक्तः पार्व्वणोविधिः" यदि किसीका अमावस्या वा प्रेतपक्षमें मृत्यु होवे तो सपिण्डी करण के पीछे मृत्युतिथिमें उस का पार्व्वणश्राद्ध करना उचित है। परन्तु ऐसे पार्व्वणश्राद्धमें केवल पिता(बाप) पितामह,(दादा), और प्रपितामह (परदादा), इन् तीनोंको पिण्डदिया होता, मातामहोंका नहीं। अब देखो कि यदि अमावस्यामें किसीके पिता की मृत्यु तिथि होवे तो उस-पर दो पार्व्वण श्राद्ध पड़े हुए, एक पिताकी मृत्युतिथिके होने पर, दूसरा अमावस्याके कारण। ऐसे स्थलमें केवल बाप, दादा, और परदादा इन तीनोंका पिण्डदान से ही पार्व्वण श्राद्ध सिद्ध हो जाता फिर मातामहों तो पिण्ड देने के लिये पार्व्वण का आर-म्भ नहीं करना होता क्योंकि उनके श्राद्धको स्वतन्त्ररूपसे प्रवृत्ति न हो जहां पितरों का श्राद्ध होता है वहां उनका भी करना पड़ता। परन्तु इस स्थलमें पिताकी मृत्यु तिथि के होने पर बाप, दादा, और परदादा इन तीनों का श्राद्ध तो पहले ही किया गया फिर अमावस्या के कारण पार्व्वण की अपेक्षा नहीं है। इस प्रकार,जब

यह नियम है कि "स्त्री, स्वामिकी अनुज्ञासे विना दत्तक न लेवे न अपने पुत्रको दत्तक देवे" तो इससे यह जाना जाता है कि स्वामिके पुत्र बनाने केलिये हि स्त्रीकी प्रवृत्ति होती है, अस्मात् जब स्वामि का कोई पुत्र न रहेगा तबही स्त्री पुत्र ले सकेगी और यदि स्वामिका पुत्र रहे और अपना पुत्र न रहे तबभी दत्तक नहीं ले सकेगी क्योंकि उसके अपने पुत्रका अभाव, दत्तक ग्रहणमें प्रवर्त्तक नही है। यदि कहो ऐसी स्त्रीयोंका नरकादिसे उद्धार नही होगा ऐसाभी नहीं कहा जाता क्योंकि पूर्व्व कथित मनु और वृहस्पतिके वचनसे स्वपत्नी पुत्रमें हो उस स्त्री का पुत्रातिदेश होता है और स्वपत्नीपुत्रही श्राद्धादिकर उसस्त्रीका स्वर्गादि साधन करता है। स्वामिके वंशकी रक्षा ही मुख्य प्रयोजन है उससे विना स्त्रीका कोई अपना वंशनहीं और स्वपत्नी पुत्रके रहने पर स्वामिके वंशकीभी रक्षा होती है अब देखो कि स्वपत्नी पुत्रके रहनेपर अपना श्राद्धादि और वंश रक्षा इत्यादि समुदय पुत्रकार्य्य सिद्ध होताहै। अस्मात् स्वपत्नीपुत्रके रहनेपर स्त्रीको दत्तक ग्रहण किसी प्रकारसे उचित नहीं। परन्तु भ्रातृ पुत्र से यद्यपि श्राद्धादि पारलौकिक कार्य्य सिद्धहोता है, किन्तु उससे अपने वंशकी रक्षा नही होती है, इसलिये भ्रातृपुत्र के रहने परभी दत्तक लेना शास्त्रसिद्ध हुआ।

"ननु सति भ्रातृसुते तस्यैव पुत्रीकरणावश्यम्भावे यत्नैक एव भ्रातृपुत्र स्तनैव तदसम्भवः। "तत्रैकं पुत्रं दद्यात् [illegible]छ्छोयाद्वा इति

सन्तानाय पूर्व्वेषा"मिति वशिष्ठ स्मरणादिति चेन्न, "एतस्य द्व्यामुष्यायणेतरविषये सावकाशत्वात् द्व्यामुष्यायणे च हेतुवन्निगद दर्शित सन्ततिविच्छेदाभावात्, वेतालस्य च भैरव-पुत्र-पुत्री करणे पौराणिक लिङ्गदर्शनाच्च। यथा ततः कदाचिदुर्व्वश्यां भैरवो मैथुनं गतः। तस्यां स जनयामास सुवेशं नाम पुत्रकं। तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतं। ततस्तौ तेन पुत्रेण स्वर्ग्यां गति मवापतु रिति"।

अब यह आशङ्का होती है कि शास्त्रका अभिप्राय यह है यदि भाईका बेटा मिले तो उसी को ही दत्तक लेना अवश्य है परन्तु जहाँ भाईका बेटा एकही है उस स्थलमें उसे दत्तक लेना असम्भव है क्योंकि वशिष्ठ जीने कहा है "एक मात्र पुत्र को न दत्तक देवे न दत्तक लेवे" क्योंकि उसीसे पूर्व्व पुरुष के वंशकीरक्षा होती है। ऐसी आशङ्का सर्व्वत्र नहीं होसकी अर्थात् एकमात्र पुत्रको दत्तक नहीं देसका है वा लेसका है यह सत्य है, परन्तु दोनों मिलकर एकको द्व्यामुष्यायण बना सके हैं। और शास्त्रके वचनों के द्वारा द्व्यामुष्यायण पुत्रसे वंशरक्षाभी सिद्ध होती है और पुराण में भी ऐसा इतिहास है कि वेताल और भैरव दो भाई थे उनमें से भैरवने उर्व्वशी के गर्भ में सुवेश नाम पुत्र उत्पादन किया। फिर वेतालने भी उसे अपना पुत्र बनाया। उसके पीछे उसी एकपुत्र के द्वारा दोनों को स्वर्ग गति प्राप्त हुए।

अथ केन पुत्रो देय इत्याह शौनकः। "नैक पुत्रेण कर्त्तव्यं पुत्र-दानं कदाचन, बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः"। द्विपुत्रस्यापि पुत्रदाने अपर पुत्रनाशे वंश विच्छेद माशङ्क्याह बहुपुत्रेणेति। स्त्रियास्तु जीवति भर्त्तरि तदनुमत्या;प्रोषिते मृतेवा तदनुज्ञां वि-नाऽपि ; यथा वशिष्ठः। "न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्य-त्रानुज्ञानाद्भर्त्तु"रिति। अनुमतिश्च अप्रतिषेधे ऽपि भवति, अप्रति-षिद्धं परमत मनुमतं भवतीति न्यायात्। निरपेक्ष दानमाह याज्ञ-वल्क्यः "दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्"। तथा "माता पितृभ्यां दत्तो वा तयोरन्यतरेण वेति"।

अब किसी ने पुछा कि कौन मनुष्य पुत्रदान करसक्ता है इसके उत्तर में शौनकने कहा कि "जिसका एक मात्र पुत्र है वह कभी पुत्रदान नहीं कर सक्ता है, जिसके पुत्र बहुत हैं वही पुत्रदान कर सक्ता है"। जिसके पुत्र दो हैं वह यदि एकको दत्तक देवे फिर जि-सको अपने पास रखा था वह मरजावे तो वंशका लोप होवेगा,इस विचारसे कहाकि "जिसके पुत्र बहुत हैं वही दत्तक देसक्ता है।जि-स स्त्रीका स्वामी जीवित है वह स्वामीकी अनुज्ञा से अपने पुत्रको दत्तक देसक्ती है, और जिसका स्वामी चिरकाल के लिये प्रवासमें रहता है वा मरगया है वह स्वामीकी अनुज्ञाके विनाही दत्तक देसक्तीहै। जैसा वशिष्ठ जीने कहा है कोई स्त्री स्वामी की अनुम-ति से विना अपने पुत्रको दत्तक नहीं देसक्ती न किसी के पुत्रको

दत्तक लेसकी है। यहां यह ही जानना चाहिए कि यदि स्त्रीपर स्वामि का "तुम किसीके पुत्रको दत्तक न लेना वा आपने पुत्रको किसीको दत्तक न देना' ऐसा स्पष्टरूपनिषेध न रहे तो दत्तक देने वा लेनेमें उसकी अनुमति समझी जाती है। क्योंकि यह नियमहै कि यदि किसी विषयमें किसीप्रकारका निषेध नहो तो उस विषयमें उसकी सम्मति समझी जाती है। स्वामीकी अनुमति से विनाहि स्त्री दत्तक देसकीहै,इसपर याज्ञवल्क्यका भी वचन प्रमाण-है जैसा कि माता वा पिता जिसपुत्रको देता है उसे दत्तक कहते हैं। तथा माता पिता इन दोनों से वा उनमें से एकसे जो पुत्र दिया जाता है, उसकानाम दत्तक है।

अथ पुत्र परिग्रहविधिमाहशौनकः। शौनको ऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्। अपुत्रो मृत पुत्रो वा पुत्रार्थं समुपोष्य च। संग्रहं संग्रहणविधिं। उपोष्य ग्रहणात् पूर्व्वं दिने कृतोपवासः।

महर्षि शौनकने कहा कि "पुत्र ग्रहणमें ऐसा नियम कहताहूं। कि जिस का पुत्र उत्पन्न न हुआ हो वा उत्पन्न होकर मरगया है, वह पूर्व्व दिन उपवास करके दत्तक लेगा"।

इह गौतमः। "वाससी कुण्डले दत्वा उष्णीषञ्चाङ्गुलीयकं। आचार्य्यं धर्मसंयुक्तं वैष्णवं वेदपारगम्। कुशपर्णेन सम्पूज्य राजानञ्च द्विजान्" ब्रवीन्। राजा विप्रजाष्टले ग्रामस्वामिनम्। "वन्धूना इय सर्व्वांस्तु ग्रामस्वामिन मेववेति" स्मरणात्। द्विजानिति वहुत्वं

त्रिल-पर्य्यवसितं कपिञ्जलन्यायात्। द्विजानां पूजनं याचनार्थं। व-
र्हिः कुशमयश्चैव पालाशं चेध्म मेवच। एतानाहृत्य वन्धूंश्च ज्ञातिना
हृय यत्नतः। वन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः। अग्न्याधा
नादिकं तत्र कृत्वाज्योत्पवनान्तकम् दातुःसमक्षं गत्वा च पुत्रं देही-
ति याचयेत्। दाने समर्थो दाताऽस्मै योवच्चेनेति पञ्चभिः"। इत्यादिति
शेषः। वन्धूनात्मसाह्यपित्ववन्धून्। ज्ञातीन् सपिण्डान् तदाधानं दृ-
ष्टार्थम्। वन्धूनाहूतान् ब्राह्मणान् पूर्व्वंहुतान्। चकारात् आहूतान्
ज्ञातींश्च सम्भोज्ये त्यर्थः। तथा देवस्यत्वेति मन्त्रेण हस्ताभ्यांपरिगृ-
ह्यच अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि। वस्त्रादिभीरलङ्कृत्यपु
त्रच्छायावहं सुतं। पुत्रच्छाया पुत्रसादृश्यम् नियोगादिनास्वयमुत्पाद-
न योग्यत्वमिति यावत्। तथान्त्य गीतैश्च वाद्यै स्वस्ति शब्दैश्च
संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः। यस्त्वाहृदे
त्यृचाचैव तुभ्यमग्नेत्यृचैकया। सोमोददादित्येता भिः प्रत्यृचं
पञ्चभिस्तथा"।

वृद्धगौतमने कहाहै" वस्त्रयुग्म,कुण्डल, उष्णीष और अं-
गूठी देकर धर्म्मपरायण, वैष्णव और वेदपारग अचार्य्य को राजा
को और पवित्राचारब्राह्मणों को मधुपर्कसे पूजाकर" (पुत्रग्रहण-
कर्त्तव्य) राजा यदि अधिक दूरमें रहे वा अतिनीचजातीय होवे
तो ग्रामस्वामिका पूजन उचित है क्योंकि स्मृतिमें कहा है कि
अपने वन्धुओं को और ग्रामस्वामिको वोलाकर" (पुत्रग्रहणउचि-
त) कपिञ्जल "न्यायके अनुसार" "द्विजान्,' पवित्राचारब्राह्मणों को

पूजा, इसपदमें जो बहु वचन है उससे तीन संख्यामात्र समझना चाहिए *। पुत्रग्रहणमें सम्मति ग्रहणकेलिये ब्राह्मणों की पूजाविहित हुई है। फिर कुश, काश, पलाश की लेकडी, इनसबको इकटेकर, और बन्धु और ज्ञातियोंकी आदर पूर्व्वक बोलाकर, बन्धु, ज्ञाति और ब्राह्मणों को उत्तम अन्न खिलाना चाहिए। उसकेपिछे यथाविधि हवनादि करके दान करनेवालेके समीप जाकर "पुत्र देओ" ऐसी प्रार्थना करनी, इसके बाद दान करनेमें जिसका प्रकृत अधिकार है, ऐसादानकरनेवाला "यो यज्ञेन"इत्यादि पांच मन्त्रोंका पाठ करके पुत्र देगा। बन्धु शब्दसे अपने पितृबन्धु और मातृबन्धु यों को समझना औरज्ञाति शब्दसे सपिण्डोंको समझना। फिर ग्रहण-कर्नेवाला "देवस्यत्वा" इत्यादिमन्त्रसे हस्तद्वारा उसपुत्र को पक-

*कपिञ्जलन्याय—यथा श्रुतिमें लिखाहै कि "कपिञ्जलनालाभेत" कपिञ्जल अर्थात जलचर पक्षियों को लाभकर्नी, यहां कपिञ्जल शब्दमें जो बहु वचन है उससे तीन से लेकर परार्द्धतक का ज्ञान होता है इसलिये कितने कपिञ्जलों को लभना ऐसा निश्चय नहीं होता पहिलेभी इसका कुछ उल्लेख नहीं अस्मात् इसश्रुति का अप्रमाण्य होताहै। इसलिये मीमांसकों ने कहा कि "प्रथमोप-स्थिते स्तन्त्वात्" तीनका ज्ञान प्रथमही होता है इसलिये यहां तीन संख्या का ग्रहणकर्नी।

ड़कर "अङ्गादङ्ग" इत्यादि तीन मन्त्रों से उस के शिरपर आघ्राण-
लेगा। इससे अनन्तर उस पुत्र प्रतिनिधिको अच्छे वस्त्रादिसे भूषित करके नृत्यगीत और मङ्गलमन्त्र उच्चारण कर उसको अपने घरमें प्रवेश करावेगा और यथाविधि चरुबनाकर होम करेगा।

जैसा—

वृद्धगौतमः "पायसं तत्र श्राक्यञ्च घृत संयुक्त च होमयेत्।
प्रजा पते नत्वदेता मित्यु हिश प्रजापति मिति"

वृद्धगौतमने कहा है कि इस उक्त पायस के द्वारा होकर हवन करना चाहिए और "प्रजापते नत्वदेता" इत्यादिमन्त्रसे प्रजा-पतिके उद्देश्य प्रकार हवन भी करना।

निवेश्य निवेशन-वशिष्ठः। पुत्रं प्रति गृहीष्यन् बन्धू नाहूय राजनि निवेद्य निवेशन-स्य मध्ये व्याहृति भिर्हुत्वा अदूरबान्धवं बन्धु सन्निकृष्टमेव गृह्णी-यात्, सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत्, विज्ञायते ह्येकेन वहुं स्त्रायते इति। निवेशनं गृहम्। सन्देहे इति दूरावस्थित-बान्धवस्य अत्यन्त देशभाषाविप्रकर्षादिना कुल शीलादि सन्देहो सम्भवत्येव, तथात्वे तन्निर्णयपर्य्यन्तं न व्यवहरेत् तत्र हेतुरेकेनेति।

वहून् पित्रा-दीन्। एतदन्यतरविधि रावश्यकः।

वशिष्ठ जी ने कहा है कि "पुत्रलेनेवाले मनुष्यको चाहिए कि अपने बन्धुओं को बोलाकर और राजाको कहकर गृहके बीच व्याहृतिकेद्वारा हवन करो जोबन्धु समीप में रहते हैं

ओरिएण्टल कङ्ग्रेस ॥

साम्प्रतं हि प्राच्यभाषा निचयाभिहित शास्त्रतत्त्वनिपुणानां यूरोपीय विद्वज्जनानां परमोत्साहेन ओरिएण्टल-कङ्ग्रेस नाम्नी कापि सभा संस्थापिता तत्र हि विविधजनपदादागतानां विविधशास्त्रीयगूढार्थ दर्शिनां महामहोपाध्यायानां पण्डितानां घोरान्धतमः-समाच्छन्न-प्राच्यदर्शनेति हाससाहित्यज्योतिर्विज्ञानादिशास्त्र विषयकं प्रजल्पनं जायते।

साच सभा प्रतिवर्षं मधिवेशनस्थान-परिवर्त्तन मधिगच्छति। अस्याः प्रथम मधिवेशनं लण्डन नगरे समभवत्, अस्मिन् वर्षे वार्लिन नगरे ऽस्याः समधिवेशनं जातम्

तत्र समामन्त्रितानां भारतीय पण्डितानां मध्ये उक्तरोप नामा वरहमपुर-निवासी प्रसिद्धभूम्याधिकारी विविध-शास्त्र तत्त्वज्ञः श्रीरामदाससेनमहोदयः कयाऽपि कारणपरम्परया स्वयं सभामधिरोढुमक्षमः संस्कृतभाषाविरचितया निम्नलिखितया सुगीतिकया सभामुपस्थितवान्।

वयं पूर्वमस्मिन् पत्रे तस्य प्राचीनतत्त्वानुसन्धानस्यबहुश स्तुतिं कृतवन्तः साम्प्रतन्तु तस्य सुललित-संस्कृत भाषानिवद्धां गीतिका मालोक्य चेतो ऽस्माकमतीवगभीरानन्द-सागरे निमग्नं न किमपि वक्तुं शक्नोति तत्स्तामेव गीतिका मत्र निवेशयामः पाठकाः स्वयमस्या गुणान् विचारयन्त्विति !

( १ )

आर्य्याणां शास्त्र गुर्वी विविधबुधगणै र्व्यापीनी विश्ववन्द्या,
यासीदर्थे दुरापा पर-नरपतिभिः चानवीरैः प्रपाल्या।
सा दीना भूमिरेषा यवन नृपहतैः शास्त्ररत्नै र्विहीना
भूत्वाप्यद्यैव विद्वद् गुणि गणगणनारम्भ-मुख्या विभाति।

( २ )

वाल्मीकिः कालिदासः कविकुल तिलको विश्वविख्यातकीर्त्तिः
श्रीश्री व्यासो महात्मा निखिल कविगुरुर्भारते ऽद्यापि भाति।
येषां कीर्त्तिः पताका भुवन-परिसरे स्वेच्छयोड्डीयमाना
धन्यास्ति क्षौणिरेषा वदधि-करणका नीतजन्मान एते।

( ३ )

मातर्भारतमेदिनि! त्वमसी विश्राम्यतां साम्प्रतं,
मारोदीस्तव सूनवो ऽस्तमिता व्यासादयः पण्डिताः।
येषां कीर्त्तिकलाप कीर्त्तितगुणा लोकेषु कर्णोत्पलं
सत्ताम्भोनिधि—पारिणामपि सतां पाण्डित्य—जन्मस्थली,

( ४ )

संसत्स्यादि युरोप वासिन भुवि प्राच्यार्य्य—शास्त्रार्थिका
कङ् ग्रेस-सा कथिता सतां शुभकरी विद्येव शास्त्रोज्ज्वला।
विद्योद्यान लता नुवा मुकुलिता वक्तृत्वमुक्ताफलै
गुंञ्जद् भृङ्ग सुसभ्य सङ्घ मिलिता प्रामोद पुष्पाकुला।

( ५ )

योऽसौधन्यो विशेषस्तुतगुणनिकरो यश्च विख्योगुणौघैः
श्रीलश्रीमोचमुलारुपहसित गुरुर्वेदविद्यास्वभिज्ञः ।
श्रीविन् फोविवरोवा जगदखिलजन प्रीति—पारीणकर्म्मा
सर्व्वे सभ्या भवेयु र्गवरनटि स्वथाः पण्डिता यत्र योज्याः

( ६ )

वार्त्तामेतां निपीय श्रवणमधुमयीं भारतास्त्वार्थ्यमिश्रा
गाहन्तां प्रीतिसन्धौ निजजनन भूलु प्ररागोदयान्धाः ।
कुर्व्वन्तां धन्यवादं जगदुपकृतये प्रीतये कोविदानां
वर्द्धन्तां ज्ञानवृक्षाः कृपणजनमनः-सूषरेषु प्ररूढाः ॥

( ७ )

गोष्ठी प्राच्यैर्गरिष्ठासुरगुरुसदृशैः पण्डितैर्मण्डिता या
तस्या माह्वयमानो लघुरपि महतां मानमस्मि प्रयातः ।
प्रत्यूहे व्याहता मे गतिरिति नितरां दुःखितं मां क्षमध्वं
मेनः श्रीरमदासो विनयपरिणतो दूरतो याचते ऽद्यः ।

संक्षिप्तसमालोचनम्

आनन्द कादम्बिनी.मासिकपत्रिका—कर्म्म.धर्म्म, व्यवहार,नवीन, प्राचीनाचार व्यवहार, सभ्यता,वाणिज्य,कृषि राजनीति,नियम,प्रजादेश दशाविवृति, दृश्य श्रव्य काव्यसमाचार,प्रेरित सम्पादकीय प्रस्तावेतिहास, परिहास,समालोचनादि विविधविषय नारि

विन्दु भरितबलहकावली—ह्जापुरनगरे हिन्दी भाषायां प्रकाश माप्नोति, वयं सर्व्वदा सव्वान्तिः करणेन हिन्दी भाषायाः समुन्नतिं कामयेमहि । अस्याः समुन्नत्या सह भारतस्यापि मभ्युन्नतिर्भविष्यतीत्यस्माकं निश्चयोवत्तते । भारतीयतत्तत्प्रदेशविशेषु प्रचलितास्वपि भिन्नरूपासु भाषासु सर्व्वत्रैव प्रदेशे तत्रत्यैर्जनैर्हिन्दी भाषा नाम सम्यगनुभ्यते कथ्यतेपि बाध्यते च । हिन्दी भाषा नाम भारतस्य साधरणी भाषा तत एतस्याः समुन्नती भारते सधारणी समुन्नतिर्भविष्यतीत्यत्रास्ति न कोऽपिसन्देहः ।

आनन्दकादम्बिन्या मुखपत्रे यादृग् घनगभीर दीर्घगर्ज्जनं श्रूयते, यद्यप्यस्या अभ्यन्तर-वारि विन्दवो न तथा हृदयानन्द प्रवाह-प्रवर्त्तकाः ; तथापीयं पद्यनाम घेयान् बहून् मधुरविन्द-नन्तर्दधाति ।

यथा———मलहार———

घनश्याम धाम नहीं आये, छाये घनश्याम गगन घुमडत, गरजत तरजत जल बरस बरस । टे । जीगनगन जोतिजुरी जामिन, दसह्रं दिसि दुति दमकत दामिन, हिय हरणहरत विरही कामिन, मनमलिन होत दुति दरस दरस ? इत्यादि ।

श्रीरामस्तोत्रम्

( ८१ )

महारत्न ग्रैवेयक—तरलयुग् हाररमण
सुचारुश्रीवत्साङ्कित महदुरः कौस्तुभमणे,
वृहद् वाहुश्रीदाङ्गदमणि महत् कङ्कनमणे,
हरे राम इत्यादि । —

( ८२ )

न वक्तैसाभ्रातं रुचिरमपिरत्नं सुरुचिरम्
भवद्गात्रे येस्थं जनक तनया सा सुरुचिरा ।
जगत् सौन्दर्य्यैकस्थलविमल-नीलप्रभतनो
हरे राम इत्यादि । —

( ८३ )

तटे श्रीकालिन्द्या वट विटपिमूले नटवरो
वरःश्रीगोपीनां भव वरद आभिर्वरतनो
मुरारे कंसारे त्रिभुवन जन व्यसनहरे
हरे राम इत्यादि । —

( ८४ )

सुवर्णाभ श्रीमद्रुचिरवर कौषेय वसन
महामाणिक्यादिग्रथितविलसत् मञ्जुलकटे ।
सदामाभैर्माभैः क्वणितमणिमञ्जीरचरण
हरे राम इत्यादि । —

( ८५ )

स्तवस्तोत्योग्यः श्रुतिशुचिमतीनामपि यदा
यदि स्याः श्रोतव्यं त्वभिलषितदाता सुतपसाम् ।
तथाऽपि त्वां याचे व्रतमभयदानं तव वचो
हरे राम इत्यादि—

( ८६ )

गभीरे संसारार्णव भवदगर्त्तेऽतितिमिरे
पतन्तं संभ्रान्तं विषमभसद्भावं हतगतिम् ।
कटाक्षेण क्षीणं कलुषजलमग्नं करुणया
हरे राम इत्यादि—

( ८७ )

सरिन्नीरं पक्षी पिबति सततं भूरसमपि
तरुस्तेन क्षैण्यं न च भवति कूल्यान सरितः ।
तथा का ते हानि भुवनजन संपालन विधौ
हरे राम इत्यादि—

( ८८ )

यथा मर्त्येस्तत्तु जलनिधिमग्नाः करपदै-
र्यथाव्यङ्घ्रिः शैलं खमपि च यथाऽपक्ष विहगः ।
तथा दुःखाम्भोधिं सुजनरहितं पापसहितं
हरे राम त्राहि त्रिभुवन गुरो ! "मामगतिकम्" ॥

श्रीं Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम्।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि॥

खण्डं १० ] अगस्त १८८१ [ ८ संख्या

सूची



लाहौरे
एक्सर्ट नामके यन्त्रे लालादिलबागराय नामधेयेन मुद्रितः

## विज्ञापनम् ॥

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृतप्रकाशि य नामधेयं प्राकृतभाषाव्याकरणं महाकविवररुचिविरचितं विद्योद सम्पादकसंगृहीत—विविधोदाहरण—सहितमचिरेणैव काले खण्ड् मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिन-लाषः प्रकाशनीयः। विद्योदय कार्य्याध्यक्षः लवपुरे॥

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ संस्कृत पाठशालान्यतमाध्यापक पण्डितश्रीसुखदयालु विरचिता मूल्यं।)

---

### मूल्यादीनां नियमः।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।‌॰

" पश्चाद्देयं ... ... ... ३।‌॰

(प्रत्येकखण्डं।॰ परिमितमूल्येन प्राप्तव्यम्।

विज्ञापनस्य प्रत्येकपंक्तिः/॰ परिमितमूल्येन मुद्रिता भविष्यति।

### नूतनपुस्तकम्।

छन्दोबोधः (संस्कृतहिन्दीभाषारचनोपकारी ग्रन्थोऽयंसुगम हिन्दीभाषायां लिखितः लवपुर (लाहौर) स्थित मेहरचांद नाम-धेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष कार्य्यालये (रेजिष्टार्'स अफ़िस, पञ्जाब यूनिवर्सिटी कालेज प्राप्तव्यः। कवितावली—(अत्युत्तमकविताग्रन्थः) मूल्यं।)

अस्मत्समीपेप्राप्तव्या।

जाति से सादृश्य न रहे किन्तु जिसमें कुलके अनुरूप गुणों का सादृश्य रहे उसको भी पुत्र बना सक्ता है। इससे तादृश गुण युक्त क्षत्रियादि विजातीय भी ब्राह्मणका पुत्र होसक्ता है। इस्का अभि प्राय यह है कि जिस ब्राह्मण का औरस पुत्र उत्पन्न न हुआ, वह क्षात्रयादि, भिन्न जातीय से पुत्र ग्रहण कर सक्ता है। यद्यपि उस पुत्र के भिन्न जातीयत्व होने से वह श्राद्ध, तर्पणादि क्रियाका अयोग्य होता है; तौभी उस्से नामसङ्कीर्त्तन रूप प्रयोजन की सिद्धि होने से उस्का पुत्रत्व शास्त्र सिद्ध है, परन्तु ऐसे पुत्रसे केवल नाम सङ्कीर्त्तन रूप अल्पमात्र उपकार की प्राप्ति होती है, इस लिये ऐसे पुत्रको केवल ग्रासाच्छादन मिल सक्ता है। जैसा कात्यायनने कहा है कि असवर्ण अर्थात् भिन्न जातीय पुत्र केवल ग्रासाच्छादन भागी होते हैं।

तथा शौनकः। "यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्; अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हितत्"। याज्ञवल्क्योऽपि "सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते नतु विजातीयस्य पुत्रत्वं निषिद्धम्"।

शौनक ने कहा कि यदि भिन्नजातीय पुत्रदत्तक रूपसे गृहीत हुआ हो तो उस्को किसी प्रकारसे अंश भागी न करें, शौनक ऋषिका यहही मत है। याज्ञवल्क्यने भी कहा है सजातीय दत्तक पुत्रके श्राद्ध कर्तृत्व और अंश भागित्व विहित होने पर यह नहीं

सिद्ध हुआ कि भिन्नजातीय को पुत्ररूपसे ग्रहण करना निषिद्ध है।

व्यक्तमाह वृद्धयाज्ञवल्क्यः। "सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थ भाक्। तदभावे विजातीयो वंशमात्र करः स्मृतः। ग्रासाच्छादन मात्रन्तु लभते स तद्रिक्थि न" इति।

वृद्धयाज्ञवल्क्यने स्पष्ट करके कहा कि प्रथम समान जातिसे पुत्र ग्रहण उचित है और वही पुत्र श्राद्ध-कर्त्ता और धन-भागी होता है, परन्तु यदि समान जातियोंमें से पुत्र न मिले तो भिन्न-जाति से पुत्र लेवे, वह पुत्र केवल वंशकी रक्षा करता है अर्थात् वह न श्राद्ध कर्त्ता न धन भागी उसे केवल ग्रासच्छादन मिलता है।

"वस्तुतस्तु मनुवचने सदृश पदस्य सजातीयार्थकतैव युक्ता परत्र तादृश दत्तकस्य विभागदर्शनात् असवर्णस्य विभागासम्भवात्"।

वस्तुतः मनुके वचन में जो सदृश पद है उसका अर्थ समान जातीय ही है क्योंकि पीच्छे उसकेलिये धनका अंशभी निर्दिष्ट हुआ है, यदि विजातीय होता तो ऐसा न होता क्योंकि किसी के मतमें विजातीयदत्तक अंश भागी नहीं होता।

"दौहित्रो भागिनेयश्चेति दौहित्र भागिनेयनिषेधः शूद्रातिरिक्त विषयः। तथा च शौनकः। क्षत्रियाणां सजातौ च गुरुगोत्रसमेऽपि वा वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिषु। सर्व्वेषामेव वर्णानां जातिष्वेव न चान्यतः। दौहित्रो भागिनेय स शूद्रैस्तु क्रियते सुतः। ब्राह्मणादि त्रये नास्ति भागिनेयः सुतः क्वचित्"।

पहिले जो "दौहित्र और भागिनेय को छोड़कर भिन्न गोत्रसे भी दत्तक लेसक्ता है" इस वाक्यसे दौहित्र और भागिनेय को दत्तकरूपसेलेना निषिद्ध किया गया, वह निषेध शूद्र केलिये नहीं; शूद्र उनको भी दत्तक लेसक्ता है। जैसा शौनकने कहा है कि, क्षत्रिय से तथा अपने साथ जिनका गुरु गोत्र एक है उनसे दत्तकलेवे; ऐसा वैश्यादि अपर समुदय वर्ण भी अपनी अपनी जातिसे ही दत्तक लेवे दूसरी जातिसे नहीं । शूद्रलोग दौहित्र वा भागिनेयकोभी दत्तक लेसक्ते हैं । ब्राह्मण, क्षत्रिय, वैश्य ये तीन कभी वहिन के बेटे को दत्तक नहीं ले सक्ते हैं।

"गुरु गोत्र समेऽपि वे" ति क्षत्रियाणां प्रातिस्विकगोत्राभावात् "गुरुगोत्र निर्देश: । "पौरहित्यान् राजन्य विशां प्रहणीते" ति सूत्रेण तस्य पुरोहितगोत्रभागितयोक्तेः ।

यहां यह जानना उचित है कि, ब्राह्मणोंकाही केवल अपना गोत्र होता है क्षत्रियादियों का अपना गोत्र नहीं होता जो गोत्र उनका गुरु वा पुरोहित का है वही उनका गोत्र होता है।

"जातिष्वेव न चान्यत" इति नियमः सजातीय सम्भवे विजातीय निषेधार्थः अन्यथा प्रागुक्त कात्यायन विरोधः स्यात्" ।

ऊपर जो नियम किया गया कि "अपर समुदय वर्ण भी अपनी अपनी जाति से दत्तक लेवे दूसरी जातिसे नहीं" इसका अभिप्राय यह है कि जब तक सजातीयों में से दत्तक मिलसक्ता

तवतक भिन्नजातीयोंमें से न लेना चाहिए । ऐसा अभिप्राय न होता तो कात्यायनने जो कहा "असवर्णास्तु ग्रासाच्छादन भागिनः" इस वचन से विरोध होता । *

"तत्रापि सन्निहित सपिण्डेषु सति भ्रातृ सुते सएव पुत्रो कार्य्य इत्याह मनुः । सर्व्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् । वृहस्पतिः यद्येक जाता वहवो भ्रातरश्च सहोदराः । एकस्यापि सुते जाते सर्व्वे ते पुत्रिणः स्मृता इति । अत्र वचन द्वये ऽपि भ्रातृ सुते च पुत्रप्रतिनिधितया कथञ्चित् सम्भवति अन्यो न प्रतिनिधिः कार्य्य इत्यवगम्यते । नचा पत्य सुत्पादयितव्यमिति नित्यो ऽयं विधिः स यथा-कथञ्चित् पालनीयस्तत्र भ्रातृव्ये पुत्रातिदेशेन तत् फलस्य पिण्डोदकादे रलोकतापरीहारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्ति रतएवाकृतस्यैव भ्रातृ पुत्रस्य पुत्रत्वं । "अपुत्रस्य पितृव्यस्य तत् पुत्रोभ्रातृजो भवेत् । सएव तस्य कुर्व्वीत श्राद्धपिण्डोदकक्रिया"मिति वृहत् परा शर स्मरणात तस्मिन् सति तु न दत्तकाद्युपादान मिति वाच्यम् । भ्रातृव्यस्य पुत्रातिदेशेनालोकतापरिहारादि साधकत्वे ऽपि नाम संकीर्त्तनोचित वंशकरत्वानुपपत्त्या तदर्थं तदुपादनस्या वश्यकत्वात्, किञ्च इदं हि वचनद्वयं सति भ्रातृपुत्रे न दत्तकाद्युपादाननिषेधकं

* केवल कात्यायन का नहीं याज्ञवल्क्य का भी "सजातीयः सुतोग्राह्यः इस" वचन से विरोध होता ।

परन्तु श्राद्धादि कर्तृत्वरूप पुत्रधर्म्मातिदेशकं ; अन्यथा सत्यपि भ्रातृपुत्रे क्षेत्रज-पुत्रोत्पादन-विधिविरोधापत्तेः । "अक्षता वा क्षता वाऽपि यं विन्देत् सदृशात् सुतं । पौत्रीमातहस्तेन दद्यात् पिण्डं हरेद्धनं" मितिवचने दौहित्रेऽपि पौत्राति देशसत्त्वात् दौहित्रसत्त्वेऽपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च ।

मनुजी के अनुसार यदि भाइका बेटा हो, तो समुदयसपिण्डों में से पहिले उसी को ही पुत्र बनाना चाहिए क्योंकि मनुजी का वचन यह है, कि समुदय भाइयों में से यदि किसी एक का पुत्र होवे, तो समुदय भाइ को उसी पुत्रसे ही पुत्रवान् समझना चाहिए । बृहस्पतिने भी कहा कि एक मनुष्यके पुत्रोंमें से यदि कोइ एक पुत्रवान् होवे, तो उसीसे हि सारे पुत्रवाले होते हैं । मनु और बृहस्पति के वचनों से यही सिद्धहुआ कि किसी प्रकारसे भाइके बेटा विद्यमान होनेपर और किसीको पुत्र प्रतिनिधि न करें । किसीने कहाकि सबकोहि अपत्य उत्पादन करना उचित है । यह नित्य विधि किसी प्रकार पालनीय है । भाइके बेटे में पुत्रका अतिदेश अर्थात् उसे पुत्ररूप समझलेने पर पुत्र का कार्य्य पिण्डादिदान अथवा नरक से उद्धार इत्यादि समुदय कर्म्मही सिद्ध होता है, इसलिये और दूसरे को पुत्र बनानेमें प्रवृत्ति नहीं करनी; और यथारीति पुत्र न किया हुआभी भाइका बेटा पुत्र कार्य्य कर सक्ता है । क्योंकि बृहत् पराशर में लिखा है कि, पिताका भाई

यदि पुत्र हीन होवे तो भाइका बेटाहि उसीका पुत्र है और वही उसकी पिण्डोदकादिदान-रूपक्रिया कर सक्ता है, अस्मात् भ्रातृ-पुत्र होने पर दत्तकादि ग्रहण नहीं करना चाहिए। ऐसा कहना युक्ति युक्त नहीं है क्योंकि यद्यपि भ्रातृपुत्रसे पिण्डादि दान और नरकसे उद्धार इत्यादि पितृकार्य्य सिद्धहोता है, तथापि नाम संकीर्त्तन और वंश रक्षादि प्रयोजनकी सिद्धि केलिये दत्त-कादि ग्रहण सर्व्व प्रकारसे उचितही है। परन्तु ऊपर कहे हुए मनु और पराशर के वचन, भ्रातृपुत्र केरहने पर दत्तकादि-ग्रहण का निषेधक नहीं किन्तु उनसे यह जाना जाता है कि पुत्र की न्याई भ्रातृपुत्र भी श्राद्धादि क्रिया कर सक्ता है। यदि ऐसा न होवे तो भ्रातृपुत्र रहने पर क्षेत्रज पुत्रोत्पादन में जो विधि है वह असङ्गत होता। और देखो "समान जातीय पति से कन्यामें जो-पुत्र उत्पन्न होता है उसीसे मातामहको पोतो अर्थात् (पोतावाला) समझना चाहिए, क्योंकि वही कन्याका पुत्र पिण्ड-दाता और धन भागी होता है"। इस वचन का तात्पर्य्य भी यह है कि दौहित्र वास्तवसे पौत्र नहीं होता किन्तु पौत्रकी न्याई श्राद्धादि करसक्ता है। यदि ऐसा न होता तो दौहित्रके रहने पर दत्तक लेनेका वि-धनही उचित न होता।

"ननु सत्यपि भ्रातृ पुत्रे दत्तकाद्युपादानस्य शास्त्रीयत्वे-वक्तव्ये वासिष्ठपद्योना मेव एव विधिः स्मृत इति कथमति वचने"।

"सर्व्वासा मेकपत्नीना मेकाचेत् पुत्रिणी भवेत् सर्व्वास्ताम्तेन पुत्रेण प्राह पुत्रवतीर्म्मनु" रिति मनु वचने च सपत्नी पुत्रे पुत्रधर्म्मातिदेशेन सत्यपि तस्मिन् दत्तकाद्युपादान मखिलितिचेन्न यथा तप्ते पयसि दध्यानयति सा वैश्व देव्यामिक्षा भवति, वाजिभ्योवाजिन मित्यत्रामिक्षायाँ प्रवृत्तस्योद्देश्यो भूतामिक्षापचारे आमिक्षा पुरुषं प्रवर्त्तयति नतु वाजिनं अनुद्देश्यत्वेनाप्रयोजकत्वात्, यथा वा पितुः क्षयाहे पित्रादित्रिकस्य पार्व्वणे कृते मातामहादिश्राद्धाय न पुनः पार्व्वणारम्भः तस्य पितृश्राद्धाधीनप्रवृत्तेः। तथाऽत्राऽपि भर्त्तृराज्ञाशास्त्रेण तत् पुत्रोत्पादानाय प्रवृत्तायास्तत् पुत्राभाव एव तदुपादानं नतु तत्पुत्रानपचारेऽपि स्वपुत्रापचारे तदुपादानं तत् प्रवृत्तेरप्रयोजकत्वात्; तत्रालोकतापरीहारोऽस्या न स्यादिदित्यपेक्षायां मनुवृहस्पति वचनद्वयं; सपत्नी पुत्रे पुत्रातिदेशेनालोकता-परीहार श्राद्धोपपादकं भर्त्तृवंशसन्तरेण चास्या वंशान्तरासम्भवेन सति सपत्नीपुत्रे न दत्तकाद्युपादानं भ्रातृपुत्रस्य तु वंशकराभावेन सत्यपि तस्मिनुपादीयन्ते दत्तकादय इत्येतावान् परं विशेषः।

अब यह आशङ्का होती है कि जैसा भ्रातृपुत्रके होनेपर भी दत्तक लेना शास्त्रसे सिद्ध हुआ, ऐसा "यदि एक पुरुष की वहुत स्त्री हों, और उनमें से किसी एकका पुत्र उत्पन्न होवे तो मनुने कहा है कि उसी पुत्रसे सारी ही पुत्रवाली होतीं हैं"

वृहस्पतिने भी ऐसा कहा है। तो पूर्व्वोक्त रीतिसे, अर्थात् जैसा भ्रातृपुत्रमें पुत्र धर्म्मका अतिदेश स्वीकार कर उसके रहने पर भी दत्तक लेना शास्त्रसिद्ध हुआ, ऐसा उक्त सपत्नी पुत्रके रहने परभी दूसरी स्त्री जिसका पुत्र नहीं हुआ वह दत्तक लेवे; । यह शङ्का कुछ कामका नहीं क्योंकि "गरम दुधमें दही डालने से जो आमिक्षा उत्पन्न होती है वह विश्वदेवको दीजाती है ; और उससे जो जल (वाजिन) निकलता है वह उनके घोड़ें को दिया जाता है, इस स्थलमें जैसा आमिक्षा केलिये पुरुष की प्रवृत्ति है, इस कारण आमिक्षा उद्देश्यीभूत अर्थात् प्रधान है और उस आमिक्षा के अपचार अर्थात् किसी प्रकारसे सदोषता होने पर मनुष्यको फिर आमिक्षा बनना पड़ता है ; किन्तु उस आमिक्षासे निकले हुए जलकी सदोषता होने पर उस जलको प्रस्तुत नहीं करनी होता क्योंकि जल अप्रधान है इसलिये इसको बनानें में स्वतन्त्र रूपसे प्रवृत्त होना कुछ आवश्यक नहीं। ऐसाही अमाव स्यादि पर्व्व तिथिमें पितरोंका पार्व्वणश्राद्ध करना शास्त्र सिद्ध है; पार्व्वणश्राद्ध में केवल अपने बाप, दादा, और परदादे कों पिण्ड नहीं दिया जाता किन्तु मातामह, प्रमातामह, और वृद्ध प्रमातामहों को भी पिण्ड देना होता है क्योंकि यह नियमहै कि "पितरो यत्र पूज्यन्ते तत्र माता महाध्रुवम्" जहां पितरों को पूजा होती वहां मातामहों की पूजा अवश्य ही चाहिए । इससे यहभी

॥ श्रीगणेशायनमः ॥

"छित्वा ज्वालामभिमतरसां रेवतीलोचनांका" मिति पद्यादनंतरं केरलीयेन शंकरसोमयाजिपुत्रेण सदाशिवब्रह्मणा प्रक्षिप्तानि पद्यानि लिख्यन्ते ॥ लक्ष्मीतीर्थे प्लवनविमलः क्षेत्रतोस्मात्प्रतीचीं क्रोशान् कां-श्चित् द्रुततरगतिः शीलयन् भाग्यशालिन्। अध्याविद्धां द्युतिमथ घन प्रागुदीचीमुपेयाः कोशा सत्याः सरसि विमुखस्त्वाष्टमः स्यात्प्रस-ङ्गः ॥ १ ॥ तस्य श्रीमन् यदि सरसतां साफलीं लिप्सते तत् सद्यः पायाः सकल भुवनाभोग चूडैकरत्नं। काश्मीराख्यं जनपदमशेषाघसंघं निकृन्तन् भिन्द्येर्गंधैः, पिशुनसुमजैस्तर्पयन् भो दिगंतान् ॥ २ ॥ यत्र स्त्रीणां लवणिमभरः कोपिसर्वातिशायी दर्पोद्रिक्तं द्रवयतितमां देवसीमन्तिनीनां। फुल्लनीलांबुरुहसमरुक् ! शारिकां वासुकंपाक्षि-बधापांगप्रयतयमुनाभंगनत्या-भिषेकाम् ॥ शंवा भेद्याः शतपरिमि-ताः स्पष्टमभ्रंलिहायाः शैलाएवस्फटिकवरयाः प्रेक्षणीयाः सुदूरात्। धूर्मन्यातुलवलरिपुर्भूर्खनभ्यासमित्याविश्रामाय प्रतिपदमहीमं-डले सौम्य ते स्युः ॥ ४ ॥ विद्यावत्त्वं विमुधधिषणं यत्र भूमीश्व-राणां पीयूषाणां रसमधुरिमालूनपीयूषदर्पः। यस्यस्तोमः प्रमु दितजनः स्पष्टसोमोवितस्तावास्याक्रांतोजयति महिमा यस्य वाचां

---

श्रीगणेशायनमः अथकाश्मीरवर्णनटीका। आविशामपिक्षितिंशीलय क्षितिपूर्वार्द्धे योज्यं सतीसरद्वतिनामांतरं काश्मीरस्य नीलपुराणेप्रसि द्धं॥१॥२॥३॥ अनभ्याशमित्यादूरतःपरिहर्त्तव्याद्त्यर्थः स्फटिकमयत्वं चप्रस्तरीभूतघनतरतुहिनच्छादितत्वादितिभावः महीमंडले इत्येक

सुदूरे ॥ ५ ॥ शीतांभोजैर्निंबुलिततनु स्तीरराजद्रुमौघच्छाये नापि व्यवच्छितजलस्वच्छताया विभाति । श्यामारोमावलिरिव भुवः सिंधुकांचीगुणाया काश्मीमध्यं गिरिवरकुचाभ्यंतरं च स्पृशंती- ॥ ६ ॥ सेयं कूलद्वय-परिलसत्पत्र शस्तावितस्ताव्रतैस्तीर्थैस्तु च्छिन्नगिरितः शीतलैः पूर्णपात्रा । नक्राभावान्नगरतरणीकैरखेला- सुयोग्या दृष्टा यत्र क्षणमपि नृणां पातकौघं पिनष्टि ॥ ७ ॥ यस्मिन् कौशे जनपद इव क्रूरदर्वीकराणां बाधा नृणां नखलुभवतीनव्यव- र्षेपिभव्या । शीतेऽमुष्णः सुखमृदुकरोक्तनिमारामकुंजे नृपा योषास्तु इति नमनाक्ष तिभद्रालसांगोः ॥ ८ ॥ भोक्ता यस्मिन्नऽस्तमधुराः शालयोक्षोच्छिताद्याः स्निग्धाः शीताट्टवल्लकराः षष्टिकाद्यास्तवृ- ष्याः । मूल्यान् दोषानु विदधतश्शोकमूल्याअपि ते धान्यव्यूहाव- हुल सुलभानान्यदेशे तथास्युः ॥ ९ ॥ शाल्मण्यत्रुटितफलतस्तूल- पाली वकीर्णां यस्मिन् सांद्रां मुदिरमिहिकां वर्षति त्वय्यजस्त्रं को- कीराकारजनिविमतेः शोकदीना दिनेपि प्राणेशांगं स्वतनुमिलितं शोचते हा कथञ्चित् ॥ १० ॥ यस्मिन्वर्षत्ययदिभवाम्नोहिमानीम- जत्र्यां नित्यं विष्वक्षय मथभवेत् प्रेष्ठभूयिष्ठमूल्यान् । नानारूपं

रूपसर्गः ॥ ६ ॥ ७ ॥ कुमराज्येसर्पवाधानैवस्त्यं नागास्त्रिभुवनगु रोरोरसमैथिलेयमितिकालिदासः नवीनवर्षे सर्पाणांस्वैरसंचा रोऽत्यनकाश्मीरात् उद्दवामें द्रुसिभाभूर्विलमम्नाविवीरगावितिच कालिदासः उपवृष्टं त्रिभद्रंचकुरीरं मैथनं रतमितितारपाल ॥ ८ ॥ भक्तायहितास्मा: मूल्यान् उत्पाटनीयानित्यर्थः मूलमा [illegible]

रुचिरविलसत्कैवल्लानन्तकीर्ते रैकोऽपि तु: गतमगणितं गच्छतु माणि चि-
तानां ॥ ११ ॥ यस्मिन् स्थाने सकलपुरुष: सौम्य ! गीतानुरेहाद्दोषा-
दोषादधतु च दिवाप्युरूमध्येहसंती: । एतच्चित्रं सुरतकथया यत्र-
सत्याहसंतीस्तनैवार्येऽदधति ललना हंत कामाग्नितप्ता ॥ १२ ॥
संकोचाढ्यं वदनमुदरं चालिकं कामिनीनां यस्मिन्नंत: पुरमपिमन:
सौकुमार्याभिरामं कैश्यं नेत्रद्वयमपितडिन्नेन भासारविंदप्रख्यं सत्त्व
तव समुचितं ताहशीभीरसाम्न्॥ १३॥ यत्र श्रीमन्नुपसिवकुलाना-
चितात्पीतनानां-मान्य: सङ्गोऽदिशति विदुषां मालगुप्त: सराजा ।
यस्मिन्नर्पैत्यनरकमणात्स्वत् प्रसूतं सुरत्नस्तोमं क्रीतास्तडिद्रुपमभं-
नैव दिव्याहरंते ॥ १४ ॥ नव्यं काव्यं नवरसगुणं भर्तृमंठप्रणीतं
हेमस्थाख्यां हृदिचनिदधे योऽहयग्रीवनाम विद्याप्रीतादनवधिगु-
णोविक्रमा-दित्यभूपात् प्राप्तं राज्यं विधिवदधुना चायते सौम्य यत्र
॥ १५ ॥ विप्रेन्द्राणां सकलविदुषां सत्कवीनांवदानां वीराणां च
प्रथममनघं कर्णवत्स्थूललक्ष्यं राजानं तं मदनरुचिरं मातृगुप्तं तडि

---

अवेति संबोधनं अजेभ्योऽर्चिताअजतृष्णागाकाटा भार याचिता:
॥ ११ ॥ दोषाभुजेन अग्रे श्रेष्टेतनैव कुरुमध्ये एत्रकाममन्तमग-
ग्निनातप्ता इति प्रकटिपक्षेललनापक्षे तु स्पष्टं ॥ १२ ॥ संकोचो-
मौनभेदेपि लगले हुंकुमेपि चेति धरणि: । शोभना कुमारा:
यस्मिन् तत्सुकुमारं तस्य भाव: सौकुमार्यं तेनाभिरामं मत्त: पुर-
रविंदंधृांतमन्यं चेतिविग्रह: ॥ १३ ॥ वर्षोपलवज्रातंचानुरूक्तं
धाप्नसमनात् भ्रष्टं क्रियते किलवात् दिव्ये स्तडित्प्रभं ... प्रभू-
तमितिवाराक्षीप्राक्...

स्निग्धैः पश्यन्सुहृदिव सुचिरं लप्स्यसे नैव तृप्तिं ॥ १६ ॥ भूमींद्राणां प्रवरप्रथम मेनमाहुः कवींद्रा यो विख्यातो रसगुणघनं सेतुकाव्यं चकार। यस्मिन्दिष्टांतरमधिगते मातृगुप्ताय राज्यं काश्मीराणां रुचिरमददा-द्विक्रमादित्यराजः ॥ १७ ॥ सोयं राजा कविकुलमणिर्मातृगुप्तः सधी-मान्सोपि स्वाराडिव गुणनिधिर्विक्रमादित्यराजः । सौम्यामीषां प्रथतचरितं पाश्वतस्ते वयाणां गंगास्नातस्त्वयमिव भवेद्यत्र कोपि प्रमो-दः ॥ १८ ॥ आस्ते देवी सकलजनता यां निदिध्यासमाना प्रद्युम्नाख्ये भुवनविदिते शारिकायत्र पीठे शम्भुश्चैनामतनुकरुणां सहितस्ताऽस्तु तो वैभैत्याभूयः प्रणम च परिक्रम्य नम्यां सुरौघैः ॥ १९ ॥ यत्र श्रीमत्प्रवह्निममयीं बिभ्रतं शुभ्रमूर्तिं गौरीतातश्चितिधरगुहाभ्यं तरे भ्राजमानं वंदेथास्त्वं गलितमिहिकाभ्रस्फुरन्मुक्तवर्णकीर्त्तिं मूर्त्तामिव हिमगिरेः पश्य भूयोमरेशं ॥ २० ॥ एनं नाथं सकृदपि नरो वीक्षते योमराणां सोयं जीवेद्युतशरदो मन्मथो रूपलक्ष्म्या पातुं कुंभीसुतमुनिरसौ सर्वविद्यासमुद्रं सिद्धाभीष्टस्सुरवदखिलं विष्टपं पापटीति ॥ २१ ॥ वीक्षस्वैनां सुकृतिसुलभां चोरपूर्वां भवानीं वर्णान्भेदत्वमिव विविधान्यन्नसं दर्शयंतीं एका नित्या निजमविरतं लोहिताशुक्लकृष्णाद्याद्रूपं प्रतिदिनमजा व्यंजयत्यंजसा या ॥ २२ ॥

---

॥ १६ ॥ ॥ १७ ॥ अनुध्यातमनुग्रहः तत्कर्तुमिच्छती ॥ १८ ॥ ॥ १९ ॥ ॥ २० ॥ ॥ २१ ॥ काश्मीरेच्चोरभवानीति प्रसिद्धा तीर्थमयी देवता विरा-जतितरां सा च नील धवल पीत लोहितादि विविधवर्णान् प्रतिक्षणं पृथक् दर्शयति अन्यच्च अजामिका लोहितशुक्लकृष्णामित्यस्मुते रयौ ह्यनुसंधेयाः

भ्रान्तिविनोदः *

वयमतीव कृतज्ञ हृदयेन पुस्तकस्यास्य प्राप्तिं स्वीकुर्म्मः । यस्य वङ्गभाषया सह विद्यते स्वल्पो ऽपि परिचय, स्तस्य समीपे बान्धव-सम्पादकस्य तत्रभवतः श्रीमतः कालीप्रसन्नघोषस्य नाम। ऽवश्य-मेव सुपरिचितमस्ति। सह्येदानीन्तनानां वङ्गभाषासुन्नमितुमिच्छू-नां वङ्गीयकृतविद्यानामभ्यासनं भजते, तस्य लेखन मादिमरसावि-र्भावन्त्यत्प्राय पदावलीदर्शनप्रियाणां यूनां तादृशीनाम्वा कोमल-हृदयानां युवतीनां सन्तोषोत्पादनार्थं न प्रवर्त्तते, न तल्लेखनं दर्शनादिमननशास्त्रविमुखानां सुकुमारमतीनां बालानां प्रमोद-करमित्यर्थः, किन्तु दर्शन शास्त्रपारंगतानां मनन-निदिध्यासनादि व्यापारनिपुणानां परिपक्कवुद्धीनां कृतविद्यानां प्रमोदोत्पादनार्थैव तल्लेखनस्य प्रवृत्तिः। यथा युगपत् मांसास्थि सञ्चय मन्तरेण न शरी-रं पोषमाप्नोति, तथा काव्यवत् दर्शनशास्त्रमपि भाषासम्वर्द्धने स-म्यक् हेतुता मधिव्रजति । श्रीमतः कालीप्रसन्नघोष महोदयस्य ले-खनोदर्शनशास्त्राणां सार माकलयितुं प्रवृत्ता ततएव वङ्गभाषाया अस्थिसम्वर्द्धनेसमुद्यता, तल्लेखनस्य रीति रतीव सुगाढ़ा, पदविन्या-सोगभीरश्च एव भावार्थस्तु गभीरतरः । किमधिकं तल्लेखनं संप्रे-क्ष्य भवत्यस्मन्मनसि कापि महत्याशा ।

कदापि वङ्गभाषा इदानीन्तनीनां यूरोप-प्रचलितनां अङ्गलादि भाषाणां समकक्षतामाप्स्यतीति ।

भवत्वेतावतैव ग्रन्थस्य समालोचनविषयी-भूतस्य सम्यक् परि-

* वान्धवनाम मासिक पत्रसम्पादक [illegible]

चयः। अन्येनानेन सङ्केतोऽप्यधिकं परिचेतुकामान् प्रतितु विज्ञाप्य-ते ऽस्माभिर्यत्ते ग्रन्थस्यास्य खण्डैकं क्रीय स्वयमेव विचारयन्तु किंवा नास्ति गुणग्रामोऽस्य ग्रन्थस्य पश्यन्तु च नकेवलं सरस काव्योपन्या-साद्यध्ययनेन जनानां हृदय माकृष्टं भवति किन्त्वेवं भूतस्य दर्शन-शास्त्रसार-सङ्कलनेन गभीरार्थकस्यापि ग्रन्थस्य चित्ताकर्षणी शक्ति-र्विद्यत इति।

मालतीमाधवम्।* ग्रन्थोऽयं वश्यवचसो महाकवे र्भवभूतेः संस्कृतभाषा-विरचितस्य मालतीमाधवाख्यस्य नाटकस्य कथाच्छलेन हिन्दीभाषानुवादरूपः। सुस्वादुमधूपमसरसप्रसादगुणबहुलाभिः कालिदासकविताभिः समाकृष्ट-चित्तहृत्तशीजनाः सुनिर्मिताभि-चापूपवत् कठोर इत्याभन्तः सरसां भवभूतेः कवितालतां प्रति हतादरा आसन्। येन हि कविना स्वयमेवोक्तं "उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा: कालोह्ययंनिरवधि र्विपुलाच पृथ्वी" तथा "सर्वथा व्यवहर्त्तव्ये कुतोह्यवचनीयता। यथास्त्रीणां तथावाचां साधुत्वे दुर्ज्जनोजनः। भवभूतेरेवमनादरः कियत्कालं यावदतिष्ठ-दितितु नज्ञायते, यतोभोजप्रबन्ध कारेणास्मै कालिदासादप्याधिकं सम्मानं प्रदत्तं; दृश्यते च।

"सुकविर्द्वितयं मन्ये निखिलेऽपि महीतले। भवभूतिः शुक-श्चायं वाल्मीकिस्तु तृतीयकः" इत्यादिश्लोकः।

भवत्विदानींतनकृतविद्येषु भवभूतेः समादरः प्रत्यहं वर्द्धमान एव। भवभूतेर्ग्रन्थ निचयस्य विविधासु भारतीयदेशिकभाषास्वनुवा-दो जातः।

इदमस्मत् समालोच्य पुस्तकं यद्यपि न संस्कृतस्य प्रत्यक्षरानु-वादरूपं तथापि साधुरुचिकरं जातमित्यलं पल्लवितेन।

* मालती और माधव की कथा पण्डित शालिग्राममिश्र ने

श्री Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १० ] जौलाइ १८८१ [ ७ सङ्ख्या

सूची



लाहौरे

एङ्गलो-संस्कृतयन्त्रे? लालादित्तनाग्राय नामधेयेन मुद्रितः

रिदन्तनै रिति वचनात्। "दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः।" इत्यभिधाय "इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ।"

इति दत्तकेतर प्रतिनिधि निषेधात् ।

अतो दत्तक विधिर्विवेच्यते ।

अपुत्र मनुष्य को पुत्र प्रतिनिधि करना उचित है वह प्रतिनिधि ११ प्रकार का होता है, जैसा मनु जीने कहा है कि, प्राचीन विद्वान् लोग पिण्डादि-क्रियाओं के लोप की शङ्का से क्षेत्र * आदि भेद से ग्यारह प्रकार के पुत्र प्रतिनिधि कहे हैं । बृहस्पति ने भी कहा है कि मनुने जो क्रमसे तेरह प्रकार का पुत्रका उल्लेखकिया है,उनमें से औरस और पुत्रिका ये दोही वंश रक्षाका प्रधान कारण है, जैसा घीका प्रतिनिधि तैल बनाया गया ऐसा शेष ग्यारह उन दोनों के प्रतिनिधि बनाए गए हैं ।

* पुत्र तेरह प्रकार का है। यथा औरस, पुत्रिकापुत्र, क्षेत्रज, गूढज, कानीन, पौनर्भव, दत्तक, क्रीत, कृत्रिम, स्वयंदत्त, सहोढज, द्व्यामुष्यायण, और अपविद्ध। अपनी धर्मपत्नीमें अपने द्वारा जो पुत्र उत्पन्न होता है उसे औरस पुत्र कहते हैं। जिसका भाई नहीं ऐसी कन्या जो किसीको इस प्रतिज्ञापर दी जावे कि इसके गर्भमें जो पुत्र हो वह हमारा पुत्र रूप से गिना जावेगा, उस कन्याको पुत्रिका कहते हैं, और उसके पुत्रको पुत्रिका पुत्र कहते हैं। अथवा पुत्रिका रूप पुत्र; पुत्रिकापुत्र और औरस पुत्रमें कुछ भेद

तौभी कलि में इन सबों का स्वीकार नहीं किया गया क्यों कि पण्डितों ने कहा कि "प्राचीन ऋषियों ने जो अनेक प्रकार पुत्र करने काविधान किया है कलि कालमें लोग दुर्ब्बल हुए इस लिये उन सब प्रकार कापुत्र अवनहीं करसते हैं।" फिर पराशर ऋषिने "दत्तक और औरस के बिना पुत्र बनाना" ऐसा कहकर अन्तमें यहसब धर्म्म कलियुगमें निषिद्ध हैं ऐसा कहा है। इन सब बातोंसे कलियुगमें दत्तकभिन्न पुत्र बनाना निषिद्ध होनेसे केवल दत्तको विधि यहां कहा जाताहै।

"तत्र शौनकः ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः।

---

नहीं किसी के क्षेत्र ( स्त्री ) में किसी सपिण्ड वा असपिण्ड से जो पुत्र उत्पन्न किया जाता है उसको क्षेत्रज पुत्र कहते हैं। जो पुत्र प्रच्छन्न रूपसे उत्पन्न होता है उसका नाम गूढ़ज, स्त्री की कुमारी अवस्थामें जो पुत्र होता है उसका नाम कानीन, एकवेर दीहुई कन्या को यदि फिर दूसरे को दी जावे तो उस कन्या को पुनर्भू कहते हैं पूनर्भू के गर्भमें जो पुत्र उत्पन्न होता है उसका नाम पौनर्भव; द्वामुष्यायण, यदि कोई पुत्र हीन मनुष्य गुरु और क्षेत्र-स्वामीकी आज्ञासे दूसरे के क्षेत्रमें इस प्रतिज्ञापर पुत्र उत्पन्न करें कि इससे जो पुत्र उत्पन्न होगा वह दोनो का पिण्डदाता और धन भागी होगा उस पुत्रको द्व्यमुष्यायण कहते हैं सहोढज, जो विवाह के समय गर्भमें रहता है उस का नाम सहोढज क्षेत्रजादि एकादश पुत्रप्रति-

तदभावे ऽसपिण्डे वा अन्यत्र तु न कारयेत् । सपिण्डेष्विति सामान्य श्रवणात् समानासमानगोत्रेष्वित्यर्थः । ”

ब्राह्मण लोगों को प्रथम अपने *सपिण्डोंमें से पुत्रसंग्रह करना उचित है सपिण्डों में से पुत्र न मिले तो असपिण्डों में से भी पुत्र लेवे और कहीं से न लेवे। यहां यह शब्द सामान्य रूपसे कथितहुआ, इसलिये सपिण्ड शब्द से केवल समानगोत्र सपिण्ड न समझना असमानगोत्र सपिण्ड का भीबोध करना ।

“तथाच सपिण्डाभावे ऽसपिण्डः सगोत्र स्तदभावे भिन्न गोत्रो ऽपिग्राह्य इत्याह शाकलः। सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा । अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत् । समान गोत्रजाभावे पालये दन्य-गोत्रजम् । दौहित्रं भागिनेयं मातृ-स्वसृ-सुतं विना” इति । अन्यत्र तु न कारयेदिति ब्राह्मणातिरिक्तः क्षत्रियादिरसमान जातीयोदत्तको व्यावर्त्यते ।

क्योंकि शाकल ऋषिने कहाहै कियदि सपिण्ड न होवे तोपहिले असपिण्ड सगोत्रों ( एकगोत्र ) में से किसीको दत्तक लेवे उसके अभाव होने पर किसी भिन्नगोत्रको भी दत्तक ले सक्ता है उसका प्रमाण भी लिखाहै कि पुत्रहीनब्राह्मण सपिण्ड के पुत्र वा उसके अभावहोनेपर असपिण्ड समानगोत्रके पुत्रको दत्तक लेवे यदि

* सपिण्ड जिनके बीच पिण्डसे सम्बन्ध रहताहै वे सब सपिण्ड सात पुरुष तक सपिण्डता रहती है ।

इनदोनोंकाही अभाव होवे तो दौहित्र, भागिनेय, और मातृस्वसा ( मासी ) के बेटाकोछोड़ कर भिन्न गोत्र के पुत्रको भी दत्तक ले सक्ताहै । शौनकने जो कहाहै कि "अन्यत्रतुनकारयेत्" अर्थात् सपिण्ड और असपिण्ड को छोड़कर और कहींसे दत्तक न लेवे इस का तात्पर्य्य यह है कि कोई ब्राह्मण क्षत्रियादि भिन्न जाति के पुत्रको दत्तक न लेवे ।

यदाह मनुः । "माता पितावा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं सज्ञेयो दत्त्रिमः सुतः ।" आपदि पुत्र ग्रहीतुर पुत्रत्वे । सदृशं सजातीयं । यत्तु सदृशं नजातितः किन्तु कुलानुरूपैर्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रोयुज्यते इतिमेधातिथि व्याख्यानं तत्रायमभिसन्धिः, औरसासत्त्वे क्षत्रियादि रसमानजातीयतया पिण्डोदकाद्यनर्हत्वे ऽ पि नामसंकीर्तनादि प्रयोजनक तया पुत्रत्व मुत्पद्यत एवशास्त्रीयत्वात्,परन्त्वंशी पकारतया ग्रासाच्छादन मात्रभागित्वं, यदाहकात्यायनः । असवर्णास्तु ग्रासाच्छादन भागिन इति ।

मनुजीका एक वचन है कि, माता वा पिता आपत्तिके समयमें जल लेकर सङ्कल्प करके जो सदृश और प्रीतियुक्त पुत्र को दान करते हैं उसको, दत्रिम पुत्र कहते हैं । यहां आपत्ति शब्दसे उस-कालको समझना चाहिए कि जब लेनेवालेका पुत्र न होवे, और सदृश शब्दका अर्थ सजातीय जैसा ब्राह्मणकाब्राह्मण, क्षत्रियकाक्षत्रिय इत्यादि मेधातिथिने सदृश शब्द की ऐसी व्याख्या की है कि, केवल

श्रीरामस्तोत्रम्

( ७३ )

स्वभावादालस्यादतनुतनुरोगादपि च मे
सुमन्दं कर्म्मा ऽभूदपि भवति सम्भावि च तथा, ॥
पुनर्यत् कर्त्तव्यं तदपि मनसा न स्मृतमतो
हरे राम इत्यादि—

( ७४ )

भवान् किं वैकुण्ठे वसति भगवन् वा हृदि सताम्
नचास्मिन् पापिष्ठे भयदमतिरेषा मम वृथा ॥
पवित्रे वा पापे वसति सकलव्यापकतया।
हरे राम इत्यादि—

( ७५ )

भवानेको देव: सकलभुवनात्सर्वबहिरपि
स्थित: सन् सर्व्वेषामभिलषितसिद्धिं जनयसि ॥
नच द्रष्टा श्रोता परइह नकर्त्ता भवदृते
हरे राम इत्यादि—

( ७६ )

हरन् भीतिं चार्त्तिं स्मृतशुभद संसारजनिताम्
वितन्वन् विश्वासं तव भजन शास्त्रार्थफलितं ॥
ददत् मुक्तिं भक्तिं प्रकृतिगुणमुक्तिं गुणनिधे
हरे राम इत्यादि—

( ७७ )

महामुक्ता युक्ता नुतविमलमाणिक्यमणिभिः

सुवर्णैः सौवर्णैरुचिररचितैराभरणकैः ॥

अयोध्यामध्याध्यासित भवनरत्नासनतनो

हरे रामइत्यादि—

( ७८ )

सहस्रांशुश्रीमत् स्फुरितनवरत्न कुण्डल लसत्

कपोलाढ्य भ्राजद्भ्रमर कुलवत्कुन्तलमुख ॥

परब्रह्मज्योतिः प्रकटितकिरीटोज्ज्वलशिरो

हरे राम इत्यादि—

( ७९ )

दया पारावाराप्रतिमगुणतुच्छीकृतसरो-

रुहज्योतिर्नेत्राम्बुजयुगकटाक्षहतभय ॥

सुधासिक्तेन्दुश्रीहरणवदनैपदसनयुक्

हरे राम इत्यादि—

८०

सुनासा सौन्दर्याकर करिजमुक्ताफललसत्

कपोलाढ्य क्रीडत् मत मणिसमोष्ठाधरधर ॥

वराग्रीद्दीनस्वीकृतहसितदन्तातिसुभग

हरे राम इत्यादि—

गङ्गास्तोत्रम्

( १३ )

संत्यज्याशेषराज्यं तृण मिवह्नि यदा वारिधिश्यामसीम
माश्लेषायत्त वाहुं स्तन भरनमितां प्रेममुग्धां च कान्ताम् ।
तन्मात्रापत्यशोकादपहृत हृदयं तातमश्रुप्लुताक्षं
प्रव्रज्याविष्ट चेता निजगृहमजहत् गौतमोवोधिसत्त्वः ॥

( १४ )

सन्न्यासं तादृशं वा क्वचिदपिमनुजैरत्र चादृष्टपूर्व्वं
प्रेमावेशात् प्रदीप्तं शुभदमसदृशं धर्म्ममस्पृष्टहिंसम् ।
ध्यान ह्यालीनविश्वं स्थिरमतिचरितं निर्व्विकल्पं विलोक्य
तस्यासीत् किं निमग्नं जगदखिलमिदं विस्मयाब्धौ तदानीं ? ॥

( १५ )

संलब्ध्वा ऽभीतिमन्त्रः प्रशम-सुमधुरै स्तस्य सद्योवचोभिः
प्रेमाविर्भाववेगोन्नतकरुण-रसात् श्रोत्रियात् क्षत्रियाच्च ।
अश्वा गाव स्तथा ऽन्ये करिहरिणमुखा जन्तवो ऽरण्यजाता
लीलाखेलं तदा किं तव तटविपिने चक्रुरातङ्कशून्याः ॥

( १६ )

विज्ञानानां तदानीमभिनवरुचिरां सुन्नतिं सम्पदाञ्च
दृष्ट्वा ऽस्मिन् मुग्धचित्ता विविध-जनपदावासिनो दूरदेशात् ।
आगत्यागत्य नित्यं किमु विगतमदा मानवा भक्तिनम्रा
धर्म्मं मातस्त्वदीये ऽनृतरहित शुभे शिक्षिता दीक्षिताश्च ? ॥

( १७ )

पश्चात्तादित्यतेजाः क्षितिपतिरभवद्विक्रमादित्यनामा
ज्योत्स्नेवासौ प्रकीर्णा दिशिदिशि नियतं कीर्तिरद्यापि यस्य
रत्नान्यासन् सभायां नव शुभ किरणोद्भासिताग्यानभांसि
मातः काले च तस्मिन्नभवदिह कथं सौख्य सम्पत्तिकाणः ? ॥

( १८ )

धारानाथस्ततः किं जलनिधिपरिखां भारतीयां धरित्री
मेकः कृत्स्नां शशास प्रबलभुजबलो भोज ऊर्जस्वलश्रीः ।
सत्यं किं तस्य राज्ये चिरतरविहृतं वैर मुग्धं विहाय
वाणी लक्ष्मी च नित्यं नन्दतु रतुलं ब्राह्मणानां गृहेषु ? ॥

ओम्

॥ नमः श्रीविश्व-वन्द्यो विघ्नं सिने ॥

भो ममाऽतिप्रिया भ्रातरः । यद्यप्यस्माकं कृत्स्नायां धरित्र्यामनेक विधाः वाचस्सन्ति वर्त्तन्ते च तास्वनेकविधाः विचित्राः प्रचलिताश्च विद्यास्तथा प्यस्मन्मान्यै स्तत्रभवद्भि र्मुनिभि स्तथा राजभि र्मान्या ऽतिपवित्रास्सर्वभाव रसादि व्यञ्जकास्सकलविध भावोद्बोधिका समस्त सद्विद्यागुम्फिता संस्कृत माषैवोत्कृष्टत्वेन तद्देशीयानान्तथा यूरपाधिष्ठितानामान्यविदुषा मेकमत्यमुपलभ्यते यद्यपि बहु-कालात् दारभ्य यवन जातीयानां बहुधाक्रमणैरत्याचारैश्चास्याः सौभाग्या रुणः कुज्झटिकान्तरितो येनाऽत्य विदुषा मुखाद्ध्वातीय वचनानि च

नष्टतामागतानि, तथापि करुणावतेश्वरेणास्माकमयन्दैवस्ताट्टशा-णा मधर्म्मिणामूर्खाणा मपक्ष-पातिनाञ्चाधिकारान्निष्काश्याऽधुनिकाऽधिकारिणामिङ्गलेण्डीयानामपक्षपातिनां हस्ते प्रक्षिप्त इति धं ।

यद्यपीमेऽपीङ्गलेण्डीया अस्माकमेनामपूर्व्वां संस्कृतां भाषां सर्वं बहुमततया प्रख्यापयन्ति तथापि सन्त्येवंविधाः बहवो विद्वांसोयेचैनामिव सार्व-भौमिकगिराश्मातर मन्यमाना अस्या उत्तम-ताम्प्राचीनताञ्चा ऽसंशय मुद्घोषयन्ते ।

एवं विधे ऽपि काले यदस्या एवमनादरःस केवलमस्माक मेवात्यानान्दोषः नत्वाधुनिकगवर्णमेण्टस्य; बहुकार्य्यासक्तत्वा दस्मा कमनास्कन्दनादनिवेदनाच्च नह्यस्यास्य्यमनुद्घाटयन्तमस्वस्थश्चिकित्स कश्चिकित्सति, नहि स्वाशय मनिवेदयन्तमर्थिन, मधिकारी किञ्चित्त स्या ऽभिप्राय ङ्कथयति, किम्बहुना ऽयाचन्तं स्तनन्धयञ्जननी प्राणाद धिकायापि स्तन्यन्तस्मै न प्रयच्छति ।

प्रियसभ्याः! अस्याः भारत-मातुस्संस्कृतगिरः पूजकास्तद्भाषा भाषिनाञ्च बहुमानदाः वयं सर्वे भारत-पुत्रा एव यतो ऽस्या असत्-कारे ऽनादरे च प्रवृत्तास्सञ्जाताः स्तावत् कावाक्षेप-पक्तिरस्माक मन्य देशीयाना मन्यधर्मिणा मन्य-भाषिणामित्यवश्य मेवचिन्तनीयं समस्तै रार्यपुत्रैः ।

प्रिय सुहृदः! यद्भूतन्तद्भूतमधुना ऽपि प्रवुध्यध्वं, पश्यत च

दुरवस्थां स्वस्याः भारतभूमेः । यां दृष्ट्वा प्रस्तर-हृदयस्याऽपि जनस्य मनः शतधा विदीर्यते दह्यतेचान्तः करणम्भारतीयतीकूनामुच्चाव चाम् । पश्यत भवन्तः पृथिवीस्थानाञ्चतुर्णामिशियादि महाद्वीपाना मध्यएकतमस्य शियाखण्डस्य द्दृशस्य प्रदेशेषु निवासिनां चतविंश-ति कोटि मनुजाना मष्टादश कोटिसंख्याकानामार्य पदव्यान्निविष्टा नामप्यस्यां समादरो नो प्रतीयेतर्ह्य न्यमतानां मन्यदेशीयानामन्य भाषाविदां मस्यां समदरे किमाशा-सम्भावना भवितु मर्हतीति चिन्त्यम् ।

प्रिय भ्रातरः ! यद्येवमेवैयमाधुनिकाष्टादश कोटि जन वद्ये ऽपि दशा प्रवर्त्त यिष्यति, निस्संशय माचतुर्थसन्तति मेक मप्येवं भूतस्संस्कृतभाषा विज्ञनः बहून्वेषणेनाऽपि नमिलिष्यत्यन्येषा-मेतद्भाषायां ग्रन्थकर्तृ णामा-चार्याणाञ्च कथामात्र मशिष्यत इति निस्संशयं वदन्तः विद्यावन्तः विचारयन्ते ऽस्याः समुन्नतिम् । यद्यप्येवं विधप्रचारे प्रवृत्तैः राजपुरुषैः संस्थापिता च राजकीयशि-क्षाप्रणाली, संस्थापिता श्च बहुविधाः महान्तो विद्यालयाः पर-मतत्यानां सारासारविदा मार्य्याणां युक्तिप्रत्युक्तैः स्वकल्पना ऽसि-ना सहस्रधा खण्डयन्तः अल्पतरा अपि यवना स्वधर्म्मखण्डीया एवोन्नतग्रीवा विराजन्ते संसत्सु च प्रिच्चयन्ति स्वांस्वामिव भाषाम्-वाल कं गुरवश्चावितु मर्हन्तीति दृष्णास्पदमेतदार्यविदुस्तु । अत भवता भवतासुद्योधानायास्यैव पञ्च द्वीप नामास्पदस्य स्वदेश-

स्य दृष्टान्तम्प्रदर्शयन्नस्याः स्वभाष-मातायाः दुरवस्थाम्प्रदर्शयामी-
ति शृणुत एतद्देशान्तर्गतेषु त्रयस्त्रिंशत् देशेषु प्रतेरकप्रदेशे शत
संख्याकपाठशालासत्वे ऽपि त्रयस्त्रिंशत्शत मिताद्धावचासु पाठ-
शालासु न वर्तन्ते विंशति संख्याका अपि संस्कृता ऽध्यापका स्सन्ति
चेत् कासुचिदुच्चश्रेणी स्थपाठ-शालासु परमत्विलक्षणवत्।

एवं विधे भयानके ऽवसरे ऽन्यजातीयानां सहायतां मनवेक्ष्या
स्माभिर्वर्णधर्मा ऽवलम्बिभिरा र्य्यैरेव यतितव्य मितिनिश्चीयते
तत्र चायकुमोदेशोपकारिण्याः सभायाः मंत्रिपदे नियुक्तेन राजकी
यपाठ-शालायां संस्कृताध्यापकेन भानुदत्तनाम्ना पण्डितेना ऽनु
मोदितः विचारितश्च यदवलम्बनेन प्रतीयते ऽस्या भाषाया अपूर्वो
न्नतिरिति।

प्रथम मस्माभिः पञ्चशत संख्याकैः संस्कृत विव र्द्धयिषुभि स्त्वर्य्यै
रस्यां प्रतिज्ञायां स्थातव्यं यत् सभाद्वारा मुद्रिताणाम्प्राचीनन
व्यार्यभाषा प्रचारितानाम्पुस्तकानां षण्मुद्रामूल्यादनधिकानि
पुस्तकानि वर्षे वर्षे क्रेतव्यानीति

द्वितीय मेवं विध संख्यापूर्तौ निर्मितायाः 'कार्य-कारिणी स
भयाः "नियोगेनास्मभ्य.प्रेषितानि तथा न्यान्य विद्वज्जन प्रेषिता नि
पुस्तकानि मुद्रयित्वा प्रचलितानि भविष्यन्ति, प्राप्स्यन्ते च निर्म्मा-
तारो विद्वांसः- यथायोग्यम्पुरस्कारमुक्तसभातः।

तृतीय मस्याः सभाया मधीनमेकं पुस्तकालयं पुस्तक विक्रयार्थं

प्रतिष्ठापयिष्यते यस्मायत एवमस्य निर्वाहोपि भविष्यति । समाधि कायस्त्व पूर्वमेव प्रतिवर्षं समुद्रादस्योऽन्यदानयनन्निपिष्यते ।

पञ्चशत सभ्य-संख्या पूरणान्ते कस्माच्चित्सभ्यजनात् किञ्चिदपि द्रव्यन्नग्रहीतव्यं कार्य्य कारिणी सभा ऽ नुमत्येका पूर्वं द्वे मासत्रया न्तिस्य पयादादास्यन्ते एवं प्रकारेण कार्य्या ऽ स्मिन्नते ऽल्पका लेनैवास्यां भाषायां बहून्यपूर्व्वाणियन्थान्युत्पत्स्यन्ते येन देशस्य मङ्गलं भविष्यति । पण्डित श्रीभानुदत्तेन प्रेषितं ।

पुरुषार्थः

तत्रभवद्भिः श्रीमद्भिर्नैषध-रचयद्भि रुक्तमिदं नारदमुखात्। यथा"सम्प्रति दमयन्ती यान् यान् गुणान् वेणान् सा वहुमन्यते तत्र तत्र विशेषतालाभो भूभृतां पुरुषार्थः । तेषां सर्व्व-प्रयत्नाधिगम विषय इत्यर्थः । वयमपि ब्रूम इदानीमपि वहवः कृत विद्या स्तच्छो यानुवर्तिनो ऽकृतविद्यास्त्वङ्गवङ्गीयानां शिष्य प्रशिष्यातिहृद शिष्या स्व दृश्यन्ते येहि स्त्रीजनानुरञ्जन मेव परमपुरुषार्थ मामनन्ति । तेहि याद्दशेषु व्यवहारेष्वाचारेषु च स्त्रीणा मनुरागो, निजात्यन्त म नभिमतानपि तान् सांति मयप्रयत्नेन समाचरंन्ति तत एव का कथे केश्वरवादिनामपौत्तलिकानां, निरीश्वराणां नास्तिकानामपि गृहे त्रयस्त्रिंशत् कोटिसंख्याकानां मूर्त्तिमतां देवतानां पूजा ऽ नुष्ठी यते, यथाविधानि पुस्तकानि स्त्रीणां रुचिकराणि तथाविध पुस्तक रचन एवेदानीन्तनानां सर्व्वात्मक: प्रायासो जातः, तेन हि नात्मनः

स्वल्पाऽपि कवित्व शक्तिरस्तु न चास्तु च ग्रन्थरचनोपयोगिनी वि-
द्या, विवेक दर्शनादिक्षमा परं स्त्रीसमाज-सन्तोषसाधनायावश्यं
ग्रन्थरचना कर्त्तव्येति सर्व्वेषां संकल्पः । येन च कारणेन सुकुमार
चञ्चल बुद्धिभ्य चतुर्द्दशवर्षीयबालकेभ्य आरभ्य पलितशवलित
मूर्द्ध प्राड्विवाक पर्य्यन्त मयथोच्छलितादिरसपूर्णां कवितावलीं
तथाविधं वा ग्राम्यतादोष पूर्णं काव्यं विरचय्य देशस्य समुन्नति-
मूले सुदारुणं कुठाराघातं कुर्व्वन्ति, अथवा सुन्दर पाठिका-जनाना
मन्तः प्रसाद सुलक्षणस्तवन-दर्शनमेव येषां परम पुरुषार्थस्तेषां
समीपे देशोन्नति कथा वातुल प्रलापमात्रं न तत्र केनापि कर्ण-
पातः क्रियते ।

स्त्रीणां सन्तोषसाधनार्थमेव लोकानुवर्त्तनं अथवा न केवलं
लोकानुवर्त्तनं धर्म्मानुष्ठान मपि तदेक-प्रयोजन सिद्धये, यत-
स्त्रियः श्वशुरादि गुरुजनेषु भक्तिमत्यो देवरादिपरिजनेषु वत्स-
लाश्च तत्रैव पितृभक्तिः परां काष्ठा मधिगच्छति आत्मवात्सल्यञ्च
पूर्णतां प्राप्नोति; यत्र स्त्रीणामन्यथाभाव तत्र फलमन्यथा
दृश्यते ।

नैतेनास्माभिरिदं विज्ञाप्यते यत् स्त्रीणामुत्पीडनं कर्त्तव्य
मिति । तासां सन्तोषोऽवश्यं साधनीयः किन्तु तत्-साधनमात्र
नास्माकं पुरुषार्थः, स्त्रीभिरतः सर्व्वं प्रयत्नेन तदनुष्ठानं न कर्त्तव्य
मित्यर्थः । सन्ति हि संसारिणा मनेकानि कर्त्तव्यानि येषां मध्ये

प्रामेव यथायथा नुष्ठानेन प्रजात पुरुषार्थाधिगमो भवति तन्मध्ये स्त्रीणामनुरञ्जनमन्यतममिति ।

विलम्ब कारणं

विदित मस्ति साम्प्रतं सर्व्वेषां यद्‌हरहर्नामग्रं पुरुषं पशुञ्च नीयमानस्या ऽपि तृप्तिं नोपगतस्य वैवस्वतस्य कुटिल कटाक्ष पा-तपात मिव प्रजातमस्मन्नगरं लवपुराभिधम् ।

का गणनेदानीं कति मनुजाः प्रत्यहं मृत्युना कवली क्रियन्ते सर्व्व एव जनाः प्रत्यहं प्रातरुत्थायोत्थाय "मरण व्याधिशोकानां किमद्य निपतिष्यती" "ति चिन्तया निश्चेष्टाश्च तिष्ठन्ति। यदि कदा ऽपि कथञ्चित् चेष्टा प्रसरति तत्क्षणमेव प्रत्ययहतस्वजन बान्धवानां गगनमार्गभेदन करुणपरिदेवनेन पुनरेव हृदये लीयते सा, तेनहि विद्योदय प्रकाशे विलम्बोजात इत्यलम्

ओं Registered No. 12.

# विद्योदय:

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादित:

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलन: ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १०]     अप्रैल इं १८८१     [४ सङ्ख्या

सूची






लाहोरे

ऐल्बर्ट नामके यन्त्रे दिवाण्रायनामधेयेन मुद्रित:

॥ पञ्चनदमहाविद्यालयस्य ॥

वर्त्तमान मासस्य षड्विंशतितम दिवसे ऽपराह्णे राजकीय प्रधान विद्यालये पञ्चनद महाविद्यालयस्य साम्वत्सरिक पारितोषिक-दानरूपो महोत्सवो महताडम्बरेण संवृत्तः । राजाधिराजः पञ्चनदशासिता लेफ्टेनेण्टगवर्नर-पदाभिषिक्तः श्रीयुतेजर्टन महोदयः स्वयमागत्य सभापतिपदमधिरूढः सभां मलञ्चकार । अपरे च राजमहाराजनवाब-सर्दारप्रभृत्युपाधि-शालिनो बहवो विषयिन, आर्य्य-यवनम्लेच्छसम्प्रदाय-शास्त्रतत्त्वज्ञा विद्वांसः, परीक्षोत्तीर्णा वा सामुचित-सम्मानाकाङ्क्षाः, राजकीय-प्रधानविद्यालयाध्यापकाः, महाविद्यालयाध्यापकाश्च, निखिल पञ्चनद विद्यालयाधिकारी डिरेक्टर-पदाभिषिक्तः, प्रधानतम-विचाराधिकार नियुक्ता, अन्ये च बहवो राज पुरुषा अन्याः दर्शकनिचयाश्च तत्र सभाकक्षे समेता आसन् । सुविस्तृत मपि तत् महोष्टकं भिन्नजातीयैर्मनुजनिकरैः पूर्णं तथा विविध-पुष्प-लता-पल्लव-ध्वज-पताकाद्यलंकृतं विचित्रदर्शनं जातम् ।

अथ यथानिर्दिष्टसमये तत्र भवति, पञ्चनद शासितरि लेफ्टेनेण्ट गवर्णरोपाधि-शालिनि श्रीमति इजर्टन महोदये सभा सभामधिरूढे तालस्वरविशुद्ध मैत्रतानवादनं प्रारब्धम् । ततः पञ्चनद महाविद्यालयाध्यक्षः विविध-भाषाशास्त्रतत्त्वज्ञः श्रीमान् लाइटनर-नामधेयो महोदयः समुत्थाय महाविद्यालयस्य

विगतवर्षीय--सर्व्वाङ्गीणोन्नतिविवरणं पठित्वा तत्रभवते पञ्चनद शासिने प्रधानराजपुरुषाय कतिचित् विद्यानुरागिनः धनिनः प्राच्यविद्यालयाध्यापकान्, ग्रन्थकर्तॄन्, विशेषगुणशालिन श्छात्रांश्च तत्पार्श्व मेकैक मुपनीय प्रदर्शयामास । ततस्तदाज्ञया परीक्षोत्तीर्णेभ्य श्छात्रेभ्यः अपरेभ्योऽपि सुचरितेभ्य श्छात्रेभ्योऽध्यापक-ग्रन्थकर्तृभ्यश्च यथायोग्यं पारितोषिक मदात् ।

अस्मिन्वर्षे प्राच्यपाश्चात्योभयविधेषु शास्त्रेषु दत्तपरीक्षेभ्यः स्वस्वोपाधिसूचकं प्रशंसापत्रञ्च प्रदत्तम् ।

ततस्तत्रभवान् पञ्चनद-प्रधान-राजपुरुषः समुत्थाय पञ्चनद महाविद्यालयस्य तदध्यक्षस्य श्रीमतः डक्टरलाइटनर महोदयस्य च भूरि प्रशंसावादं कुर्व्वन् वक्तृता मेकामपठत् ।

ततः प्रयाते तस्मिन् श्रीमान् डक्टरलाइटनर महोदयः स्वदेश प्रस्थान स्वस्त्ययनं चिकीर्षु रिव संस्कृत-यवन-अन्यशास्त्र-तत्त्वज्ञेभ्यो नगरस्थितेभ्यः सर्व्वेभ्य एव पण्डितेभ्यो निजहस्त क्रीतमेकैकं शुभ्रवस्त्र खण्डं व्यसृजत् । ततः कविभ्यश्च पारितोषिकं प्रदत्तम् ।

वस्तुत एतद्वर्षीय पारितोषिक दानोत्सव मवेक्ष्य सर्व्वेषामेव पञ्चनद-महाविद्यालयहितैषूनां चित्त मानन्दोत्फुल्लं जातम् । वय मपि प्रत्यहं पञ्चनद-महाविद्यालयस्य सर्व्वाङ्गीन-समुन्नति मवलोक्यापारानन्दवारिधौ निमज्जन्त एवाद्यास्य जन्मदाता रचिता च श्रीमान् डक्टर लाइटनर नामधेयो महोदयो वर्धयावका

मं स्टश्लीलाचिरेणैवास्मान् विहाय स्वदेशं यास्यतीति चिन्तयन्तोऽनवधिदुःख मनुभवामः। जगदीशस्तं दीर्घायुषं करोतु। स चाचिरेणैव पीडोन्मुक्तः सत्वर मत्र प्रत्यागत्यास्मान् पञ्चनद-महाविद्यालयञ्च सनाथौ कुरुता मित्येवास्माकं प्रार्थना। *

श्रीमतो डक्टर लाइटनर महोदयस्य स्वदेश गमनेच्छाजनित दुःखपरम्परया नियतं क्लिश्यमाना अपि वयम्, पञ्चनदस्य देशीयानां शिरोरत्नरूपं पञ्चनदविद्यालय नियत हितैषिणं तस्य प्रथमाविर्भावे प्रधानोद्यमिनञ्च श्रीयुतबाबुनवीन चन्द्रराय महोदयं पुनरेवास्य विद्यालयस्य सहकारि कार्य्याध्यक्ष-पदाधिरूढ मवलोक्य नास्माकं स्वल्पाऽपि कृतार्थता जाता। यतः सहि विद्वद्वरोऽस्य विद्यालयस्यामूलात् सहायदो विदितभूयिष्ठयास्य कार्य्यकलापाना,न्ततस्तेन सर्व्वं सुष्ठुसम्पादितं भविष्यतीत्यत्रास्माकं सम्पूर्ण एव विश्वासः। इत्यलम्।

॥ पुराण-कथा ॥

"यं सर्व्व शैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहु र्धरित्रीम्"

कुमार सम्भवम्

अत्र प्रदर्शित पुराण कथाऽस्य वाक्य व्याख्याया मुपकारं करोति। पुरा त्रेतायां सूर्य्य वंशीय चतुर्थ नृपते र्वेणस्य दक्षिण करमथनात् पृथुर्नाम राजा जातः। अयं प्रजारञ्जनात् प्रथमं राजोपाधिं प्राप्तः। यथा "तेनानु रञ्जिताः सर्व्वाः सुखैं मुमुदिरे तदा।

॥ श्रीरामस्तोत्रम् ॥

(४८)

किमिन्द्रो रक्षोघ्नन्नु-भवति, पावमासात्मिक-मिषः
किमम्बा-जिह्मा, भवदति जपाम्बा जडमतिः ।
प्रदत्ते यं जिह्वा, हृत मपि च नामाधि-हरणम्
हरे राम इत्यादि—

(४९)

विना त्वां नास्त्यन्यः सुरनर-पशूनामभयदो,
भजे कं, ? याचे कं, ? कमिह शरणं यामि वरद ? ।
गुणैरेतावद्भि र्जगति पुनरन्यो जयति को
हरे राम इत्यादि—

(५०)

नृपत्वं, देवत्वं, तदनयनकोपेक्षणजम्,
धनं, धर्मः, कामोऽमृत मपि च ते श्रीचरणयोः ।
चमीति स्ते हस्ते कलुष-हरणं नाम भवतो
हरे राम इत्यादि—

(५१)

गृहे वाऽरण्ये वा, दिशि दिशि वसन्तं, पथि पथि
भ्रमन्तं, सौख्यन्तं व्यसनगतवन्तं, भययुतम् ।
भयाभावायाविर्भव शिवदनामाऽभयमनो
हरे राम त्राहि त्रिभुवन गुरो ! 'मामगतिकम्' ॥

(५२)

जगच्चित्रं मित्रो हरति जगदान्ध्यप्रहतमो

दिवामात्रं रात्रौ ननु निशि तु सोमो ननु दिवा ।

दिवा रात्रौ चैको हरसि समकालत्वमखिलं

हरे राम इत्यादि—

(५३)

विजाने वा किम्वा, यदि तव न जाने गुणकथा,

स्तथापि श्रीजाने ! भव जलधि यानेन कृपया, ।

अपि प्रेम्णा, नाम्ना भुवनजन-साधारणतया ।

हरे राम इत्यादि—

(५४)

वदान्यो वा कोऽन्यः, कलिह शरणं याति लभते

"स्मृतो यः कल्याणं वितरति हरिः सोऽयमवतु" ।

इयं साध्वी बुद्धि यदि भवति, सिद्धिः करगता,

हरे राम इत्यादि—

(५५)

भवन्तं श्रीरामं यदुत भजमान स्तरति सः,

ऋषी रक्षः पक्षी पशुरपि च नीचः श्वपचजा ।

समाप्ते ते, तेषां त्वमसि करुणा-सागर ! सुहृत्,

हरे राम इत्यादि—

॥ होलिका ॥

एतदाख्यस्य महोत्सवस्य भारतीये सर्व्वत्रैव प्रदेशे समनुष्ठानं भवति। पाश्चात्योदीच्यादि प्रदेशीयजना महोत्सवमेतं होलिका-ख्यया समाकलयन्ति, वङ्गेत्वयं दोल यात्रेतिनाम्ना प्रसिद्धः। उत्स-वोऽयमुभयत्र न केवलं नामनाम्नैव भिन्नः। यावदेतदङ्गीभूतानि कर्म्माण्यपि भिन्नरूपेण समनुष्ठीयन्ते।

सुविदितं भवत्येतत् प्राचीन शास्त्राद्यवलोकनेन, पूर्व्वं भा-रतस्य सर्व्वत्रैव प्रदेशेषु वसन्त समये वसन्तोत्सवो नाम कश्चिदुत्स-वोऽनुष्ठितो बभूवेति। तत्रहि राजकन्यका अपरा अपि सदंशजा वनिता राजोद्यानप्रमुखेषु साधारणविहारस्थानेषु प्रकाश्यं नृत्यगीतानुष्ठानपूर्व्वकं वसन्त-कालस्याधि-दैवतं मदनं पूज-यामासुः।

कालेनासौ महोत्सवो होलाकाख्यां जगाम। यथा दाय-भागे—

"प्रतीच्य कर्तृक होलाकानुष्ठानोपपत्तये होलाकाकर्त्तव्येति श्रुतिः कल्पिता भवति"।

तट्टीकाकारेण श्रीकृष्ण तर्कालङ्कारेण होलाका शब्दस्य वस-न्तोत्सव इति अर्थः कृतः। इदानीं स्पष्टमेतत् प्रतीयते यत् हो-लीति शब्दो होलाकाया अपभ्रंशरूप एव।

तथापि न प्रश्यत इदानीं कस्मिन् समये होलाका इत्यस्य

होलीत्यपभ्रंशोजात इति विनिश्चेतुं। प्रत्युत विविधेष्वपि संस्कृत पुस्तकेषु होलिका पूजाया विधानं दृश्यते यथा ब्रह्मनारदीये।

"फाल्गुने पूर्णिमायान्तु होलिका पूजनं स्मृतम्।
सञ्चयं सर्व्वकाष्ठानां पलालानाञ्च कारयेत्॥
तत्राग्निं विधिवद्धुत्वा रक्षोघ्नै र्मन्त्रविस्तरैः।
होलिका राक्षसीचेयं प्रह्लादभयदायिनी॥
अतस्त्वां प्रदहन्त्येव काष्ठाद्यैर्गीत मङ्गलैः।

होलिका प्रदीपनं निशागमे कार्य्यम्। तथा च वृद्धोचन्द्रोदये

"निशागमेतु संपूज्या होलिका सर्व्वतो मुखैः।

अथ होलिका कथा भविष्योत्तरे—

युधिष्ठिर उवाच। किमर्थं फाल्गुनस्यान्ते पौर्णमास्यां जनार्द्दन।
उत्सवोजायते लोके ग्रामे ग्रामे तथा पुरे।
कोवाऽस्यां पूज्यते देवी नियमं किं व्रतादिकम्।
किमस्यां पूज्यते कृष्ण! एतद्विस्तरतोवद।
श्रीकृष्ण उवाच। आसीत् कृतयुगे पार्थ रघु र्नाम नराधिपः।
शूरः सर्व्वगुणोपेतः प्रियवादीबहुश्रुतः।
न दुर्भिक्षं न च व्याधि र्नाकालमरणं तथा।
नाधर्म्मं चरते लोक स्तस्मिन् राज्यं प्रशासति।
पौराः सर्व्वे समागत्य त्राहि त्राहीति चाब्रुवन्।
अस्माकं च गृहे राजन् ढुंढा नामेति राक्षसी।

दिवा रात्रौ समागत्य बालान् पिडयते बलात् ॥ रक्षोघ्नै र्धूप दीपैश्च भेषज्यै र्वा नराधिप। मन्त्राद्यैर्मार्जनाद्यैस्सा नियन्तुं नैव शक्य ते। पौराणां तद्वचः श्रुत्वा रघु र्विस्मय मागतः। विस्मयमाविष्टहृदयो व शिष्ठं वाक्यमब्रवीत्। वशिष्ठउवाच। शृणु राजन् परं गुह्यं नाख्यातं कस्यचिन्मया। ढुंढानामेति विख्याता राक्षसी माखिनः सुता। तप साराधयामास महादेवं वरप्रदम्। प्रीतस्तामाह भगवान् वरं वरय सुव्रते यत्तेऽभिलषितं तत्तत् प्रदास्ये त्वविचारतः। ढुंढा प्राह महा देवं यदितुष्टः स्वयं मम। तदवध्या सुरादीनां मनुजानां महेश्वर। मां कुरुष्व त्रिलोकेश अस्त्राघाते स्तथैवच। शीतोष्णवात वर्षासु दिवा रात्रौ गृहान्तरे। अभयं सर्व्वदा मे स्यात् त्वत्-प्रसादात् सुरेश्वर। एवमस्त्विति प्रोक्ता तां पुनः प्रोवाच शूलधृत्। उन्मत्तेभ्यः शिशुभ्य श्च भयं ते सम्भविष्यति। ऋतुसन्धौ महाभागे मा व्यथां हृदये कथाः। एवं दत्वा वरं तस्याः प्रेक्षन्त्या भगवान् भवः। स्वप्ने लब्धो यथार्थं स्तथैवान्तरधीयत। एवं लब्ध्वा वरं तस्माद्राक्षसी कामचारिणी। नि त्यं पीडयते बालान् संस्मृत्य हरभाषितम् ॥ अडाडया निग्रह्णाति सिद्धमन्त्रं कुटम्बिनां गृहेषु तेन सालोके आडाडेत्यभिधीयते। एवं ते सर्व्वमाख्यातं ढाढुंया चरितं मया। साम्प्रतं कथयिष्यामि येनोपाये नच्छन्यते,। इयं, पञ्चदशी शुक्ला फाल्गुनस्य नराधिप। शीतकालान्त सं-प्राप्तौ प्रातर्मधु र्भविष्यति। अभयं सर्व्वलोकानां दीयतां पुरुषोत्त म, यथा ह्यशंकिता लोके रमन्ति च हसन्ति च। दारुजानि तुखड्गा

नि ष्टहीत्वा समरोत्सुकाः । युद्धाय बन्धुभिः सार्द्धं शिशवः संप्रहर्षिताः । नानारंगमयै र्वस्त्रै श्चन्दनागुरु मिश्रितैः । आवीरञ्च गुलालञ्च मुखे ताम्बूलमक्षतं । वंशीध्वं जलयन्त्रं च चर्म्मयन्त्रं करैर्धृतम् । गालिदानं तथा हास्यं ललना नर्त्तनं तथा । तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः । ततः किलकिला शब्दैस्तैर्दद्भैश्च विशेषतः । तम ग्निं त्रिःपरिक्रम्य गायन्तु च हसन्तु च जल्पन्तु स्वेच्छया सर्व्वे निःशङ्कायस्य यन्मतम् ।

तेन शब्देन सा पापा होमेन च निराकृता । अदृष्टवातै र्डिम्भानां राक्षसी क्षयमेष्यति । श्रीकृष्णउवाच । तस्य तद्वचनं श्रुत्वा स नृपः पाण्डुनन्दन । सर्व्वं चकार विधिवद् यदुक्तं तेन धीमता । गता सा राक्षसी नाशं तेनोक्तेन च कर्म्मणा । ततः प्रभृति लोकेऽस्मिन् सा दुण्ढा विमुखाऽभवत् । सर्व्व दुष्टापहो होमः सर्व्व रोग प्रशान्तिदः । क्रियते यद्द्विजैः पार्थ तेन सा होलिका मता॥ प्रसंगात् दोलोत्सव विधानं कथ्यते । तथा च । विशेषतः कलियुगे दोलोत्सवो विधीयते । फाल्गुने च चतुर्दश्याः सप्तमे यामसंज्ञके । अथवा पौर्णमास्यान्तु प्रतिपत्-सन्धि-सम्मितौ । पूजये द्विधिवद्भक्त्या फल्गुचूर्णै श्चतुर्विधैः । सितरक्तै र्गौर पीतैः कर्पूरादि-विमिश्रितैः । हरिद्राक्षारयोगाच्चरङ्गरक्तै मनोहरैः । अन्यैर्व्वा रङ्गरक्तै श्च शोणयेत् परमेश्वरम् । एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत् । पञ्चाहानि त्र्यहाणि स्युर्दोलोत्सवो विधीयते । दक्षिणाभिमुखं कृष्णं दोलयानं सकृत्

राः दृष्ट्वापराधनिचयैर्मुक्तास्ते नात्र संशयः ।

इति पाद्मे पातालखण्डम् ।

अपिच । जैमिनिरुवाच — फाल्गुने मासि कुर्व्वीत दोलारोहण मुत्तमम् । यत्र क्रीडति गोविन्दो लोकानुग्रहणायवै । फाल्गुन्याः पूर्व्वतो विप्रा चतुर्द्दश्यां निशामुखे । वह्न्युत्सवं प्रकूर्व्वीत दोलमण्डप पूर्व्वतः । इयं लीला भगवतः पितामह मुखेरिता । राजर्षिणेन्द्र द्युम्नेन कारिता पूर्व्वमेवहि । दृष्ट्वा दोलास्थितं देवं सर्व्वपापैःप्रमुच्यते । इमां यात्रां कारयित्वा चक्रवर्त्ती भवेन्नृप । ब्राह्मणस्तु चतुर्व्वेदी ज्ञानवान् जायते भुव इतिस्कान्दे उत्कलखण्डे चैत्रे मासि सिते पक्षेदक्षिणाभिमुखं हरिं । दोलारूढं समभ्यर्च्य मास मान्दोलयेत् कलौ ॥ इतिगारुडे

तस्य संक्षेपव्यवस्था—यदा अरुणोदयकाले पौर्णमासी ला-भस्तदैव दोलयात्रा । उभयदिने अरुणोदय काले पौर्णमासी लाभे पूर्व्वदिने । सङ्गव मध्याह्न कालव्यापित्वात् त्रिसन्ध्याव्यापित्वेन तिथेर्व्वंशत्वाच्च । यदातिथिक्षयवशादरुणोदयकाले न पौर्णमासी लाभस्तदा कदाचित् सहायभावेन चतुर्द्दश्यादरः ।

इतिदोलयात्रातत्त्वं

॥ लर्डवेकनस्कोल्ड् ॥

अहो ! साम्प्रतम्प्यत्र वर्त्तमान समयस्य भूषणरूपो लर्ड-वेकनस्कोलसनामा कश्चिद्गवेषकस्ति । यन्नं सम्यगेको नि-

खिलस्यैव ब्रिटिशराज्यस्याधिदेवतरूप: प्रधान-सचिव आसीत् । हिमालयात् कुमारिकापर्य्यन्तं निखिलमेव भारतवर्षं तथाऽन्यत् सर्वं चेङ्गलण्डाधिकृतं राज्यमस्याज्ञां सोत्सुकं प्रतीक्षन्तेस्म । यस्मिन् सुविस्तृते ब्रिटिशसाम्राज्ये न कश्चिदेतदाज्ञा प्रतिरोधकोऽथवा मनस्यपि तद्विपरीतमनुज्ञातुं समर्थोऽभूत् किं बहुना तदैतस्याज्ञाऽस्य विस्तृतसाम्राज्यस्य जीवनसञ्चारिणी ताडितशक्तिरिव सर्वं देवाङ्गेषु समरूपा स्थिता सन्धिविग्रहयानासनाश्रयादिकं सर्वमेव कार्य्यमस्याभिप्रायानुसारत एव सम्पादितमभूत् । यं देशं प्रति तेन क्रूर: कटाक्षो निक्षिप्त: निर्दोषस्यापि तस्य ध्वंसएव निश्चित आसीत् एवं भारतवर्षीयार्थनिचया अस्य क्रीडाकन्दुका इवासन् । अथवा न केवलं अर्था: सर्वे भारतीया अप्यस्य शालभञ्जिका व्यापारं निर्वाहयन्तिस्म ।

वयमस्माकं पुराणेतिहास-नीतिशास्त्रेषु बहूनामङ्गीकृत-निर्वाहकानां कथा: शृणुम: । परं तेषां प्रतिज्ञा नाम स्वसामर्थ्यानुरूपा ; तथाहि भीष्मस्त्रिभुवनैकधनुर्धर: संग्रामविजितचक्रान्तक आसीत् ततस्तेन प्रियपाण्डवेनापि दुर्य्योधनान्नभोजनप्रत्युपकारं चिकीर्षुणा प्रत्यहं दशसहस्रवीरवधे प्रतिज्ञा कृता, कृता च संविदपरा श्रीकृष्णमस्त्रं ग्राहयितुम् । निजातिप्रियाणां सततमनुगतानामभीप्सितजयानां पाण्डवानां सर्वनाशो भवतु न तत्रास्य दृक्-पात: अयं प्रत्यहं दशसहस्र-वीरान् घातयिष्यत्येव, धनञ्जय: पाण्डवाना

मुच्छ्रित रूप: तस्य विनाशे अपरेऽपि सर्व्वे पाण्डवा: प्राणांस्त्यक्ष्य न्तीति सुनिश्चितं जानन्नपि स केवलं कृष्ण सख्यं ग्राहयितुं ताहृशस्यापि धनञ्जयस्य विनाशाय सम्यगुद्यम ञ्चकार। एतत् प्रतिज्ञाद्वय निर्व्वाहेण भीष्मस्य स्वभुजबलात् नृपजात्मवचन रक्षां विहाय न काप्युद्देश्यसिद्धिरभूत्। अपर स्थानन्यो नीतिशास्त्रान्तर्नि हितदुर्बोध-तत्त्वाभिज्ञानात् कुटिलेत्यपरपर्य्याय:। सचेतसामचेतसा ञ्चाऽपकारिणां समूलोन्मूलन एव सङ्कल्प:। अपकारिणां सकल गुणापकारं विहाय नास्यस्याङ्गीकारनिर्व्वाहे कापि प्रयोजना- न्तरसिद्धि:। अयमपि स्वशक्त्यनु सारत एव प्रतिज्ञां चकार। एवं सर्व्वत्र सामग्रीसम्पन्नाना मेवानुरूप कार्य्यकरणे प्रतिज्ञा दृश्यते, वैकल्ये स्वोद्भावकत्व प्रतिज्ञा त्वन्यरूपैव। तनैकदा लर्ड पदा- भिषिक्त: वेलोरज नामा पपक्ष किमिच्छसीति। स उवाचाहं इङ्ग- लण्ड साम्राज्यस्य प्रधानमन्त्रीभवितु मिच्छामि, समधिकरोहं च वारद्वयं तत् पदम्।

अन्यच्च स यदा वुड्ष्टक नामकस्य स्थानस्य प्रतिनिधिर्भूत्वा पार्लिमेण्ट सभायां प्रथमं व्याख्यान मपठत्। तस्य तद्व्याख्यानं निशम्य सर्व्वे सभास्था उच्चैरुपहासं चक्रुस्ततोऽस्य व्याख्यानं विहायो पवेशनमेव श्रेयोऽभूत्। तेजस्विनां तेजोऽभिभवेहि क्षणमात्रं साम्य मेति न पुन र्निर्व्वाणम् तथा सोपहासमुपवेशितोऽपि सोऽकथयत्

"I have began several times many things and I have

often succeeded at last; aye, Sir, and though I sit down now the time will come when you hear me."

मया समये समये बहु-व्याख्यानि च कर्म्माणि, प्राप्तञ्चक्वे ष्वेव तेषु साफल्यम्। अतोऽद्याहं तूपविशामि परं कालेन यूयं मदैव सभायां मद्वचनं सादरं श्रोष्यथेति ।

ततोऽचिरेणैव कालेन न केवलं स पार्लियामेण्टसभां प्रत्युत निखिल मपि इङ्गलण्डराज्यं धाराप्रवाहव्याख्यानोपन्यासेन मोहयामास इति जात्वा विदुषीय आसीत्। तस्य पिता च न महाधनसम्पन्न आसीत्। स केवल मनवरत मुद्योग मनुतिष्ठन् कमलायाः प्रगाढ़ प्रेमास्पद मभूत्। अथवा न केवलं देवता रूपायाः कमलायाः प्रत्युत तद्वतारूपाया मूर्त्तिमत्या इङ्गलराजलक्ष्म्या स्वस्या ब्रिटिशसाम्राज्यैश्वर्यासिद्धायाश्चापि परमप्रीति-भाजन मासीत्। ततोऽस्य मृत्युं निशम्य सा भारतेश्वरी दुःखाभिभूतेन चेतसा ऽकथयत् "तं हरता हि (करुणा विमुखेन) मृत्युना मदेको ऽमूल्यो हितानुष्ठाननिरतः सखा साधु हितोपदेशकश्चाभिहृत इति"

श्रीं Registered No. 12.

# विद्योदय:

(मासिक-संस्कृत पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादित:

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लौकिकवार्त्तानुशीलन: ।
विद्योदयो निराकुर्य्याद् दुर्विद्यातिमिरं भुवि ॥

खण्ड १० ]  मार्च इं १८८१  [ ३ संख्या

सूची



लाहौरे
ऐल्बर्ट नामके यन्त्रे हिरानागराम नामधेयेन मुद्रित:

## ॥ पुस्तकप्राप्तिस्वीकारः ॥

वयमतीवकृतज्ञतया निम्नलिखितानां पुस्तकानां प्राप्तिं स्वीकुर्मः । अस्माकं अवकाशाभावात् पूर्वं अधिगतेष्वेतेषु पुस्तकेषु न वयं यथाकालं तेषां समालोचनं प्राप्तिस्वीकारं वा कर्तुं प्रभवोऽभवाम । आशास्महे ग्रन्थकाराः क्षमिष्यन्त इति ।

(१)—लीलावती ।—भास्कराचार्य्य कृताया लीलावत्या वङ्गभाषाया मनुवादः । ग्रन्थकर्त्ता वङ्गदेशीय वङ्गपुरान्तर्गत-काकिनीया ग्रामवासी विद्याविनोदोपाधिक-बाबूश्रीयुत गोविन्दमोहन महोदयः । अनुवादो हि साधु सम्पन्नः । एतद्ग्रन्थपठनेन सौलभ्यादेव लीलावत्या मर्मज्ञता भवति । एतस्य प्रचारबाहुल्यं सर्व्वान्तःकरणैः प्रार्थयामहे । येन ग्रन्थकर्त्ता च प्राप्तोत्साहश्चिरं जीवन् भास्कराचार्य्यस्यापरानपि ग्रन्थान् वङ्गभाषयाऽनूद्य निर्मलं यशो लभताम् ।

(२)—कैटोकृतान्तं नाटकम् । बाबूश्रीयुत तोताराम महोदय कृतिरियम् । ग्रन्थोऽयं आडिसन नामधेयेन सुप्रसिद्धाङ्गल देशीय पण्डितवरेन विरचितस्य कैटोनामधेय-नाटकस्य हिन्दीभाषानुवादरूपः । अस्य सविस्तरसमालोचनेऽभिलाषो वर्त्तते, यतोऽयं हिन्दी भाषाया अन्यतमभूषणरूपः ।

प्रश्नोत्तरी । भगवच्छङ्कराचार्य्य हस्तामलक नाम ग्रन्थस्य हिन्दीभाषानुवादः । ग्रन्थकर्त्ता सोनपत निवासी गङ्गादास पुत्रमिहिर चन्द्रमहोदयः । अनुवादः सम्यक् रुचिकरो जातः ।

वयं सम्प्रति लण्डन नगरस्थित ट्रिवनराभिध वणिक् सम्प्रदाय प्रेरित सङ्कलितपरभाषिक पुस्तकचय नामावली द्वय मधिगत्यातीवानुगृहीताः स्म जाताः ।

॥ रूसाधिराजस्य परलोकाप्तिः ॥

अहो ! असारता मानव-जीवनस्य ! पद्मपत्र-निपतितानामपि जलविन्दूनामवस्थिति-क्रमो दृश्यते नत्वस्ति कोऽपि क्रमो मनुष्यजीवनावस्थितेः। अत एवोक्तं "मृत्युर्धावति पञ्चमः" मृत्युः सर्व्वदैव कराल कवलं व्याददत् जगदन्तर्धावति, ग्रसते च सर्व्वमभिमुखपतितम्। कोजानाति कः कदा मृत्युनाक्रान्तो भविष्यतीति, सर्व्वस्य सर्व्वदैव मृत्यु-संदर्शनार्थं प्रस्तुति रचिता ; तथा च "गृहीत इव केशेषु मृत्युना धर्म्ममाचरेदि"त्यभिहितम् नीतिविद्भिः।

न शक्यते राज्येन, बलेन, तपसा, विद्यया वा मृत्युहस्तात् परित्राण मधिगन्तुम्। मृत्युर्जाति मपि न गणयति, नचाश्वरहर्गवाख्य पुरुष पश्वादीन् भक्षयन्नपि तृप्तिमुपयाति। दरिद्राणां पर्णशालातोराज्ञां प्रासादपर्य्यन्तं सर्व्वत्रैव मृत्योः समानाधिकारः सर्व्वत्र समरूपश्चमृत्यु पदचिह्नं विद्यते।

इत्थं स्थितेऽपि जनानामकाल मृत्युमपमृत्युम्वा विलोक्यचेतः खेद मुपैति। तत एव वृद्धावस्थामुपगतस्यापि रूसाधिराजस्याद्यापमृत्युं वीक्ष्य कम्पित मिवास्माकं हृदयं।

१८७३ खृष्टाब्दादारभ्यास्य विनाशाय यत्नः क्रियते। अस्मिन् वत्सरे स शकटारोहणं कुर्व्वन् राजपथे भ्रमतिस्म, सहसा केनाऽपि तं लक्षीकृत्य वह्निहेतिः प्रहिता परमेश्वर कृपया स तदानीं

रक्षितोऽभूत् । तत्परवर्षे स नेपोलियननाम्ना फ्रांसाधिपेन सहैकयान मारुह्य वहिर्गतस्तदाऽस्य प्राणग्रहणार्थं पूर्ववदेवोद्योगः कृतः, परं न काऽपि हानिर्जाता । एवं क्रमेण प्रतिवर्षमेवास्य विनाशाय यत्नो बभूव किन्त्वायुषोऽवशिष्टत्वान्न स यत्नः फलवानभूत् । तत्प्राणग्रहणार्थं शत्रूनां यत्नो यथा वर्धितुमारेभे तद्रक्षार्थञ्च तथैव सावधानता व्यवर्द्धत । किन्तु "प्रतिकार-विधान मायुषः सति शेषेहि फलाय कल्पते" ततः समुचित सावधानतासत्त्वेऽपि, वर्त्तमान-मासस्य त्रयोदश-दिवसे स पथि भ्रमन् शत्रुभि र्निहतो बभूव । हिन्दु पेट्रियट नामके पत्रे कथित मिदं यत्, "शतवर्षाभ्यन्तरेव त्रयो रूसाधीश्वरा एवमात्मपक्षै र्निहताः" अस्य पितामहः पिटर नामा स्वस्त्रिया निहतस्ततस्तत्पुत्रः पलनामा च विद्रोहकारिभिः स्वजनै र्निहतः । अथाऽयमप्येवं शत्रुभिः शमन सदनं प्रापितः । अतः सत्यमुक्तं टैलिरण्ड नामकेन केनाऽपि "केवलं प्राच्या राजानो राज्यार्थं स्वपुत्रादिभि र्नहन्यन्ते यावत् पाश्चात्य-देशेष्वपि तथा विधाचारी वर्त्तत" इति ।

अयं १८१८ खृष्टाब्दे जन्मग्रहणं चकार ; १८५५ खृष्टाब्दे स्वपितुः निकोलस-नामधेयस्य परलोकगमनादनन्तरं सिंहासन मारुरोह । अयं राज्यस्य प्रजानाञ्च हितार्थं पूर्वराज-कृतनियमानां भूयःपरिवर्त्तनं चकार । स्वराज्यसम्वर्द्धनार्थञ्चास्य महान् यत्न आसीत् ।

स प्रजानुरञ्जनेनात्मनो राजशब्दं याथार्थिकम् सर्व्वदैव यत्नवानासीत् । स राज्यस्थान् सर्व्वानेव क्रीतदासान् बन्धनान् मुमोच । तस्य विद्यानुरागिता च भूयसी व्यदृश्यत, स स्वाधिकृत प्रदेशेषु बहून् विद्यालयान् स्थापयामास । इत्यन्नियतं श्रममनुतिष्ठन्नपि स न सर्व्वेषां प्रकृतीनां प्रियतामभजत्, प्रत्युत केषाञ्चिदयं विरागजनकोजातोयत्ते प्राणपणेनाप्यस्य प्राणान् ग्रहीतुं कृतसंकल्पा बभूवुः; निहत्ता च सम्प्रति तान् गृहीत्वा अथ वा "आपदामापन्तीनां हितोप्यायाति हेतुताम्" । इत्यलं ।

॥ पुराण कथा ॥

"देवासुरैरमृत मम्बुनिधिर्ममन्थे"

किरातार्ज्जुनीयम्

"जलधिर्ममन्थे—जह्रेऽमृतम्"

भट्टीकाव्यम्

"अथ स्वमादाय भयेन मन्थना
च्चिरत्न रत्नधिक मुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपांनिधि
र्वने तडागो ददृशेऽवनीभुजा"

नैषधचरितम्

इत्यादि वाक्यानां व्याख्यावसरे पुराणकथेय मनुसंन्धेया—पुरा देवा असुरैः सह तुमुलं युद्धमनुष्ठाय महाबलेभ्य स्तेभ्यः परा-

जय मापुः, स्वाधिकार प्रच्युताश्च बभूवुः । ततस्ते हरिं शरणं गताः । हरिस्तान् शत्रुजयोपायमेवमकथयत् ।

"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ।
दानवैः सहिता भूत्वा मथध्वं क्षीर सागरं" ॥
इत्युक्ता देवदेवेन देवाः सर्व्वे जगत्पतिम् ।
प्रणम्यागत्य निलयं सन्धिं कृत्वाथ दानवैः ॥
क्षीराब्धि मथने सर्व्वे चक्रुरुद्योग मुत्तमम् ।
ततो विष्णुसमादेशात्तत सर्व्वे सुरासुराः ॥
समेत्य मित्रभावेन क्षीराब्धेस्तट माश्रिताः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथवासुकिम् ॥
ततोमथितु मारब्धा नृपते ! तरसाऽमृतम् ।
विष्णुना मुखभागेतु वासुकेर्दानवाः कृताः ॥
देवाश्च पुच्छ-भागेतु मन्थनार्थं नियोजिताः ।
आधारेण विना राजन् दृष्ट्वा मन्दर मच्युतः ॥
सर्व्वलोक हितार्थाय कूर्म्मरूप मधारयत् ।
ततस्तेतु त्वरायुक्ता ममन्थुः क्षीरसागरम् ॥
यावच्छक्त्या नृपश्रेष्ठ वलवन्तः सुराऽसुराः ।
मथ्यमानात्ततस्तस्मात् क्षीराब्धेरभवन्नृप ॥
कालकूट मितिख्यातं विषमत्यन्तदुःसहं, ।
तन्नागा जगृहुः सर्व्वे तच्छेषं शङ्करोऽग्रहीत् ॥

नारायणाज्ञया सोऽथ नीलकण्ठत्वमाप्नुयात् ।
ऐरावतश्च नागेन्द्रो ह्यश्चोच्चैःश्रवाः पुनः ॥
द्वितीयावर्त्तनाद्राजन्नुत्पन्नाविति नः श्रुतम् ।
तृतीयावर्त्तनादप्सरो गणो जातः सुशोभनः ॥
चतुर्थात् पारिजातश्च उत्पन्नः स महातरुः ।
पञ्चमाच्चन्द्रमास्तस्मादुत्थितः क्षीरसागरात् ॥
तं भवः शिरसा धत्ते नारी च शङ्खिनी नृप ।
नानाविधानि रत्नानि दिव्यान्याभरणानि च ॥
क्षीरोदधेस्तूत्थितानि गन्धर्व्वाश्च सहस्रशः ।
ततः श्रीरुत्थिता तस्मात् क्षीरोदोद्धृतपङ्कजा ॥
विभ्राजमाना राजेन्द्र दिशः सर्व्वाः स्वतेजसा ।
देव पक्षं समाश्रित्य स्थितात्र अरिन्दम ॥
हरिवक्षःस्थलं प्राप्ता ततः सा कमलालया ।
ततोऽमृतघटं पूर्णं गृहीत्वा पयसोनिधेः ॥
धन्वन्तरिः समुत्तस्थौ ततः प्रीताः सुरा नृप ।
दैत्याः श्रिया परित्यक्ता दुःखितास्तत्र ते पुनः ॥
आहृत्यामृतघटं शीघ्रं ते च जग्मुर्यथेच्छया ।
ततः स्त्रीरूपमकरोद्विष्णुर्देवहिताय वै ॥
आत्मानं नृपशार्दूल लावण्य लक्षण संयुतं ।
ततो जगाम भगवन् लोभयन्नासुरान् प्रति ॥

दिव्यरूपान्तु तां दृष्ट्वा मोहिता स्ते सुरद्विषः ।
सुधापूर्ण-घटं भूमौ हैमं संस्थाप्य उत्तम ॥
कामेन पीडिता ह्यासनसुरास्तत्र तत् क्षणात् ।
मोहयित्वा तु तानेव ह्यसुरानवनीपते ! ॥
सुधाभाजन मादय देवेभ्यः प्रददौ हरिः ।

इति नृसिंह पुराणम्

—:o:—

"पुरहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थान दर्शिन्यो ननन्दुः सप्रजाः प्रजाः" ॥

रघुवंशम्

अस्य व्याख्यावसरे पुराण कथैषा विधि रप्येष द्रष्टव्यः ।
इमं पूर्व्वं हरिः केतुं प्राप्तवान् हय-वाहनात् ।
तथा ब्रह्मसुतेनैव ब्रह्मणः प्रक्रमागतः ।
तेन सोमस्य तद्दत्तं ततो दत्ते समागतम् ॥
तदा प्रभृति कुर्व्वन्ति नृपा अद्यापि उच्छ्रयम् ।
एवं यः कारयेद्राजा केतुं विजयकारकम् ॥
तस्य पृथ्वीवलोपेता सद्दीपा वशगा भवेत् ॥

देवीपुराणम्

॥ तस्य विधिः ॥

श्री शौर्व्व उवाच

"अथातः शृणु राजेन्द्र शक्रोत्थान ध्वजोत्सवम् ।
यत् कृत्वा नृपति र्यांति नो कदाचित् पराभवम् ॥
रवौ हरिस्थे द्वादश्यां श्रवणे सितपक्षके ।
आराधयेन्नृपः सम्यक् सर्व्व विघ्नोपशान्तये ॥
राजोपरिचरो नाम वसुनामापरस्तु यः ।
नृपस्तेनाय मतुलोयज्ञः प्रावर्त्तितः पुरा ॥
भाविष्कालेच नभसि द्वादश्या मसितेतरे ।
पुरोहितो बहुविधै र्वाद्यै स्तूर्य्यैः समन्वितः ॥
प्रथमं शक्रकेत्वर्थं वृक्षमामन्त्र वर्द्धयेत् ।
साम्वत्सरो वार्धकिश्च कृतकौतुकमङ्गलः ॥
उद्याने देवतागारे श्मशाने मार्गमध्यतः ।
ये जातास्तरवस्तांस्तु वर्जयेद्वासवध्वजे ॥
वहुवल्लीयुतं शुष्कं वहुकण्टक-संयुतम् ।
कुब्जं द्वाद्गनीयुक्तं लताच्छन्नं तरुं त्यजेत् ॥
पक्षिवास-समाकीर्णं कोटरै र्बहुभिर्युतम् ।
पवनानल-विध्वस्तं तरुं यत्नेन वर्ज्जयेत् ॥
नारीसंज्ञाश्च ये वृक्षा अतिकृस्वा अतिकृशाः ।
तान् सदा वर्ज्जयेद्वीरः सर्व्वदा शक्रपूजने ॥

ऋजुं नीऽव्यङ्ग कर्णश्च प्रियको धव एव च ।

औडुम्बरश्च पञ्चैते केतवे तरवः स्मृताः ॥

अन्ये च देव हार्म्यीयाः प्रासाद्याः श्मशानजाः ।

प्रशस्तास्तु परित्याज्या न प्रशस्ताः कदाचन ॥

तच्च सूत्रं ततो राजा छित्त्वा मन्त्रमिमं पठेत् ।

"यानि वृक्षेषु भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः ॥

उपहारं गृहीत्वेमं क्रियतां वासपर्ययः ।

पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम ॥

ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्" ।

ततोऽपरेऽह्नि तं छित्त्वा मूलमष्टाङ्गुलं पुनः ॥

अप्सु क्षिपेत् तदग्रस्य छित्त्वैवं चतुरङ्गुलम् ।

ततो नीत्वा पुरद्वारं केतुं निधाय तलवे ।

भाद्राष्टम्यां शुक्लपक्षे केतुं वेदीं प्रवेशयेत् । *

कालिका पुराणम् ॥

॥ प्रजाहुतिः ॥

(पूर्णं मन्त्रात्मिकानन्तरम्)

समुचित भोजनाभावादिनीव दुर्भिक्षम्, निवारणाय प्रवर्तः । तेन यत्रान्ते कतिपये प्रदेशे न केवलं तत्रत्यानां प्राणहानि-विधायिनी क्लेशपरम्परा जायते परं अपरेऽपि देशाः साक्षात् तद्दंश-ग्राहिणो भवन्ति, पीड्यन्ते वा तादृश-विपत्-पातभयेन ।

* पश्चिमोत्तर प्रदेशे बहुषु ग्रामेष्वद्यापि वासवध्वजोत्सवो भवति ।

मानव सामाजिक-पूर्व्वापरावस्था-समालोचनेनैतदेव प्रतीयते यत्, नियतमेव प्रजासंख्या स्वपोषणोपकरणसामग्रीमनपेक्ष्यैव वर्द्धितुं यतते, तथा नियतमेव तथाविधावसरे निर्द्दिष्ट-पूर्व्वैः प्रतिवन्धि-कारण-कलापैः सा वृद्धिः प्रतिहता भवति, येन प्रजासंख्या पुनरेव समतां भजते ।

पूर्व्वमेवोक्त मस्माभिः सर्व्व प्रतिवन्धि-शून्ये सर्व्व शस्य-समन्विते च प्रदेशे पञ्चविंशति-वत्सरेषु द्वैगुण्यमेति प्रजासंख्येति; किन्तु तथाविध देशावगमो दुष्कर एव । न दृश्यते कोऽप्येवं देशो यत्र न विद्यते स्तोकमपि किञ्चित् प्रतिवन्धि कारणम् ।

आमेरिका महादेशस्योदीच्य प्रदेशाः शस्यपूर्णा ऊर्व्वराः सन्ति, यत्र-प्रजास्वपि भ्रुणहत्या व्यभिचार प्रमुखानि पापान्यपि न तथा लब्धावकाशानि, वाल्योद्वाहश्च यथेष्टं प्रवर्त्तते, यत्र च सार्द्धैक शत-वत्सरपर्य्यन्तं पंचविंशति वर्षाभ्यन्तरेव प्रजासंख्या द्वैगुण्यं लभते, तत्रापि केषु केषु च प्रदेशेषु मृत्युसंख्या जन्मसंख्या मतिक्रम्यस्थितेति श्रूयते। भवतु प्रतिवन्धिकारणाना मत्यन्ताभावे स्वल्पीयसैव कालेन द्वैगुण्य माप्नोति प्रजासंख्येत्यत्र नास्ति कश्चित् सन्देहः । यदा प्राचीनोपनिवेश प्रदेशेषु प्रजाः कृषीवला आसन्, पापाचरणस्य नामाऽपि न श्रुत मभूत् ; तदा तत्र पञ्चदश वर्षेष्वेव प्रजासंख्या द्विगुणितेति प्रत्यक्षीकृतम् । सर विलयम् पेटिनामा कश्चिदप्रतिवन्धके देशे दशवत्सरेष्वपि प्रजासंख्या द्विगुणीभवितु मर्ह-

तीति कथयति। एवं गणना त्वतिशयस्वभावेव लक्ष्यते, यतो मेल-थस महोदयेन बह्वन्वेषणत द्वाषा विधेषु प्रदेशेषु पञ्चविंशति-वत्स-रेष्वेव प्रजासंख्याया द्वैगुण्यं जायत इत्यवधारितम् ।

तन्मते प्रजानां वृद्धि गुणोत्तर श्रेढीनियमेन सम्पद्यते, किन्तु भूम्युत्पन्नशस्यानां वृद्धि क्रमस्तु नाद्यापि सम्यग् विज्ञातो न वा स सुविज्ञेयः। तथापि शस्य वृद्धि-क्रमः प्रजावृद्धि क्रमाद्भिन्न रूप इत्यत्र नास्ति संशयः। यदा सर्वा उर्व्वर भूमयः प्रजाभि र्व्यधिक्रियन्ते तदाधिकफलस्योत्पत्तये प्रतिवर्षं तासा मुत्पादिका शक्तिरपि वृद्धिं नीयते; अथ कियत् कालं यावत् शक्तिवृद्धिं संप्राप्य पुनः प्रकृत्या स्वयमेव क्षीणा भवति। एवं वर्द्धनोन्मुखी प्रजासंख्यावावश्यक भोज-नानामेव क्रमशोऽल्पीयं वर्द्धत एव। पूर्व्व सम्वत्सरेषु प्रजानां याव-ती वृद्धिर्भवति परवत्सरेषु सा द्वैगुण्यं प्राप्नोति, ततश्चातुर्गुण्य-मिति। एवं क्रमेण प्रजा-संख्या वर्द्धते यावत् सीमामतिक्रामति-चीन जापान देशयो र्वृत्तान्तेन भवति "मनुष्याणां सर्वाधिक परि-श्रमादपि कदाचित् प्रजोत्पत्ति द्वैगुण्यात् समर्था भवेन्न वे"ति संशयो जायते ।

—:o:—

॥ श्रीरामस्तोत्रम् ॥

(४०)

कृपादाने दीनं, त्वभिलषितदाने त्रिभुवनम्

कृतार्थीकुर्व्वन् त्वं परमकरुणं ज्ञापयसि ; ते-

बहिर्द्वारं तस्मादति-सुनिविडं याचकगणै

हरे राम इत्यादि

(४१)

सदा पश्यन् सर्व्वं, सकलमपि शृण्वन्, सकलविद्

ददास्येतत्तेभ्यो हृदि यदपि येषां समुदितम् ।

अतो वारम्वारं त्वयि सपरिवारं शरणगम्

हरे राम त्राहि त्रिभुवन गुरो ! 'मामगतिकम्' ॥

(४२)

अहेशोऽसि क्वापि, क्वचिदपि गणेशः, क्वचिदुमा,

कदाचिद्वा हंसे विहरसि, कदाचित् हरिरसि ।

कृपाया नैपुण्यं जनयसि च नाना तनुगतो

हरे राम इत्यादि

(४३)

श्रुतिर्व्वा, चक्षुर्व्वा, त्वगपि, न च नाशा प्रभवति

भवन्तं सन्धातुं, विषय-चलचेतांसि, च न च ।

वदन्तं वाचा श्रीगुरुकरुणया नास्मि पश्चि ते

हरे राम त्राहि त्रिभुवन गुरो ! 'मामगतिकम्'

(४४)

सुधांशुः स्वानंशून् दिशि दिशि विमुञ्चन् परहितः
कलाभिर्हीनोऽपि प्रभु-करुणया भाति सकलः ।
न कोऽप्यस्मिन् विश्वम्भर ! नियममार्गे च्युतपदो
हरे राम इत्यादि

(४५)

यथा सिन्धुर्व्यब्धिं जलनिधि-जलाढ्यो जलधरो
भुवं वा पत्रान्तस्थित हिमलवै र्भूरुह वरः ।
तथा तुभ्यं पुष्पं जलमपि च विश्वम्भर ददे
हरे राम इत्यादि

(४६)

नभोनीला धूमं कति कति घनाली र्जनयति
यथा वाऽनन्तेयं सुफलितु मनन्तं हुतफला ।
तथा दत्तैः पुष्पै र्भवसि च चतुर्वर्गफलदो
हरे राम इत्यादि

(४७)

हिमांशुः, सूर्यो,ग्नि, स्तडिदपि च तारा,ऽपि च मणि,
र्वह्निर्भान्तं हन्तीश्वर ! तव च कारुण्य-मणिना ।
भजन्तो रन्तर्वं हि रिह परतापि च हतं
हरे राम इत्यादि

॥ छत्रोत्पत्ति-कथा ॥

इदानीं बहूनां मनसि वर्त्तते एतद् यत्, पूर्व्वं अस्मत्-पूर्व्व-पितामहा अर्द्धसभ्या एव आसन्। तेषां शिल्प-नैपुण्यस्य बहुविषय-व्यापित्वेऽपि न तदधिकचमत्कृतं, परं साधारणमेवासीत्। तैर्वस्त्रो-पानच्छत्रादिकं सर्व्वमेवोपकरणं निर्म्मातुं प्रभवा बभूवुः किन्तु न तद्वस्त्रादिकं मनोहरं बभूव। तदानीं वस्त्रं महत् स्थूलं शरीरा-च्छादन कर्म्ममात्र-निर्व्वाहक मासीन्न पुनः शरीर शोभा वर्द्धकं, एवं छत्रमपि ताडीपत्र निर्म्मितं वृष्ट्यातप-मात्रं निवारयमास, तथा तादृशच्छत्र-धारणे यादृक् परिश्रमोऽभवत्तथा श्रमापनोदन-मिति। इत्थं सर्व्वेषामेव पूर्व्वं शिल्पानां निन्दावादं कुर्व्वन्ति।

भवतु न वयमत्र प्राचीन शिल्पानां सर्व्वोन्नतिं साधयितुं प्रवृत्ताः। शिल्पानां क्रमश उन्नति र्जायते इत्यत्र नास्त्यस्माकं कस्याऽपि विमतिः। साम्प्रत मेतावन्मात्रं कथ्यते यद्भारतवर्षेऽतीव प्राचीन समयादेव वस्त्र निर्म्मित छत्राणां व्यवहारो भवतीति निम्नलिखि-तया ब्रह्मवैवर्त्त पुराणीय छत्रोत्पत्ति-कथयाऽनुमीयते।

यथा।— एकदा ज्यैष्ठमासे जमदग्नि र्धनुषि बाणान् सन्धाय सन्धाय प्रचिक्षेप। तत्-पत्नी रेणुका तान् बाणानानीयानीय तस्मै प्रादात्। सा मध्याह्नकाले रौद्रपीडिता वृक्षछाया मवलम्ब्य कञ्चित् कालं स्थित्वा तानानिनाय। ऋषिस्तदा क्रुद्धस्तामाह किं चिरेणा-गतेति?।

सा आह सूर्य तेजसा मे शिरः पादौ च सन्तप्तौ तेन वृक्ष-च्छाया माश्रित्य स्थिता, तस्माच्चिरायैतत् कृतम्। तच्छ्रुत्वा मुनिराह, अद्य सूर्य मस्त्राग्नि तेजसा निपातयिष्यामि। इत्युक्त्वा धनुषि वाणान् सन्धाय सूर्याभिमुखोऽतिष्ठत्, सूर्यस्तं दृष्ट्वा भीतो द्विजरूपेणागत्य प्राह।

सूर्यादन्नादि भवति, तेनान्नेन भवद्भिः कर्म्माणि क्रियन्ते कथमेनं हनिष्यसि। एवं माकार्षी" रिति तथापि मुनिः शमं न जगाम अथ सूर्यः शिरस्त्राणं छत्रं निर्म्माय तस्मै दत्वा "अद्य प्रभृति एतल्लोके प्रचरिष्यति व्रतादिषु मस्यदानं महाफल" मित्युक्त्वा गतः छत्रस्य स्वरूपं तत्रैव वर्णितं यथा—

"दण्डः कन्दं, शलाकाश्च
रज्जुर्वस्त्रं च कीलकम्।
षड्भिरेतैः सुसन्दिष्टे
शुक्लमित्यभि धीयते॥

—:o:—

श्री Registered No. 12.

# विद्योदयः




(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्ड १० ]   फब्रुयारि इं १८८१   [ २ संख्या

सूची



लाहोरे

ऐष्कर्ट मामके यन्त्रे दिलवागराय नामधेयेन मुद्रितः

## ॥ समस्यापूर्त्तिः ॥

(पण्डितवर श्रीगुरुप्रसाद-शर्म्मा-कृता)

समस्या—"समालोकः प्राच्यामयति सततं नास्य विरतिः"

सतां सङ्गो लोके भव-जलधि-निस्तारण पटुः
सतीनां स्वे नाथे व्रतभर-विभूति र्नियमिता ।
जले फेनोल्लासो भजति जगतां यौवित्व पदम्
समालोकः प्राच्यामयति सततं नास्य विरतिः ॥ १ ॥

यथाऽटव्यान्दीपानलजविपदा रक्षामनसाम्
निशीथे सञ्चाराः कमलवदनानामधरतिनाम् ।
प्रतापो बालानामपि नरपतीनां स्थिर यथा
समालोकः प्राच्यामित्यादि ॥ २ ॥

सतां वैरी दैवः कुमतजनताजातविषयी
दरिद्रो मैत्र्येऽपि प्रथयति कदाचिन्न सुखताम् ।
प्रियालापे क्रोधः कथमपि जनानां हि यथा
समालोक इत्यादि ॥ ३ ॥

पठेद्विद्यार्थीयो गुरुजनसदुक्तिव्यसनवान्

न विद्यावैमुख्यं कलयति सुनिर्वादित मिह ।

नभस्या वृष्टिस्ता भवति सुलभा चातक मुखे

समालोक इत्यादि ॥ ४ ॥

सदोद्योगः कार्यो निजजनन भूम्यभ्युदयकृत्
न विद्याभ्यस्तत्र प्रकटवचसाज्जातु कृतिनाम् ।
फलोदर्कं स्वावानहि विमुखतान्तेषु भजति
समालोक इत्यादि ॥ ५ ॥

॥ काबुलयुद्धम् ॥

अहो ! सार्द्धद्विवर्ष-परिमितः कालोऽस्माकं काबुल युद्धसमालोचनेनैवातिवाहितः । न ज्ञायते कियानपरः कालोऽगमिष्यत्वे तत् समालोचनेनेति । साम्प्रतं सम्वाद-पत्र-निचयेषु निम्नलिखितानां पत्राणां भूयान् प्रचारो दृश्यते । तत्र प्रथम-पत्रं १८७८ खृष्टाब्दीय जूनाभिधे मासे सेनापति (जिनरल) मनकफमाननामधेयेनाचिरलब्ध--रुसाधिकारा-धिनायकेन आफगान-देशाधिपतिं सेर आलि-नामधेयं प्रति प्रेषितम् । यथा—

"विदितमस्तु भवद्भ्यो, यत् साम्प्रतं भवद्राज्य मधिकृत्य ब्रिटिश साम्राज्य शासयितॄणा मस्माकञ्च याद्दक् [illegible] सम्बन्धः संवृत्तः स भवता साभिनिवेशं विचारणीयः । [illegible] भवन्तं [illegible] बोधयितु मसमर्थः, जेनरल [illegible]नामानं [illegible] प्रतिनिधिं भवत् सन्निधौ प्रेषयामि । अयं हि मद्रुसुलीन केवलं मम प्रियतमोबन्धुः किन्तु विगत रुसतुर्क संग्रामे नैपुण्यातिशयं प्रदर्श्य सम्राजोऽप्यनुग्रहपात्रं जातः । सोऽयं निखिल मेव मन्मनोगतं भवते विज्ञापयिष्यति ; आशंसे च भवान् साभिनिवेशमस्य वचनान्याकर्ण्य तथैनं मदभिन्नं विज्ञाय च यथोचित मुत्तरं दास्यतीति । अतैतदपि भवताऽवश्य मवगन्तव्यं यत् रुसाधिपेन सह भवतः सौहार्द स्थिरं [illegible] चेच्छ्रेयोऽधिगम [illegible] [illegible]ति" ।

अतः परं सेरआलिनामधेयेनैतत् पत्रं पूर्व्वोक्तसेनापतिं प्रति प्रेषितं। यथा—

भवतां सौहार्द्द विज्ञापकं पत्रं यथा कालमस्मदस्त मुपगतं। मया च सर्व्वमधिगत मेतदभिप्रेतम्। एतत्-प्रत्युत्तरं विलिख्य नासिरखां नामानं भवत् समीपं प्रेरयितु मुद्यते मयि सौभाग्य वशात् सेनापतिः ष्टोलिटफ नामा कश्चिन्महात्मा, माननीयस्य श्रीमतः रुस सम्राजो वाचिक (Mission) मादायाऽस्मत् पार्श्व मुपगतः। अयं हि सेनापतिःप्रथम-दर्शनावसर एव भवत् पत्रद्वय मस्मभ्यं समर्पयत्। मया च तयो रभिप्रेतं तथा तदुक्तं सर्व्वं वाचिकञ्च सम्यगधिगतं। तेन च भवतः सम्राजयातीव विश्वासभाजनेन वाचिकमपि सर्व्वं लेख्येष्वा रोपितं, येषां विषयस्तु रुसाफगान राज्ययोः स्थिरतर बन्धुता-सम्बन्धरूपः। अहं सर्व्वेषामेव भवत्-पत्राणां प्रत्युत्तरं तस्यैव सेनापते र्हस्ते समर्पितवान्। सहि सर्व्वमशेषत स्तत्रभवते भवते कथयिष्यति।

अथ सम्मानार्थञ्चास्य त्रीन् मदनुचरान्त मनुगन्तु मादिदेश। तेहि तस्कन्दरेण पर्य्यन्तन्तमनुयास्यन्ती"ति।

ततस्तस्मिन्नेव वर्षे सितम्बर नामधेये मासे ष्टोलिटफ नामधेयेनोक्तपूर्व्वेण सेनापतिना आफगानाधिपतेः परराष्ट्र व्यवहारदर्शिनं सचिवं प्रति पत्रमिदं प्रेषितम्।

"धन्यः स परमेश्वरो यत् कृपयाऽहं निर्विघ्नमेव तस्कन्दना-

मकं प्रदेश मागतः, तथा शुभेऽवसरेऽत्रत्य-राजप्रतिनिधि मद्रा-
च्चम् । अहमह र्निशमस्मदभि प्रेत सिद्ध्यर्थं प्रयत्नं करोमि। आशंसे
च कृतार्थी भवितुं"

"अद्याहं सम्राट् संदर्शनाय प्रस्थितः, तत्र गत्वाऽस्मै सर्व्व-
मेव साक्षान्निवेदयिष्यामि । परमेश्वर कृपया सर्व्वमावश्यकं साधु
सम्पत्स्यते, निश्चितञ्च भविष्यति। आशं से साम्प्रतं ये कावुलाभ्यन्तः
प्रवेश मभिलषन्ति ते ऽस्य द्वार मवरुद्धं दृष्ट्वा भीति मापत्स्यन्तीति ।
अस्मत् सम्माननं तत्र भवते कावुलाधिपतये सन्निवेद्यं परमेश्वर
कृपया स चिरं जीवन्नुत्तरोत्तर मैश्वर्य्यभर मालभताम् । त्वमपि
सुस्थशरीरेण सम्पद मुपभुङ्क्ष्व परमेशानुग्रहेण सर्व्वं सुसिद्धं
भविष्यतीत्यवेहि" ।

अथ तस्मिन्नेव सम्वत्सरे तेनैव ष्टोलिटफ नामधेयेन सेनाप-
तिना सचिवं साह महम्मद खां नामानं प्रति पत्रमिदं प्रेषितम्—

"प्रथमं, कृपया कावुलाधिपतये
विज्ञाप्यतां मदीयः सम्मानभरः" ।

जगदीश कृपया तस्यायुर्धनानि च वर्द्धन्ताम् । अहं सर्व्वदै-
वास्याति सत्कारं स्मरिष्यामि । तत् कार्य्यसम्पादनार्थमेवाह मह
र्निशं प्रायासं करोमि । धन्यः स परमेशो यत् कृपया नमे परिश्र-
मो विफलः सम्वृत्तः । राजाधिराजो रुसाधिपतिस्तु कावुलाधिप-
स्याफ्गान देशस्य च अकृत्रिम वन्धुः संजातः साम्प्रत मेतदुदयस्य हि-

स्वय मधिगतानि नास्त्यतः स्वल्पोऽपि सन्देह एषां यथार्थत्वे ।

१८७९ खृष्टाब्दीय दसम्बर मासीय पाइश्रोनियर नामके पत्रे पत्राणामेषामेवं कथितं यत् "सम्प्रति कानिचिद्धिगतानि पत्राणि यैरेवं ज्ञायते १८७२ खृष्टाब्दादारभ्यैव रुसाफगान देशयो र्गूढ सङ्गतिः संवृत्ता ।

अथैवं विधेषु कारणकलापेषु मिलितेषु कथं न रुसप्रभीताना (Russo Phobia) चित्ते भय मुदियात्? ततश्च युद्ध-प्रवृत्तिरपि । नीतिशास्त्र श्चैव मेवोपदिशति । तथा च मनुः ।

"शत्रु सेविनि मित्रे च गूढे युक्ततरो भवेत् ।
गत प्रत्यागते चैव सहि कष्टतरो रिपुः" ॥

"शत्रुमित्रं गूढं कृत्वा शत्रुं सेवेत यश्च भृत्यादिः पूर्व्वं विरागाद्गतः पश्चादागतः तयोः सावधानो भवेत्, यस्मात्तावतिशयेन दुर्निग्रहौ रिपू" ।

यदि श्राफगानाधिपति र्विनैव कारण मस्मत्-पक्षमपहाय गूढं रुसदेशेश्वरेण मिलितोऽभूत्, तदा पूर्व्व राज पुरुषाणां तं प्रति यानानुष्ठानस्य समुचितत्वे न कस्यापि विमतिरस्तीत्यस्माकं सिद्धान्तः ।

अपरेतु न तथा मन्यन्ते, ते ह्यस्माद्राजपुरुषैः सर्व्वतः परित्यक्ते तस्मिन्, प्रत्यानीते च तस्य सभातोऽस्मत् कार्य्यसाधके पुरुषे स

कमप्यवलम्ब्य मवीक्षमाणः रुसाधीश्वरं शरणं प्रापेति कथयन्ति । सहि रुसैंगलैण्डराजयो र्व्वस्थितं ग्रामानं लोहपात्रयो र्मध्यस्थितं मृण्मयपात्रमिव मन्यमानः समाकुलो ऽभूत् । आफगान राज्यं प्रति तयोः प्रबलयो रुभयो रपि समानएवाऽभिलाषोजातः । उभय राज्यञ्च तन्मतिमध्यस्थतया स्वकार्य्यं साधयितुं प्रवृत्तं । ब्रिटिश राज पुरुषैः स्वेच्छया तस्य मैत्री परित्यक्तानाक्यतएव तैः सह पुनः सन्धान सम्भावनेत्यादि विपक्षानालोच्य तेन रुसाधिपतेः शरणं याचितम्, समुद्रे निमज्जन् हि जनः स्रोतवणाय तृणमपि सबहुमान मवलम्बते ततस्तथाभिधेऽवसरे काबुलाधिपतेः सहायान्वेषणं न प्रकृतिविरुद्धम् । मनुनाप्युक्तम्

"अर्थसंपादनार्थं च पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः" ॥

"शत्रुभिः पीड्यमानस्य शत्रुपीडानिवृत्ति रूप प्रयोजन सिद्ध्यर्थं, असत्यामपिवा तत्काले पीडायां शत्रुपीडन शंकया अमुक मयं महाबलं नृपति माश्रित इति सर्व्वेन व्यपदेशोत्पादनार्थं बलवन्त मुपाश्रयण मेवं द्विविधः संश्रयः" ।

एषा स्मृते काबुलाधिपते रवस्था यथावत् संश्रयोचिता संहतेति किमपराद्धं तेन ।

॥ श्री रामस्तोत्रम् ॥

(३२)

स्वरूपं ते विष्णो ! जगदपि जगत् कारणमपि,

जगद्भिन्नं वस्तु श्रुति रिति तदाह प्रतिदम् ।

अहं जाने दीनोद्धरण-नवनीरप्रदतनु

हरे राम इत्यादि—

(३३)

किरीटिन् ! नीलाब्जद्युतिनयन, नीलाम्बुद तनो !

तडित्कोटि-श्रीमद्रुचिरवर-पीताम्बर धर ! ।

दयाधारा-पाताहत-निखिलदासाशुभचय !

हरे राम इत्यादि—

(३४)

सदार्चो ब्रह्माद्यै स्त्वमसि कुसुमै र्नन्दनभवैः,

समाहृत्यार्च्यं वा हृदि सति मुनीन्द्रै र्विधयतः ।

कथं मे सामर्थ्यं तव चरणयो रर्चन विधौ

हरे राम त्राहि त्रिभुवन गुरो ! मामगतिकम् ॥

(३५)

स्तुतिर्ज्ञानापेक्षा, स्मरण मपि साध्यं सुमनसा,

न सा साध्वी बुद्धिस्तव भजन-चेष्टां जनयति ।

हताशेषोपायं निरवधि कृपापात्रविषयं

हरे राम त्राहि त्रिभुन गुरो ! 'मामगतिकम्' ॥

(२६)

घणार्द्धं जन्तूनां यदि भवति भक्ति र्भगवति
चतुर्व्वर्गं सेषां जनयति फलं कल्पलतिका ।
कृपाहष्ट्या हृष्ट्या मरुमनसि मे सञ्जनय तां,
हरे राम इत्यादि—

(२७)

प्रकाशो वा भानौ, शशिनि च यथा शैत्य, मपिवा
स्वतः श्रीरम्भोजे, विकसति सुधायां मधुरता ।
तथा विष्णो त्वय्येवहि वरकृपा हेतुरहिता,
हरे राम इत्यादि

(२८)

पुरस्तो ज्योत्स्नासा तिमिरचय-सन्तापशमनी
महाघोरा रात्रि र्जगति तव पश्चादशुभदा ।
इती भीमाद्दैशाद्गति-जनबन्धो ! करुणया
हरे राम त्राहि त्रिभुन गुरो ! 'मामगतिकम्' ॥

(२९)

स्वयं श्रीः कल्याणं दिशति तव दृग्गोचरचरी
त्वलक्ष्मीस्ते पश्चादशुभ-निवहैः संस्थितवती ।
विधातः स्थानं मे वितर निजदृग्गोचरदिशि
हरे राम इत्यादि

॥ पुराणकथा ॥

"मयपुरदहने धूर्ज्जटिः पातु युष्मान्"

वेणीसंहारम्

"बलिजित् कायः पुराऽस्त्रीकृतः"

इत्यादि वाक्यानां व्याख्यानावसरे निम्नलिखिता पुराणकथानुसन्धेया । यथा—"पुरा असुरा देवै र्निर्जिताः सन्तो मायिनां परमाचार्य्यं मयं शरणमाययुः । स गमनागमने अदृश्या दुर्व्वितर्क्यपरिच्छदा हैमा रौप्यायसीति तिस्रः पुरोनिर्म्माय तेभ्योददौ । तेऽसुरा स्ताभिः पुरीभि रलक्षिता पूर्व्ववैर मनुस्मरन्तः सेश्वरान् त्रीन् लोकान् नाशयाञ्चक्रुः । ततः सेश्वरा लोका हरं उपासाञ्चक्रिरे हरो माभैष्टेति सुराननुगृह्य धनुषि शरं सन्धाय पुरेषु व्यसृजत । तैः शरैः स्पृष्टाः पुरौकसोऽसुरा व्यसवः सन्तो निपेतुः । महायोगी मय स्तानसुरानानीय त्रिपुरस्थित—सिद्धामृतरसकूपेऽक्षिपत् । तेऽसुरा स्तद्रसं स्पृष्ट्वा दृढशरीराः सन्तउत्तस्थु स्तदा विष्णुर्गौ र्ब्रह्मा च वत्सो भूत्वा त्रिपुरं प्रविश्य रसकूपामृतं पपौ, असुरा विष्णुमायया मोहिताः सन्तो न व्यषेधन् ; तदा विष्णुः स्वाभिः शक्तिभिः शम्भो र्युद्धोपकरणं रथ सारथि धनुर्व्वाणादिकं व्यधात् । ततः शम्भुः सन्नद्धो रथमास्थाय शरन्धनुषि सन्धाय मध्याह्नकाले त्रिपुरं ददाह ।

इति श्रीभागवतम् ।

"भोः त्रिशंकुरिव अन्तरा तिष्ठ"

"भो त्रिशंकुरिवान्तरालेतिष्ठ" ॥

इत्यभिज्ञानशकुन्तले विदूषकवाक्यम्—"

"अश्रान्त-श्रुति-पाठ पूतरसनाविर्भूत

भूरिस्तवा-जिह्म ब्रह्ममुखौघ-विघ्नित नव

स्वर्गं क्रियाकेलिना पूर्व्वं गाधिसुतेनेत्यादि"

नैषधचरितम्

इत्यादि वाक्यानां व्याख्यावसरे चैषा पुराणकथानुसन्धेया—इक्ष्वाकु वंशोद्भवः पृथुराजपुत्र स्त्रिशङ्कु र्वशिष्ठ माह अहं सशरीरेण स्वर्गं गन्तुं यजेयं, वशिष्ठ एतदशक्य मित्याह। ततो राजा तस्य पुत्रानुवाच सशरीरो यज्ञेन स्वर्गं यथाप्नुयां तथा कुरुत, यदि भवद्भिः परित्यक्तस्तदान्यं गुरु मुपासिष्ये, वशिष्ठ पुत्रास्तच्छ्रुत्वा राजानमूचु र्वशिष्ठो भगवान् अशक्य मिति यत् प्राह तदस्माभिः कथं शक्यम्। राजोवाच यद्यन्यां गतिं गमिष्यामि, तच्छ्रुत्वा ऋषिपुत्रा राजानं शेपुः श्वचाण्डालो भविष्यसि, तस्यां रात्रावतीतायां स चाण्डाल दर्शनो भूत्वा विश्वामित्रं शरणं ययौ। विश्वामित्रस्तं स्वीयद्रव्येण याजयामास, तस्मिन् यज्ञे देवा भागार्थं नागच्छन्। ततो विश्वामित्रः क्रोधात् राजान मब्रवीत्। मया बाल्यात् प्रभृति यत्तपः कृतं तेन त्वं दिवं व्रज तदा राजा सशरीरो दिवं ययौ ; तर्हि शक्रस्तमुवाच त्रिशङ्को त्वं भूमौ पत, ततोऽवाक् शिराः पतन् राजा पाही-

ति विश्वामित्रमुवाच, विश्वामित्रस्तिष्ठेति तमुक्त्वा दक्षिण मार्गेऽपरान् सप्तर्षीन् सृष्ट्वाऽपरं नक्षत्रचक्रं स्रष्टुमुपचक्रमे । देवाः सम्भ्रान्ता ऋषिमूचुरयं सशरीरः स्वर्गं गन्तुं नार्हति विश्वामित्रस्तानुवाच अहमस्य स्वर्गारोहणं प्रतिज्ञाय कथ मन्यत करिष्यामि, अतो यावल्लोकाः स्थास्यन्ति तावदमूनि नक्षत्राण्यत्रैव तिष्ठन्तु, त्रिशङ्कुरप्यवाक् शिरा स्तिष्ठतु । इति रामायणम्—

॥ आत्महत्या ॥

आत्महत्या नाम संक्रामको रोगविशेष इति बहूनां सम्मतिरिदानीं वर्वर्त्तितराम् । यथा समये २ देश विशेषे विसूचिकादि-रोगाणा माविर्भावः प्रचारबाहुल्यञ्च जायते तथात्महत्याया अपि ।

सभ्यतेतिहासलेखकेन वकल साहिबमहोदयेनात्महत्याऽपि देशस्वभाव जलपवनाद्यनुसारत एव देश विशेषेषु नियमेन प्रादुर्भवतीत्यभिहितम् । आत्महत्या हि आत्मनो निरतिशयितावमाननस्य फलम् । तादृशावमाननञ्च परपराभवेनाथवा निरन्तर दारिद्र्य महारोगादि जनित दुःसहक्लेश परम्परोपभोगेनात्यन्तप्रियवस्तुनः सम्भावितावगमस्य चाप्राप्त्या कदाचित्तु क्रोधेर्ष्ययोरन्यतरस्याविर्भावेन सम्पद्यति । स्वाभीष्टतमजनस्य वियोगेन प्राप्ति विलम्बेन वा क्वाप्यात्मविनाशः श्रूयते परमेवं भूताया आत्महत्यायाः काव्येषु यथा प्रचारातिशयो न तथा जगति ।

साम्प्रतं सर्वेष्वेव सभ्यप्रदेशेषु प्रत्यह मात्महत्यायाः सुमहान् प्रादु-

भीतो भवति । अस्किनिनामधेयेन केनापि डाक्तरेणोदाहृत्या-पकेन संख्यातिशयमात्महत्याघटना, यथा १८२१ खृष्टाब्दे वेलजियम देशे मनुष्याणां प्रतिनियुतं नवत्रिंशदात्महत्या बभूवुः, १८७८ वत्स-रे तु अष्टोत्तरषष्टिः ; यूनाइटेड प्रदेशेषु १८४५ वत्सरे मनुष्याणां प्रतिनियुतं १०७ मिता आत्महत्याः अभवन्, १८७८ वत्सरे तु १६३ परिमिता आत्महत्या जाताः । इत्थं सर्वत्रैव क्रमेणात्मह-त्याया वृद्धिः प्रदर्शिता तेन ।

किमस्य कारणं भो एतस्मिन्निति जिज्ञासा चेत् श्रूयताम् । पा-श्चात्यसभ्यतायाः समुन्नतिरेवात्र हेतुः । अनया जनानां अनल्प-भिलाष-बाहुल्यं प्रादुर्भूतम्, नेदानीं स्वल्पे न जायते सन्तोषः । तत एवाधिकोपार्जनम् आवश्यकमभवत्, येनाहर्निशमविश्रान्त-परिश्र-मानुष्ठानं क्रियते, दूरं गतं विश्राम सुखम्, धर्मचिन्तायाः समय एव नास्ति, केवलं तैलकार बलीवर्द इवानिशं भ्रमणमेव सारीजातः । इत्थं सम्प्रति कर्माधिक्यं हि जनानां मस्तिष्क-परितापकं जातम् । एवमनपेक्षितजीवनानां कदाचित् केचित् दैवेन दत्तहस्ताः स्वाभि-लषितानुरूपमर्थार्जनं कर्त्तुं शक्नुवन्ति ; अपरे बहवस्तु तथाऽनपे-क्षित जीवितं स्वजनयितुं नक्तन्दिवं चेष्टमाना अपि विमुखभाग-धेयतया स्वपोषणोपयोगिनमप्यर्थं न प्राप्नुवन्ति, यावच्छक्यं चेष्टा वर्द्धते, न फलं प्राप्यते, ततोऽतीव हताशा, निरतिशय दारिद्र्यरो-गादीनां सद्भावस्य दर्पान्मनोहृदात्मावमाननं प्रभवति । तेनचात्मनि-

नापि समुल्लसितया नभिलाषः । अतएवोक्तं मनीषिभिः पाश्चात्य सभ्यतावर्द्धनेन सहात्महत्यापि वर्द्धते इति । अन्यच्च—

पूर्व्वं सर्व्वे प्रायोऽदृष्टवादिन आसन् । समुचितचेष्टया फला-नधिगमे कृताकृताभ्युद्रेकात् जातेऽपि स्वावमानने "नास्ति मे भागधेये" इत्येवं कृपया चिन्तया क्षणादेव तदवमाननं दूरीकृत्य पुनः सन्तोषं प्राप्नुवन्तिस्म । साम्प्रतन्तु भाग्यं केवलं माभिधानिकं जातं, नास्त्यस्य सत्तायां बहूनां स्तोकोऽपि विश्वासोऽतएव न प्रभवति तदवमाननं विहन्तुं, प्रत्युत भूयोऽनुशीलनेन वर्द्धत एव । अपिच प्राचीन-मनुष्या धार्म्मिकाः परलोकभीता आसन् । ते सर्व्वे नैतद्दैहिकसुखमकिञ्चित्करमत्यन्तेऽस्म, पारत्रिकसुखलाभायैव ते-षां सर्व्वात्मको यत्नो बभूव । यथाकथञ्चिज्जीवनरक्षायां भूयान् सद्भावो भविष्यति तेन च परत्रालौकिक-सुखलाभोऽपीत्येवं चि-न्तया न ते स्वहस्तात्महत्यानुष्ठाने प्रवृत्तिमवापुः परं पापकरत्वात् तस्माद्बिभ्यतिस्म । इदानीं धर्म्मबुद्धिः क्रमेण जनानां हृदयादप-सृता भवति, तया सह परलोकभीतिरपि, ऐहिकसुखमेव मनु-ष्य-जीवनस्यैकमेव प्रयोजनं कल्पितम् यस्य न तत् सम्भवति तस्य जीवनधारणमपि वृथा । अत एवंविधस्य क्लेशपरीतस्य जीवन-स्यापाये दुःखानामपि समूलमुन्मूलनं भविष्यतीति निश्चित्य बह-वः स्वहस्तात्मविनाशमनुतिष्ठन्ति ।

इदमन्यच्च विचार्य्यं यत् पाश्चात्य देशेषु यथा पुरुषाणां सर्व्व-

भयादिकं व्यपगतम्, न तथा स्त्रीणां ; तेनहि तत्र प्रायः पुरुषैरात्मा स्वयं व्यापाद्यते सततम् । भारत-वर्षादिषु प्राच्यप्रदेशेष्व तद्विपरीतमेव दृश्यते । साम्प्रतमत्र स्त्रीषु घोरेणाज्ञानतमसा पदमधिगतम्; ततस्ता हिताहितविवेकरहिताः पशव इव संत्रस्ताः, अतस्ताभि र्यथा स्वल्पे कारणे ह्युपस्थिते प्राणा विसृज्यन्ते न तथा पुरुषैः । इत्यलम् ।

॥ हिन्दुः ॥

वय मेकदा सर राधाकान्त वाहादुर महोदय सङ्कलिते ग्रन्थ कल्पद्रुमे हिन्दुविषयकान् निम्नलिखितान् श्लोकानवलोक्य न हास्यं धारयितुं प्रभवोऽभवाम । सम्प्रति पाठकानपि तद्धास्यभागिनः कर्त्तुं तानवोद्धराम: ।

> "पश्चिमामाम्नायमन्त्रास्तु प्रोक्ताः पारस्य भषया ।
> अष्टोत्तरशताशीतिर्येषां संसाधनात् कलौ ॥
> पञ्चखानाः सप्तमीरा नवशाहा महाबलाः ।
> हिन्दुधर्म्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः ।
> हीनं च दूषयत्येव हिन्दुरित्युच्यते प्रिये ।
> पूर्व्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः ।
> फिरिङ्ग भाषया मन्त्रास्तेषां संसाधनात् कलौ ॥
> अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः ।
> अंग्रेजा नवषट् पञ्च लण्ड्रजाश्चापि भाविनः" ॥

इतिमेरुतन्त्रे २३ प्रकाशः

ओं

Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११]   डिसेम्बर १८८२   [१२ सङ्ख्या

सूची



कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मद्‌दन्तिके पत्रिकया स्वाभिलापः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः—लवपुरे ।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालान्यतमाध्यापक-पण्डित-श्रीसुखदयालु-विरचिता मूल्यं ।)

---

### विद्योदयस्य मूल्यादीनां नियमः ।

| | | | | |
|---|---|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं | ... | ... | ... | २।८० |
| ,, पश्चाद्देयं | ... | ... | ... | ३।८० |

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

"दत्तकचन्द्रिका—हृषीकेश-शास्त्रि-प्रणीता, हिन्दीभाषानुवाद-सहिता, मूल्यं ॥) विद्योदय-कार्य्यालये प्राप्तव्या ।

तत्र संवादपत्र-सम्पादकमतम्—

"इसकी भाषा बहुत ही सीधी और सरल है, निःसन्देह भट्टाचार्य्य महाशयने बड़े श्रमसे इसका अक्षरार्थ अनुवाद किया है, प्रतिमास विद्योदय संस्कृत मासिकपत्र पढ़नेसे इनकी संस्कृतमें योग्यता और संस्कृत लेखकी उत्तमता भरपूर हमारे नेत्रगोचर थी, अब इस पुस्तकका भाषानुवाद देख हिन्दी लेखमें भी इनकी योग्यता का सम्यग् ज्ञान होगया" ।

हिन्दी-प्रदीप, मासिक पत्र, १ली नवम्बरकी संख्या । प्रयाग आहियापुर ।

वह्निव्याप्यः' इत्यनुभवो जायते, ततः कालान्तरे, पर्व्वते धूमे दृष्टे सति व्याप्तिस्मरणं, ततश्च व्याप्तिविशिष्टवैशिष्ट्यज्ञानं 'वह्नि-व्याप्यधूमवानयम्' इति तृतीयलिङ्गपरामर्शः। पक्षतासहितेन तेन 'पर्व्वतो वह्निमान्' इत्यनुमितिर्ज्जन्यते।

(३७) व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगि-साध्यसामानाधिकरण्यम्। नच, 'अयं संयोगवान् द्रव्यत्वात्'

---

एक स्थानमें रहते हुएओंको देखकर धूम वह्निका व्याप्य है अर्थात् वह्निके साथ सदैव एक अधिकरणमें (स्थान) रहता है ऐसा ज्ञान होता; अनन्तर कुछ दिनके पीछे पर्व्वतमें धूम देख कर व्याप्तिका अर्थात् "धूम वह्निके साथ सदैव एक स्थानमें रहता है" इस निश्चयका स्मरण होता, उसके पीछे व्याप्तिविशिष्ट अर्थात् वह्निव्याप्य जो धूम, उस धूम विशिष्ट यह, ऐसा ज्ञान होता; ऐसा ज्ञान ही परामर्श है, यह परामर्श जब पक्षताके * साथ मिलित होता है, तब अनुमिति होती है।

(३७) व्याप्तिका लक्षण यथा "हेतुके अधिकरणमें वर्त्त-मान जो अत्यन्ताभाव, उस अत्यन्ताभावका अप्रतियोगी जो साध्य, ऐसे साध्यके साथ हेतुका जो एक स्थानमें रहना" उसे व्याप्ति कहते हैं। देखो "वह्निमान् धूमात्" इस लक्ष्य स्थलमें

---

* पर्व्वतमें धूम देखकर उसमें अवश्य आग होगा इस बुद्धिसे अनुमितिमें प्रवृत्त हो जब परामर्श स्थिर होता है, तब अनुमिति होती है। पक्षताका अर्थ प्रकृष्टत्व।

इत्यत्र अव्याप्तिः, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थात् । पक्षता च सिषाधयिषाविरहसहकृतसिद्ध्यभावः ।

लक्षणकी गति हुई, क्योंकि हेतु जो धूम उसका अधिकरण पर्व्वतादि, उन पर्व्वतादिमें जो अत्यन्ताभाव अर्थात् पर्व्वतमें जो वस्तु नहीं रहती हैं उनका अभाव, मत्स्यादिका अभाव, उस अभावका प्रतियोगी (जिनका अभाव है वे वस्तु) मत्स्यादि और अप्रतियोगी वह्नि, क्योंकि वह्निका अभाव पर्व्वतमें नहीं, उस वह्निके साथ धूम एक स्थानमें स्थित है। और देखो अलक्ष्य स्थलमें इस लक्षणकी गति नहीं, अलक्ष्य स्थल "धूमवान् वह्नेः" वह्निको हेतु कर धूमका अनुमान होता है, यहां हेतु जो वह्नि उसका अधिकरण जो उत्तप्त लौह उसमें धूम नहीं रहता, इस लिये धूमका अत्यन्ताभाव उसमें है, उस अत्यन्ताभावका प्रतियोगी ही धूम है, अप्रतियोगी नहीं ; अतएव इस अलक्ष्य स्थलमें लक्षणकी गति नहीं हुई। किसीने आशङ्का की कि, अलक्ष्य स्थलमें लक्षण न जावे लक्ष्य स्थलमें भी सर्व्वत्र लक्षणका गमन नहीं होता, देखो "अयं संयोगवान् द्रव्यत्वात्" यहभी तुमारा लक्ष्य स्थल है, परन्तु यहां लक्षण नहीं जाता है। यहां एतद्द्रव्य पक्ष, संयोग साध्य, द्रव्यत्व हेतु ; हेतुका ( द्रव्यत्वका ) अधिकरण जो एतद्द्रव्य उसके जिस अंशमें संयोग है उस अंशको छोड़कर अपर अंशोंमें संयोगका अभाव भी है, उस अभाव-

(३८) अनुमानं द्विविधं—स्वार्थं परार्थं च, तत्र परार्थं पञ्चावयवसाध्यं, अवयवाश्च प्रतिज्ञा-हेतूदाहरणोपनय-निगम-

---

का प्रतियोगी ही संयोग हुआ, अप्रतियोगी नहीं ; इस लक्ष्य स्थलमें लक्षणकी गति न होनेसे अव्याप्ति नाम दोष हुआ उस दोषको हटानेके लिये दूसरा लक्षण किया जाता है। यथा "प्रतियोगीके अधिकरणमें अवर्त्तमान ऐसा जो हेतुके अधिकरणमें वर्त्तमान अत्यन्ताभाव, उस अत्यन्ताभावके अप्रतियोगी साध्यके साथ हेतुका एक स्थानमें रहना" ; अब देखो तुमारा दोष हटगया, क्योंकि तुमने जो एतद्द्रव्यके अंशविशेषमें संयोगका अभाव लियाथा वह प्रतियोगी अधिकरण नहीं अर्थात् प्रतियोगीके अधिकरणमें अवर्त्तमान नहीं, किन्तु उसका प्रतियोगी जो संयोग उसके अधिकरणमें वर्त्तमान है, इस लिये संयोगाभाव नहीं लिया जाता, किसी ऐसे वस्तुका अभाव लो जो द्रव्यके समुदय अंशमें है, उस अभावका प्रतियोगी वह वस्तु, अप्रतियोगी संयोग, उसके साथ द्रव्यत्व एक अधिकरणमें वर्त्तमान है, लक्षण की गति हुई। पक्षताका अर्थ सिषाधयिषा-विरह-सहकृत सिद्ध्यभाव *।

(३८) अनुमान प्रथम दो प्रकारका है; एक स्वार्थ (अपनेके लिये), दूसरा परार्थ (परके लिये)। इनमेंसे परार्थानुमान पञ्चावयवसे साध्य होता है; प्रतिज्ञा, हेतु, उदाहरण,

---

* पहली टीकामें देखो। पर्व्वतमें धूमदेखकर इत्यादि।

नानि ; यथा, अयं वह्निमान् (१), धूमात् (२), यो यो धूमवान् स वह्निमान् यथा महानसम् (३), वह्निव्याप्यधूमवान् अयम् (४), तस्माद् वह्निमान् (५), इति। स्वार्थं च स्वीयव्याप्त्यादिज्ञान-साध्यं, न तत्र परप्रतिपत्त्यर्थमेवम् आह शब्दप्रयोगम्।

(३९) तच्चानुमानं त्रिविधं, केवलान्वयि-केवलव्यतिरेक्य-न्वयव्यतिरेकिभेदात्। यत्र साध्यव्यतिरेको न कुत्राप्यस्ति स केव-

---

उपनय, और निगमन ये पांच अवयव हैं। प्रतिज्ञा "अयं वह्निमान्" (यह वह्नियुक्त है) (१), हेतु "धूमात्" (क्योंकि यहां धूम है) (२), उदाहरण वा दृष्टान्त "यो यो धूमवान् स वह्निमान् यथा महानसम्" (जो धूमयुक्त होता है उसमें वह्नि रहता ही है जैसा महानस अर्थात् रसोईका स्थान) (३), उपनय "वह्निव्याप्यधूमवानयं" (यह स्थान वह्निके साथ एक अधिकरणमें रहनेवाले धूमसे युक्त है) (४), निगमन "तस्मादयं वह्निमान्" (अतएव यह वह्निसे युक्त है) (५),। स्वार्थ अर्थात् अपनेके लिये जो अनुमान किया जाता वह अपने व्याप्ति प्रभृतिके ज्ञानसे होता है, उसमें दूसरे के समझानेके लिये पहिलेकी नाई शब्द प्रयोग नहीं होता।

(३९) अनुमान फिर तीन प्रकारका है, एक केवलान्वयी, दूसरा केवलव्यतिरेकी, तीसरा अन्वयव्यतिरेकी। जिस अनुमानमें साध्यका व्यतिरेक अभाव कहीं नहीं रहता अर्थात् साध्य सर्व्वत्र वर्त्तमान होता, उसका नाम केवलान्वयी, जैसा

त्वान्वयी, यथा, 'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्र अभिधेयत्वस्य साध्यस्य व्यतिरेको न कुत्राप्यस्ति; यत्र साध्यप्रसिद्धिः पक्षातिरिक्ते नास्ति, स केवलव्यतिरेकी, यथा, 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्,' यत्र इतरभेदाभावः तत्र पृथिवीत्वाभावः यथा जलादौ; व्यतिरेकव्याप्तौ तु साध्याभावो व्याप्यः हेत्वभावो व्यापकः; यत्र साध्यं साध्याभावस्तान्यत्र प्रसिद्धः, सोऽन्वयव्यति-

---

"घटोऽभिधेयः प्रमेयत्वात्" (यह घट अभिधेयत्वविशिष्ट है, कारण इसमें प्रमेयत्व धर्म है); अब देखो यहां साध्य जो अभिधेयत्व वह समुदय पदार्थमें वर्त्तमान है; कहीं भी उसका अभाव नहीं। जहां पक्षके अतिरिक्त स्थलमें साध्यकी प्रसिद्धि नहीं है, ऐसे अनुमानको केवलव्यतिरेकी कहते हैं; जैसा "पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्" (पृथिवीमें दूसरे पदार्थका भेद है, कारण इसमें पृथिवीत्व धर्म है)। जहां दूसरे पदार्थका भेद नहीं वहां पृथिवीत्व भी नहीं, जैसे जलादिमें जलत्व पृथिवीसे दूसरा पदार्थ है, अतएव उनमें दूसरे पदार्थका भेद नहीं, उसमें पृथिवीत्व भी नहीं; इस उदाहरणमें पृथिवी पक्ष, इतरभेद (पृथिवीसे भिन्न जो पदार्थ उसका भेद) साध्य, और पृथिवीत्व हेतु। पृथिवीसे भिन्न जो पदार्थ उसका भेद पृथिवीको छोड़के और किसीमें नहीं, अस्मात् पक्षके अतिरिक्त स्थलमें साध्यकी अप्रसिद्धि हुई। व्यतिरेकव्याप्तिमें साध्याभाव व्याप्य, और हेत्वभाव व्यापक है, अर्थात्

रेकी, यथा 'पर्वतो वह्निमान् धूमात्' इति। अन्वयव्यतिरेकिणि हेतौ अवश्यं पञ्चरूपोपपन्नता अपेक्षणीया, पक्षवृत्तित्वं,सपक्षसत्त्वं, विपक्षव्यावृत्तत्वं, अबाधितत्वं, असत्प्रतिपक्षितत्वञ्चेति पञ्च रूपाणि। केवलान्वयिनि विपक्षव्यावृत्तत्वरहितं, केवलव्यतिरे-

---

साध्यका अभाव हेतुके अभावसे अधिक स्थानमें नहीं रहता है। जिस अनुमानमें केवल साध्यका अभाव नहीं, साध्य भी पक्षके अतिरिक्त स्थलमें रहता है, उसे अन्वयव्यतिरेकी कहते हैं, जैसा "पर्व्वतो वह्निमान् धूमात्" (पर्व्वतमें वह्नि है क्योंकि इसमें धूम है) यहां पर्व्वत पक्ष, वह्नि साध्य, और धूम हेतु; देखो यहां साध्याभाव पर्व्वतके अतिरिक्त जल आदिमें है, और साध्य भी पर्व्वतके अतिरिक्त महानस आदिमें है। अन्वयव्यतिरेकी स्थलमें हेतुमें पांच प्रकारके धर्म रहते हैं— (१) पक्षवृत्तित्व (पक्षमें रहना), (२) सपक्षसत्त्व (जिसमें साध्यका निश्चय है ऐसे स्थानमें रहना), (३) विपक्षव्यावृत्तत्व (जिसमें साध्य नहीं उसमें न रहना), (४) अबाधितत्व (बाधयुक्त न होना), और (५) असत्प्रतिपक्षितत्व (सत्प्रतिपक्षता दोषसे शून्य होना)। केवलान्वयी स्थलमें विपक्षव्यावृत्तत्वको छोड़कर बाकी चार धर्म्म रहते हैं, क्योंकि विपक्ष ही अप्रसिद्ध; और केवल-व्यतिरेकी स्थलमें सपक्षसत्त्वको छोड़कर अवशिष्ट चार धर्म्म रहते हैं, क्योंकि वहां सपक्ष कोई नहीं अर्थात् ऐसे पक्षके अतिरिक्त स्थलमें साध्य नहीं रहता। जिसमें साध्यका सन्देह

किंपि सपक्षसत्त्वरहितं चतूरूपमेवापेक्षितं। यत्र साध्यसन्देहः स पक्षः; यत्र साध्यनिश्चयः स सपक्षः; यत्र साध्याभावनिश्चयः

---

होता अर्थात् जहां अनुमानकेद्वारा साध्यकी सिद्धिकरनी पड़ती, उसका नाम पक्ष; जिसमें साध्यका निश्चय रहता, उसका नाम सपक्ष; जिसमें साध्यके अभावका निश्चय रहता, उसका नाम विपक्ष; जहां पक्षही साध्यके अभाव करके युक्त होता है, वहां बाध होता है। जो हेतु साध्यके विरोधि (प्रतिकूल) का साधक होता है, उसे सत्प्रतिपक्ष कहते हैं। जो हेतु समुदय सपक्षोंमें भी नहीं रहता केवल पक्षमें रहता, उसका नाम असाधारण, जैसा "पर्व्वतो वह्निमान् पर्व्वतत्वात्" (पर्व्वतमें वह्नि है, क्योंकि इसमें पर्व्वतत्व धर्म्म है), पर्व्वत पक्ष, वह्नि साध्य, पर्व्वतत्व हेतु; अब देखो हेतु (पर्व्वतत्व) केवल पर्व्वतमें रहता, सपक्ष जो महानसादि उसमें नहीं रहता है। अस्मात् यह यथार्थ हेतु नहीं। जहां निखिल वस्तु पक्ष है उसका नाम अनुपसंहारी, जैसा "सर्व्वं प्रमेयं अभिधेयत्वात्" (समुदय वस्तुमें प्रमेयत्व है, कारण उनमें अभिधेयत्व है,यहां निखिल वस्तु पक्ष, प्रमेयत्व साध्य, और अभिधेयत्व हेतु, यहां निखिल वस्तु पक्ष हुआ इस लिये अनुपसंहारी। साध्याभावके अधिकरणमें वर्त्तमान जो हेतु उसे विरुद्ध कहते हैं। किसीने कहा की साध्यके अधिकरणमें वर्त्तमान जो अभाव उसका प्रतियोगी हेतु विरुद्ध, जैसा "घटो नित्यः सावयवत्वात्" घटमें नित्यत्व धर्म्म है, क्योंकि उसमें

स विपक्षः ; साध्याभाववान् पक्षो बाधः ; साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः ।

सावयवत्व धर्म्म है। घट पक्ष, नित्यत्व साध्य, और सावयवत्व हेतु, यहां देखो साध्याभाव जो नित्यत्वाभाव उसके अधिकरण जो त्रसरेणु आदि, उसमें सावयवत्व (अवयवसे युक्तत्व) के वर्त्तमान होनेसे हेतु विरुद्ध हुआ, अथवा साध्य जो नित्यत्व उसके अधिकरण जो परमाणु मन इत्यादि उनमें सावयवत्व धर्म्मका अभाव है ( क्योंकि परमाणु, मन इनका अवयव नहीं है ), उस अभावका प्रतियोगी सावयवत्व है, इस लिये हेतु विरुद्ध हुआ। सत्प्रतिपक्ष अर्थात् हेतु जहां साध्यके विरोधीका साधक है, जैसा "पर्व्वतो वह्निमान् धूमात्" (पर्व्वतमें वह्नि है क्योंकि इसमें धूम है) इस अनुमानके समय "पर्व्वतो वह्न्य-भाववान् महानसान्यत्वात्" (पर्व्वतमें वह्निका अभाव है, कारण इसमें महानस (रसूईका स्थान) का अन्यत्व ( भेद ) है। ऐसे अनुमानमें सत्प्रतिपक्षता दोष होता है। असिद्ध तीन प्रकार का है, (१) आश्रयासिद्ध, (२) स्वरूपासिद्ध, (३) व्याप्यत्वासिद्ध। जहां पक्षही वास्तवमें नहीं होता, अथवा जिस अनुमानमें किसी तरहसे सिद्ध वस्तुका ही साधन होता, किसी नई बातकी सिद्धि नहीं होती, ऐसे अनुमान को आश्रयासिद्ध कहते हैं, जैसा "शशविषाणं नित्यं अजन्यत्वात्" (शशकी सिंग नित्य है, क्योंकि यह अजन्य है, उत्पन्न नहीं होता ), शशविषाण ( शशका सिंग)

## पञ्चनद-महाविद्यालय-

### पारितोषिकदान-सभायां

### भारताधिपते र्व्याख्यानम् ।

वयं पूर्व्वपत्रे पञ्चनद-महाविद्यालय-पारितोषिकप्रदान-सभायां तत्सभापत्यासनं भजमानेन भारताधिपतिना यदभिहितं तत्समीर्थानुवादाय स्वीकृतवन्तः। साम्प्रतं प्राप्तावसरतया तदङ्गीकारनिर्व्वहणाय समुद्यमः क्रियते ।

अथ तद्दिवसीयकर्त्तव्यजाते निर्व्विघ्नमनुष्ठिते सोऽखिल-कार्य्यतत्त्वज्ञो वदतां वरः श्रीमान् भारताधिनेता स्वासनात् समुत्थाय धाराप्रवाहन्यायेनैवं वचनविन्यासमकरोत् ।

"अयि भो विद्यालयविधिविधायनसभायाः प्रधानाध्यक्ष, भावोलपुर कपूरस्थल फरीदकोट नामधेय-जनपदानामधीश्वराः समेता भद्रमुखाश्च, यदहमद्यैतन्महाविद्यालयस्य पार्ष्णिरक्षकीभूयैवं शुभावहावसरे समेत्य पञ्चनदप्रदेशे विश्वविद्यालयसंस्थापनार्थमष्टादशवत्सरानविश्रान्तं यतमानान् युष्मान् सभाजयितुं समर्थो जातो निश्चितं नैतस्मात् किमप्यधिकतरमानन्दप्रदमस्ति मे। अयि भो सार चार्लस एचिसन महोदय एतद्विश्वविद्यालयभित्तिस्थापकानां लप्तेवाग्रेसर आसीस्तदानीं त्वं तत्र सहायका अपरे चैतत्प्रदेशीयैः प्रधानैः राजभिर्धनिभिरपरैश्च भद्रमुखैः सर्व्वप्रकारकं सम्यक् साहाय्यं प्राप्तवान्। तदानीमार-

ऽतावत्कालपर्य्यन्तमेतद्विद्यालयमुन्नमयितुं यानि यानि कार्य्या-ण्यनुष्ठितानि सर्व्वेष्वेव तेषु पूर्व्वोल्लिखितेभ्योऽन्यस्याप्येकस्य भद्र-मुखस्य नाम मद्दृष्टिगोचरं भवति, तस्य नाम पञ्चनदविश्वविद्या-लयस्य भित्त्या सह सुचिरं स्थास्यति, यतो न कोऽप्यन्यः पञ्चनद-देशहितार्थं तादृशं परिश्रमं स्वार्थहानिञ्च स्वीकृतवान्, यथा पञ्चनद-विद्यालयस्य रेजिष्ट्रार-पदाभिषिक्तः डकटर लाइटनर-नामाकरोत्। (आनन्दध्वनिः।) अतएव भो एचिसन्नामधेय महोदय तुभ्यं, भो राजानो भूम्यधिकारिणस्तथैतन्महाविद्यालय-सिनेटाख्यसभासभ्याश्च सर्व्वेभ्य एव युष्मभ्यमहं सर्व्वान्तःकरणो-द्गतं सभाजनं प्रयच्छामि।

इतो द्विवत्सरपूर्व्वमस्मिन्नेव शरत्समये मम लवपुरप्रथम-दर्शनावसरे भारतोदीच्यविभागे सम्पूर्णरूपं विश्वविद्यालयमेकं स्थापयितुमिच्छवः पञ्चनद-महाविद्यालय-सिनेटाख्यसभायाः सभ्यगणा महताग्रहेण स्वाभिलाषपूर्त्तिं मामभ्यर्थयामासुः। भोः सभ्यगणाः, मया तदभ्यर्थनोत्तरे प्रदत्ते केनापि मत्कर्णान्तिक-मेतदभिहितं यन्मदुत्तरवचनेन श्रोतृवर्गा न सम्यक् परितोष-मापुरिति। निश्चितमभ्यर्थनकारिणामेतदभिकाङ्क्षितमासीत् यदहं स्वशक्त्यवधारणमन्तरेणैव तेषामग्रे वक्तृङ्गीकुर्य्यामिति। परमहो परिषदीश्वराः, न मे तथाविधा प्रकृतिः। अहं हि स्ववाक्यस्य साफल्यमिच्छामि न तु वैफल्यम् (आनन्दध्वनिः)। यदाहं १८८० मिते खृष्टाब्दे युष्मदभ्यर्थनोत्तरमदाम् तदा मे

भवदभ्यर्थितविषयस्य न सम्यक् प्रत्यभिज्ञा जाता, नच मया तदानीन्तनप्रार्थितार्थप्रतिवादवचनान्याकर्णितानि, नापि मे भारतीयराजकार्य्यनिर्व्वाहसहायकानां सम्मति र्लब्धा। एवमादिकारणकलापेन युष्मदभिप्रेतं विषयं साधु मन्यमानोऽपि तदानीं वृथा-श्रवणप्रिय-वाक्यविन्यासेन मिथ्याशावद्धं नादापादितोऽनुत्साहकरवचनप्रयोगं साधुतरं मेने। परमिदानीं भोः सभ्याः मुक्तकण्ठं कथयामि यद्भवदभ्यर्थितं सफलमवलोक्याहमतीवानन्दमनुभवामि (आनन्दध्वनिः)। अहं हि बहुभिः सार्द्धमेतत्तत्त्वालोचनमकरवम्। पञ्जनद-प्रधानशासितु र्मतमपृच्छम् राज्यप्रबन्धविधायकमन्त्रिणां सम्मतिमपृच्छम् तत इण्डियान्-कौन्सिल-नामधेयाया मम मन्त्रणसभायाः सकाशादेतद्विषयकविधिविधानशक्तिञ्च लेभे। पूर्व्वोक्तकार्य्य निचयानुष्ठानेन बहुः समयोऽतिवाहितस्ततो वर्षद्वयस्यान्ते प्रार्थितकार्य्यस्य सिद्धिर्जाता, विधिनिर्म्मितपञ्जनदमहाविद्यालयस्यैव भित्त्यां पूर्णशक्त्या सह दृढ़ं स्थापितः यद्रक्षणाय बहव एतावद्दीर्घकालपर्य्यन्तं सर्व्वात्मकयत्नमकार्षुः (आनन्दध्वनिः)। अयि भोः सभासदाः, इतो द्विवत्सरपूर्व्वं युष्मत्समीपे मया यत् कथितम्, यदि भवद्भिर्मम तत्कालीनवाक्यार्थाः साभिनिवेशमधीताः, तदावश्यं भवत्प्रार्थितविषये मम कीदृक् सहानुभूतिः स्थितेति विदितञ्चाभवत् (आनन्दध्वनिः)। यतः पूर्व्वं मयैतत् कथितं, यथेदानीमपि कथ्यते, यत् पञ्जनदमहाविद्या-

लय सिनेटाख्यसभासभ्यैर्यौ द्वे कार्यपद्धती समवलम्बिते ते स्वय-
मेव मम विवेकं सम्मतिञ्चानुमोदयत इति। तत्रैका युष्माभि-
र्विश्वविद्यालयमेतं भारतीय-पूर्व्वस्थापित-विश्वविद्यालयेभ्यो
भिन्नप्रकारकार्यामेव भित्तौ स्थापयितुमभिलाषः कृता। द्वितीये-
तत्कार्य्यानुष्ठानपद्धति र्या सर्व्वैरेव पञ्चनदप्रधानाधिवा-
सिभिः सम्मताऽर्थैः संपुष्टा चेति भो भद्रमुखाः, देशे विद्याप्रचार-
रीतयो यथा यथा भिन्नस्वरूपा भवेयुस्तथा तथैव देशोन्नति-
र्भवेत्। इंलण्डदेशे ह्येवमेव व्यवस्थेयवश्यं युष्मासु बहुभि-
र्विदितमस्ति, तत्र हि द्वौ महान्तौ प्रसिद्धौ च विश्वविद्यालयौ स्तः,
एकः अक्सफोर्ड-नामधेयोऽपरः केम्ब्रिज-नामधेयः। एतयो-
र्विद्याप्रचारपद्धतिः सम्पूर्णं भिन्नरूपैव। अक्सफोर्ड विद्यालये
प्राचीनभाषालिखितसाहित्यानां प्राधान्यं वर्त्तते, केम्ब्रिज विश्व-
विद्यालये तु गणितशास्त्राणां। अधुनातनैंलण्ड-विश्वविद्यालयै-
रपि तादृश एव पन्थाः समवलम्बितः, सम्प्रति म्यानचेष्टर-
नामधेये नगरे भिक्टोरिया-नामधेयो विश्वविद्यालयः स्थापित-
स्तत्र हि अक्सफोर्डाख्ये प्राचीनसाहित्यमिव केम्ब्रिजाख्ये गणित-
शास्त्रमिव विज्ञानशास्त्रं प्रधानपदवीमधिगतम्। भवद्भिर-
प्येतद्विद्यालयेऽपरेषु शास्त्रेषु प्राच्यसाहित्यानां प्राधान्यसंरक्षणेन
सएव पन्था अवलम्बितो योऽस्माभिरिङ्गलण्डनिवासिभिर्बहुशत-
वत्सरपूर्व्वमवलम्बितस्तथा यदवलम्बनेन चास्माभिः सम्यगुन्नति-
र्लब्धा (आनन्दध्वनिः)। अयि भो महाशयाः, यदीदानीमस्यां

प्रसिद्धविद्वज्जनालङ्कृतायां सभायां प्राच्यविद्याविज्ञानविरहितेन मया प्राच्यसाहित्यानां तदध्ययनफलानाञ्च किमप्यभिहितं भवेत् तन्निःसन्देहमुपहसनीयं स्यात्। किन्तु सम्प्रति कण्टेम्परारि रिभुर्-नामके संवादपत्रे प्राच्यविद्याविशारदेन मोक्षमूलरनामधेये-नाभिलिखितं पत्रमेकं पठित्वाहमतीव विस्मितोऽभवम्। तस्मिन् पत्रेऽध्यापक मोक्षमूलर नामधेयेन भारतीयविज्ञानदर्शनसाहित्य शास्त्राणां यथा कथितं यद्यहमपि तथा वदेयम् तदा सत्यमेव जनैरहमत्युक्तिपक्षपातित्वादिदोषै दूंषितो भवेयम्। किन्तु तस्मिन् विद्वद्वरे न कोऽपि तादृशान् दोषानुपन्यस्तुमुत्सहते यतस्तत्समो भारतीयशास्त्रेष्वभिज्ञो विरलएव। ये प्राच्य-शास्त्राध्ययनस्य हितकारित्वं सन्दिहते तान् सर्व्वानेवाहं तत् पूर्व्वोक्तं तुद्रपत्रमवलोकयितुमनुनयामि (आनन्दध्वनिः)। महो-दयगणाः, तत्र पत्रेऽध्यापक-मोक्षमूलरमहोदयेन संस्कृतविद्या-ध्ययनस्य यत् कथितं तदेव वचनमहं यथायथमुपन्यस्यामि। तेन हि सिविल् सर्व्विस परीक्षोत्तीर्णान् भारतमाजिगमिषून् छात्रानुपदेष्टुं तदेव व्याख्यानं दत्तं। तेन कथितं "संस्कृत-शास्त्राध्ययनं हि भवतामग्रेऽप्यविदितमचिन्तितपूर्व्वञ्च साहित्य-तत्त्वं प्रकटयिष्यति येन हि भवतामभिज्ञानं पूर्व्वस्मात् गभीर-तरं भविष्यति, तथा मानवीयान्तःकरणोत्क्रमनशिक्षाणाञ्च वृद्धि-र्भविष्यति"। अतएवैतद्विद्यालयस्थापनप्रयोजनं अक्सफोर्डाध्याप-कस्य मोक्षमूलरमहोदयस्य वचनेनैव साधु प्रमाणीकृतम्। यदि

अध्यापको मोक्षमूलर महोदयोऽभ्रान्तो भवेत्, यदि भारतमस्मान् यूरोपदेशीयानद्यापि बहुषु विषयेषु शिक्षयितुं समर्थं यथा तेनाभिहितम्, तदा प्राच्यविद्यालयस्य संस्थापनं हि न केवलं भारतवासिनामासियामहादेशस्यापरस्थानवासिनां वा येषां केचिदिदानीमेवास्मत्सम्मुखस्था अभवन् किन्तु भारतस्थितानां स्वदेशस्थितानाञ्च यूरोपीयानामप्यशेषोपकारकं भविष्यति (आनन्दध्वनिः)।

स एवमाद्यनेकवचनोपन्यासेनास्मद्विद्यालयं बहु प्रशस्य ततोऽस्य स्वाधीनभावस्य बहुप्रशंसामकरोत्।

---

नवम्बरमासस्य त्रिंशत्तमदिवसे पञ्चनद-महाविद्यालयस्याध्यापकः डकटर लाइटनर-नामा महोदयः वर्षद्वयस्यावकाशं गृहीत्वा इङ्गलण्डं प्रति चलितः। तत्प्रयाणसमये लवपुरवासिनो बहवो धनिनो विद्वांसश्च रेलश्रोथे-ष्टेषन-गृहपर्यन्तं तमनुगम्य तस्मै अभिनन्दनपत्रमेकं प्रददुः निम्नलिखितं श्लोकद्वयञ्च केनापि प्रदत्तम्।

नाद्यापि नो विरमति प्रमुदश्रुपातो<br>
विद्यालयात्तनृपगौरवजः सुधीर।<br>
यावद्वियोगजनिता भवतोऽश्रुधारा<br>
सम्प्रत्युपेत्य नयने विकलीकरोति॥

किं वच्मि सम्प्रति वचो न बहिः समेति<br>
वाष्पोद्गमादविरतं प्रतिरुद्धमार्गम्।<br>
शान्तानुकूलपवनश्च शिवश्च पन्थाः<br>
भूयात् समागम इह त्वरितं पुनस्ते॥

ओं Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम्

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकतत्त्वानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११] नवम्बर १८८२ [११ सङ्ख्या

सूची



कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

(३१) ननु अन्यान्यपि अन्धकारसुवर्णादीनि द्रव्याणि सन्ति, आलस्यादयो गुणा अपि सन्ति, कथं नवेत्यादि। मैवम्, अन्धकारो न द्रव्यं किन्तु तेजोऽभावः। सुवर्णं तेज एव। आलस्यं कृत्यभाव एव। एवमन्यदपि बोध्यम्।

(३२) अभावो द्विविधः,—संसर्गाभावोऽन्योन्याभावश्च। आद्यस्त्रिविधः,—प्रागभावः, ध्वंसः, अत्यन्ताभावश्च। प्रागभावो विनाशी अजन्यः। ध्वंसो जन्योऽविनाशी च। अत्य-

---

(३१) कोई कहता है, तुमने नौ द्रव्य चौवीस गुण ऐसा किस तरह कहा, क्योंकि सिवाय उनके अन्धकार और सुवर्णादि द्रव्य देखेजाते हैं, आलस्य आदि गुण भी देख पड़ते हैं, इसके उत्तरमें कहते हैं ऐसा न कहो, क्योंकि अन्धकार जुदा नहीं, तेजका अभाव ही अन्धकार है; सुवर्ण (सोना) तेजके अन्तर्गत है, और आलस्य कार्य्यका अभाव है। ऐसा और और स्थलोंमें भी जान लेना।

(३२) अभाव दो प्रकारका है,—एक संसर्गाभाव, दूसरा अन्योन्याभाव (भेद)। उनमेंसे पहिला अर्थात् संसर्गाभाव तीन प्रकारका है, (१) प्रागभाव (किसीकी उत्पत्तिके पहिले उसका जो अभाव रहता), (२) ध्वंस (उत्पन्न वस्तुके नाश होनेसे जो अभाव होता), और (३) अत्यन्ताभाव (भूत, भविष्यत्, और वर्त्तमान इन तीन कालोंमे रहनेवाला जो अभाव, जो अभाव कभी दूर नहीं होता)। इनमेंसे प्रागभाव विनाशी (दूर होनेवाला) परन्तु अजन्य (किसीसे उत्पन्न नहीं होता)। ध्वंस जन्य

न्ताभावान्योन्याभावौ त्वजन्यौ अविनाशिनौ। योग्यानुपलब्ध्या" अभावः प्रत्यक्षः; अन्यत्र तु अतीन्द्रियः।

(३३) अथ प्रमा कथ्यते, सा चतुर्विधा, प्रत्यक्षानुमित्युपमिति-शाब्दभेदात्। तत्करणानि प्रमाणानि चत्वारि,—प्रत्यक्षा-

---

(अर्थात् वस्तुके नाशसे उत्पन्न होता), परन्तु अविनाशी (दूर होनेवाला नहीं)। अत्यन्ताभाव अजन्य (अर्थात् किसीसे उत्पन्न नहीं होता) और अविनाशी (दूर होनेवाला भी नहीं), अन्योन्याभाव वा भेद एकही है, और अजन्य और अविनाशी है। योग्य (प्रत्यक्षके योग्य) वस्तुकी अनुपलब्धि अर्थात् अप्राप्तिसे जो अभाव, वह प्रत्यक्ष, और सब अभाव अतीन्द्रिय अर्थात् अप्रत्यक्ष।

(३३) अब प्रमाका * वर्णन किया जाता है, प्रमा (अर्थात् यथार्थज्ञान) चार प्रकारकी है—(१) प्रत्यक्ष, (२) अनुमिति, (३) उपमिति, और (४) शाब्द। प्रमाके करण अर्थात् साधकको† प्रमाण कहते हैं, प्रमाण भी चार प्रकारके हैं, (१) प्रत्यक्ष, (२) अनुमान, (३) उपमान, और (४) शब्द। इनमेंसे प्रत्यक्ष दो

---

* किसीने 'अर्थापत्ति' नाम और एक प्रमाण माना, परन्तु वह अनुमानके ही अन्तरमें आता है। इस लिये पृथक् प्रमाण नहीं। अर्थापत्तिका उदाहरण जैसा "यह मोटा मनुष्य दिनमें कुछ नहीं खाता" इससे जाना जाता है कि वह रात्रिमें खाता है, यदि ऐसा न होगा तो किस प्रकारसे मोटा हुआ। ऐसे ज्ञानको अर्थापत्ति कहते हैं।

† जिस असाधारण सहकारिकी प्राप्त हो कर मनमें ज्ञान उत्पन्न होता है।

नुमानोपमानशब्दभेदात्। तत्र प्रत्यक्षं द्विविधं—निर्विकल्पकं, सविकल्पकं च। प्रत्यक्षकरणानि षड़िन्द्रियाणि,—घ्राण-रसन-चक्षुस्त्वक्-श्रोत्र-मनांसि। एतानि सन्निकर्षसहितानि प्रत्यक्षं जनयन्ति। सन्निकर्षश्च लौकिकोऽलौकिकश्च, अलौकिक-स्त्रिविधः,—ज्ञानलक्षणा, सामान्यलक्षणा, योगजश्च। लौकिकः षड्विधः,—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणता चेति। संयोगेन द्रव्य-

---

प्रकारके हैं—एक निर्व्विकल्पक, दूसरा सविकल्पक; प्रत्यक्षके करण अर्थात् साधक छ इन्द्रिय हैं, जिनका नाम घ्राण (नासिका) रसन (जिह्वा), चक्षुः, त्वक् (चमड़ा), श्रोत्र (कान), और मन। ये इन्द्रिय सन्निकर्ष (विषयसे सम्बन्धरूप व्यापार)के बलसे प्रत्यक्षको उत्पन्न करते हैं। सन्निकर्ष दो प्रकारके हैं, एक लौकिक दूसरा अलौकिक; इनमेंसे अलौकिक सन्निकर्ष तीन प्रकारके हैं, (१) ज्ञानलक्षणा, (२) सामान्यलक्षणा, (३) योगज। लौकिक सन्निकर्ष छ प्रकारके हैं—(१) संयोग, (२) संयुक्तसमवाय, (३) संयुक्त समवेत समवाय, (४) समवाय, (५) समवेत समवाय और (६) विशेषणता (स्वरूप)। संयोगसे अर्थात् द्रव्यपर इन्द्रियके संयोग रूप सम्बन्धसे द्रव्यका प्रत्यक्ष होता है; संयुक्त समवाय (इन्द्रियसंयुक्त जो द्रव्य उसमें रहता है जो समवाय) सम्बन्धसे शब्द छोड़ कर द्रव्यमें समवाय सम्बन्धसे जो रहता है उनका प्रत्यक्ष होता है; संयुक्तसमवेतसमवाय सम्बन्धसे शब्दमात्रवृत्ति

ग्रहः, संयुक्तसमवायेन शब्दान्यगुणकर्म-द्रव्यवृत्तिजातीनां प्रत्यक्षं, संयुक्तसमवेतसमवायेन शब्दमात्रवृत्तिजातीतर-गुणवृत्ति-कर्म्म-वृत्तिजातीनां प्रत्यक्षं, समवायेन शब्दस्य, समवेतसमवायेन शब्द-वृत्तिजातीनां विशेषणतया अभावस्य, समवायस्य च प्रत्यक्षम् ।

(३४) अलौकिकः स यथा, ज्ञानलक्षणया 'सुरभि चन्दनम्' इति चाक्षुषं ज्ञानं, सामान्यलक्षणया घटत्वेन रूपेण यावद्घट-

---

जाति छोड़ कर द्रव्यसमवेत जो गुणादि उनमें समवाय सम्बन्धसे वर्त्तमान जो गुणत्वादि जाति उनका प्रत्यक्ष होता है; समवाय सम्बन्धसे शब्दका प्रत्यक्ष होता है, और शब्दमें समवाय सम्बन्धसे वर्त्तमान जो शब्दत्व जाति उसका प्रत्यक्ष समवेत-समवाय सम्बन्धसे होता है; अभाव और समवाय का विशेषणता अर्थात् स्वरूप सम्बन्धसे प्रत्यक्ष होता है।

(३४) अलौकिक सन्निकर्ष—जैसा ज्ञानलक्षणाके द्वारा "सुरभि चन्दनं पश्यामि" अर्थात् "चन्दनगत सौरभको देखता हूं" ऐसा चाक्षुष ज्ञान होता है, यहां चक्षुके द्वारा सौरभके ज्ञानमें जो सन्निकर्ष है वह अलौकिक है। ऐसे सामान्य लक्षणा (समानाकार वस्तुका ज्ञान जिससे होता है) के द्वारा घटत्व-रूपसे समुदय घटका ज्ञान होता है, एक घटको देख कर उसमें स्थित घटत्व धर्मको अनुभव कर समुदय घटका ज्ञान जिससे होता है उसका नाम सामान्यलक्षणा। योगियोंका जो इन्द्रियोंके सन्निकर्षके विनाहि समुदय

ज्ञानं, योगजधर्म्मेण योगिनां सर्व्वज्ञानम्। तत्र निर्व्विकल्पकं
विशेष्यप्रकारादिरहितं वस्तुस्वरूप-मात्रज्ञानं, सविकल्पकं सप्र-
कारकं। भासमानवैशिष्ट्यप्रतियोगित्वम् प्रकारत्वं, यथा 'अयं
घटः'—इत्यत्र अयं विशेष्यः, घटत्वं प्रकारः, भासमानवैशिष्ट्यं
तयोः समवायः, तस्य प्रतियोगि घटत्वं। सविकल्पकमेव
विशिष्टवैशिष्ट्यज्ञानं ; यथा 'अयं दण्डी'—इत्यत्र दण्डत्वविशि-

---

वस्तुका ज्ञान होता है उसका नाम योगज। निर्व्वि-
कल्पक ज्ञानमें विशेष्य और प्रकारादिसे रहित हो कर वस्तुके
स्वरूप मात्रका ज्ञान होता है अर्थात् जिससे वस्तु किस प्रका-
रका है और कैसा है इत्यादिका ज्ञान नहीं होता केवल वस्तुका
ज्ञान होता उसको निर्व्विकल्पक कहते हैं। सविकल्पक ज्ञानमें
वस्तुके प्रकारका भी ज्ञान है अर्थात् वस्तु किस प्रकारका है
ऐसा ज्ञान होता है। स्पष्ट रूपसे प्रतीयमान जो सम्बन्ध
उसके प्रतियोगीको प्रकार कहते हैं, जैसा "अयं घटः" 'यह
घट' इस ज्ञानमें यह विशेष्य और घटत्व प्रकार है, विशेष्य
और प्रकारका समवाय ही 'भासमान वैशिष्ट्य' (स्पष्ट रूपसे
प्रतीयमान सम्बन्ध) है। यहां उस सम्बन्धका प्रतियोगी घटत्व*
है। सविकल्पक ज्ञान को "विशिष्ट वैशिष्ट्य ज्ञान" कहते हैं।

---

* सारे सम्बन्धका एक अनुयोगी और एक प्रतियोगी है। आधारको अनुयोगी और आधेयको प्रतियोगी कहते हैं। जैसा समवाय सम्बन्धका घट अनुयोगी और घटत्व प्रतियोगी है।

ष्टस्य वैशिष्ट्यं पुरुषे भासते। अथ प्रक्रिया, आदौ इन्द्रिय-सन्निकर्षात् 'घटघटत्वे' इति निर्विकल्पकं, ततः 'अयं घटः' इति विशिष्टज्ञानम्।

(३५) तत्र 'परतः प्रामाण्यग्रहः' इति नैयायिकाः, यथा आदौ 'घटः' इति व्यवसायः, ततः 'घटमहं जानामि' इत्यनु-व्यवसायः, ततः 'प्रामाण्याप्रामाण्ये' इति कोटिद्वयस्मरणम्;

---

जैसा 'अयं दण्डी' यह दण्डसे युक्त है। इस वाक्यमें दण्डत्व धर्मसे युक्त जो 'दण्ड' उसका (वैशिष्ट्य-संयोग रूप) पुरुषमें प्रतीत होता है। अब ज्ञानकी प्रक्रियाका वर्णन किया जाता है। जब वस्तुके साथ इन्द्रियका सन्निकर्ष मात्र होता है तब वस्तु और उसके धर्मका अविशेष रूपसे (घट घटत्व इत्यादि रूपसे) ज्ञान होता है, जिसको निर्व्विकल्पक कहते हैं। पिछेसे उसका विशेष ज्ञान होता है, जैसा 'यह घड़ा है' 'यह कापड़ा है' इत्यादि।

(३५) नैयायिकोंके मतमें परम्परा से 'प्रामाण्य' का ज्ञान होता है। जैसा पहिले 'घट' ऐसा बोध, फिर 'मैं घटको जानता हूं' ऐसा अनुव्यवसाय पूर्व बोधका दृढ़ीकरण, अनन्तर प्रामाण्य और अप्रामाण्य इन दोनों पक्षोंका स्मरण, पिछेसे यह जो घटके विषयमें मेरा ज्ञान हुआ वह ठीक है या नहीं ऐसा संशय होता है। फिर विशेष दर्शन अर्थात् घटसे भिन्न पदार्थमें जो जो धर्म्म रहते हैं इसमें वे धर्म्म

अथ चतुर्थे 'इदं ज्ञानं प्रमा न वा'—इति प्रामाण्यसंशयः, ततो विशेषदर्शनानन्तरं प्रामाण्यग्रहः,—इदं ज्ञानं प्रमा समर्थ-प्रवृत्तिजनकत्वात् ज्ञानान्तरवत्। स्वतः-प्रामाण्यग्रहः-इति त्रयो मीमांसकाः, तत्र गुरुमते 'अयं घटः' इति ज्ञानं, विषयं आत्मानं, ज्ञानं प्रामाण्यं च गृह्णाति। मुरारिमिश्रमते 'अयं घटः' इति ज्ञानानन्तरं घटमहं जानामीत्यनुव्यवसायः, तेनैव प्रामाण्य-ग्रहः। भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयं यथा तथा तद्वृत्ति प्रामाण्यञ्च, तथाहि 'अयं घटः' इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते, ततो 'ज्ञातो मया घटः' इति ज्ञातताप्रत्यक्षं, ततो व्याप्त्यादिप्रत्यक्षानन्तरं ज्ञानानुमानं यथा, अहं घटत्व-प्रकारकज्ञानवान् घटत्वप्रकारकज्ञाततावत्त्वात्, तावतैव तस्य धर्म्मधर्म्मिविषयकत्वेन प्रामाण्यानुमानम् इति प्रत्यक्षनिरूपणम्।

नहीं ऐसा विचार के पिछे मेरे घटके विषयमें जो ज्ञान हुआ वह ठीक है ऐसा स्थिर होता है। उसके अनुमान की रीति यह है कि यह ज्ञान प्रमा अर्थात् ठीक है, क्योंकि इससे प्रकृत वस्तुका बोध हुआ जैसा और ज्ञानसे होता है। मीमांसकोंके मतमें प्रामाण्य ज्ञान साक्षात् ही होता है। उसमें और किसीकी अपेक्षा नहीं रहती है। गुरुके मतमें 'यह घट है' यह ज्ञान ही विषय—घट और ज्ञानके प्रामाण्यको संग्रह करते हैं। मुरारि मिश्रके मतमें "यह घट है" इस ज्ञानके अनन्तरमें घटको जानताहूं ऐसा जो अनुव्यवसाय होता है उसीसे ही प्रामाण्यका संग्रह होता है।

(३६) अनुमितिकरणमनुमानं, अनुमितित्वं जातिः, व्यापार-वत् कारणं करणं, व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः। हेतुज्ञानादि करणं, परामर्शो व्यापारः। परामर्शश्च व्याप्ति-विशिष्टपक्षधर्मताज्ञानं, यथा 'वह्निव्याप्यधूमवानयम्' इति। आदौ महानसादौ धूमे वह्निसामानाधिकरण्यग्रहे सति 'धूमो

---

(३६) अनुमितिका करण अर्थात् साधक जो प्रमाण उसका नाम अनुमान। अनुमितिमें जो अनुमितित्व धर्म्म है वह जाति है। व्यापार विशिष्ट जो कारण उसका नाम करण, व्यापारका अर्थ "तज्जन्यत्वे सति तज्जन्यजनकः" तत् शब्दसे कर्त्ताका ज्ञान होता है, व्यापार एक प्रकारका क्रिया विशेष, जो कर्त्तासे पहिले उत्पन्न हो कर कर्तृजन्य जो कार्य्य उसका उत्पादक होता है। अनुमितिमें हेतु-ज्ञानादि करण है, और परामर्श व्यापार है, "व्याप्तिविशिष्ट पक्षधर्मता ज्ञान" को परामर्श कहते हैं अर्थात् पक्ष (जिसमें अनुमान किया जाता है) साध्य व्याप्य हेतु विशिष्ट (जिसका अनुमान किया जाता है उसका नाम साध्य, साध्यका व्याप्य अर्थात् साध्यसे अधिक स्थानमें नहीं रहनेवाला जो हेतु उससे युक्त) ऐसा जो ज्ञान उसको परा-मर्श कहते हैं, जैसा यदि धूमको हेतु कर पर्व्वत में वह्निका अनुमान किया जावे तो यह पर्व्वत वह्निव्याप्य धूम करके युक्त है ऐसा ज्ञान परामर्श है। पहिले महानस अर्थात् रसुइका स्थान आदि स्थलोंमें सर्व्वदा ही वह्निके साथ धूमको

## पञ्चनद-महाविद्यालयो-
### पाधिदान-महोत्सवः।

कथितमेव पूर्व्वमस्माभिरेतावत्समयपर्य्यन्तं पञ्चनदविद्यालयः केवलं प्राच्यशास्त्रेष्वधीतिभ्यो यथायोग्यं विविधानुपाधीन् प्रदातुं समर्थं आसीत्। सम्प्रति तु १८८२ खृष्टाब्दीयाक्टूबरमासस्य चतुर्दशदिवसादारभ्य परमकृपालुहृदयस्य भारताधिनेतुः करुणया भारतभूमेरपरप्रदेशीय-विश्वविद्यालयवत् इङ्गलण्डीयभाषाकृतविद्येभ्यस्तथा देशीयभाषानूदितपाश्चात्यदर्शनादिशास्त्राभिज्ञेभ्यश्च 'विए' इत्याद्युपाधीन् दातुं समर्थोऽभवत्। वैशिष्ट्यन्तु तावत्—अपरे हि विश्वविद्यालयाः केवलमिङ्गलण्डीयभाषया पाश्चात्यदर्शनादि-शास्त्रेष्वधीतिभ्य एवोपाधिं ददति, एष हि विद्यालयो न केवलमिङ्गलण्डीयभाषया किन्तु यया कयापि देशीयभाषया तत्तत्पाश्चात्यदर्शनादिष्वधीतिभ्य उपाधिं ददातीति।

वर्त्तमानमासस्याष्टादशदिवसे पूर्व्वोक्तविद्यालयस्य यथोचितपरीक्षोत्तीर्णेभ्यश्छात्रेभ्यः पारितोषिकोपाधिदान-महोत्सवः लवपुरस्थराजकीय-प्रधानविद्यालय-महाकक्षायां संवृत्तः। एतदर्थं हि तत्र कक्षायां महती सभा जाता, स्वयं ससागरभारताधिनेता श्रीमान् लर्ड रिपन महोदयो यस्या आधिपत्यं चकार; पञ्चनदशासकप्रधानोऽपरे च प्रधानराजपुरुषा बहवो निम्न-

भूपतयो राजप्रणिधवन्त्थाना अध्यापका धनिनो विद्वांसश्च तत्र समेत्य सभागृहमलञ्चक्रुः। किं बहुना, सुविस्तीर्णमपि तत् सदोगृहं सर्व्वतो जनाकीर्णं बभूव। बहवश्चोपवेशनस्थानमप्राप्य दण्डायमाना आसन्।

दिवा-द्वितीय-प्रहर-समये भारतीय-प्रधानतम-राजपुरुषः सिनेटाख्यसभा-सदस्यैः पञ्चनद-प्रधान-राजपुरुषाग्रेसरैः ससम्मानमभियातोऽनुगम्यमानश्च सभाप्रवेशमकरोत्। अथ तस्य प्रवेशावसरे सर्व्वे सभास्थिता दण्डायमाना बभूवुः। आसनं भजमाने तु तस्मिन् सर्व्वे आसनं भेजिरे।

ततः पञ्चनद-प्रधान-राजपुरुषेण समुत्थाय तत्रभवते भारताधिनेत्रे तत्सभा-कर्त्तव्यजातानि विज्ञाप्य सभाकार्य्यसमारम्भणाय प्रार्थना कृता। ततः सोऽपि भारताधिनेता सभाकार्य्यमारब्धुमादिदेश। ततः सभाकार्य्यारम्भः संवृत्तः। सर्व्वं हि कर्त्तव्यजातं साधु सम्पादितमभूत्। एतत्त्वस्मद्विशेषानन्दस्थानं यदस्मद्विद्यालयाध्यक्षः पञ्चनद-महाविद्यालय-रेजिष्ट्रारपदाभिषिक्तः श्रीमान् लिटनराभिधेयो डि, ओ, एल् (डक्टर अव ओरिएण्टल लार्निङ्) इति सम्मानसूचकं सर्व्वोन्नतञ्चोपाधिमधिगतः। विद्योदयस्याल्पावयवत्वान्न वयं सर्व्वं सभाकार्य्यं विवरीतुं शक्नुमस्तदत्रैव तूष्णीम्भूयाशास्महेऽग्रिमपत्रे भारताधिपतेः सभाकार्य्यान्त-वचनानां सारमनुवक्तुमित्यलम्।

---

## गवर्नर-जेनेरल-स्तुतिः ।

(प्रधानपण्डितकृता)

कृतज्ञाः सन्त्येते किमु न सभिका लैट्नरकृते-
र्यतो जाता तारज्ञनिरखिलभूगर्भविततो ।
हिमांशुप्रद्योतस्तुतविविधविद्यालययशः-
समूहस्याकाण्डन्तर्दपि महिमा मण्डलपतेः ॥

रिपुघ्नस्ते वन्द्यो भवति जनकानामिव पुर-
स्त्वदीयान् पुष्यन्तः पृथुलपृथुकान् भावललितान् ।
यथा संस्तूयन्ते जननिकरगीतोपकृतयो-
महान्तस्ते तद्वद्यमिह च तस्यापि पुरतः ॥

गृणन्तस्ते कीर्त्तिम्परमरमणीयाद्भुतरसां
प्रतीतान्तत्प्रीतिं समुदितजनानामपि विभो ।
लभेमेति प्रज्ञा वितरति ममापीह सुकृते
त्वदीये प्रस्तोतुं गुणगणकदम्बन्नयरते ॥

जय भारतभूमिपते सुमते
रिपुहन् हिमशैलयशोविधृते ।
नभनागफणास्थितहृदयैकमिते
दसुवीयशरद्भ्रमिकर्मकृते ॥

लवपूरुपकण्ठनिवेशविधौ
निजनिम्नधरादनिषत्समितौ ।
वकुसभ्यजनान्वितजम्बुपतौ
परिकल्पितविश्वजनीनकृतौ ॥

प्रतिवर्षपरीक्षणलभ्यपदे
स्थिरताम्भवदुत्कलितां नियते ।
विनिवेदयतीह यथाभणित-
म्भवता फलभावविधानवता ॥

परिपूरयितुम्पणितन्न पुरा
तदिहास्ति तथैव कृतन्बिस्तृतम् ।
यदि चेतसि सत्यभृतां स्मरण-
न्तदनेन निमीरघुराजप्रभू ॥

न पुनः स्मृतिमात्रजिताः सुभृशम्
किमु कोविदसभ्यजना वदत ।
परिपूर्णमनोरथतोषधृतां
वितता खलु वाग्वनितानुदिनम् ॥

परिनृत्यति गायति ततसुयशः
समुदीरितपञ्चमकं सुमदम् ।
सरितामिह पञ्चकमध्यगताः
न जनाः किल केवलमेव मृताः ॥

परमार्थ्यधरातलवासजुषां
विहितं फलभारनतं शुभदम् ।
हितकर्म्मरतो मनुजा मनुजाः
भवितुं भुवि शक्नुवतेऽधिकृताः ॥

---

## आत्मशासनम् ।

(४)

इत्थं हि राज-नियुक्त-सभ्या यावज्जीवं स्वपदं दधुः । मरणादिकमन्तरेण न तेषां पदच्युतिः पदवर्त्तनं वा कदाप्यभवत् । तेषाञ्च प्रायो भूम्यधिकारादिना सरस्वतीसपत्नीबान्धवबलात् प्रथमतएव प्रजानामुपरि प्रतिघातरहिता प्रभुता स्थिता, ततश्च म्युनिसिपल-प्रमुख-स्थानीय-सभानां चिरसम्बलजनिताधिपत्ययोगेन प्रजासु दुःसहएव प्रतापो ववृधे । अपरेषां सभ्यानामपि त एव प्रजाभिः स्वप्रतिनिधिरूपेण निर्व्वाचिता अभवन् येषां नाम प्रजासु किमप्याधिपत्यकारणं भयोत्पादकं वा स्थितम् । ते चापि सकृन्नियुक्ताः शरीराद्यपायं विना न स्वपदात् प्रच्युता बभूवुः ।

एवन्नाम प्राचीनरीत्यनुसारतो हि म्युनिसिपल-सभानां न तादृगुन्नतिः सम्भाव्यते स्म । उन्नतिर्हि भयकोश्योर्दोषगुणप्रदर्श-

तादृगुणबहुलपक्षाश्रयेण जायते, तादृगुभयकोटिदोषगुण-प्रदर्शनञ्च प्रतनूतनादिविरुद्धपक्षयोरेकत्र समागमेन भवति, ततएवोच्यते यत्र एकएव पक्षस्तत्र कथमुन्नतिरिति। किञ्च—यथैकस्य बुद्धिर्न सर्व्वविषयसञ्चारिणी तथा चिरसमागमेनैकता-पन्नबहुजनाकीर्णस्यापि समाजस्य बुद्धिरेकत्रचारिण्येव भवति, न त्वितकरमपि नवं पन्थानमभिधावति, येन च प्रजानामभि-लषितहितागमः प्रतिबध्यते। एवमादिहेतुभिरपि प्राचीन-रीति र्न प्रजानां सम्यगभीष्टप्रदासीत्। सम्भवेयुः कान्येतद-पवादस्थलानि, परं तानि विरलान्येव। वर्त्तमानरीत्या हि प्रजास्वेव सभ्यसभाध्यक्षादि-निर्व्वाचनभारः समर्पितः। प्रजास्तु स्वेच्छया यं कमपि स्वप्रतिनिधिं सभाध्यक्षञ्च कर्त्तुमकर्त्तुं वा समर्था भवेयुः। न कोऽपि सभ्यः सभाध्यक्षो वा चिराय स्वपद-मधिकर्त्तुं समर्थो भवेत्।

[ क्रमशः ।

ओं

Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११]   अक्टूबर १८८२   [१० सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलापः प्रकाशनीयः। विद्योदय-कार्य्याध्यक्षः—लवपुरे।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालान्यतमाध्यापक-पण्डित-श्रीसुखदयालु-विरचिता मूल्यं ।)

---

## विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।८०

,, पश्चाद्देयं ... ... ... ३।८०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

छन्दोबोधः—(संस्कृतहिन्दीभाषा-रचनोपकारी) ग्रन्थोऽयं सुगम-हिन्दीभाषायां लिखितः, लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्ट्रार'स अफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्यः। कवितावली—अत्युत्तमकविताग्रन्थः—मूल्यं ।) अस्मत्-समीपे प्राप्तव्या ।

वसायश्च किञ्चिदिति ज्ञानं विशेषादर्शनाद्भवति। अत्र, 'यदि अयं निर्वह्निः स्यात्तदा निर्धूमः स्यात्' इति तर्कों विपर्य्ययमध्ये बोध्यः। तत्र नैयायिकमते स्वप्नानध्यवसायौ विपर्य्ययमध्ये प्रविष्टौ। तेन तन्मते अयथार्थज्ञानं द्विविधं,—संशयो विपर्य्ययश्चेति।

(२६) सुखं धर्म्मजन्यं। दुःखमधर्म्मजन्यम्। इच्छा इष्टसाधनताज्ञानजन्या। द्वेषोऽनिष्टसाधनत्वज्ञानजन्यः। कृतिस्त्रिविधा,—जीवनयोनियत्नरूपा, प्रवृत्तिः, निवृत्तिश्च। आद्या

---

विशेष नहीं जाना जाता उसका नाम अनध्यवसाय, जैसा "यदि यह वह्नि-शून्य होता तो धूम-शून्य भी होता" ऐसा ज्ञानको अनध्यवसाय कहते हैं, ऐसा ज्ञान विपर्य्ययके अन्तर्गत भी हो सक्ता। नैयायिकोंने स्वप्न और अनध्यवसायको विपर्य्ययके अन्तर प्रविष्ट किया है, इस लिये उनके मतमें अयथार्थ ज्ञान केवल दो प्रकारके है,—एक संशय दूसरा विपर्य्यय।

(२६) धर्म्मसे सुख होता है। और अधर्म्मसे दुःख। इष्टसाधनता ज्ञानसे इच्छा उपजती है, अर्थात् जिससे अपने वाञ्छित वस्तुके लाभकी सम्भावना होती उस पर इच्छा होती। अनिष्टसाधनता ज्ञानसे द्वेष होता, अर्थात् जिससे अनिष्ट होनेकी सम्भावना उसीमें ही द्वेष होता। कृति तीन प्रकारकी है—(१) जीवनयोनियत्न अर्थात् जो यत्न शरीरमें प्राण संञ्चारका कारण है, (२) प्रवृत्ति, (३) निवृत्ति। प्रथमका कारण जीवन और अदृष्ट।

जीवनादृष्टजन्या। द्वितीया इच्छाजन्या। तृतीया द्वेषजन्या। धर्मः श्रुतिविहितकर्मजन्यः। अधर्मः श्रुतिविरुद्धाचरणजन्यः। वेगाख्यः संस्कारः आद्यक्रियाजन्यः, द्वितीयादिक्रियाजनकः, यथा वेगेन वाणश्चलतीति। भावनाख्यः संस्कारो विशिष्ट-ज्ञानजन्यः। स्थितिस्थापकाख्यः संस्कारः कारणगुणप्रक्रमजन्यः। गुरुत्वं कारणगुणप्रक्रमजन्यं। नैमित्तिकं द्रवत्वं जतुघृतद्रुत-

---

दूसरी (प्रवृत्ति) इच्छाजन्य अर्थात् यह हमारा इष्टसाधक है और इसके सम्पादनमें हमारी योग्यता भी है, अतएव हमको ऐसा करना उचित है, ऐसी इच्छा जहां होती है वहां ही प्रवृत्ति होती है। तीसरा अर्थात् निवृत्ति द्वेषसे उत्पन्न होती है। वेदमें जिन कर्मोंका विधान है उनको करनेसे धर्म होता है। और वेदके विरुद्ध अर्थात् प्रतिकूल आचरणसे अधर्म होता है। वेगकी उत्पत्तिके लिये पहिले किसी क्रियाकी आवश्यकता है, फिर उसी वेगसे जो क्रिया उत्पन्न होती, जैसा वेगसे वाण जाता है यहां हस्तकी क्रियासे पहिले वाणमें वेग उत्पन्न होता, फिर उसी वेगसे ही वाणकी क्रिया होती। भावनारूप संस्कार विशिष्ट ज्ञानसे उत्पन्न होता है। स्थितिस्थापकसंस्कार, कारणसे (समवायि कारणसे) कार्य्यमें उत्पन्न होता है। गुरुत्व (भार) भी समवायि कारणसे कार्य्यमें उत्पन्न होता है। नैमित्तिक द्रवत्व जतु (लाक्षा), घृत (घिउ), और सुवर्ण (सोने)में रहता है, और तापकर वस्तुके संयोग से उत्पन्न

सुवर्णादीनामग्निसंयोगजन्यं। स्नेहः कारणगुणप्रक्रमजन्यः। शब्दस्त्रिविधः,—संयोगजः, विभागजः, शब्दजश्च; आद्यो भेरीदण्डसंयोगजन्यः, द्वितीयो वंशादिदलद्वयविभागजन्यः, तृतीयस्तु संयोगेन विभागेन च आद्ये शब्दे जनिते तेन शब्देन निमित्तवायुसहकृतेन वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा जन्यते।

इति गुणनिरूपणम्।

(२७) उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च

---

होता है। स्नेह (चिकनाई) समवायि कारणसे कार्य्यमें उत्पन्न होता है। शब्द तीन प्रकारका है—(१) संयोगज,(२) विभागज, (३) शब्दज; प्रथम भेरी दण्डके संयोगसे जो शब्द उत्पन्न होता है, दूसरा बांस वा किसी प्रकारकी लकड़ी के फाडनेसे जो शब्द उत्पन्न होता है, तीसरा पहिले संयोग वा विभागसे किसी प्रकारका शब्द उत्पन्न हुआ फिर उस कालमें बहते हुए वायुकी सहायतासे तरङ्गमाला वा कदम्बकोरककी न्याई * उसी शब्दसे चार ओर शब्द फैल जाते हैं।

इति गुणनिरूपण।

(२७) क्रिया—उत्क्षेपण (ऊपर फेकना), अवक्षेपण (नीचे फेकना), आकुञ्चन (अपने तरफ खेंचना), प्रसारण (फैलाना), और गमन (जाना), इन पांच प्रकारोंकी है। इन उत्क्षेपणादि पांच

---

* तरङ्गमालाकी न्याई—जैसा किसी जलाशयके बीच कोई ढेला फेंका जाय, तो पहिले एक छोटासा गोलाकार तरङ्ग उत्पन्न होता, फिर वह तरङ्ग वायुसे क्रमसे बढ़ कर कनारेमें पहुंच जाता है। कदम्बकोरककी न्याई—जैसा कदम्बकी कलि एकबेरही चार ओरसे खिलता है।

कर्म्माणि । उत्क्षेपणत्वादीनि जातयः । पृथिवी-जल-तेजो-वायु-मनोवृत्तीनि कर्म्माणि सर्व्वाणि अनित्यानि ; अतीन्द्रिय-वृत्तीनि अतीन्द्रियाणि, प्रत्यक्षवृत्तीनि प्रत्यक्षाणि । अथ कर्म्म-प्रक्रिया,—संयोगेन नोदनाख्येनाद्यं कर्म्म जन्यते, द्वितीयादि वेगजन्यं । क्रियातो विभागः, विभागात् पूर्व्वसंयोगनाशः, ततः उत्तरदेशसंयोगोत्पत्तिः, ततः कर्म्मविभागयोर्नाशः ।

इति कर्म्मनिरूपणम् ।

प्रकारकी क्रियाओंमें जो उत्क्षेपणत्वादि धर्म्म हैं वे जाति हैं। सारी क्रिया, पृथिवी, जल, तेज, वायु और मन इनमें रहती हैं और अनित्य हैं ; इनमेंसे अतीन्द्रिय (अर्थात् किसी इन्द्रिय-से जिसका ज्ञान नहीं होता ऐसे) पदार्थमें जो क्रिया रहती है वह अतीन्द्रिय है अर्थात् किसी इन्द्रियके द्वारा उसका भी प्रत्यक्ष नहीं होता, और जो प्रत्यक्ष पदार्थमें (इन्द्रियसे जिसका ज्ञान होता है ऐसे पदार्थमें) रहता है उसका प्रत्यक्ष होता है। अब क्रियाकी प्रक्रियाका वर्णन किया जाता है,—चालन-रूप हस्तके विशेष संयोगसे आदि क्रियाकी उत्पत्ति होती है, फिर वेगसे दूसरी क्रियाकी उत्पत्ति होती है। क्रियासे विभाग, विभागसे पहिले संयोगका नाश, फिर उत्तर देश संयोगकी उत्पत्ति, उसके पीछे क्रिया और विभागका नाश होता है।

इति कर्म्मनिरूपण।

(२८) सामान्यं त्रिविधं,—व्यापकं, व्याप्यं, व्याप्यव्यापकञ्च । व्यापकं सत्ता, व्याप्यं घटत्वादि, द्रव्यत्वादि व्याप्यव्यापकम् ।

---

(२८) सामान्य अर्थात् जाति तीन प्रकारकी है,—व्यापक (जो अधिकमें रहता है), व्याप्य (जो अल्पमें रहता है), और व्याप्यव्यापक (जो किसीकी अपेक्षा अधिकमें और किसी की अपेक्षा अल्पमें रहता है)। व्यापक जाति सत्ता (द्रव्य, गुण और कर्म्म) इनका कोई विशेष धर्म्म। यह व्यापक है क्योंकि जितने जाति हैं सबसे यही अधिकमें रहती है, इससे अधिकमें और कोई जाति नहीं रहती क्योंकि द्रव्य गुण और कर्म्म जिनके एक एकके अन्तर्गत बहुत छोटी छोटी जाति हैं, उन तीनोंमें यह रहती है। व्याप्य जाति घटत्व, क्योंकि यह धर्म्म केवल एक प्रकारके द्रव्यमें रहता है, इससे अल्पमें और कोई जाति नहीं रहती है। व्याप्यव्यापक जाति द्रव्यत्व, क्योंकि यह सत्ता जातिसे अल्पमें रहती है अर्थात् सत्ता द्रव्य गुण कर्म्म इन तीनोंमें रहती है, और द्रव्यत्व केवल द्रव्यमें रहती है इस लिये सत्तासे व्याप्य है, और द्रव्यत्वके अन्तर्गत पृथिवीत्वादि नौ प्रकारकी जाति हैं जिनमेंसे एक पृथिवीत्वके ही अन्तर्गत घटत्व पटत्व आदि करके बहुत प्रकारकी हैं। अब देखो, घटत्व पटत्व और पृथिवीत्व इन सबोंसे द्रव्यत्व अधिकमें रहती है, इस लिये द्रव्यत्व घटत्वादिका व्यापक है। इसमें व्याप्यत्व और व्यापकत्व दो प्रकारके धर्म्म ही है।

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥"

नित्यत्वे सत्यनेकसमवेतत्वमिति सामान्यलक्षणं।

व्यक्तिका अभेद (दूसरा न होना), तुल्यता (बराबरी), सङ्कर (एक दूसरेसे रैल जाना), अनवस्थिति (अस्थिरता), रूपहानि (जिसका जो स्वरूप उसका उसी रूपसे ज्ञान न होना) और असम्बन्ध (जहां समवाय सम्बन्ध नहीं) ये छः जातिके बाधक है अर्थात् ये छःप्रकारके धर्म जहां होते, वहां जाति नहीं होती। व्यक्तिका अभेद—जैसा आकाशत्व, आकाशत्व यह धर्म केवल आकाश रूप एकही व्यक्तिमें रहता है, आकाश एकही है दूसरा नहीं; तुल्यत्व—जैसा घटत्व और कलसत्व ये दो जाति नहीं, क्योंकि घट जिसे कहते हैं कलसभी उसे कहते हैं, घट और कलस तुल्य अर्थात् बराबर हैं, इस कारण घटत्व धर्म भी जिसमें रहता कलसत्व धर्मभी उसीमें रहता। ऐसे स्थलमें एक घटत्व जातिसे ही कार्य्य सिद्ध होता, दोनों जाति माननेमें केवल गौरव है; सङ्कर—जैसा भूतत्व मूर्त्तत्व ये जाति नहीं हैं, क्योंकि ये एक दूसरमें रैले मिले हैं। देखो भूतत्व पृथिवी, जल, वायु, तेज और आकाश इन पांचोंमें रहता है, और मूर्त्तत्व पृथिवी, जल, तेज, वायु और मन इन पांचोंमें रहता है, तो देखो, भूतत्व और मूर्त्तत्व ये दो रैले हुए हैं क्योंकि भूतत्व और मूर्त्तत्व पृथिवी, जल, तेज और वायु इन चारोंमें

सामान्यानि नित्यान्येव, अतीन्द्रियवृत्तीनि अतीन्द्रियाणि, प्रत्यक्षवृत्तीनि प्रत्यक्षाणि ।

(२८) नित्यद्रव्यवृत्तयोऽन्त्याः विशेषाः । ते च बहवो

---

बराबर है, परन्तु भूतत्व आकाशमें है वहां मूर्त्तत्व नहीं, और मूर्त्तत्व मनमें है वहां भूतत्व नहीं, अतएव भूतत्व और मूर्त्तत्व एक धर्म नहीं, परन्तु पृथिवी, जल, तेज, वायु इन चारोंमें दोनों रहे हुए हैं, इसलिये ये जाति नहीं; अनवस्थिति—जैसा जातित्व जाति नहीं, क्योंकि उसमें कुछ स्थिरता नहीं होती कि जाति कैसी है, ऐसा ऊपर ऊपर धर्म अनन्त हैं; रूपहानि—जैसा विशेषत्व जाति नहीं, क्योंकि पृथिवी आदि पदार्थके परमाणुओं के भेदके लिये विशेष पदार्थ माना गया, प्रत्येकमें विशेषका स्वरूप भिन्न भिन्न है, विशेषत्वको यदि जाति माना जावे तो समुदय विशेषकी एकरूपता माननी पड़ेगी, जो मुख्य अभि-प्रायका प्रतिकूल है; असम्बन्ध—जैसा समवाय जाति नहीं, क्योंकि समवाय किसीमें समवाय सम्बन्धमें नहीं रहता है। जो स्वयं नित्य हो कर अनेकमें समवाय सम्बन्धमें रहता है ऐसे धर्मको जाति कहते हैं, जैसा मनुषत्व, घटत्व, पटत्व इत्यादि । जाति सब नित्य हैं, जो जाति अतीन्द्रिय पदार्थमें रहती वह अती-न्द्रिय, और जो प्रत्यक्ष पदार्थमें रहती वह प्रत्यक्ष है ।

(२८) जो एकमात्र नित्य द्रव्यमें समवाय सम्बन्धसे रहता है उसे विशेष कहते हैं। घटसे द्व्यणुक पर्य्यन्त जितने पदार्थ हैं

नित्या अतीन्द्रियाश्च। प्रलये परमाणूनां भेदाय ते स्वीक्रियन्ते, तेषां वैधर्म्यं व्याप्यत्वादिति।

(३०) स्वरूपसम्बन्धिभिन्नो नित्यः सम्बन्धः समवायः; तेन स्वरूप-सम्बन्धस्य संयोगस्य च निरासः। 'इह घटे घटत्वम्' इति प्रतीतिस्तत्र प्रमाणं। नैयायिकमते समवायः प्रत्यक्षः, स च एको नित्यश्च।

---

समुदय सावयव हैं, अनएव अवयवोंके भेदसे उनमें परस्पर भेद है, परमाणु निरवयव हैं, इस कारण उनके आपसमें भेद करने-के लिये विशेष पदार्थ माना गया, यह विशेष प्रत्येक परमाणमें भिन्न भिन्न स्वरूप है। विशेष बहु प्रकारके हैं, नित्य हैं और अतीन्द्रिय अर्थात् इन्द्रियोंसे इसका ज्ञान नहीं होता। प्रलयके समय परमाणुओंके भेदज्ञानकेलिये यह विशेष पदार्थ माना गया।

(३०) सम्बन्धि (सम्बन्धयुक्त) से भिन्न जो नित्यसम्बन्ध उसका नाम समवाय; स्वरूप और संयोग सम्बन्ध में यह लक्षण नहीं जाता है, क्योंकि स्वरूप सम्बन्ध सम्बन्धिसे भिन्न नहीं, और संयोग सम्बन्ध नित्य नहीं। "इस घटमें घटत्व धर्म्म है" ऐसी प्रतीति समवाय सम्बन्ध माननेमें प्रमाण है। नैयायिकोंके मतमें समवाय सम्बन्ध एक, नित्य, और प्रत्यक्ष है।

## पञ्चनद-महाविद्यालय-

प्रतिष्ठा ।

हीहो भो हन्तास्मिन्नक्टूबरमासि समुदितेऽपि प्राच्याकाश-सीमनि प्राच्यजनमहोत्पातसंसूचके प्रबलपुच्छस्फुरणघोररूपे दृष्टिमात्रहृत्पिण्डोत्कम्पिनि महति धूमकेतौ, तथा समुत्पन्ने-ऽपि विजयदशमीपर्वणि राजप्रजाक्षयकारिणि महानिष्टभूमौ कुरुक्षेत्रनामयोगे प्राच्यविद्यानां सुमहान् सौभाग्योदयो जातः, तेन च भारतप्रकृतोन्नतिप्रस्तावना संवृत्ता, अतएव सत्यमुक्तम् "विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया" इति ।

विदितमस्त्येतदस्मत्पाठकेषु बहूनां यत् कियच्चिरमारभ्य निखिलविद्यापारावारपारीणः श्रीमान् डक्टर लिटनर नामा महोदयोऽस्मिन् प्रदेशे प्राच्यविद्याः पुनरुज्जीवयितुं पाश्चात्य-ज्ञानज्योतिषा च ताः समुज्ज्वलयितुं राजराजन्यादिमहाजनेभ्यः प्रभूततमर्थमाकलय्य यथोचितराजकीयसाहाय्यमन्तरेणैव लव-पुरि महाविद्यालयमेकं निर्ममौ । यत्र हि विविधासु प्राच्य-विद्यास्वधुनातनोन्नतराजविद्यासु चाध्यापनपरीक्षणाभिनवग्रन्थ-रचनादीनि कर्माणि साध्वनुष्ठीयन्ते, विद्योदयस्वायं लसन्-जीवतीति । परमित्थं शुभविधायकोऽप्यसौ विद्यालयः केनाप्य-निवार्य्यदुर्भाग्येनाक्रान्त एतावत्कालपर्य्यन्तं न सम्यग्राजप्रतिष्ठा-मवाप । सम्प्रति तस्य वर्त्तमानस्याक्टूबरमासस्य पञ्चमदिवसे तद्दुर्दैवापसरणात् सुप्रतिष्ठितोऽयं प्रधानराजपुरुषैः । अद्यावधि

विद्यालयोऽयं कलिकाता-माद्राज-बम्बई-विश्वविद्यालयानां तुल्य-कक्षतां प्राप्तः। भवत्वेतद्गतमन्यद्वृत्तमये, विस्तरीतुमिच्छा वर्त्तते। सम्प्रति त्वेतत्प्रतिष्ठासम्वादमाकर्ण्यात्यसंस्कृतविद्यालय-च्छात्रैर्यादृक्श्लोकबद्धपदैर्हृदयोच्छ्वासः प्रकाशितस्त एव श्लोकाः अत्र न्यस्यन्ते।

( १ )

वेदा निजाङ्गसहिता व्यपनीतखेदा-
मोदध्वमद्य सह तैरनुयायिशास्त्रैः।
विद्यालयो लवपुरि क्षितिभृत्प्रतिष्ठां
यातः समुज्ज्वलयितुं पुनरेव युष्मान्॥

( २ )

भो भोः पञ्चनदाख्यभूमिमुकुटालङ्कारहीरोपमा-
वीरा भूवरसत्तमाः शुभवतामग्रा यशोभास्वराः।
मोदध्वं श्रमरोपितोऽद्य भवतामर्थेन संवर्द्धितो-
विद्यागारमहातरुः शुभफलं सूते मनोवाञ्छितम्॥

( ३ )

वेदाध्वानुगताः सतामभिमताः पूर्व्वानुरक्ताश्च ये
विद्वांसो विलसन्तु सम्प्रति मुदा ध्वस्तं तमः सन्ततम्।
राजानुग्रहमागतः सच महाविद्यालयः प्राग्भवा
विद्या यत्र तु शिक्ष्यतेऽतिरुचिरा पाश्चात्यविद्याभया॥

( ४ )

स जयति भुवि धन्यो भूधराधीशमान्यो-
विदितसकलनीतिर्भारतस्याधिनेता ।
यदमितकृपयेदं भारते प्राच्यविद्या-
प्रचरणगृहमद्य स्थापितं बद्धमूलम् ॥

( ५ )

स पञ्चनदपालकप्रवर उच्चरत्नोज्ज्वलो
भजत्वविरतं ह्रितं पदमवैतु चात्युन्नतम् ।
निजोद्यमसमुद्भवं य इह पूर्वविद्यालयं
प्रजाहितमबूभुषन्नृपतिदत्तसद्गौरवैः ॥

( ६ )

प्राणा येन पणीकृता नृमणिनास्माकं शुभायानिशं
यस्योदग्रविचेष्टनाफलमिदं विद्यागृहस्थापनम् ।
विद्याभ्यासपरीक्षणोच्चपदवीभाजो गुणग्राहिणः
सर्वैस्तस्य महात्मनो लिटनरस्योच्चैर्यशोगीयताम् ॥

—

पञ्चनद-महाविद्यालयस्य प्रतिष्ठावसरे तत्प्रतिष्ठायामामूलात् कृतोद्यमस्य विद्यासागरपारीणस्य श्रीमतो डक्टर लिट्नर-महोदयस्य प्रशंसाप्रख्यापनाय लवपुरीय-संस्कृतविद्यालय-प्रधान-संस्कृताध्यापकेन श्रीमता पण्डितवरेण गुरुप्रसादनामधेय-महोदयेन श्लोका एते विरचिताः ।

"दृतस्तैर्निरोध्यस्ततो वाग्यमोभि-
र्निबद्धय एकाक्यनेकैः समेतैः ।
मुहुस्तर्क्यते संततः प्राणिसङ्घै-
र्यथा केसरी बद्धलक्ष्यः करीन्द्रैः ॥ १ ॥
उपेक्ष्याथ तानाशुतः पाटयित्वा
गजेन्द्रस्य कुम्भं विहर्ण्णो नखाग्रैः ।
समन्ताद्विकीर्य्यापि मुक्ताकलापान्
नदन् स्वां दिशं तर्ज्जयन् याति धीरः ॥ २ ॥
तथा विश्वविद्यालयार्थं विपक्षैः
समन्तान्निरुद्धोऽप्यसौ सत्त्वशाली ।
पराक्रम्य विद्याटवीसिंह एष-
समाख्यातनाना जनैर्लिट्नरेति ॥ ३ ॥
विधायाशु वाहीकलोकाभिलाषं
विभात्यद्भुतं मण्डितः स्वैर्यशोभिः ।
स्थिरीकृत्य कीर्त्तिं निजां सच्चरित्रां
समालोक्यते भूस्थलेऽभ्यागतोऽसौ ॥ ४ ॥

धरित्री समाकीर्णमस्या सरः सु-
प्रसन्नं यथा स्वच्छतोयैर्नितान्तम् ।
तथा वर्द्धतां सर्व्वलोकोपकारी
विकारी कदाप्यस्य भावो न चास्तु ॥ ५ ॥

---

सम्प्रति पञ्चनददेशीय-प्रधानशासकस्य लेफ्टनेण्टगवर्ण पदाभिषिक्तस्य समीपे तमभिनन्दयितुमञ्जमनी-पञ्जाबनामि सभाया निम्नलिखिताः सभ्या गतवन्तः । श्रीमान् रा हरवंशसिंहः, नवाव आबदुल मजीद खाँ, सर्दार ठाकुरसि सिन्धवाला, वावा खेमसिंह वेदी, शेख घुनाम महवव सुभानि, फकिर सायद कामर उद्दीन, श्रीयुत वावु नवीनचन्द्र रायः, डक्टर महम्मद होसेन, डक्टर रहिम खाँ खाँवाहादूर, सोडी हुकुमसिंहः, पण्डित श्रीयुतामरनाथः, डक्टर अमीर शाह, सर्दार सुजनसिंहः, पण्डित श्रीभगवान् दासः, मौलवी सायद मुहम्मद होसेन आञ्जमनी-हामदर्दी-नामक-सभा-प्रतिरूपः, भाइ श्रीगुरुमुखसिंहः सिंहसभा-प्रतिनिधिरूपः, पण्डित-श्रीहृषीकेश-शास्त्री संस्कृतविद्यालय-प्र[illegible]निधिरूपः, डक्टर श्रीमान् लिटनर-नामधेयः सभाध्यक्षः । ततस्तस्य पञ्चनदाधिपतेर्हस्तेऽभिनन्दनपत्रेण सहानुवादसहिताः "वेदा निजाङ्गसहिताः" इत्यादि षट् श्लोकाः समर्पिताः । स चैतेषामिङ्गलण्डीयभाषानुवादमवलोक्य परं सन्तोषमवाप ।

पञ्चनद-महाविद्यालयस्य प्रतिष्ठावसरे तत्प्रतिष्ठायामामूलात् कृतोद्यमस्य विद्यासागरपारीणस्य श्रीमतो डक्टर लिट्नर-महोदयस्य प्रशंसाप्रख्यापनाय लवपुरीय-संस्कृतविद्यालय-प्रधान-संस्कृताध्यापकेन श्रीमता पण्डितवरेण गुरुप्रसादनामधेय-महोदयेन श्लोका एते विरचिताः ।

"इतस्तैर्निरोध्यस्ततो वाप्यमीभि-
र्निबद्धय एकाक्यनेकैः समेतैः ।
मुक्तस्तर्कितं संवतः प्राणिसङ्घै-
र्यथा केसरी बद्धमध्यः करीन्द्रैः ॥ १ ॥
उपेत्याथ तानाशुतः पाटयित्वा
गजेन्द्रस्य कुम्भं त्रिधष्णो नखाग्रैः ।
समन्ताद्विकीर्य्यापि मुक्ताकलापान्
नदन् स्वां दिशं तर्ज्जयन् याति धीरः ॥ २ ॥
तथा विश्वविद्यालयार्थं विपक्षैः
समन्तान्निरुद्धोऽप्यसौ सत्त्वशाली ।
पराक्रम्य विद्याटवीसिंह एष-
समाख्यातनामा जनैर्लिट्नरेति ॥ ३ ॥
विधायाशु वाहीकलोकाभिलाषं
विभात्यद्भुतं मण्डितः स्वैर्यशोभिः ।
स्थिरीकृत्य कीर्त्तिं निजां सच्चरित्रां
समालोक्यते भूमितोऽप्यागतोऽसौ ॥ ४ ॥

धरित्री समाकीर्णशस्या सरः सु-
प्रसन्नं यथा स्वच्छतोयैर्नितान्तम् ।
तथा वर्द्धतां सर्व्वलोकोपकारी
विकारी कदाप्यस्य भावो न चास्तु ॥ ५ ॥

---

सम्प्रति पञ्चनददेशीय-प्रधानशासकस्य लेफ्टनेण्टगवर्ण पदाभिषिक्तस्य समीपे तमभिनन्दयितुमञ्जुमनी-पञ्जावनामि सभाया निम्नलिखिताः सभ्या गतवन्तः। श्रीमान् रा हरवंशसिंहः, नवाव आव्दुल मजीद खाँ, सर्दार ठाकुरसि सिन्धवाला, वावा खेमसिंह वेदी, शेख घुनाम मह्वव सुभानि, फकिर सायद कामर उद्दीन, श्रीयुत वावु नवीनचन्द्र रायः, डक्टर महम्मद होसेन, डक्टर रहिम खाँ खाँवाहादूर, सोडी हुकुमसिंहः, पण्डित श्रीयुतामरनाथः, डक्टर अमीर ·ाह, सर्दार सुजनसिंहः, पण्डित श्रीभगवान् दासः, मौलवी सायद मुहम्मद होसेन आञ्जुमनी-हामदर्दी-नामक-सभा-प्रतिरूपः, भाइ श्रीगुरुमुखसिंहः सिंहसभा-प्रतिनिधिरूपः, पण्डित-श्रीहृषीकेश-शास्त्री संस्कृतविद्यालय-प्रतिनिधिरूपः, डक्टर श्रीमान् लिटनर-नामधेयः सभाध्यक्षः। ततस्तस्य पञ्चनदाधिपतेर्हस्तेऽभिनन्दनपत्रेण सहानुवादसहिताः "वेदा निजाङ्ग-सहिताः" इत्यादि षट् श्लोकाः समर्पिताः। स चैतेषामिङ्गलण्डीयभाषानुवादमवलोक्य परं सन्तोषमवाप।

# आत्मशासनम् ।

(३)

...रीत्या म्युनिसिपल-प्रमुखस्थानीय-सदसां सभ्याः प्रायः राजपुरुषैर्नियुक्ता बभूवुः । केवलं कुत्रचित् स्थान... प्रजाभिः स्वयं कतिचित् प्रतिनिधयो निर्व्वाचिता भवन्ति ...था सिमल्लानगरीय-म्युनिसिपल-सभायाः २०संख्यकेषु ...म राजकर्म्मचारिणस्त्रयोदश भिन्नदृत्तयो गृहादराधिका... तत्र च त्रयो दर्शकानां प्रतिनिधयस्त्रयश्च नगरपवित्र... ...णानां प्रतिनिधयः । दर्शकानां प्रतिनिधयो राज... ...का अभवन् । गृहस्वामिनां प्रतिनिधयश्च प्रजाभि... बभूवुः । अमृतसरोनामधेये नगरे म्युनिसिपल-...संख्यकेषु सभ्येषु षट् राजकर्म्मचारिणः एकविंशतिश्च ...। भिन्नवृत्तिष्वपि पञ्च राजनियुक्ता आसन्, येषामेकः यूरोपीयश्चत्वारो देशीया अवशिष्टास्तु करदातृभिः प्रजाभिर्निर्व्वाचिता भवन्ति स्म । एवमेव व्यवस्था लक्ष्णौ-प्रयाग-श्रीरामपुर-प्रभृतिष्वपि नगरेषु स्थिताः, तत्र तत्र हि स्थानीयसदसां सभ्येषु कतिचित् राजनियुक्ताः कतिचिदा प्रजाभिः स्वयं निर्व्वाचिता बभूवुः ।

[ क्रमशः ।

श्री

Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।

विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११ ]  सेप्टेम्बर १८८२  [ ९ सङ्ख्या

## सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रित. ।

# विज्ञापनम्।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति। यद्ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलापः प्रकाशनीयः। विद्योदय-कार्य्याध्यक्षः—लवपुरे।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालाध्यक्षाध्यापक-पण्डित-श्रीगुरुदयालु-विरचिता मूल्यं ।)

---

## विद्योदयस्य मूल्यादीनां नियमः।

वार्षिकमूल्यं अग्रदेयं ... ... ... २।०

" पश्चाद्देयं ... ... ३।०

(प्रतिकापत्रं ।० परिमितमूल्येन प्राप्यम्।)

विज्ञापनस्य प्रत्येकपंक्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति।

---

## नूतन-पुस्तकम्।

छन्दोबोधः—(संस्कृतहिन्दीभाषा रचनोपकारी) ग्रन्थोऽयं सुगम-हिन्दीभाषायां लिखितः, लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्ट्रार'स आफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्यः। कवितावली—अत्युत्तमकवितायन्थः—मूल्यं ।) अस्मत्समीपे प्राप्तव्या।

अवयवानां शिथिलः संयोगः प्रचयोऽपि तज्जनकः, यथा तूलस्य परिमाणम् ।

(२२) पृथक्त्वं कारणगुणप्रक्रमजन्यं । ननु तत्र किं प्रमाणं? घटात्पटः पृथगिति प्रत्यक्षं ; तस्यान्योन्याभावविषयकत्वमिति चेन्न, अन्योन्याभावप्रत्यये प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वनियमात्, यथा घटो न पट इति । अन्यो-

---

अवयवोंका शिथिल (ढिला) संयोगरूप जो प्रचय, वह भी महत्त्वका कारण है अर्थात् जहां बहुत इकट्ठे किए गए परन्तु आपसमें अच्छी दृढ़तासे नहीं मिल गए, उस सम्पूर्ण वस्तुको भी महत् कहते हैं, जैसा तूल अर्थात् रूइका परिमाण।

(२२) पृथक्त्व यह गुणभी कारणके क्रमसे वस्तुमें आता है, घटसे पट (कापड़ा) पृथक्, ऐसा प्रत्यक्षही इसके स्वीकारमें प्रमाण है ; किसीने आशङ्का की है कि, 'पृथक्त्व' गुणका स्वीकारकरनेमें क्या आवश्यकता है ? अन्योन्याभाव अर्थात् भेद नाम जो पदार्थ माना गया उसीसेही पृथक्त्वका प्रयोजन सिद्ध (मतलब हासिल) होता है, क्योंकि 'घटसे पट पृथक् है' और 'पट घट नही' इनदोनों वाक्योंसे प्राय एकही अर्थ विदित होता है। इसके उत्तरमें कहते हैं कि, ऐसी आशङ्का नही हो सक्ती, क्योंकि अन्योन्याभाव अर्थात् भेदकी प्रतीतिमें उस अन्योन्याभावके प्रतियोगी और अनुयोगी इन दोनोंमें ही एक विभक्ति रहेगी, ऐसा नियम है जैसा "घटो न

न्याभावस्य पृथक्त्वरूपत्वे घटात् पटो नेत्यपि प्रयोगापत्तेः। न चैवं घटादन्यः पट इत्यत्र कथमन्योन्याभावप्रतीतिरिति वाच्यं, अन्यत्वस्यापि पृथक्त्वरूपत्वात्।

(२३) संयोगस्त्रिविधः ;—अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्च। आद्यो यथा, मनःकर्मणा आत्ममनसोः संयोगः।

---

पटः" "घट पट नहीं है" यहां घटभी प्रथमान्त पटभी प्रथमान्त है। यदि अन्योन्याभाव और पृथक्त्व एक होता, तो "घटात् पटो न" ऐसा प्रयोग हो सका, परन्तु ऐसा प्रयोग नहीं होता, क्योंकि इसका अर्थ "घटसे पट नहीं" जिसमें कुछ सङ्गति नहीं। किसीने कहा यदि ऐसा हुआ तो "घटादन्यः पटः" इस प्रयोगमें अन्योन्याभाव ( भेद ) की प्रतीति होती है। इसके उत्तरमें कहते हैं कि, यहां अन्योन्याभाव (भेद) की प्रतीति नहीं, अन्य-शब्दका अर्थ यहां पृथक् है, तो "घटादन्यः पटः" इस वाक्यका घट पट नहीं ऐसा अर्थ नहीं है किन्तु "घटसे पट पृथक् है" ऐसा अर्थ।

( २३ ) संयोग तीन प्रकारका है ;—एक अन्यतरकर्मज, अर्थात् किसी दोनोंमेंसे एककी क्रियासे उत्पन्न, जैसा किसी पर्वतके ऊपर जब कोई पक्षी बैठता है तब केवल पक्षीकी क्रियासे पर्वत और पक्षीका संयोग होता है, ऐसा केवल मनकी क्रियासे आत्मा और मनका संयोग होता है। दूसरा उभयकर्मज, उभय अर्थात् जिनदोनोंसे संयोग होता है उनदोनोंकी क्रियासे जो

द्वितीयो यथा, मेषयोः कर्मणा तयोः संयोगः। तृतीयो यथा, कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगः, यथा हस्ततरुसंयोगात् कायतरुसंयोगः।

(२४) विभागोऽपि त्रिविधः ;—अन्यतरकर्मजः, उभयकर्मजः

---

संयोग उत्पन्न होता है, जैसा मेषोंकी लड़ाईके समय दोनोंकी क्रियासे दोनोंमें संयोग होता है। प्रथम प्रकारके संयोगको अभिघात, और द्वितीय प्रकारके संयोगको नोदन कहते हैं।* तीसरा संयोगजन्य, कारण और अकारण ( जो कारण नहीं ) इनदोनोंके संयोगसे कार्य्य और अकार्य्य (जो कार्य्य नहीं ) इनदोनोंका जो संयोग अर्थात् किसी वस्तुके किसी अंगसे दूसरे वस्तुके संयोगके द्वारा उस सम्पूर्ण वस्तुसे दूसरेका जो संयोग, जैसा हस्त और किसी वृक्षके संयोगसे समुदय शरीर और वृक्षका संयोग होता है।†

(२४) विभाग ( एकसे दूसरेका अलगहोना ) भी तीन प्रकारका है ;—एक अन्यतरकर्मज अर्थात् दोनोंमेंसे एककी क्रियासे उत्पन्न, जैसा जब पर्व्वतसे पक्षी उड़ जाता है, तब केवल पक्षीकी क्रियासे पर्व्वत और पक्षी इनदोनोंमें विभाग होता है। दूसरा उभयकर्मज अर्थात् दोनोंकी क्रियासे जो विभाग होता

---

* अभिघातसे शब्द होता है, इस लिये इसे शब्दहेतु कहते हैं; और नोदनको शब्दाहेतु कहते हैं, इससे शब्द नहीं होता।

† हस्त शरीरका समवायिकारण, शरीर कार्य्य; यहां वृक्ष इनमेंसे किसीका कारणभी नहीं कार्य्यभी नहीं।

विभागजश्च। आद्यो यथा, मनःकर्मणा आत्ममनसोर्विभागः। द्वितीयो यथा, मेषयोः कर्मणा तयोर्विभागः। विभागजविभागो द्विविधः—कारणमात्रविभागजः, कारणाकारणविभागजश्च। आद्यो यथा, कपालकर्मणा कपालद्वयविभागः, ततः कपालद्वयसंयोगनाशः, ततो घटनाशः, ततः कपालस्याकाशादिदेशाद्विभागजो विभागः। न च विभागः स्वोत्पत्त्यनन्तरमेव विभागजविभागं जनयतीति वाच्यं, द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वात्, तत्र द्रव्यस्य प्रतिबन्धकत्वेन, सति द्रव्ये तदसम्भवात्।

---

है, जैसा जब मेषोंकी लड़ाई छटती है तब दोनोंकी क्रिया होती। तीसरा विभागज विभाग ; यहभी दो प्रकारका है, एक कारण मात्र विभागज, अर्थात् केवल कारणके विभागसे जो विभाग होता है, जैसा एक कपालकी क्रियासे दोनों कपालोंमें विभाग होता है, उसके अनन्तर उन दोनों कपालोंका संयोग नष्ट होता है, फिर घटका नाश होता है, उसके पिछे कपालका आकाशादि देशसे विभाग होता है, यह विभाग विभागजन्य है क्योंकि घटके नाशसे यह विभाग उत्पन्न होता है, घटके नाशके प्रति दो कपालोंके संयोगका नाश कारण है, और उसके प्रति कपालोंका विभाग कारण है। एक विभाग अपनी उत्पत्तिके अनन्तरही दूसरे विभागको नहीं उत्पन्न कर सक्ता है, क्योंकि जब कोई विभाग किसी द्रव्यके नाशके साथ एकत्र होता है तबही दूसरे विभागको उत्पन्न करता है, विभागसे विभागको

न च कर्म्मैव एकदा कपालद्वयविभागमाकाशकपालविभागं च जनयतीति वाच्यं, यद् द्रव्यानारम्भकसंयोगविरोधिनं विभागमारभते, न तत् द्रव्यारम्भकसंयोगविरोधिनं, अन्यथा विकसत्कमलकुड्मलदलकर्म्मण्यतिव्याप्तिः। न च, संयोगेऽप्येवमस्तु, तत्र अविरोधात्। द्वितीयस्तु कारणाकारणविभागात् कार्य्याकार्य्यविभागः, यथा, करतरुविभागात् कायतरुविभागः।

---

उत्पत्तिमें द्रव्य प्रतिबन्धक होता, इस लिये जब द्रव्य रहता तब विभागज विभाग नहीं उत्पन्न होसक्ता है। ऐसाभी नहीं कहा जा सक्ता कि एक् कपालकी क्रियासे एकही समय दोनों कपालोंका विभाग और कपाल आकाशका विभाग उत्पन्न होता है, क्योंकि एकही क्रियासे द्रव्यके अनारम्भक संयोग ( जो संयोग द्रव्यकी उत्पत्तिमे सहाय नहीं जैसा कपाल और आकाशसंयोग) का विरोधी विभाग और द्रव्यके आरम्भक ( जो संयोग द्रव्यकी उत्पत्तिमें सहाय है जैसा कपालद्वयका संयोग ) संयोगका विरोधी विभाग उत्पन्न नहीं हो सक्ता; यदि ऐसा होवे तो जिस कर्म्मसे कमलकी कलि खिलती है अर्थात् पत्तोंके ऊपरके संयोगका विभाग होता है उसीसे ही पत्तोंके नीचेके संयोगकाभी विभाग होवे। संयोगज संयोगके स्थलमें ऐसा नहीं होता अर्थात् कारण और अकारणके संयोगके अनन्तरही कार्य्य और अकार्य्यके संयोगकी उत्पत्तिमें कुछ बाधा नहीं। दूसरा कारण और अकारणके विभागसे कार्य्य और अकार्य्य में जो

परत्वापरत्वोत्पत्तिः कालप्रकरणे उक्ता ।

(२५) बुद्धिर्ज्ञानं ; तद्द्विविधं,—स्मरणमनुभवश्च ; स्मरणमपि द्विविधं,—यथार्थमयथार्थञ्च । तद्वति तत्प्रकारकत्वं यथार्थत्वं, तदभाववति तत्प्रकारकत्वमयथार्थत्वं । पूर्वानुभवः संस्कारद्वारा स्मरणं जनयति ; तत्र पूर्वानुभवस्य यथार्थत्वायथार्थ-

---

विभाग होता है, जैसा हाथ् और वृक्षके विभागसे शरीर और वृक्षमें विभाग उत्पन्न होता है ।

परत्व और अपरत्वकी उत्पत्तिके विषयका कालके प्रकरणमें वर्णन हो चुका ।

(२५) बुद्धि ज्ञानस्वरूप है ; वह दो प्रकारकी—एक स्मरण दूसरा अनुभव ; स्मरणभी दो प्रकारका है, एक यथार्थ दूसरा अयथार्थ । जो जैसा है उसे ऐसाही स्मरण करनेको यथार्थ स्मरण कहते हैं, और जो जैसा नहीं उसे 'ऐसा है' ऐसा स्मरण करनेको अयथार्थ स्मरण कहते हैं । पहिले जो अनुभव होता वही संस्कारके द्वारा स्मरणको उत्पन्न करता है, अर्थात् किसी वस्तुके प्रथम किसी इन्द्रियके द्वारा प्रत्यक्ष होनेके पीछे मनमें एक प्रकारका संस्कार होता है कि उस वस्तुको देखते ही मनमें "यह वही वस्तु है" ऐसा ज्ञान होता, इस ज्ञानको ही स्मरण कहता है ; प्रथम अनुभव (पूर्वप्रत्यक्ष) यथार्थ या अयथार्थ ऐसा दो प्रकारकाही हो सक्ता, इस लिये स्मरणभी यथार्थ और अयथार्थ ऐसा दो प्रकारका होता है ।

ताभ्यां स्मरणमपि उभयरूपं भवति। अनुभवो द्विविधः—प्रमा अयथार्थश्च। तत्र प्रमा चतुर्विधा, सा वक्ष्यते। अयथार्थज्ञानं चतुर्विधं,—संशयो विपर्य्ययः स्वप्नोऽनध्यवसायश्चेति। संशयो यथा, समानधर्मवद्धर्मिज्ञानविशेषादर्शनकोटिद्वयस्मरणैरयं स्थाणुर्वा पुरुषो वेति ज्ञानं जन्यते, स एव संशयः। विपर्य्ययस्तु समानधर्मवद्धर्मिज्ञानविशेषादर्शनैककोटिस्मरणैः

---

अनुभव दो प्रकारका है—एक प्रमा दूसरा अयथार्थ। उनमेंसे प्रमा चार प्रकारकी है, जिनका वर्णन आगे किया जावेगा। अयथार्थ अनुभवभी चार प्रकारके हैं, जैसा संशय विपर्य्यय स्वप्न और अनध्यवसाय। इनमेंसे संशय तीन प्रकारके कारणसे उत्पन्न होता है—(१) समान धर्मसे युक्त वस्तुओंके ज्ञानसे, (२) विशेषके अदर्शनसे, (३) कोटिद्वयके स्मरणसे, जैसा दूरसे वा अन्धकारमें किसी खम्बेको देखकर "यह खम्बा है या पुरुष है" ऐसा ज्ञान होता है, यहां देखो समान धर्म्म अर्थात् उच्चतादि धर्म्मसे युक्त खम्बा और पुरुष इनदोनोंका ज्ञान हुआ, और दूरत्व वा अन्धकारके स्वभावसे उनदोनोंमें जो विशेषता है उसका अदर्शन हुआ, तथा खम्बा और पुरुष इन दोनों पक्षोंकाही स्मरण हुआ। अतएव "यह खम्बा या पुरुष है" इत्यादि ज्ञान संशयका उदाहरण है। संशयकी नाईं विपर्य्ययमेंभी समान धर्म्मसे युक्त वस्तुओंका ज्ञान और विशेषका अदर्शन कारण है,

शुक्काविदं रजतमिति ज्ञानं जन्यते। तत्र गुरुमते इदमित्यनुभवात्मकं ज्ञानं, रजतमिति स्मरणात्मकं; तेन ग्रहणस्मरणात्मकं ज्ञानद्वयं, न तु रजतत्वविशिष्टज्ञानमिदम्, अन्यस्यान्यथाभानसामग्र्यभावात्। प्रवृत्तिश्च स्वतन्त्रोपस्थितिष्टभेदाग्रहात्। नैयायिकमते प्रवर्त्तकं विशिष्टज्ञानं, तेन भ्रमः सिध्यति। स्वप्नस्तु अनुभूतपदार्थस्मरणैरदृष्टेन धातुदोषेण च जन्यते। अनध्य-

---

परन्तु इसमें एकपक्षके कुछ निश्चय रहता है,जैसा सिप्पिमें चांदि (रजत)का ज्ञान। अर्थात् कोई अज्ञ मनुष्य सिप्पिमें उज्ज्वलतादि चांदिका समान धर्म्म देखकर और सिप्पि और चांदिकी विशेषताको न समझकर सिप्पिको जो चांदि करके समझता है उसीको विपर्य्यय कहते है। गुरुके मतमें "इदं" यह अनुभवात्मक, और "रजतं" यह स्मरणात्मक ज्ञान अर्थात् सिप्पिमें शुक्ल रूप अनुभव कर रजतका स्मरण होता है, नकि "रजतके धर्म्मसे युक्त यह"ऐसा ज्ञान होता। किसीने कहा कि यदि सिप्पिके रजतके धर्म्मसे युक्त न ठहरावे तो उसके संग्रहमें क्यों प्रवृत्ति होगी। उसके उत्तरमें कहता है कि दर्शनमात्र ही सिप्पिमें रजतका भेद विदित नहीं होता इस लिये प्रवृत्ति होगी। परन्तु नैयायिकोंके मतमें विशिष्टज्ञानही प्रवर्त्तक है। स्वप्नका कारण तीन है—(१) पूर्व्वानुभूत पदार्थोंका स्मरण, (२) अदृष्ट, और (३) धातु-दोष अर्थात् शारीरिक धातुओंका विकार। किसी वस्तुके विषय जो थोड़ासा ऊपर ऊपर ज्ञान होता कुछ

## आत्मशासनम् ।

(२)

पूर्व्वमेवाङ्गीकृतमस्माभि- "रक्षत्-परीक्षणार्थं स्वल्पप्रसरा-भिनवेयमात्मशासनपद्धतिः साम्प्रतमाविष्कृता राजपुरुषैः, यद्विवरणमपरपत्रे प्रकटितं भविष्यतीति"। सम्प्रति हि तदङ्गीकार-परिपालनाय तस्या एवाभिनव-प्रवर्त्तिताया आत्मशासनपद्धते-र्यथाज्ञानं विवृतिः क्रियते। एतत्प्रबन्धालोच्यविषयस्तु प्रत्यहं बहुलतया समालोचितोऽपि विविधेङ्गलदेशीयभाषा-लिखित-तत्तत्संवादपत्रेषु संस्कृत-भाषाभिज्ञानां नैव साधु विदित इति तादृशजनप्रबोधनार्थं संक्षेपत आत्मशासनमर्म्म विलिख्यते।

एतावत्समयपर्य्यन्तं न केवलं यथोचितदण्डविधानादि-प्रजारक्षणकृत्येषु राज्ञोऽव्याहतप्रसरा आसन्, किन्तु प्रकृतीनां स्वास्थ्यरक्षायात्मोन्नतिविधायक-कार्य्य-विधित्सया संगृहीत-कर-व्ययादिष्वपि राजपुरुषाणां सर्व्वतोमुखी प्रभुता स्थिता।

सत्यं तत्तत्करव्ययथाविधिनिर्व्वाहार्थं तत्तद्देशीयमहाजन-समलङ्कृताः समितयो म्युनिसिपल्याद्यभिधास्तत्तद्ग्रामनगर-राजधान्यादिस्थानेषु विद्यन्ते; परन्तु तत्र राजपुरुषाणां प्राधान्यात् प्रकृतिभीरवो ग्राम्यमहाजना न किमपि कर्त्तुमकर्त्तुं वा प्रभवन्ति स्म। ते हि राजपुरुषाणामेव प्रीत्यर्थं सर्व्वथा तेषा-

मेवानुवृत्तिश्चक्रुः।  तेऽपि राजपुरुषा न चिरमेकत्र तिष्ठन्ति, नियतमेव तेषामवस्थितिस्थानस्य परिवृत्तिर्दृश्यते ; ततएव न ते तत्तत्स्थानानां निसर्गं नैसर्गिकदोषसंशोधनोपायांश्च विज्ञातुं समर्था भवन्ति, स्वेच्छयैव कार्य्यमनुतिष्ठन्ति। तत् कुतस्तेभ्यः प्रजाहितं सम्भवेदिति विचार्य्यास्मात्प्रधानतमराजपुरुषेण तत्तत्-स्थानीयसभाकार्य्यजातं सुचारु निर्वर्त्तयितुं तत्रत्यमहाजनानां हस्तेषु तत् सर्व्वमर्पयितुञ्च प्रवृत्तिः कृता।  ततएवास्या आत्म-शासन-पद्धतेः प्रवृत्तिः।

[ क्रमशः ]

## ग्रन्थप्राप्ति-स्वीकारः।

वयमतीव कृतज्ञहृदयेन निम्नलिखितानां पुस्तकानां प्राप्तिं स्वीकुर्म्मः।

प्रशान्तकुसुमम्—खण्डकाव्यम्, श्रीयादवेश्वर-तर्करत्न-प्रणीतम्, कलिकाता-राजधान्यां गिरिश-विद्यारत्न-यन्त्रे श्रीहरिश्चन्द्र-कविरत्नेन संशोधितं मुद्रितं प्रकाशितञ्च।

चन्द्रदूतम्—खण्डकाव्यम्, एतदपि पूर्व्वोक्तग्रन्थकर्त्रा प्रणीतम् पूर्व्वैव यन्त्रे पूर्व्वोक्तरीत्या संशोधितं मुद्रितं प्रकाशितञ्च।  ग्रन्थ-द्वयमस्मत्सुपरिचितमत एतयोः समालोचनं विशेषतः कर्त्तव्य-मिति साम्प्रतं तूष्णीं स्थिताः स्म।

आनन्दकादम्बिनी—मासिक-पत्रिका, पश्चिमोत्तर-देशान्तर्गत-मृजापुर-नगरात् श्रीवेणीप्रसादशर्म्मणा प्रकाशितः, वार्षिकमूल्यं २ मुद्राद्वयं। पत्रिकैषा पूर्व्वमपि प्रकाशिताभवत्। परं केनापि कारणेन कति मासान् निर्गत्य पुनरेवान्तर्हिताभवत्। एतत्समालोचनमस्माभिः प्रागेव कृतम्।

मासिकपुस्तकं—व्यवहारोपयोगि-विद्यासंग्रहः—मासिक-पत्रमिदं मुम्बइनगरे महाराष्ट्रीयभाषया प्रकाशितं भवति। अस्यापि वार्षिकमूल्यं पूर्व्वदेवं मुद्राद्वयम्।

---

## मधुदूतक्षेपकम्।

( पूर्व्वप्रकाशितानन्तरम् )

श्रीणां भूम्ना परिमलभरेणापि सर्व्वोत्तमानां
पद्मानां यत्सरसि भवने नैव शेषोऽपि दृष्टः।
कंसारातेरुरसि सततं भासमानापि लक्ष्मीः
शोभार्थं सा धरति सुकरे यज्ञमेवोज्ज्वलाब्जम्॥ ६६॥
मत्ता तस्मिन् सरसि विमले सूक्तवत् सत्कवीनां
पीत्वा कामं सरसमन्हतं नापदारं तदीयम्।
मालीमस्या हृदि विरहितोऽप्यञ्जनाद्रीन्द्रदेश्यो
मुक्ता दत्तास्त्वज न फणिना मत्प्रियाभूषणार्हाः॥ ६७॥
( त्रिंशत्पद्यैर्महापद्मसरो वर्णितम्। )

धावंस्तस्माज्जलभरनतोऽप्यानुकूल्येन वायो-
र्दृष्ट्वा ज्येष्ठेश्वरमपि सखे नातिदूरे वसन्तम् ।
कारं कारं प्रणतिमभितस्तीर्थपार्श्वाभिरेनं
सिञ्चन् भक्त्या श्रमनदनं सुप्रसन्नं कुरुष्व ॥ ६८ ॥

पानं वारां मधुरिमभृतां शीतलानामयत्नात्
पद्मामोदानवसमरुता घर्म्मनिर्माजनञ्च ।
विश्रामः सद्दलसुमघनच्छायवृन्देष्वबाधो
ग्रीष्मे जीवं चरति सुकृती हन्त काश्मीरदेशे ॥ ६९ ॥

तोयापायाद्विसविशदभा त्वादृशानां तपन्तौ
राजी धाराधर पृथुतरच्छत्रतां धारयन्ती ।
चण्डोष्णांशोरपि पिदधती दीधितीर्नातितीव्रा-
नाध्वन्यानामपि जनयते स्फुरता खेदलेशम् ॥ ७० ॥

इन्द्राचार्य्यः स्वयमिव गिरां धारया शारदोऽपि
श्रीमान्निन्द्यो नवनिधिपति र्निर्धनो यत्प्रसादात् ।
यस्मिन् देशे प्रणमनिरतः शारदां शारदाभो-
दाभां दम्भप्रभृतिरहितैः संस्तुतां सुस्मितास्याम् ॥ ७१ ॥

गूढानर्थाननणुकमणीन् कैयटो भाष्यसिन्धो-
रादायादाद् बुधपरिषदे यत्कटाक्षात् तथान्ये ।
श्रीणान्यद्यापि च सुवचसा भामहः कल्लटो वा
शश्वद्दिव्यं यदनिभवाचोद्भटो रुद्रटाद्याः ॥ ७२ ॥

क्रमाशुः सूरतः समाविश्वमरः ॥ ७० ॥
शारदी मुदः ॥ ७१ ॥

कच्छस्वच्छातिघनजघनाभोगकाञ्चीनिबद्ध-
श्रीमद्दामोविजितचपलाचारुशुभ्राभ्रशोभा ।
अत्रासंयावरजपपटे पुस्तकं धारयन्ती
ध्यातुः सिक्तां दिशति सरसां सूक्तिधारां सुधाभिः ॥ ७३ ॥

विष्वक्सेनत्रिनयनसुरज्येष्ठसुत्रामभित्र-
श्रीदश्रीमन्मुकुटमणिभादीप्रपादारविन्दाम् ।
वज्रज्योतीरसविमलकानर्घकर्कैतनार्क-
भ्राजद्भूषां जलधर भजन् भाति यां शेषदेश्यः ॥ ७४ ॥

आनन्दादिः फणिपतिसमो वर्द्धनाचार्य्य ईड्यं
काव्यालोकं कृतिभिरकरोत् सत्तमं यत्प्रसत्त्या ।
अव्यक्तार्थामभिनवयुतो गुप्तपादः स आदा-
वस्य प्रौढां रचयति पुरा लोचनं नाम टीकाम् ॥ ७५ ॥

---

ज्योतीरस-विमलक-कर्कैतनादयो रत्नभेदाः ॥ ७४ ॥

आनन्दशब्द आदौ यस्य सः आनन्दवर्द्धन आचार्य्य इत्यर्थः । आदौ अभिनव-शब्देन युतः अभिनवगुप्तपाद इत्यर्थः ।

न लोचनं विनालोको भाति चन्द्रिकयापि हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥
इति लोचने ।

चन्द्रिकाख्या टीका प्राचीनाप्यस्ति, लोचनकारेण सा च बहुशः खण्डिता । मम्मटादिभिः पाण्डित्याख्यं पुण्डरीकं यद् व्यकासि तत् काव्यालोक-दिवाकरकिरण-करुणाविजृम्भितमेव ॥ ७५ ॥

पञ्चाशद्भिः प्रकृतिमधुरैः प्रशस्तैस्तार्थवर्णैः
सर्गैर्गुम्फैर्हरविजय इत्युज्ज्वलं सुप्रसिद्धम् ।
काव्यं सेव्यं महदपि सतां यत्र रत्नाकराख्यो
यस्याः सेवाफलमविकलं सत्कवीन्द्रश्चकार ॥ ७६ ॥

---

हरविजयस्थानि पद्यानि मम्मटेनोदाहृतानि, यथा—

स्फुरति विमकर्णी ककुभः करैः । १
मधुपराजि-पराजित-मानिनी । २
राजति तटीयमभिहतदानवा । ३
स्वदीदकमुत्किरणकैरवति । ४

इत्यादि पद्यान्यन्यान्यप्युदाहृतानि । स्वर्गात्रमर्दिनि पद्ये उमावतार इति पाठः । उमा रावणस्य अवतार इति हरविजयटीकायां लिखितम् । कुवलयानन्दचन्द्रिका-कारेण सुमावतार इति पाठः प्रमादलिखित एव । मूलकारेण सदाशिवशर्मणा रत्नाकरवाणी प्रशंसिता । यथा—

दुग्धाब्धीनां सहस्रं न च मृगनयनीशं सहस्रायुतं वा
कोटिर्वाप्यर्णवानां भुवनमयभवनां कर्णपीपातनानाम् ।
सम्पूर्णं वा सुधाभिः पुरटघटशतं हन्त भव्यभावैर्नो
पाण्डित्यं चारुरत्नाकरसुकविगिरां मैकलवं न गम्यम् ॥

सुवृत्ततिलके क्षेमेन्द्रेणापि रत्नाकरादीनां वाणी वर्णिता ।

वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी ।
रत्नाकरस्योत्कलिका चकास्त्याननकानने ॥
भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति ॥
सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति ।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ॥
शार्दूलक्रीडितेनैव प्रख्यातो राजशेखरः ।
शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः ॥ ७६

---

श्रीं Registered No 12.

# विद्योदयः

## ( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः
प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्ड ११] जुलाइ १८८२ [७ सङ्ख्या

सूची





कलिकाता-राजधान्याम्
नं २५, गिरिश-विद्यारत्नस् लेन्,
गिरिश-विद्यारत्न-यन्त्रे
श्रीहरिश्चन्द्र कविरत्नेन मुद्रित. ।

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलापः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः—लवपुरे ।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालान्यतमाध्यापक-पण्डित-श्रीसुखदयालु विरचिता मूल्यं ।)

---

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं अग्रदेयं ... ... ... २।/०

,, पश्चाद्देयं ... ... ३।/०

(प्रतिकसंख्या ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रतिपङ्क्तिः ८० परिमितमूल्येन मुद्रिता भविष्यति ।

---

### नूतन-पुस्तकम् ।

छन्दोबोधः—(संस्कृतहिन्दीभाषा रचनोपकारी) ग्रन्थोऽयं सुगम-हिन्दीभाषायां लिखितः, लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्ट्रार'स अफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्यः । कवितावली—अत्युत्तमकविताग्रन्थः—मूल्यं ।) अस्मत्समीपे प्राप्तव्या ।

(११) काले प्रमाणं यथा—परत्वापरत्वे द्विविधे कालिके दैशिके च; परत्वोत्पत्तिश्च बहुतर-रवि-क्रिया-विशिष्ट-शरीर ज्ञानात्, अपरत्वोत्पत्तिश्च स्वल्पतर-रविक्रिया-विशिष्ट-शरीर-ज्ञानात्; तत् परत्वं ज्येष्ठत्वं अपरत्वं कनिष्ठत्वं। तदनुमानं

---

ऐसी सिद्धिको परिशेषसे सिद्धि कहते हैं। शाखादिके कम्पनसे तृणोंके चलनसे भी वायुका अनुमान होता है।

(११) अब कालकी सिद्धिमें प्रमाण कहते हैं अर्थात् काल क्यों माना जावे? उसमें प्रमाण दिखलाते हैं; परन्तु प्रकृतविषयके पहिले इतना कहना योग्य है कि पीछे जो परत्व और अपरत्व गुणोंका नाम लिया गया,वे दो प्रकारके हैं—प्रथम कालिक, दूसरा दैशिक; उनमेंसे कालिक परत्वकी उत्पत्ति सूर्य्यकी अधिक गतिसे युक्त पदार्थके ज्ञानसे होती है, और सूर्य्यकी अल्प-गतिसे युक्त वस्तुके ज्ञानसे अपरत्वकी उत्पत्ति होती है, अर्थात् जिस पर सूर्य्य बहुत घुमा उसे पर कहते हैं, और जिस पर सूर्य्य थोड़ा घुमा उसे अपर कहते हैं; इस परको ज्येष्ठ और अपरको कनिष्ठ भी कहते हैं। इन परत्व और अपरत्वमेंसे एकको अवलम्बन कर कालका अनुमान किया जाता है; परन्तु उस अनुमानके पहिले यह जानना अवश्य है कि, विशिष्ट ज्ञानमें कोई न कोई सम्बन्ध अपेक्षित रहता है, जहां किसी प्रकारका साक्षात् सम्बन्ध नहीं वहां परम्परा सम्बन्ध भी रहता है, जैसा "दण्डी पुरुषः" "दण्ड विशिष्ट

यथा "परत्व-जनकं बहुतर-रविक्रिया-विशिष्ट-शरीर-ज्ञानमिदं परम्परा-सम्बन्ध-घटक-सापेक्षं साक्षात् सम्बन्धाभावे सति विशिष्टज्ञानत्वात्, लोहितः स्फटिक इति प्रत्ययवत्; परम्परा-सम्बन्धश्च स्वसमवायि-संयुक्तसंयोगः, तेन सम्बन्ध-घटकः कालः

---

मनुष्य" वा "दण्डसे युक्त पुरुष"—यहां दण्ड एक पदार्थ है, और पुरुष और एक पदार्थ है, इन दोनोंका योग किसी प्रकारके सम्बन्धके विना नहीं हो सका; हम साफ देखते हैं कि, इन दोनोंका योग साक्षात् संयोग सम्बन्धसे हुआ है। ऐसा "लोहितः स्फटिकः" "लाल रङ्गसे युक्त स्फटिक" यहां देखो स्फटिक स्वाभाविक श्वेत (सफेद) होता है, सिवाय सफेदीके इसमें और किसी प्रकारके रङ्गका आसर नहीं होता है अर्थात् स्फटिक स्वभावतः साक्षात् सम्बन्धसे और किसी प्रकारके रङ्गसे युक्त नहीं होता, स्फटिकके लाल होनेमें कारण यह है कि किसी लाल वस्तुके समीप आनेसे उसके प्रतिविम्बके द्वारा यह (स्फटिक) भी लाल रूपमें प्रतीत होता है, अब देखो लाल रङ्गसे स्फटिकका योग किसी सम्बन्धके विना नहीं हो सका, परन्तु वह सम्बन्ध किसी प्रकारका साक्षात् सम्बन्ध नहीं सामीप्यरूप परम्परा सम्बन्ध है, अर्थात् लाल वस्तुकी समीपतासे स्फटिक लाल हुआ। इसीतरह जहां विशिष्ट ज्ञान होता वहां कोई साक्षात् वा परम्परा सम्बन्ध अपेक्षित रहता है। अब कालके अनुमानकी रीति लिखी जाती है—"परत्वका जनक (अर्थात् परत्वकी

सिध्यति। ननु कालस्य भूत-भविष्यद्वर्त्तमान-भेदेन बहुत्वात् कुत एकत्वमिति चेन्न, उपाधिभेदेन भेदप्रत्ययात्, कालोपाधयो रवि-क्रियादि-रूपा भिन्ना एव।

---

प्रतीति करानेवाला) जो सूर्य्यकी अधिक क्रियासे युक्त वस्तुका ज्ञान वह अवश्य किसी परम्परा सम्बन्धके घटककी अपेक्षा रखता है, कारण यह विशिष्ट ज्ञान है, और उसका घटक कोई साक्षात् सम्बन्ध नहीं" जैसा 'लाल स्फटिक' इसका अर्थ पहिलेही करचुके। देखो, सूर्य्यकी गतिरूप क्रिया साक्षात् सम्बन्धसे सूर्य्यमेंही रहती है, वस्तुमें किसी प्रकारकी साक्षात् सम्बन्धसे नहीं रहती, वस्तुके साथ रविक्रियाके योगमें कोई परम्परा सम्बन्ध अपेक्षित है; वह परम्परा सम्बन्ध 'स्वसमवायि-संयुक्त-संयोग'का स्वरूप है, उस सम्बन्धका घटक काल है, कारण स्व करके रविक्रिया, उसका समवायी रवि, रविसे संयुक्त काल, और कालका संयोग समुदय मूर्त्तमें है, क्योंकि काल आकाश दिशा और आत्मा ये समुदय मूर्त्तसे संयोग रखते हैं, उस सम्बन्धका घटक दिशा और आकाश और आत्मा नहीं, उसका कारण आगे कहा जावेगा, अतएव कालही उसका घटक है। किसीने आशङ्का किया कि, काल तो भूत, भविष्यत् और वर्त्तमान आदि रूपसे अनेक प्रकारका है, अतएव तुम उसे क्योंकर एक कहते हो? उसके उत्तरमें कहते हैं कि, काल वास्तवमें एकही है, भूत भविष्यत् आदि इसका उपाधि अर्थात् अवस्था

(१२) एवं दैशिकपरत्वापरत्वाभ्यां दिशः सिद्धिः, ते च दूरत्व-समीपत्वे। अवधिसापेक्ष-नक्षत्रसंयोग-विशिष्ट-शरीरज्ञानमिदं

---

विशेष है, जिसके भेदसे कालका भी भेद प्रतीत होता, कालका उपाधि (भूत, भविष्यत् आदि) सूर्य्यक्रिया स्वरूप हैं, और परस्पर भिन्न है, अर्थात् सूर्य्यके उदयसे अस्त पर्य्यन्त जो काल उसे दिन, और सूर्य्यके अस्तसे उदय तक जो काल उसे रात्रि, इत्यादि रूपसे कालका विशेष परिच्छेदक है।

(१२) इसीतरह पहिले कही हुई युक्तिके द्वारा दैशिक परत्व या अपरत्वसे दिशाका अनुमान होता है। दैशिक परत्वको दूरत्व और दैशिक अपरत्वको समीपत्व कहते हैं। इन परत्व और अपरत्वोंमेंसे एकके द्वारा दिशाका अनुमान-किया जाता है। परन्तु कालके अनुमानकी अपेक्षा दिशाके अनुमानकी रीतिमें कुछ विशेषता है, जैसा पिता और पुत्रके बीच एकसे दूसरेमें किसीकी अपेक्षासे बिनाही रविक्रियाकी न्यूनता वा आधिक्य होता है, वैसे दोनों तरफसे काशीमें जानेवाले दोनोंमें दैशिक सम्बन्धसे जो मूर्त्तिसंयोग है, किसी प्रयाग आदि अपर देशकी अपेक्षासे बिना अर्थात् किसी अपर देशको अवधि न करके उस मूर्त्तिसंयोगकी न्यूनता वा आधिक्य नही हो सका है, क्योंकि मूर्त्तिसंयोगकी न्यूनता वा आधिक्यमें किसी प्रकारका अवधि अपेक्षित रहता है। जैसा प्रयागसे काशीकी अपेक्षा गया दूर है, और गयासे काशी प्रयागके

परत्वजनकं परम्परासम्बन्धघटकसापेक्षमित्यादि पूर्व्ववत्; तेन च दिशः सिद्धिः। न चाकाशमेव सम्बन्धघटकमास्तामिति वाच्यं,

---

समीप है। यहां देखो, दूर वा परसे हम अधिक देशके साथ संयोग रखनेवालेको समझते हैं, और समीप वा अपरसे अल्प देशके साथ संयोग रखनेवालेको समझते हैं; तो "प्रयागसे गया दूर है" इसका अर्थ प्रयागसे गया किसी देशकी अपेक्षा अधिक देश (मूर्त्ति) के साथ संयोगरखनेवाली है, अस्मात् इस दूरता (परत्व) में कोई देश अवधि रूपसे अपेक्षित है जो देश प्रयाग और गयाके बीचमें होता है; कल्पना करो उसका नाम काशी है; तो "प्रयागसे गया दूर है" इस वाक्यका तात्पर्य्य यह है कि, प्रयागसे काशीकी अपेक्षा गया अधिक-देश (मूर्त्ति) के साथ संयोग रखनेवाली है, अर्थात् प्रयाग और काशीके बीचमें जितने देश हैं प्रयाग और गयाके बीचमें उससे अधिक देश हैं, ऐसे "गयासे काशी प्रयागके समीप है" इसका तात्पर्य्य यह है कि, गयासे प्रयाग तक जितने देश हैं काशीसे प्रयाग तक इतने देश नहीं, उससे थोड़े हैं। इससे सिद्ध हुआ कि दूरत्व वा समीपताके ज्ञानमें किसी प्रकार का अवधि (सीमा) अपेक्षित है; इसलिये दिशाके अनुमानकी रीति यह है कि "देशिक परत्वका जनक यह जो अवधिको अपेक्षाकरनेवाले बहुतर मूर्त्तिसंयोगसे युक्त शरीरका ज्ञान, वह परम्परा सम्बन्धका घटक किसी तत्त्वसे अपेक्षा रखता

तस्य शब्दाश्रयत्वेनैव धर्म्मिग्राहकप्रमाणसिद्धत्वात् न रविक्रियाद्युपनायकत्वसम्भवः ।

है, कारण (पूर्व्वकथित उदाहरणकी न्याई) यह विशिष्ट ज्ञान है, अतएव इसमें किसी न किसी प्रकारका सम्बन्ध अपेक्षित है, परन्तु यहां किसी प्रकारका साक्षात् सम्बन्ध नहीं, कारण "प्रयागसे गया अधिक देश(मूर्त्ति)के साथ संयोगरखनेवाली है" इसमे यह नहीं जाना जाता है कि प्रयागके साथ जितने मूर्त्तिका सम्बन्ध है, गयाके साथ उससे अधिक मूर्त्तिका सम्बन्ध है; परन्तु काशीकी अपेक्षा जो गया और प्रयागके बीच बहुतर मध्यवर्त्ती प्रदेश हैं उनके साथ गयाका तावत् समवायि-संयुक्तत्वरूप परम्परा सम्बन्ध है, अर्थात् तादृश जितने देश-संयोग, वे समवाय सम्बन्धसे दिशामें रहते हैं, उनका समवायी दिशा, उस दिशाका संयोग गयादिमें है। और ऐसे दिशा एकही है, परन्तु उपाधिके भेदसे पूर्व्वादि नामसे प्रसिद्ध होती है। जैसा कालके भेदज्ञानमें रविक्रिया, ऐसा देशके भेदज्ञानमें मूर्त्त उपाधि। और कालका भेद 'इदानीं' (अब) 'तदानीं' (तब) इत्यादि, ऐसे दिशाका भेद पूर्व्व (पूरब) दक्षिण इत्यादि। अतएव काल और दिशा ये भिन्न भिन्न पदार्थ है, एक नहीं। यदि कहो, काल और दिशा इनदोनों भिन्न पदार्थोंकेस्वीकार करनेकी अपेक्षा यदि एक आकाशको तादृश परम्परा सम्बन्धका घटक माना जावे तो लाघव होवे, इसके उत्तरमें कहते हैं—आकाश पहिले शब्दाश्रय रूपसे अनुमित

(१३) अहं सुखीत्यादिप्रत्यक्षमात्मनि प्रमाणं। ईश्वरे चानुमानं यथा—क्षितिः सकर्त्तृका कार्य्यत्वात् घटवत्, तेनेश्वरस्य तद्वृत्तिनित्यज्ञानेच्छाकृतीनां तत्सार्वज्ञस्य च सिद्धिः। मनसि प्रमाणं यथा,—सुखादिप्रत्यक्षमिन्द्रियजन्यं जन्यप्रत्यक्षत्वात् घटप्रत्यक्षवत्, तथाचेन्द्रियान्तरबाधे मनसः सिद्धिः।

---

किया गया, 'आकाश'-शब्दसे शब्दाश्रयका ज्ञान होता है; अतएव दविक्रिया वा मर्त्तसंयोग का सम्बन्धघटकत्व धर्म्मसे प्रतीयमान विशिष्ट बुद्धिका विषय नहीं हो सक्ता है।

(१३) मैं सुखी हूं मैं दुःखी हूं इत्यादि ज्ञानसे आत्माकी सिद्धि होती है; और अनुमानके द्वारा ईश्वरकी सिद्धि होती है, उस अनुमानकी रीति यह है "इस पृथिवीका अवश्य कोई कर्त्ता ( बनानेवाला ) होगा, कारण यह कार्य्य है; और जो कार्य्य है वह अवश्य सकर्त्तृक होता है (किसीसे बना हुआ होता है) जैसा घट"। ईश्वरकी सिद्धिसे ईश्वरमें स्थित नित्यज्ञान इच्छा यत्न और ईश्वरकी सर्व्वज्ञता इनकीभी सिद्धि होती है। मनकी सिद्धिमेंभी अनुमान प्रमाण है, जैसा "सुखादिका प्रत्यक्ष अवश्य किसी इन्द्रियसे सिद्धि होता है, कारण यह जन्य प्रत्यक्ष है (जन्य वस्तु [कार्य्य] का प्रत्यक्ष) है, जो जन्य प्रत्यक्ष है वही इन्द्रियजन्य होता है अर्थात् उस प्रत्यक्षमें इन्द्रिय कारण होता है, जैसा घट प्रत्यक्ष"; परन्तु जब देखते हैं सुखादिका ज्ञान और किसी इन्द्रियसे नहीं होता तब परिशेषसे मनकी सिद्धि होती अर्थात् उनके ज्ञानकेलिये मनरूप इन्द्रिय अवश्य मानना पड़ता।

तस्य शब्दाश्रयत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात् न रविक्रिया द्युपनायकत्वसम्भवः ।

---

है, कारण (पूर्वकथित उदाहरणकी न्याईं) यह विशिष्ट ज्ञान है, अतएव इसमें किसी न किसी प्रकारका सम्बन्ध अपेक्षित है, परन्तु यहां किसी प्रकारका साक्षात् सम्बन्ध नहीं, कारण "प्रयागसे गया अ  न्य(मूर्त्ति)के साथ संयोगरखनेवाली है" इससे यह नहीं जाना जाता है कि प्रयागके साथ जितने मूर्त्तिका सम्बन्ध है, गयाके साथ उससे अधिक मूर्त्तिका सम्बन्ध है; परन्तु काशीकी अपेक्षा जो गया और प्रयागके बीच बहुतर मध्यवर्त्ती प्रदेश हैं उनके साथ गयाका तावत् समवायि-संयुक्तत्वरूप परम्परा सम्बन्ध है, अर्थात् तादृश जितने देश-संयोग, वे समवाय सम्बन्धसे दिशामें रहते हैं, उनका समवायी दिशा, उस दिशाका संयोग गयादिमें है। और ऐसे दिशा एकही है, परन्तु उपाधिके भेदसे पूर्व्वादि नामसे प्रसिद्ध होती है। जैसा कालके भेद-ज्ञानमें रविक्रिया, ऐसा देशके भेदज्ञानमें मूर्त्त उपाधि। और कालका भेद 'इदानीं' (अब) 'तदानीं' (तब) इत्यादि, ऐसे दिशाका भेद पूर्व्व (पूरब) दक्षिण इत्यादि। अतएव काल और दिशा ये भिन्न भिन्न पदार्थ हैं, एक नहीं। यदि कहो, काल और दिशा इनदोनों भिन्न पदार्थोंके स्वीकार करनेकी अपेक्षा यदि एक आकाशको तादृश परम्परा सम्बन्धका घटक माना जावे तो लाघव होवे, इसके उत्तरमें कहते हैं—आकाश पहिले शब्दाश्रय रूपसे अनुमित

(१३) अहं सुखीत्यादिप्रत्यक्षमात्मनि प्रमाणं। ईश्वरे चानुमानं यथा—क्षितिः सकर्त्तृका कार्य्यत्वात् घटवत्, तेनेश्वरस्य तद्वृत्तिनित्यज्ञानेच्छाकृतीनां तत्सार्वज्ञस्य च सिद्धिः। मनसि प्रमाणं यथा,—सुखादिप्रत्यक्षमिन्द्रियजन्यं जन्यप्रत्यक्षत्वात् घटप्रत्यक्षवत्, तथाचेन्द्रियान्तरबाधे मनसः सिद्धिः।

---

किया गया, 'आकाश'-शब्दसे शब्दाश्रयका ज्ञान होता है; अतएव रविक्रिया वा मूर्त्तसंयोग का सम्बन्ध घटकत्व धर्म्मसे प्रतीयमान विशिष्ट बुद्धिका विषय नहीं हो सक्ता है।

(१३) मैं सुखी हूं मैं दुःखी हूं इत्यादि ज्ञानसे आत्माकी सिद्धि होती है; और अनुमानके द्वारा ईश्वरकी सिद्धि होती है, उस अनुमानकी रीति यह है "इस पृथिवीका अवश्य कोई कर्त्ता (बनानेवाला) होगा, कारण यह कार्य्य है; और जो कार्य्य है वह अवश्य सकर्त्तृक होता है (किसीसे बना हुआ होता है) जैसा घट"। ईश्वरकी सिद्धिसे ईश्वरमें स्थित नित्यज्ञान इच्छा यत्न और ईश्वरकी सर्व्वज्ञता इनकीभी सिद्धि होती है। मनकी सिद्धिमेंभी अनुमान प्रमाण है, जैसा "सुखादिका प्रत्यक्ष अवश्य किसी इन्द्रियसे सिद्ध होता है, कारण यह जन्य प्रत्यक्ष है (जन्य वस्तु [कार्य्य] का प्रत्यक्ष) है, जो जन्य प्रत्यक्ष है वही इन्द्रियजन्य होता है अर्थात् उस प्रत्यक्षमें इन्द्रिय कारण होता है, जैसा घट प्रत्यक्ष"; परन्तु जब देखते हैं सुखादिका ज्ञान और किसी इन्द्रियसे नहीं होता तब परिशेषसे मनकी सिद्धि होती अर्थात् उनके ज्ञानकेलिये मनरूप इन्द्रिय अवश्य मानना पड़ता।

(१४) अथ द्रव्यनाशप्रक्रिया—द्रव्यनाशो द्विविधः,—क्वचिदसमवायिकारणनाशात् क्वचित् समवायिकारणनाशाच्च । तत्राद्यो यथा परमाणुद्वयसंयोगनाशाद्द्व्यणुकनाशः ; द्वितीयो यथा, कपालनाशाद्घटनाशः ; घटनाशः उभयतः सम्भवति ।

(१५) आकाशकालदिगात्मपरमाणवोऽवृत्तयः, समवायश्च ।

---

(१४) अब जिस रीतिसे द्रव्यका नाश होता है उसका वर्णन किया जाता है । द्रव्यनाश दो प्रकारसे होता है, किसी स्थलमें असमवायि कारणके नाशसे, और किसी स्थलमें समवायि कारण के नाश होनेसे; उनमेंसे प्रथम प्रकारका उदाहरण जैसा परमाणु द्वयके संयोगके नाश होने पर द्व्यणुकका नाश होता है ; द्वितीय प्रकारका उदाहरण जैसा कपालके नाश होने पर घटका नाश होता है ; परन्तु घटका नाश दोनों प्रकारोंसे हो सका है, घटका समवायि कारण जो कपाल उसके नाश होनेसे अथवा घटका असमवायि कारण जो कपालद्वयका संयोग उसके नाश होनेसे ; द्व्यणुकका नाश केवल असमवायि कारणके नाशसे होता है, क्योंकि उसका समवायि कारण परमाणु नित्य है, उसका नाश नहीं होता ।

(१५) आकाश, काल, दिशा, आत्मा और परमाणु अर्थात् समुदय नित्य द्रव्य अवृत्ति हैं, अर्थात् ये सब सिवाय कालिक सम्बन्धके और किसी (समवायादि) सम्बन्धसे किसीमें रहते नहीं । समवाय सम्बन्धी समवाय वा संयोग सम्बन्धसे किसीमें रहता

## विस्मरणम् ।

अहोवत ! विद्योदयस्य विलम्ब-मुद्रण-परिहारार्थं सर्व्वात्मना त्वरमाणैर्विस्मृतावेवास्माभिरस्मिन् चणे सामयिक-गुरुसमालोच्यविषयौ द्वौ । तत्रैकः श्रीमतां नवाभ्युपेतानां "रिपन"-नामधेयानां भारतीय-प्रधानतम-राजपुरुषाणामुदारराजनीति-प्रवर्त्तन-प्रस्तावनाडिण्डिम इव सर्व्वत्र सर्व्वैरनुघुष्यमाणात्मशासन-पद्धतिरूपः ; द्वितीयस्तु चुद्रद्वीपवासिनां इङ्गलण्डीयानां मनोरथैरप्यकल्पित-वलैश्वर्य्याधिक्य-लाभोपजात-समरकण्डूयनाविर्भूत-मिश्रदेशीय समरप्रसङ्गः ।

तुल्यरूपयोरप्येतयोरस्माकं साचात्सम्बद्धत्वथात्मशासनमेव प्रथममालोचयामः । अथ न कोऽपि विघ्नो भवेचात्परावगमस्तदा मिश्रदेशीय-समरस्यापि सम्यक् समालोचनार्थं प्रवृत्ता भवेम ।

अथ किमिदमात्मशासनं ? किमात्मनः सङ्कल्पविकल्पात्मकस्य मनसः शासनं—योगेन वृत्तिनिरोधरूपम् ? उतात्मनो विविधव्याधिमन्दिरभूतस्य शरीरस्य शारीरनियमपालन-रूपं शासनं? अथवात्मना (केनापि व्यक्तिविशेषेण) परेषां शासनं ? एवमादिप्रश्नशतप्रसर-निरोधनाय ब्रूमो वयं,—आत्म-शब्देनात्र न मनसो न शरीरस्य, न वा कस्यापि व्यक्तिविशेषस्य

संयुक्तः, परं निखिलस्यैव प्रकृतिमण्डलस्य । ततएवात्मना प्रकृति-
मण्डलेन प्रकृतिमण्डलानां यथान्यायनियमनमेवात्मशासन-
शब्दस्यार्थः ।

सम्प्रति हि निखिलेष्वेव सभ्यतालङ्कृतेषु प्रदेशेषु प्रकृति-
मण्डलैः क्रमेण स्वहस्ते निखिल एव राज्यभारो गृह्यते, राजानस्तु,
प्रत्यहं सांख्यपुरुषवत् केवलं तासां प्रकृतीनां कार्य्यदर्शिनः स्वयञ्च
शक्तिहीना भवन्ति । कुत्र वा राजपदं सर्व्वथाकिञ्चित्करमिति
सर्व्वथा समुन्मूलितमेव तत् । अस्माकं भारतवर्षे तु श्रौत-
स्मार्त्तविधानप्राबल्यसमये राजप्रजासम्बन्धः कीदृगासीदिति न
सम्यक् विज्ञायते, परं यावत्पर्य्यन्तमस्माकं ज्ञानप्रसरस्तावदेव
राज्ञां सर्व्वनियामकत्वस्य प्रमाणबाहुल्यं लभ्यते । विशेषतो
यवनाधिकारसमये राजेच्छैव सर्व्वतोमुखीं प्रभुतामतनोत् ।
अथ भारतभूमिरियं क्रमेण सभ्यतादिसद्गुणालङ्कृतस्येङ्गलण्डा-
धिपतेर्हस्ते निपतिता, परं राजतन्त्रता तु पूर्व्ववदेवाप्रति-
हतप्रसरा स्थिता । इतोऽस्मदधन्यतया प्रकृतितन्त्रतायाः शुभद-
फलं जानन्तोऽपि इङ्गलण्डीयराजपुरुषा भारतीयप्रजास्तत्-
फलभाजः कर्त्तुं नेषुः ।

एतावत्पर्य्यन्तं तज्ज्ञानाच्छन्नधीप्रसरतया न वयं किमपि हित-
महितं वावबोद्धुं शक्ता आसन् । ततो राजपुरुषप्रसादात् विविध-
शास्त्रेतिहासपाठोन्मीलितचक्षुतया वयं राजतन्त्रताया असमी-
चीनं फलं प्रेक्षमाणा एतद्दूषणायैवैतरामाक्रोष्टुमारब्धवन्तः ।

अथ चिरेण तदाक्रोशनं बहुविधनदनदीग्रामनगरगिरिकानन-सागरादीनुत्तीर्य्य इङ्गलण्डतीरभूमिं प्राप्तम्। यदाकर्ण्य धर्म्मनीति-विचलितचित्ता अपि तत्रत्यराजपुरुषास्तूष्णीमेव स्थिताः।

इदानीं लक्ष्मणसुभाग्योदयादुपजातानुकम्पानां तेषां मति-र्विचलिता। तैर्ह्यस्मत्परीक्षणार्थं स्वल्पप्रसराभिनवैषमात्म-शासनपद्धतिराविष्कृता, यद्विवरणमपरपत्रे प्रकटितं भविष्यति।

[ क्रमशः ]

---

# मेघदूतक्षेपकम्।

(पूर्व्वप्रकाशितानन्तरम्)

प्रातःफुल्लन्नवसरसिजामोदस्यन्दिमेघपुष्प-
क्रीड़त्क्रौञ्चच्छदजपवनाधूतकल्लोलनादैः।
दूरस्थानां निजलवणिमप्राभवं दर्शयित्वा
यत्रेचौघं सुसफलयितुं नाधयत्यञ्जसा नो ॥ ४५ ॥

यत्र श्रीमन् भवति तुहिनं वर्षति द्योतते नो
राजीवाली मधुकरहतं नापि हंसा न कोकाः।
क्षन्तानन्दं तदपि सुषमा कापि यस्य प्रसूते
धामाहार्य्यं प्रकृतिमधुरं वस्तु नापेक्षते हि ॥ ४६ ॥

---

आहार्य्यमारोप्यमाणं धाम तेजः ॥ ४६ ॥

हिम्यारम्या अपि तटभुवो यत्स्वरूपादभिन्नाः
प्राप्यायुष्मन्निभपतिरपां भ्रान्तितस्तर्पितोऽन्तः ।
न्यस्यत्यास्यं सपदि गलिते भोगिनिर्मोकपट्टे
मेरुं गत्वार्थनियतियतो विन्दते काचखण्डम् ॥ ४७ ॥

त्रैलोक्यं यत्प्रतिकृतिमिषेणान्तराविष्टवन्या-
शैलश्रेणीगहनमनिवहव्याप्तसप्तान्तरीपम् ।
साक्षान्नारायणमिव समुद्भिन्नपाथोरुहेण
श्रीमन् बिभ्रत् सकलमुदरेणाद्भुते मज्ज पश्यन् ॥ ४८ ॥

विष्वक्कूलप्रभवविटपोत्पर्णसंच्छन्नभास्वत्-
कालस्कन्धप्रभृतिविविधानोकहच्छायकृष्णम् ।
नीलाञ्जनाभैर्निचुलिततलं रात्रयद्वासरान् यत्
चक्रद्वन्द्वं विघटयति भो अम्बुदायित्नकाण्डे ॥ ४९ ॥

पादाघातैर्दशशतपदः पीडयन् सर्वलोकान्
पश्चात्तापात् क्षपयितुमघं यत्र देशेऽतिसर्वे ।
आसाद्य द्राङ्मृदुलकिरणः किं महापद्मवासे
सायं सायं निरवधि शुभे मज्जति क्षीरसिन्धौ ॥ ५० ॥

आशावार्यं श्रमनदमनस्यावतीर्णस्य मध्ये
नीहारागात् सततममृतैर्मौलिचन्द्रात् क्षरद्भिः ।
लावण्यानामिव विगलितैर्वामगण्डात् प्रवाहै-
र्यस्य क्षीरं सुमधुरतरं वीक्ष्य पीत्वा च गर्व्वं ॥ ५१ ॥

---

छद चमर्त । रात्रिं करोतीति रात्रयत् ॥ ४९ ॥
वामगण्डस्य देवीभागत्वादिति भावः ॥ ५१ ॥

यस्मिन् दृष्ट्वा सरसि पिबतो वन्यदन्तावलेन्द्रान्
सुत्रामाश्वक्षितिभृदुपमान् कर्द्दमाभ्यक्तगात्रान् ।
सौम्यातङ्कादपरजलधेर्लातुमर्णोऽवतीर्णान्
स्तीयान् यावत् स्फुटमवरजान् वारिदांस्त्विन्निबोधि ॥ ५२ ॥

[ क्रमशः ।

---

## आत्मपत्रम् ।

### समस्यापूर्त्तिः ।

( पूर्व्वप्रकाशितानन्तरम् )

(१)

या तारहार उरसः शिरसस्तु रत्नं
पीयूषवर्त्तिरपि या कुहशी दृशोर्मे ।
देहस्य चन्दनरसः सरसाङ्गयष्टिः
तामिन्दुसुन्दरमुखीं सततं स्मरामि ॥

(२)

यस्या वच: श्रुतिसुधा स्मरदग्धदेह-
निर्वापणार्द्रविसवन्मृदुलौ च बाहू ।
यद्वक्त्रदर्शनसुखं किमपीन्द्रियाणां
तामिन्दुसुन्दरमुखीमित्यादि ॥

(३)

लीलाचलन्नयनगोचरतां गतस्य
यत्प्राप्तुरपायपरिकल्पनवीतशान्ते: ।
हेमन्तरात्रिरपि मे नयने प्रभाता
तामिन्दुसुन्दरमुखीमित्यादि ॥

(४)

यद्वन्निदाघतपनातपशुष्कतालु-
र्जीमूतमम्बु चतते खलु चातकोऽयं ।
चिन्ताविशुष्कहृदय: प्रणयाक्तताय
तामिन्दुसुन्दरमुखीं सततं दिदृक्षु: ॥

कृतिरियं भट्टपल्लीवासिनो
रामकृष्ण शर्म्मण: ।

ओं Registered No 12:

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्याद् अविद्यातिमिरं भुवि ॥

खण्डं ११] जुन १८८८ [६ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २७, गिरिश-विद्यारत्नस् लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

## विज्ञापनम् ।

इतः पूर्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितमभविष्यति। ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः। विद्योदय-कार्य्याध्यक्षः—लवपुरे ।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालान्यतमाध्यापक-पण्डित-श्रीसुखदयालु-विरचिता मूल्यं ।)

---

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं पत्रकरेण ... ... ... [illegible]

„ पश्चाद्देयं ... ... ... [illegible]

(प्रतिकापत्रस्य १० पंक्तिपरिमितमूल्येन ग्राह्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः [illegible] पंक्तिपरिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

छन्दोबोधः—(संस्कृतहिन्दीभाषा रचनोपकारी) ग्रन्थोऽयं सुगम-हिन्दीभाषायां लिखितः, लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्ट्रार्'स अफिस, पञ्जाब यूनिवर्सिटी कालिजे) प्राप्तव्यः। कवितावली—अत्युत्तमकविताग्रन्थः—मूल्यं ।) अस्मत्समीपे प्राप्तव्या।

कर्णशष्कुल्यवच्छिन्न-नभःप्रदेशः ; एतानि पञ्च वहिरिन्द्रियाणि, मनोऽन्तरिन्द्रियं, तेन षड़िन्द्रियाणि। विषयास्तु शब्दादिरूपेण प्रसिद्धाः। आत्मा द्विविधः—जीवात्मा परमात्मा च ; तत्र जीवात्मानः प्रतिशरीरं भिन्ना बन्धमोक्षयोग्याः। परमात्मा ईश्वरः।

(७) अथ प्रत्यक्षाप्रत्यक्ष-द्रव्याणि—परमाणुद्व्यणुके अप्रत्यक्षे ; महदुद्भूतरूपवत्त्वं यत्र तानि पृथिवीजलतेजांसि प्रत्यक्षाणि,

---

लिया जाता है), तैजस इन्द्रिय चक्षुः, वायवीय इन्द्रिय त्वचा, और आकाश इन्द्रिय कान (जिससे शब्द सुना जाता है) ; इन पांचोंको वहिरिन्द्रिय कहते हैं, और मन अन्तरिन्द्रिय है, सब मिलकर इन्द्रिय छ प्रकारके हैं। पार्थिव इन्द्रिय का विषय (अर्थात् भोग्यवस्तु) गन्ध, जलीय इन्द्रिय का विषय रस, तैजस इन्द्रिय का विषय रूप, वायवीय इन्द्रियका विषय स्पर्श, और आकाश इन्द्रियका विषय शब्द है। आत्मा दो प्रकारका है—एक जीवात्मा, दूसरा परमात्मा ; जीवात्मा प्रति शरीरमें भिन्न भिन्न है, और बन्धन (संसारमें प्रवृत्ति) और मुक्ति (संसारसे छुटना) का पात्र है। परमात्मा ईश्वरको कहते हैं।

(७) अब प्रत्यक्ष और अप्रत्यक्ष द्रव्योंका वर्णन करते हैं,—परमाणु और द्व्यणुक अप्रत्यक्ष अर्थात् किसी वहिरिन्द्रियसे ज्ञात नहीं होते हैं ; महत् तथा उद्भूतरूपवाले पृथिवी, जल, और तेज प्रत्यक्ष हैं अर्थात् वहिरिन्द्रियसे विदित होते हैं, आत्मा भी

आत्मा च प्रत्यक्षः। वाय्वाकाश-काल-दिङ्मनांसि तु अप्रत्यक्षाणि। बहिर्द्रव्यप्रत्यक्षं प्रति महत्त्वं अप्युद्भूतरूपवत्त्वं प्रयोजकम्।

(८) अथ द्रव्योत्पत्तिप्रक्रिया। तत्रोत्पत्तिः कारणवतः; अनन्यथासिद्धनियतपूर्ववर्त्ति कारणं, तत्त्वं कारणत्वम्। त्रिविधानि कारणानि, समवायिकारणासमवायिकारणनिमित्तकारणानि। यत्समवेतं कार्य्यमुत्पद्यते तत् समवायिकारणं, यथा परमाणुः द्व्यणुकस्य, कपालं घटस्य। समवायिकारणे सम्बद्धं कारणं असम-

(मानस) प्रत्यक्ष है अर्थात् केवल मनके द्वाराही उसका दर्शन होता है। वायु आकाश काल दिशा और मन ये अप्रत्यक्ष अर्थात् किसी इन्द्रियसे विदित नहीं होते हैं। बाह्य वस्तुके प्रत्यक्षमें महत्त्व * और उद्भूतरूपवत्त्व कारण है।

(८) अब द्रव्योत्पत्तिकी प्रक्रिया लिखी जाती है। कारणवालेकीही उत्पत्ति होती है; अन्यथासिद्धि † शून्य होकर जो नियत पूर्ववर्त्ती होता है अर्थात् सदैव (किसी व्यवधानसे विना) पहिले रहता है उसे कारण कहते हैं, और उसके धर्मको कारणत्व कहते हैं। कारण तीन प्रकारका है, (१) समवायिकारण,

* जो वस्तु अनेक अवयव करके युक्त उसका नाम महत्। जिस रूपके रहनेसे द्रव्यका प्रत्यक्ष होता है उसका नाम उद्भूतरूप। नवीनोंके मतमें वायुका प्रत्यक्ष होता है।

† अन्यथासिद्धि पांचमें रहती है, (१) निमित्तकारणके धर्ममें, (२) निमित्तकारणके रूपमें, (३) उस वस्तुमें जो दूसरेके कारणरूपसे प्रसिद्ध है, (४) कारणके कारणमें, (५) जो अवश्य पूर्ववर्त्तिके अतिरिक्त है अर्थात् जिसके होनेसे या न होनेसे भी कार्य्य होता है।

वायि कारणं, यथा परमाणुद्वयसंयोगो द्व्यणुकस्य, कपालरूपं घटरूपस्य। एतदुभयभिन्नं यत् कारणं तन्निमित्तकारणं, यथा द्व्यणुके ईश्वरः ; घटे दण्डः। एतत् कारणत्रयं भावकार्य्यमात्रस्य। तत्र

---

(२)असमवायिकारण, और (३) निमित्त कारण। जिसमें समवेत* होकर कार्य्य उत्पन्न होता है वह कार्य्यका समवायि कारण है, अर्थात् जितने अंश मिलकर वस्तुको उत्पन्न करते हैं उनमेंसे हरएक अंश उस वस्तुका समवायि कारण है; जैसा परमाणु द्व्यणुकका समवायि कारण, कपाल (घटका अर्द्धांश) घटका समवायि कारण। समवायि कारणमें समवाय सम्बन्धसे स्थित होकर जो किसीका कारण होता है, उसे असमवायि कारण कहते हैं; जैसा परमाणुद्वयका संयोग द्व्यणुकका असमवायि कारण, कपालका रूप घटके रूपका असमवायि कारण। इनदोनों कारणोंसे अतिरिक्त होकर जिसे कार्य्यके अव्यवहित पूर्व्वमें रहना अवश्य है, उसे निमित्त कारण कहते हैं; जैसा द्व्यणुककी उत्पत्तिमें ईश्वर निमित्त कारण है, और घटकी उत्पत्तिमें दण्ड (डंडा

---

* जो वस्तु किसीमें समवाय सम्बन्धसे रहता है वह उसमें समवेत है। समवाय सम्बन्धका वर्णन आगे किया जावेगा। यहां इतनामात्र कहा जाता है कि सम्बन्ध तीन प्रकारका है—संयोग समवाय और स्वरूप। दो वा अधिक भिन्न भिन्न वस्तुकी मिलावटमें उनमें जो सम्बन्ध है उसका नाम संयोग ; सम्पूर्ण वस्तुके अपने अंशोंसे जो सम्बन्ध, गुण अपने आश्रयमें जिस सम्बन्धसे रहता है, और जाति (साधारण धर्म्म) व्यक्तिमें जिस सम्बन्धसे रहती है उसका नाम समवाय ; स्वरूपका नामान्तर तादात्म्य, विशेषणता। कालिक सम्बन्ध, दैशिक सम्बन्ध करके सम्बन्ध और भी हैं।

समवायिकारणं द्रव्यमेव च, असमवायिकारणं द्रव्ये गुणः, गुणे गुणः, कर्म च। कार्य्यमात्रं प्रति साधारणकारणानि— ईश्वरः, तज्ज्ञानेच्छाकृतयः, प्रागभावकालदिगदृष्टानि। तत्र परमाणुद्वयसंयोगात् द्व्यणुकमुत्पद्यते, संयुक्तत्र्यणुकेभ्यस्त्रसरेणुः। एवं चतुरणुकादिकपालान्तः; कपालद्वयसंयोगेन घटो जायते; घटस्त्वन्त्यावयवी।

---

जिससे चक्की घुमाता), चक्की इत्यादि निमित्त कारण हैं। निखिल भाव (उत्पन्नहोनेवाले) कार्य्योंमें ये तीन प्रकारके कारण जरूर होते हैं। द्रव्यसे बिना और कोई पदार्थ समवायि कारण नहीं हो सक्ता, द्रव्यका असमवायि कारण गुण (द्रव्यके अंशोंका संयोग इत्यादि) ही होता है, किसी वस्तुके गुणका असमवायि कारण उस वस्तुके समवायि कारणका गुण वा क्रिया। निखिल कार्य्यका साधारण कारण ईश्वर, उसकी ज्ञान, इच्छा, और यत्न, प्रागभाव * काल दिशा और अदृष्ट। दोनों परमाणुओंके मिलापसे द्व्यणुक उत्पन्न होता है, तीन द्व्यणुकके योगसे एक त्रसरेणु की उत्पत्ति होती है। इस रीतिसे चतुरणुक क्रमसे कपाल (घटका अर्द्धभाग); दोनों कपालोंके योगसे घट उत्पन्न होता है; घट अन्त्यावयवी अर्थात् यह एक सम्पूर्ण वस्तु और किसी वस्तुका अवयव (अंश) नहीं है—अर्थात् दोनों घटोंके मिलापसे द्विघट वा और किसी नामसे प्रसिद्ध कोई वस्तु

---

* किसी कार्य्यकी उत्पत्तिके पहिले उसका जो अभाव (नहोना) उसे प्रागभाव कहते हैं।

(८) अथ द्रव्ये प्रमाणं कथ्यते। प्रत्यक्षद्रव्ये प्रत्यक्षमेव प्रमाणं; अतीन्द्रियेऽनुमानं, तत् पक्ष-हेतु-साध्य-दृष्टान्त-ज्ञान-साध्यं। विशेषो वक्ष्यते। परमाणुद्व्यणुकानुमानं यथा—त्रसरेणुः सावयवद्रव्यारब्धः बहिरिन्द्रियवेद्यद्रव्यत्वात्, बहिरिन्द्रियवेद्य-द्रव्यं यत् तत् सावयवद्रव्यारब्धं, यथा घटः; अत्र त्रसरेणुः पक्षः, सावयवद्रव्यारब्धत्वं साध्यं, बहिरिन्द्रियवेद्यद्रव्यत्वादिति हेतुः, घटो दृष्टान्तः। अनेन द्व्यणुकं परमाणुश्च सिध्यति।

---

उत्पन्न नहीं होता है, घट शब्दसे यहां किसी सम्पूर्ण वस्तुका उपलक्षण हुआ।

(८) अब द्रव्यकी स्थितिमें प्रमाणोंको कहते हैं। जो द्रव्य चक्षुरादि बहिरिन्द्रियसे ज्ञान होता है उसकी स्थितिमें प्रत्यक्षही प्रमाण है; जो अतीन्द्रिय है अर्थात् किसी इन्द्रियसे नहीं ज्ञात होता है अनुमान उसका प्रमाण है, अनुमानके पहिले पक्ष, हेतु, साध्य और दृष्टान्त इनका ज्ञान अपेक्षित है। इनका विशेष पिछे कहा जावेगा। अब परमाणु और द्व्यणुकके अनुमानकी रीतीका वर्णन किया जाता है; जैसा त्रसरेणु अवश्यही किसी प्रकारके सावयव (अंशोंसे युक्त) द्रव्यसे बना है, क्योंकि यह (त्रसरेणु) बहिरिन्द्रियसे ज्ञेय द्रव्य है अर्थात् द्रव्यसें जिस धर्मके रहनेसे बहिरिन्द्रियके द्वारा ज्ञान होनेकी योग्यता होती है इसमें भी ऐसा द्रव्यत्व धर्म है, (हम देखते हैं) कि जो वस्तु बहिरिन्द्रियसे ज्ञात होता है वही सावयव (अंशोंसे युक्त) द्रव्यसे बना होता है; जैसा घट (घड़ा); इस अनुमानमें

(१०) आकाशवायू शब्देन स्पर्शेन चानुमीयेते। "शब्दो द्रव्याश्रितो गुणत्वात्, यथा घटरूपम्"; अनेन द्रव्यान्तराबाधात्

---

त्रसरेणु पक्ष, उसकी सावयव द्रव्यसे उत्पत्ति साध्य, और बहिरिन्द्रियसे ज्ञान होनेकी योग्यता विशिष्ट द्रव्यत्वरूप धर्म हेतु, तथा घट दृष्टान्त। इस अनुमानसे द्व्यणुक और परमाणुकी सिद्धि होती है। *

(१०) शब्द और स्पर्शके द्वारा क्रमसे आकाश और वायुका अनुमान होता है। जैसा "शब्द अवश्य किसी द्रव्यका आश्रित है कारण यह गुण है, गुणमात्रही द्रव्यका आश्रित है, जैसा घटका रूप"; परन्तु जब और द्रव्य शब्दका आश्रय नहीं होता है तब शब्दके आश्रयकी सिद्धिकेलिये अवश्यही आकाशको मानना पड़ेगा। और कोई वस्तु जो शब्दका आश्रय नहीं इस बात दिखलानेकेलिये यह युक्ति है "शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्य-

---

* जिस पदार्थमें किसीका अनुमान किया जाता है वह पक्ष, जिसका अनुमान किया जाता है वह साध्य, जिसको देखकर अनुमान किया जाता है वह हेतु, और जिसका सादृश्य दिखलाया जाता है वह दृष्टान्त। यहां त्रसरेणमें सावयव द्रव्यसे उत्पत्तिका अनुमान किया गया, इसलिये त्रसरेण पक्ष, सावयव द्रव्यसे उत्पत्ति साध्य। इत्यादि अपने आपसे अनुसन्धान करना। यदि बहिरिन्द्रियसे ज्ञेय द्रव्यत्वरूप धर्मको हेतु न कर केवल इन्द्रियसे ज्ञेय द्रव्यत्वको हेतु करता, तो आत्मामें व्यभिचार होता अर्थात् आत्मामें मनरूप इन्द्रियसे ज्ञेय द्रव्यत्वरूप धर्म है (आत्माका मानस प्रत्यक्ष है)। परन्तु आत्मा सावयव द्रव्यसे बना नहीं, इसलिये तुम यह नहीं कह सकते हो कि जो इन्द्रियग्राह्य है वही सावयव द्रव्यसे बना है। इस दोषको हटानेकेलिये बहिरिन्द्रियसे ज्ञेय द्रव्यत्वको हेतु करना पड़ा।

शब्दाश्रयत्वेनाकाशं सिध्यति। पृथिव्यादिचयावृत्तिरयं स्पर्शो

---

वहिरिन्द्रियग्राह्यजातिमत्त्वात्," (शब्द विशेषगुण है कारण यह चक्षुसे अतिरिक्त वहिरिन्द्रियके द्वारा ज्ञात होनेका योग्य, अर्थात् कर्णरूप वहिरिन्द्रियके द्वारा ज्ञात होनेका योग्य, जाति विशिष्ट है, जैसा स्पर्श)। इस अनुमानसे शब्दमें विशेषगुणत्व रूप धर्म सिद्ध हुआ। फिर "शब्दो न स्पर्शवद्विशेषगुणः अग्नि-संयोगासमवायिकारणत्वाभावे सति अकारणपूर्वकप्रत्यक्षत्वात्" (शब्द स्पर्शयुक्त द्रव्योंका [अर्थात् पृथिवी, जल, तेज, और वायुका] विशेषगुण नहीं है, कारण यह अग्निके संयोगके द्वारा उत्पन्न नहीं होता तथा कारणके गुणसे भी उत्पन्न नहीं किन्तु प्रत्यक्ष है); हेतुमें "अग्निके संयोगके द्वारा उत्पन्न नहीं" ऐसे विशे-षणसे पृथिवी आदिमें जो पाकजरूप वा स्पर्शादिरूप विशेषगुण वर्त्तमान हैं उनका वारण हुआ, और घटादिमें जो रूप आदि विशेषगुण हैं वे कारणके गुणसे उत्पन्न होता है, परन्तु हमने कहा कि "कारणके गुणसे भी उत्पन्न नहीं" इससे उनकाभी वारण हुआ, तथा हेतुमें "किन्तु प्रत्यक्ष" है ऐसे विशेषणका फल यह है कि जलपरमाणुका रूप अग्निसंयोगसे उत्पन्न नहीं तथा कारणके गुणसे भी उत्पन्न नहीं होता है परन्तु प्रत्यक्ष नहीं, अस्मात् "प्रत्यक्ष" है ऐसे विशेषणसे उसमें लक्षण नहीं गया क्योंकि परमाणुकारूप अप्रत्यक्ष है। इस अनुमानमें पृथिवी, जल, तेज, और वायु इनके जो विशेषगुण हैं उनमें शब्द नहीं आया। शब्द विशेषगुण है इसलिये दिशा वा कालके गुणोंके अन्तर्गत नहीं है, क्योंकि दिशा और कालमें कोई विशेषगुण

द्रव्याश्रितो गुणत्वादित्यनुमानेन द्रव्यान्तरबाधात् स्पर्शाश्रयत्वेन वायुः सिध्यति ।

---

नहीं रहता है । शब्द बहिरिन्द्रियसे ग्राह्य (कर्णसे ज्ञात होता) है, इसलिये आत्माके विशेषगुण सुखादिके अन्तर्गत नहीं है, कारण सुखादि बहिरिन्द्रियसे ग्राह्य नहीं, शब्दका आश्रय इन द्रव्योंसे अतिरिक्त और कोई होगा जिससे आकाशकी सिद्धि हुई ।

नैयायिकोंके मतमें पृथिवी, जल, तेज, और वायु इन चारोंमें स्पर्श रहता है । उनमेंसे पृथिवीका स्पर्श पाकज (किसी प्रकारके अग्निके संयोग आदिसे उत्पन्न) अनुष्ण (थोडासा गरम), और अशीत (थोडासा ठण्डाभी) है । जलका स्पर्श स्वाभाविक और शीतल है, तेजका स्पर्श स्वाभाविक और उष्ण है । वायुका स्पर्शभी स्वाभाविक है परन्तु अनुष्ण और अशीत है । अब देखो वायुका स्पर्श पृथिवी, तेज, और जलके स्पर्शसे विलक्षण है, कारण यद्यपि पृथिवीका स्पर्श अनुष्ण और अशीत है किन्तु स्वाभाविक नहीं, तथा जल और तेजका स्पर्श यद्यपि स्वाभाविक है किन्तु अनुष्ण और अशीत नहीं । अब इस रीतिसे अनुमान होता है "पृथिवी आदि तीन (पृथिवी, जल, तेज) के स्पर्शसे भिन्न स्पर्श (स्वाभाविक अनुष्ण और अशीतरूप) अवश्य किसी द्रव्यका आश्रित होगा, कारण वह गुण है, पहिले यह कहा गया कि गुण मात्रही द्रव्यका आश्रित होता है, जैसा घटका रूप" । और यहभी पहिले कहचुके हैं कि, स्पर्श केवल चार द्रव्यमें रहता है, इनमेंसे पृथिवी आदि तीनका स्पर्श स्वाभाविक, अनुष्ण और अशीत नहीं, अस्मात् ऐसे स्पर्शका आश्रित अवश्य वायु होगा ।

शिक्षा-रीति-जिज्ञासु-सभा-

## प्रश्नाः।

२७। साम्प्रतं छात्राणां शिक्षकाणाञ्च येन औचित्यमतीत्यैव विश्वविद्यालय-प्रवेशिकाख्य-परीक्षां प्रति धावतीति यद्वचः परितः श्रूयते किं तत् सत्यमूलकमस्ति ? सत्यमूलकं चेत्, तदावस्थैषा किं भवन्मते मध्यश्रेणिस्थ-विद्यालय-लब्धशिक्षाया नित्यकर्म्मनिर्व्वाहकतां ह्रासयति ?

२८। मध्यश्रेणिस्थेभ्यो विद्यालयेभ्यो ये छात्राः प्रतिवर्षं विश्वविद्यालयस्य-प्रवेशिकाख्य-परीक्षार्थं प्रस्तुता भवन्ति, तेषां संख्या तत्तद्देशावश्यकातिरिक्तेति किं विचारयति भवान् ? यद्येवं, तदा कान्यत्र कारणानि भवितुमर्हन्ति ? तन्निवारणोपायश्च कः ?

२९। भवदीयप्रदेशे छात्रवृत्तिवितरणस्य का रीतिर्वर्त्तते ? तत्र भवान् किमपि वक्तुमिच्छति किं ? राजकीयविद्यालयेषु लब्धसाहाय्य-विद्यालयेषु वा किमेकयैव रीत्या वृत्तिः प्रदीयते ?

३०। खृष्टधर्म्मप्रचारकै रपरैर्व्वा स्थापितेषु लब्धराजसाहाय्येषु विद्यालयेषु मुनिसिपलसभायाः सहायतापि प्रवर्त्तते किम् ? तादृक्सहायतायाः स्थायिता च कीदृक् ?

३१। विश्वविद्यालय-परीक्षा-दानार्थं यदध्ययनमनुष्ठीयते किं तेनैव जनाः शिक्षककार्य्यं सम्पादयितुं समर्था भवन्ति ?

अथवा शिक्षककार्य्यशिक्षार्थं केषाञ्चिन्नर्म्मालाख्य-विद्यालयानां स्थापनमुचितं भवति ?

३२। भवदीयप्रदेशे विद्यालय-निरीक्षणरीतिः कीदृशी ? कीदृगुन्नमनयोग्या वा सा ?

३३। वर्त्तन्ते किं कश्चिदेवमुपायो यदवलम्बनेन योग्य-जना विनैव वेतनादिकं स्वेच्छया विद्यालय-निरीक्षण-कार्य्ये समुत्सुका भवेयुः ?

३४। सर्व्वविधेष्वेव विद्यालयेषु यान्यधीयन्ते पुस्तकानि तेषां कीदृगुपकारित्वं वर्त्तते ?

३५। शिक्षा-विभागीय कर्त्तृपक्षैः परीक्षा-कार्य्येषु, पुस्तक-निर्व्वाचनविधानपरेषु चैवंविधेषु व्यापारेषु ये ये नियमाः प्रवर्त्तितास्ते किं प्रजाभिर्निजशक्त्या स्थापितविद्यालयानामुन्नतिं प्रतिबध्नन्ति ? किन्तु ते कथमपि देशीयभाषारचितशास्त्राणां, देशिकस्य स्वाभाविकभावस्य सामर्थ्यस्य चोन्नतिं रुन्धन्ति ?

३६। भारतवर्षे सम्पूर्ण-शिक्षा-प्रचारार्थं केषु केषु कार्य्येषु राजानुष्ठितेष्वपरानुष्ठितेषु वा केषु समीहित-फललाभो भवेत् ?

३७। स्कुलिति प्रसिद्धानां, कलेजाभिधेयानां वा विद्या-लयानां कार्य्यविधानभारो यदि राज-स्कन्धादङ्कलतयावतारितो भवेत्, तदा भवन्मते विद्याप्रचारस्य कीदृश्यवस्था भवेत् ? तथा प्रदेशीयजनानां सामाजिकहितानुष्ठानेषु समाजबन्धनेषु वा कीदृक् स्वावलम्बिता-वर्द्धनं भवेत् ? [ क्रमशः ।

# वर्णविवेकः।

द्वितीयोऽध्यायः।

धर्मशास्त्रप्रणेतृभिः प्राक्तनर्षिभिः भिन्नजातीययोरपि वर-कन्ययो र्यो विवाहो विहितः न स सर्व्वसाधारणविषयकः। उत्-कृष्टजातीयस्य पुरुषस्य हीनजातीययैव कन्यया विवाहो नियमितः, तादृशनियमनस्य कारणमपि पूर्व्वं यथामत्युपन्यस्तम्। एतादृश-विवाहस्यानुलोमविवाह इति कथ्यते। एतद्विपरीतस्त्रीपुंसयोगस्तु प्रतिलोमनाम्नाभिहितः। हीनजातीयस्य पुरुषस्य खोत्कृष्ट-जातीयया कन्यया विवाहो नास्मच्छास्त्रसम्मतः, तत्कारणञ्च दर्शितपूर्व्वम्। साम्प्रतं तद्द्विविधस्त्रीपुंसयोगोत्पन्नानामपत्यानां विवेकः क्रियते। तत्र प्रथमोक्तत्वाच्छास्त्रविहितत्वाच्चानुलोमज-पुत्राणां निर्द्देशः क्रियते। तथाहि मनुः

"सर्व्व वर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्तएव ते॥"

ब्राह्मणादिषु वर्णेषु चतुर्व्वपि समानजातीयासु यथाशास्त्रं परिणीतासु अक्षतयोनिषु अन्यैरव्यवहितपूर्व्वासु भार्य्यासु आनु-लोम्येन ब्राह्मणेन ब्राह्मण्यां, क्षत्रियेण क्षत्रियायामित्यादिक्रमे-णोत्पन्नाः पुत्रा जात्या मातापित्रोर्जात्या युक्ता ज्ञेयास्तज्जातीया-

एव ज्ञातव्याः। इति कुल्लूकभट्टः। यद्यप्यत्र "समानजातीयासु यथाशास्त्रं परिणीतासु" एवमादिभार्य्याविशेषणपदैरानुलोम्यमायातं श्लोकेऽनैतदुपादानस्य न सार्थक्यमस्ति, तथापि वक्ष्यमाणे "स्त्रीष्वनन्तरजातास्वि"त्यत्र श्लोकेऽस्योपादानमात्रश्यकमित्यत्रैव कृतम्। याज्ञवल्क्योऽपि

"सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः"।

अतएव ब्राह्मणाद् यथाविधि विवाहितायां ब्राह्मणकन्यायां जातः पुत्रो ब्राह्मण एव, क्षत्रियाद् यथाविधि विवाहितायां क्षत्रियकन्यायां सम्भूतः पुत्रः क्षत्रियएव, वैश्याद् यथाविधि विवाहितायां वैश्यकन्यायां सम्भूतः पुत्रो वैश्यएव, तथा शूद्राच्छूद्रकन्यायां यथाविधि व्यूढायां शूद्र इति फलितार्थः। पुत्रशब्दोऽत्रापत्यमात्राभिधायकस्तेन तथोत्पन्नाः कन्या अपि तत्तज्जातीयतामाप्नुवन्ति।

समानजातीयभार्य्योत्पन्नपुत्रानुक्त्वा भिन्नजातीयभार्य्योत्पन्नान् पुत्रानाह मनुः—

"स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥"

अनन्तरजातासु, अव्यवहितवर्णजातीयासु स्त्रीषु भार्य्यासु (यथाविधिव्यूढासु) द्विजातिभिरानुलोम्येन ब्राह्मणेन क्षत्रियायां, क्षत्रियेण वैश्यायां, वैश्येन च शूद्रायामुत्पादितान् पुत्रान् मातृदोषेण मातृहीनजातीयत्वदोषेण विगर्हितान् निन्दनीयान्,

पितृसदृशान् न तु पितृसजातीयानाङ्क मन्वादयो धर्मशास्त्र-प्रयोजका इति शेषः। अव्यवहितवर्णत्वञ्चानुलोम्येन प्राति-लोम्येन चेत्युभयथा सम्भवति, तत् कीदृशमव्यवहितत्वमत्र ग्रहणीय-मित्याकाङ्क्षाया निवृत्तये पूर्वश्लोकादानुलोम्येनेत्यस्यानुवृत्ति-र्भवति। ब्राह्मणात् व्यूढायां क्षत्रियकन्यायां जातः पुत्रोमूर्द्धा-भिषिक्त इति कथ्यते, क्षत्रियात् वैश्यकन्यायां व्यूढायामुत्पन्नः पुत्रो माहिष्य इत्यभिधीयते, वैश्यात् शूद्रकन्यायां परिणीताया-मुत्पन्नः पुत्रः करण इति विश्रुतः। एते हि पितृसदृशा अर्थात् धर्मशास्त्रैः स्वपितृजातिषु विहितसंस्कारयोग्या अपि न पितृ-सजातीया भवन्ति, ब्राह्मणादिवधे ब्राह्मणादिस्वामिकद्रव्यापहर-णादौ वा जनो यथा पापभाग्भवति मूर्द्धाभिषिक्तादिवधे मूर्द्धा-भिषिक्तादिद्रव्यापहरणादौ वा न तथास्य पापभागित्वमिति। अनन्तरास्वानुलोम्येनाव्यवहित-वर्ण-जातीयासु जातानामेवैष पूर्व्वोक्तो नियमः। एकेन द्वाभ्यां वा वर्णाभ्यां व्यवहितवर्णजाती-यास्वानुलोम्येनोत्पन्नानां यथा ब्राह्मणेन वैश्याशूद्रयोः क्षत्रियेण च शूद्रायामुत्पन्नानां संज्ञामाह मनुः—

"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
निषादः शूद्रकन्यायां यः पारशव उच्यते॥
क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥"

ब्राह्मणादूढायां वैश्यकन्यायामम्बष्ठनामा पुत्रो जायते,

तादृश्यां शूद्रकन्यायाञ्च पारशवापरपर्य्यायो निषादनामा पुत्रो जायते। शूद्रायां शूद्रकन्यायाञ्च क्षत्रियेण क्रूरकर्म्मरतिः क्षत्र-शूद्रस्वभाव उग्राख्यः पुत्रो जायते। एतेऽपि पितृजातितो निकृष्टास्तथाहि मनुः—

"विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥"

ब्राह्मणस्य क्षत्रियादित्रय-स्त्रीषु, क्षत्रियस्य वैश्यादिद्वय-स्त्रियोः, वैश्यस्य च शूद्रायां—वर्णत्रयाणां एते षट् पुत्राः सवर्ण-पुत्रापेक्षया अपसदा निकृष्टाः स्मृताः। सवर्णपुत्रेभ्योऽपसद-त्वेऽपि तेषां स्वमातृसजातीयेभ्य उत्कृष्टत्वं तथा यथोचितसंस्कारा-र्हत्वञ्चेति।

यथाविधि परिणीतासु सवर्णास्वसवर्णासु वा भार्य्यासु समुत्-पन्नानां पुत्राणां संस्कारार्हत्वं स्वमातृसजातीयेभ्य उत्कृष्टत्वञ्च। तथाहि याज्ञवल्क्यः "विन्नास्वेष विधिः स्मृतः"; विन्नासु परिणी-तास्वित्यर्थः। देवलश्च "द्वितीयेन तु यः पित्रा सवर्णायां प्रजा-यते। अवावट इति ख्यातः शूद्रधर्म्मा स जातितः॥ व्रतहीना न संस्कार्य्याः स्वतन्त्रास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः॥" व्यासस्तु सवर्णास्वेवोत्पन्नानां संस्कारा-र्हत्वं कथयति। तथाहि—

'ये तु जाताः समानासु संस्कार्य्याः स्युरतोऽन्यथा' इति।

[ क्रमशः ]

श्रीः Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।

विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११] सं १८८२ [५ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितं ।

# तर्कामृतम् ।



मङ्गलाचरणम् ।

(१) ब्रह्माद्या निखिलार्चितास्त्रिदशसन्दोहाः सदाभीष्टदाः

अज्ञानप्रशमाय यत्र मनसो वृत्तिं समस्तां दधुः ।

श्रीविष्णोश्चरणाम्बुजं भवभयध्वंसैकबीजं परं

हृत्पद्मे विनिधाय तन्निरुपमं तर्कामृतं तन्यते ॥

---

(१) जो सदैव वाञ्छित फलको देते हैं, और जिन्हें समुदय जगत् पूजते हैं, ऐसे ब्रह्मा आदि देवगणोंने अपने अपने अज्ञानको दूर करनेके लिये जिसपर मनकी सारी वृत्तियां रखी हैं, अर्थात् जिसकी ध्यानमें हरतरहसे चित्त लगाया है, उस विष्णुके चरण कमलोंको, जो कि संसारके क्लेशोंको दूर करता है, अपने हृदयमें रखकर मैं ने (जगदीशभट्टाचार्य्यने) इस सुन्दर तर्कामृत नाम पुस्तकको रचा है ।

## प्रस्तावना ।

(२) अथ श्रुतिः श्रूयते,—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"—इति ; अस्यार्थः—मुमुक्षुणा आत्मा द्रष्टव्यः, मुमुक्षोरात्मदर्शनमिष्टसाधनमिति यावत् । आत्मदर्शनोपायः कः ? इत्यत आह—'श्रोतव्यः' इत्यादि ; तेन आर्थक्रमेण शाब्दक्रमबाध्यो भवति, 'अग्निहोत्रं जुहोति' 'यवागूं

---

(२) यह श्रुति सुनी जाती है कि, "आत्मा ही 'द्रष्टव्य' (देखनेका योग्य), 'श्रोतव्य' (सुननेका योग्य), 'मन्तव्य' (चिन्तनका योग्य), और 'निदिध्यासितव्य' (ध्यानका योग्य) है ; इसका तात्पर्य यह है कि, मुमुक्षु अर्थात् मोक्षलाभके लिये उद्यम करनेवाले मनुष्यका सर्वप्रकारसे आत्मदर्शन ही अवश्य और उचित कार्य है, क्योंकि आत्मदर्शनसे ही उनकी इष्टसिद्धि (मोक्षलाभ) होती है । अच्छा आत्मदर्शन से मोक्ष हो, उस आत्मदर्शनका उपाय क्या है ? इस आशङ्काकी निवृत्तिके लिये श्रोतव्य इत्यादि निरूपण करते हैं ; यहां इस बातको अवश्य जानना चाहिए कि, पण्डितलोग अर्थक्रमका आदर करते हैं शब्दक्रमका नहीं, जो अर्थ प्रथम काममें आता पहिले उसीका अनुष्ठान कियाजाता, और जो अर्थ पीछे काममें आता उसका अनुष्ठान पीछेसे किया जाता है, चाहे उन अर्थोंके प्रकाश करनेवाला शब्द जहां, आगे या पीछे, रहे, जैसा "अग्निहोत्रं जुहोति" (अग्निहोत्र नाम याग करना) "यवागूं पचति" (यवागूका

पचति'—इत्यादिवत्; तथाच श्रवण-मनन-निदिध्यासनानि तत्त्वज्ञानजनकानीत्युक्तं भवति। अत्र श्रुतितः सतात्मश्रवणस्य मननेऽधिकारः, मननञ्च आत्मन इतरभिन्नत्वेनानुमानं, तच्च भेद प्रतियोगीतरज्ञानसाध्यं; तथाचेतरदेव कियत्? इत्येतदर्थं पदार्थनिरूपणम्।

---

पाक करना); यहां यद्यपि "अग्निहोत्र नाम याग करना" यह वाक्य पहिले कहा गया, और "यवागूका पाक करना" यह वाक्य पीछेसे, तौभी यवागूका पाक पहिले कर्त्तव्य है, और अग्निहोत्र याग पीछेसे, क्यों कि व्याख्याकारोंने इन वाक्योंकी ऐसी व्याख्या की है। इसी प्रकार ऊपर कही हुई श्रुतिमें यद्यपि "द्रष्टव्य" यह पद पहिले कहा गया और "श्रोतव्य" इत्यादि पीछेसे, तौभी आत्मश्रवणादिका अनुष्ठान पहिले और आत्मदर्शनका पीछेसे होता है, अर्थात् पहिले आत्माके विषय श्रवणादि होता और पीछेसे आत्मदर्शन (जिसे तत्त्वज्ञान कहते हैं) होता है। श्रवण, मनन, निदिध्यासन इत्यादि कार्य्य आत्मदर्शनका उपाय हैं। श्रवणका अर्थ सुनना; पहिले वेदवाक्योंके द्वारा "आत्मा" (ईश्वर) है—ऐसा श्रवण होता है, पीछे मननमें अधिकार होता है, मननका अर्थ पहिले वेदवाक्योंसे सुनीहुई ईश्वरकी स्थितिको अनुमानसे दृढ़करना, वह अनुमान इसरीति से किया जाता है, कि, "आत्मा" (ईश्वर) इतर [आत्मासे दूसरे] पदार्थसे भिन्न है, कारण उसमें आत्मत्व धर्म्म [जो धर्म्म केवल आत्मामें रहता है] है, जो इतर पदार्थसे भिन्न नहीं है उसमें

## ग्रन्थारम्भः।

(३) संक्षेपतः पदार्थो द्विविधः—भावोऽभावश्च। भावः षड्विधः—द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय-भेदात्। तत्र द्रव्यत्व-गुणत्व-कर्मत्वानि जातयः, सामान्यत्वादीनि उपाधयः।

---

आत्मत्वधर्मभी नहीं रहता—जैसा घटादि *। अर्थात् घट पदार्थ आत्मासे भिन्न है इसलिये आत्मेतर है, आत्मेतर पदार्थसे भिन्न नहीं, ऐसे आत्माके अतिरिक्त समुदय पदार्थही आत्मासे भिन्न (आत्मेतर) हैं, उनमें आत्मत्व नहीं रहता है। इस अनुमानमें प्रथम आत्मभेदका प्रतियोगी † जो आत्मा उससे भिन्न (इतर) पदार्थोंका ज्ञानका आवश्यक है; वे इतर पदार्थ कितने हैं इस प्रश्नकी निवृत्तिके लिये पदार्थोंका निरूपण किया जाता है।

(३)पदार्थ प्रथम दोप्रकारका है—एक भाव, दूसरा अभाव। उनमेंसे द्रव्य, गुण, कर्म (क्रिया), सामान्य, विशेष, और समवाय ये छः भाव पदार्थके अन्तर्गत हैं। द्रव्यत्व (द्रव्योंका धर्म), गुणत्व (गुणोंका धर्म), और कर्मत्व (क्रियाका धर्म) ये तीन जाति

---

* आत्मा इतरेभ्यो भिद्यते आत्मत्ववत्त्वात्, यत् न इतरेभ्यो भिद्यते तत् न आत्मत्ववत् यथा घटादि।

† जिसका अभाव लिया जाता है उसे प्रतियोगी कहते हैं। भेदभी अभावके अन्तर्गत है, इसलिये आत्माका जो भेद उसका प्रतियोगी आत्मा।

(४) द्रव्याणि नव—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि। आकाशत्व-कालत्व-दिक्त्वानि उपाधयः, अन्यानि जातयः।

---

है ; सामान्यत्व (सामान्यका धर्म्म), विशेषत्व (विशेषका धर्म्म) और समवायत्व (समवायका धर्म्म) ये उपाधि हैं। *

(४) द्रव्य नौ प्रकारके हैं—जैसा पृथिवी, अप (जल), वायु, आकाश, काल, दिशा, आत्मा, और मन। इनमेंसे आकाशत्व (आकाशका धर्म्म), कालत्व (कालका धर्म्म), और दिक्त्व (दिशाका धर्म्म) ये तीन उपाधि हैं, और पृथिवीत्वादि जाति हैं।

---

* जातिके विषय आगे भलीभांति कहा जावे, तौभी यहां इतना मात्र कहना है जो धर्म्म अनेकमें रहता है उसका नाम जाति, जैसा द्रव्यत्व पृथिवी जल इत्यादि अनेकमें रहता ; जो धर्म्म केवल एकमें रहता है उसका नाम उपाधि, जैसा आकाशत्व, आकाश एकही है उसका धर्म्म उपाधि ; समवायत्व, समवाय एक है उसका धर्म्म उपाधि।

ऐसा न कही कि "द्रव्यत्व जातिही नहीं है, उसकी सत्तामें प्रमाण क्या है ?" क्यों कि अनुमानसे उसकी सिद्धि होती है, जैसा कि जो कारण है वह किञ्चित् धर्म्म करके अवच्छिन्न होता है, अर्थात् उसका अवच्छेदक (विशेषकनेवाला) धर्म्म कोई न कोई होता है। द्रव्यमात्रही कार्य्यका समवायि कारण है, अतएव उसका अवच्छेदक धर्म्म कोई होगा जिस्से द्रव्यत्व धर्म्मकी सिद्धि हुई। जिस समय कार्य्य नहीं रहता उस प्रलय समयके लिये ऐसा कहना कि संयोग वा विभागका जो समवायि कारण उसका अवच्छेदक धर्म्म अवश्य मानना चाहिए जिस्से द्रव्यत्वकी सिद्धि होती है। गुणत्व जातिभी अनुमानसे सिद्ध है जैसा द्रव्य और कर्म्मको छोड़कर जातिविशिष्टमें जो कारणता है उसका अवच्छेदक धर्म्म अवश्य कोई होगा, क्यों कि निरवच्छिन्न कारणता नहीं होती, जिस्से गुणत्वकी सिद्धि होती अथवा गुणपदमें जो शक्यता है उसका अवच्छेदक गुणत्व ; कर्म्मत्व प्रत्यक्षसिद्ध।

(५) तत्र रूप रस गन्ध स्पर्श संख्या परिमाण पृथक्त्व संयोग विभाग परत्वापरत्व गुरुत्व द्रवत्व संस्काराश्चतुर्दश गुणाः पृथिव्यां। तत्रैव गन्धं विहाय स्नेहं विनियोज्य चतुर्दश गुणा जलस्य। रूप स्पर्श संख्या परिमाण पृथक्त्व संयोग विभाग परत्वापरत्व द्रवत्व संस्कारा एकादश गुणास्तेजसः। स्पर्श संख्या परिमाण पृथक्त्व संयोग विभाग परत्वापरत्व

---

(५) इन द्रव्योंमेंसे रूप (रङ्ग), रस (जिह्वासे जिसका स्वाद लिया जाता), गन्ध (बु), स्पर्श (छोना), संख्या (एकत्वद्वित्व इत्यादि), परिमाण (बड़ा छोटा इत्यादि), पृथक्त्व (फराक), संयोग (दोनों वस्तुओंका मिलाप), विभाग (एकवस्तुसे दूसरेका छुटजाना), परत्व (दूरत्व वा ज्येष्ठत्व), अपरत्व (समीपता वा अल्पत्व), गुरुत्व (भार), द्रवत्व (पिघलना) और संस्कार (वेगरूप) * ये चौदह गुण † पृथिवीमें रहते हैं। इन गुणोंमेंसे गन्धको छोड़कर और उसके स्थानमें स्नेहको (चिकनाईको) मिलाकर चौदह गुण जलमें रहते हैं। तेजमें रूप, स्पर्श, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, द्रवत्व और संस्कार (वेगरूप) ये ग्यारह गुण रहते हैं। स्पर्श, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग,

---

* स्थितिस्थापक संस्कार (एक प्रकारका गुण जिससे वस्तु सदैव स्वाभाविक स्थितिको प्राप्त होती है) भी पृथिवीमें रहता है। किसीके मतमें पृथिवी, जल, वायु, और तेज इन चारोंमें रहता है।

† गुण द्रव्योंका विशेष परिचायक धर्म्म, इसका वर्णन आगे किया जावेगा।

संस्कारा नव गुणा वायोः। शब्द संख्या परिमाण पृथक्त्व संयोग विभागाः षड्गुणा आकाशस्य। संख्या परिमाण पृथक्त्व संयोग विभागाः पञ्च गुणाः कालदिशोः। संख्या परिमाण पृथक्त्व संयोग विभाग बुद्धि सुख दुःखेच्छा द्वेष प्रयत्नधर्माधर्म संस्काराः चतुर्दश गुणा आत्मनः। संख्या परिमाण पृथक्त्व संयोग विभाग परत्वापरत्व संस्कारा अष्टौ गुणा मनसः। ज्ञानेच्छाकृति संख्यादिपञ्चकं—अष्टौ गुणा ईश्वरस्य। तथाच—

"वायोर्नवैकादश तेजसोगुणाः, जलक्षितिप्राणभृतां चतुर्दश।
दिक्कालयोः पञ्च, षडेव चाम्बरे, महेश्वरेऽष्टौ मनसस्तथैव च॥"

---

परत्व, अपरत्व और संस्कार ये नौ गुण वायुमें रहते हैं। शब्द (आवाज), संख्या, परिमाण, पृथक्त्व, संयोग और विभाग ये छः गुण आकाशमें रहते हैं। संख्या, परिमाण, पृथक्त्व, संयोग, विभाग ये पांच गुण काल और दिशामें रहते हैं। संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म और संस्कार ये चौदह गुण आत्मामें रहते हैं। संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व और संस्कार ये आठ गुण मनमें रहते हैं। ज्ञान, इच्छा, कृति, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग ये आठ गुण परमेश्वरमें रहते हैं।—"वायुमें नौ गुण, और तेजमें ग्यारह गुण रहते हैं; जल, पृथिवी, और आत्मा इनमें चौदह चौदह गुण रहते हैं; दिशा और कालमें पांच पांच गुण रहते हैं; आकाशमें छः गुण रहते हैं; और परमेश्वर और मनमें आठ आठ गुण रहते हैं।"

(६) तत्र पृथिवी-जल-तेजोवायवो द्विविधाः—परमाणवः सावयवाश्च। आकाश-कालात्म-दिशो विभुरूपाः। मनः परमाणुरूपं। तत्र सावयवा अनित्याः, इतराणि नित्यानि। सावयवा अपि त्रिविधाः—शरीरेन्द्रिय-विषय-भेदात्। मानुषं शरीरं पार्थिवं, जलीयं शरीरं वरुणलोके प्रसिद्धं, तैजसं शरीरमादित्यलोके, वायवीयं शरीरं वायुलोके। घ्राणेन्द्रियं पार्थिवं, रसनेन्द्रियं जलीयं, चक्षुरिन्द्रियं तैजसं, त्वगिन्द्रियं वायवीयं, श्रोत्रेन्द्रियं

---

(६) पहिले कहेहुए नौ द्रव्योंमें से पृथिवी, जल, तेज और वायु ये दो प्रकारके होते हैं—एक परमाणुरूप जो निरवयव (अविभाज्य) और बहुत सूक्ष्म है, दूसरा सावयव अर्थात् विभाज्य है। आकाश, काल, आत्मा और दिक् ये चार द्रव्य विभु अर्थात् सर्व्वव्यापक वा अपरिमेय हैं। मन परमाणु-स्वरूप, बहुत सूक्ष्म है। पूर्व्वोक्त द्रव्योंमें केवल सावयव द्रव्य अनित्य हैं अर्थात् उनका ध्वंस होता है, अपर समुदय द्रव्य (परमाणुरूप पृथिवी, जल, वायु, तेज,तथा आकाश, काल,आत्मा, दिशा और परमाणु) नित्य हैं अर्थात् उनका ध्वंस नहीं होता है। सावयव द्रव्य सकल तीन प्रकारके हैं,—एक शरीर, दूसरा इन्द्रिय, तीसरा विषय। पार्थिव शरीर मनुष्यका देह, जलीय शरीर वरुणलोकमें प्रसिद्ध, तैजस शरीर आदित्यलोकमें प्रसिद्ध,तथा वायवीय शरीर वायुलोकमें प्रसिद्ध हैं। पार्थिव इन्द्रिय घ्राण (जिससे गन्ध सुंघा जाता है), जलीय इन्द्रिय रसना (जिससे वस्तुका स्वाद

## विवाद-कारणम् ।

अहो ! एकतानब्धनमस्य चन्द्रसूर्य्यप्रमुखग्रहनक्षत्रकुलस्य शीतग्रीष्मवर्षादृतुनिचयसञ्चरस्य जगन्मण्डलस्य ! सर्व्वमेवैतदन्तर्गतं वस्तु निःशब्दमात्माधिकारं परिपालयति, न किमपि कस्यचिदधिकारमधिचिकीर्षति, न वोच्चपदमारूढमस्तयया स्वापेक्षया हीनतरं वावज्ञया पश्यति । सूर्य्यादिग्रहाः अन्ये च बहव उपग्रहा अनन्तकालपर्य्यन्तं स्वकक्षायां परिभ्रमन्ति, न कदापि तामुल्लङ्घ्य परकीयां कक्षामाक्रन्तुं यतन्ते ; नक्षत्राण्येवं स्थिराणि सन्ति स्वस्थानाच्चलन्ति न वेत्यत्रापि सन्देहास्पदमेव । ऋतवोऽप्येवमादृष्टैः सुव्यवस्थितवर्त्मनः परं न रेखामात्रमपि व्यतियन्ति । सर्व्व एव स्वस्वसमयमागत्य निर्द्दिष्टकालं स्वाधिकारमनुष्ठाय च स्वयमेवान्तर्दधति । इत्थमपरेष्वपि बाह्यवस्तुषु पूर्णरूपमेकतानब्धनमालोक्य सुपवित्रं शान्ताश्रममिव सर्व्वतः प्रतिभाति जगन्मण्डलम् ।

परमेतदेव वैचित्र्यं, जडनिचयेष्वित्थं शान्तिपूर्णेष्वपि चैतन्येषु सर्व्वदैव घोररूपाशान्तिर्विराजते । तत्रापि यथा यथा चैतन्याधिक्यं तथा तथैव वैरासूयादि-कल्मषवह्निभिरत्यायततरां जगदन्तरशान्तिः । कीटेभ्यः सरीसृपेषु शान्तेराधिक्यं, सरीसृपेभ्यः पशुपक्षिषु, तेभ्यश्च मनुजेषु, ततो देवदैत्येष्विति ।

अशान्तिर्हि नित्यविरोधमनुधाविनी। यथा विरोधवैको लोभतः स्वबलाभिमानाद् द्वेषतो वा अन्यपराधिकारमाक्रमन्-कर्त्तुमिच्छति तदैवोत्पद्यते। अत्र महार्णव एव दृष्टान्तः—यदा वायुनार्णवस्य जलराशिरुच्छलति तदान्यस्थानस्थितानि जलानि स्वस्थानोच्छलितस्य जलराशेः स्थानमाक्रामन्ति, येन क्रमेणा-नुक्रोर्मीणामुत्पत्तिः, परस्परमाघातप्रतिघाताश्च जायन्ते। वायुमण्डलस्याप्येवं क्रमेण मरुत्प्रवाहा जायन्ते। दृष्टान्तद्वयं केवलं पराधिकारजिघृक्षया कीदृक् सम्प्रघर्षो भवतीति प्रदर्श-नाय, ननु परमार्थतो जलराशेर्वायुमण्डलस्य वा स्वार्थसिद्धत् चिर-स्थायी वा कोऽपि विवादो जायते। तादृक् विवादस्तु [illegible] दृश्यते। चेतनवस्तुष्वपि मनुजानां विवादकारणजिज्ञासैवैतत्-प्रबन्धारम्भप्रवर्त्तिनी।

मनुष्याणां विवादं प्रति बहुधा निर्दिष्टानि कारणानि, यथा "पृथ्वी निमित्तमभवत् कुरुपाण्डवानां लोकत्रयाहि भुवन-त्रयस्तत् विरोधः" तथा "बहुमूलस्य मूलं हि महद्वैरतरोः स्त्रियः" इत्यादि।—अस्माकं मते तु सत्स्वप्येवमादिषु बाह्य-कारणकलापेषु सुदृढमूलस्य महतो मनुजानां वैरवृक्षस्य धिय एव मूलम्।

अन्यकारणक-विवादो हि कदापि कुत्रापि कस्यचिज्जायते। बुद्धिकारणक-विवादस्तु सर्वदा सर्वत्र सर्वस्यैव जायते। वृद्ध-यूनोः, स्त्रीपुंसयोः, पितापुत्रयोः, स्वामिभृत्ययोः, बन्धुबान्धवयोरेव-

मादीनामजस्रं कलहप्रवृत्तिं प्रति बुद्धेरेव कारणता। वृद्धो नाम युवानमपरिपक्कबुद्धिं मन्यमानस्तस्याभीप्सितकार्य्यारम्भं प्रतिबन्धुं यतते, युवा तं वयसा लुप्तबुद्धिकं मत्वा न तदुपदेशं शृणोति, येन परस्परस्य प्रथमं मनोमालिन्यं ततः कलहप्रवृत्तिश्च जायते।

सर्व्वदा निजादेशवर्त्तिनमत्यल्पामपि स्वरुचिमनुसरन्तं स्वामिनं स्त्री बुद्धिहीनं हिताहितविवेकरहितं प्रलापयोरिव (?) पश्यति, स्वामी च स्त्रियं स्त्रीत्वसेवां सम्यगगृह्णन्तीमतएव बुद्धिहीनां प्रकल्प्यात्मीयानां पार्श्वं नियतमनुशोचति।

सर्व्वप्रयत्नकृतामपि सेवामबुद्ध्वैव स्वामी वेतनवृद्धिपारितोषिक-दानादौ नित्यं हि बद्धमुष्टितामवलम्बते, सुपन्थानं दर्शितोऽपि यथेप्सितमाचरतीत्येवमादिस्तुतयः स्वामिषु भृत्यैः सर्व्वदोद्गीयन्ते, स्वामिनस्तु भृत्या बहुशो बोधिता अपि न च स्वामिलषितानुरूपमाचरितुं समर्थाः प्रत्युताहितमेवानुतिष्ठन्ति इति तिरस्कुर्व्वन्ति। इत्थं बुद्धिकारणका विवादाः सर्व्वत्र सर्व्वदैव दृश्यन्ते। सर्व्वे हि स्वबुद्धिमेव तीक्ष्णतरां मन्यन्ते, ततएवापरे स्वतो हीनबुद्धयः प्रतीयन्ते, येन परस्परानैक्यं, ऐक्याभावश्च विवादप्रवर्त्तकः। अतएव बुद्धिर्हि महद्वैरतरोर्मूलम् इत्यलं।

## शिक्षा-रीति-जिज्ञासु सभा-

# प्रश्नाः ।

( पूर्वप्रकाशितानन्तरम् )

१०। प्राथमिक-विद्यालयेषु केषु केषु वा शिक्षितव्य-विषयेषु निवेशितेषु प्रजावर्गाणां विशेषतो कृषकाणामुपकारो भवेत्? तथाविध-विषयेषु शिक्षाप्रदानार्थं कस्यापि विशेषोपायस्य फलोत्पादकत्वमस्ति किम्?

११। भवदीयप्रदेशे विद्यालयनिचयेषु या भाषा शिक्ष्यते तथा विचारालयेषु व्यवह्रियते च, सा किं तत्रत्यानां मातृभाषा? नो चेत् तत्रत्यविद्यालयाः किं तस्मादेव हेतोर्जनैर्न सम्यगाद्रियन्ते वहुमन्यन्ते वा?

१२। अज्ञदरिद्रजनानां मध्ये विद्याप्रचारार्थं फलानुसारतो वेतन-दानस्य किमप्यधिकोपकारित्वं वर्त्तते?

१३। प्राथमिक-विद्यालयेषु छात्रेभ्यो यथा रीत्या विद्यादानमूल्यं गृह्यते तत्र किमपि परिवर्त्तनादिकं भवद्भिश्चिन्त्यते किम्?

१४। कस्मिन् स्विदुपाये समवलम्बिते प्राथमिकविद्यालयानां संख्या तथा तेषां फलप्रदायित्वञ्च क्रमशो वर्द्धिष्यते इत्यत्र स्वसम्मतिप्रदानेन सभेयमनुग्रहीतव्या।

१५। विदितमस्ति किमेतद्भवतो यत् १८५४ खृष्टाब्दीय

प्रबन्धस्य ६२ संख्यकनियमानुसारतः कश्चित् राजकीय-प्रधान-श्रेणीस्थो विद्यालयः संरुद्धः स्थानीयसभाया हस्ते समर्पितो वेति ? तन्नियमस्य बहुलप्रचारे यत्नावापि सम्यक् प्रयत्नो दृश्यते तत्र किं वास्ति प्रधानं कारणं ?

१६। कासु कासु वावस्थासु साहाय्येन सह विनैव वा साहाय्यं प्रधानश्रेणीस्था राजकीय-विद्यालया राजप्रतिपाद्योपकाराणां शिक्षापद्धतेश्च कामपि क्षतिमन्तरेण संरोद्धुं स्थानीयसभाया हस्ते वा समर्पयितुं शक्याः ?

१७। सन्ति कच्चित् भवदीयप्रदेशे केचिदेवं सज्जना ये राजसाहाय्यमात्रमधिगत्य स्वप्रदेशे क्षुद्रान् वृहत्तरान् वा विद्यालयान् स्थापयितुं पूर्वापेक्षयाप्यधिकतरोत्साहेन समुद्यता भवन्ति, सहायतां कुर्वन्ति वा ?

१८। प्रधानतम-राजपुरुषः प्रादेशिको वा प्रधानश्रेणीस्थ-विद्यालयानां पोषणार्थं निहितं स्वायत्तं राजधनं कञ्चित् कालं दत्त्वा यदि न पुनर्दातुमिच्छेत् केन वा सदुपायेन तत्तद्विद्यालय-पोषणार्थं प्रजानामुत्साहो यत्नश्च वर्द्धयितव्यः ?

१९। विद्यालयेभ्यो राजसाहाय्यदानप्रवर्त्तकनियमं प्रति तादृशसाहाय्यवितरणक्रियापरम्परां प्रति वा सन्ति कच्चित् भवतः प्रतिवादाः ? कलेजाख्यविद्यालयेभ्यो बालविद्यालयेभ्यो बालिकाविद्यालयेभ्यो नर्म्मालविद्यालयेभ्यश्च किं यथोचितं साहाय्यं दीयते ?

२०। वर्त्तमानशिक्षादानरीतिः धर्म्मशिक्षाविषयकौदासीन्येन कीदृक्फलप्रदा वर्त्तते ? *

२१। किंविधश्रेणीस्थ जना राजकीयेषु ग्रामसाहाय्येषु वा विद्यालयेषु स्वापत्यानां शिक्षां सम्पादयन्ति ? धनिन-स्तादृशशिक्षार्थं न यथोचितं धनं ददतीति यः प्रवादो वर्त्तते स किं सत्यमूलकः ? भवदीयप्रदेशे कया रीत्या छात्रेभ्यो वेतनं गृह्यते, किन्तु सा रीतिः सत्यगुणोपयोगिनी वर्त्तते ?

२२। कश्चित् समर्थो भवान् केवलं छात्रदत्ताध्ययनमूल्यैः संगृह्य तुच्छस्य महतो वा विद्यालयस्यावस्थितिं प्रदर्शयितुम् ?

२३। कश्चिन्मन्यते भवान् राजसाहाय्यमन्तरेणैव प्रजाभिः स्थापितस्य कस्यापि प्रधानश्रेणीस्थविद्यालयस्य तथाविधराजकीय-विद्यालयेन समं कोऽपि तुल्यकक्षाधिगमः सम्भवतीति ? सम्भवति चेत् कीदृगनुष्ठानैः ?

२४। किं भवदीयप्रदेशे विषमप्रतिस्पर्द्धयोच्चशिक्षा आहत-मूला वर्त्तते ? वर्त्तते चेत् तदुपशमनस्य किमौषधम् ?

२५। किं भवदीयप्रदेशे कृतविद्यैर्देशीयजनैर्यथोचितवेतनेन सह राजकार्य्यादावधिकारो लभ्यते ?

२६। मध्यश्रेणिस्थ-विद्यालयेषु या शिक्षा दीयते, यदि सैव कस्यचिदध्ययनसीमा भवेत्, तदास्य चेतः किं नित्यकर्म्मसाधन-धर्मैरुपकारकैश्च ज्ञानैरलङ्कृतं भवति ? [ क्रमशः ।

* प्रश्नस्यास्य भाषाकाठिन्यादर्थमात्रमनूदितमस्माभिः । सं ।

श्रीः Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं ११]      एप्रेल १८८२      [४ संख्या

## सूची




कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्न लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रित. ।

# विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्म्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः—लवपुरे ।

लक्षणावली (न्यायशास्त्रप्रवेशोपयोगिग्रन्थः) लवपुरस्थ-संस्कृत-पाठशालान्यतमाध्यापक-पण्डित-श्रीसुखदयालु-विरचिता मूल्यं ।)

---

## विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेये ... ... ... २।०

,, पश्चाद्देये ... ... ... ३।०

(प्रत्येकस्य ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः ०/० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

छन्दोबोधः—(संस्कृतहिन्दीभाषा रचनोपकारी) ग्रन्थोऽयं सुगम-हिन्दीभाषायां लिखितः, लवपुर (लाहौर) स्थित मेहरचांद नामधेयस्य संस्कृतपुस्तकविपण्यां तथा पञ्चनदीय-महाविद्यालयाध्यक्ष-कार्य्यालये (रेजिष्ट्रार्'स अफिस, पञ्जाब यूनिवर्सिटी कालेज) प्राप्तव्यः । कवितावली—अत्युत्तमकविताग्रन्थः—मूल्यं ।) अस्मत्-समीपे प्राप्तव्या ।

# धूमकेतुः ।

अहो ! दुःखोत्तरमेव मनुष्यजीवनं । अतिवृष्ट्यनावृष्टिप्रमुखेतिवर्गै र्महामारी-दुर्भिक्षादि-दैवकृतोत्पातैः, आशीविष-दस्यु-विग्रहादि-भौतिकोपद्रवैः शीत-ग्रीष्म-वायुवेग-भूकम्पाधिक्यादि-प्राकृतबाधाभिश्च प्रत्यहमनेकसहस्रप्राणिनां सत्यपि दुःखदुःखेन जीवितक्षये न मनुष्याणां दुःखकारणचिन्तायाः शेषो भवति । एष प्रादेशिकध्वंसहेतुत्वात्खलु नियतं दृग्गोचरीभूतः सन्नवेदनः संवृत्तः; ए[illegible]जनिता हि क्लेशसन्ततिर्न क्लेशरूपेण प्रतीयते, मनुष्यैरेतेभ्योऽन्यदपि महद्भयकारणमुपन्यस्तं, तच्च युगपत् सर्व-च्छेदकृत् महाप्रलयरूपम् । महाप्रलये पुत्रकलत्रज्ञातिबन्धुजन-सम्पत्तिप्रमुखानां सर्व्वेषामेवात्मीयानामात्मनश्च नाशो भविष्यति, न चैषामदाधारभूता धरापि स्थास्यतीति विभीषिकाकुलित-चेतसो मनुजास्तमेव महाप्रलयं समीपवर्त्तिनं पश्यन्ति । धर्मशास्त्र-प्रचारकाणान्तु मते स्वधर्मानुगावतारविशेषः प्रलयमुत्पादयिष्यति, तत्समयाश्च भिन्नविधधर्मोपदेशकैः पृथक् पृथक् निर्द्धारिता-स्तेषाञ्च कत्यतीताः कति चाद्यापि भाविनो वर्त्तन्ते ।

सम्प्रति गणितशास्त्रोन्नमनेन सहापरे केचिज्ज्योतिर्व्विदो धूमकेतुनामकानुपग्रहानालक्ष्य वहुशो जगतः प्रलयमुद्भावयन्ति । "उपप्लवाय लोकानां धूमकेतुरिवोत्थित" इत्यादि-वचनै-

धूमकेतौ लोकोपद्रवकारित्वमस्माकं विदितमस्त्येव, परं नित्यं प्रत्यक्षीकृतेन लोकोपप्लवेन धूमकेतून् दृष्ट्वा न स्वल्पमपि भय-मभूत्; साम्प्रतन्तु ज्योतिर्विदां मुखात् तेषां प्रलयकारित्वमाकर्ण्य धूमकेतून् दृष्ट्वा हृदयस्य दारुणो वेपथुरुपजायते ।

हिसटन-नामा कश्चित् पाश्चात्य-ज्योतिर्ज्ञोऽवदत् नूह(सत्यव्रत)-नाम्नः समये यत् सर्वध्वंसकजलप्लावनं जातं, तत् प्रति कस्यचि-द्धूमकेतोरुदय एव कारणं। तथैवमपि निश्चयो वर्त्तते यत् पृथ्वीयं कदाचित् कस्यापि धूमकेतोः स्पर्शमात्रेण दग्धा भविष्य-तीति। मोपार्टियस-नामधेयेन केनाप्यपरेण १७४२ खृष्टाब्दे लिखितं—पृथ्वीयं कदाचित् केनापि धूमकेतुना संघट्टमासाद्य निश्चितं नंक्ष्यतीति।

१७७३ खृष्टाब्दे यूरोपदेशे महान् कलकलः संवृत्तो यत्तस्मि-न्नेव संवत्सरे पृथिवीयं केनापि धूमकेतुना संघट्टमासाद्य नाश-मेष्यतीति। लालेण्ड-नामकस्य ज्योतिर्विदो गणनैवात्र कारण-मासीत्। तेन केवलं तदा पृथ्वीभ्रमणमार्गस्यातिसमीपवर्त्तिनः के धूमकेतवः स्थिता इत्येतन्मात्रं गणितं, जनैस्तु तन्मूलमात्रमव-लम्ब्य तदाब्दिक-मई-मासस्य विंशतितमदिवसे तादृक् संघट्टो भविष्यतीति कोलाहलं कृत्वा धरणीं कम्पयामासुः।

इत्थं १६८०, १६८४, १७७० खृष्टाब्देषु धूमकेतुविशे-षाणां पृथ्वीभ्रमणमार्गस्य समीपागमनात् जनानां हृदयमचिर-भाविप्रलयमाशङ्क्य सदैव चलाचलमभूत्।

१८१६ खृष्टाब्दीय-जुलाई-मासस्य षोड़शदिवसे केनापि धूमकेतुना संघट्टमासाद्य पृथिवीयं चूर्णीभविष्यतीति निश्चितमभूत्। १८३२ खृष्टाब्दे पृथिवी सत्यमेव कस्यापि धूमकेतोः पुच्छान्तर्गता बभूव, परं परमेश्वरेण रक्षिता। ततः १८५७ खृष्टाब्दे कश्चिद्धूमकेतुर्यः पूर्व्वमपि पञ्चम-चार्लस-नामधेयस्य मनुजाधिपस्य मृत्युसमये दृष्टोऽभूत्, पृथिवीपरिभ्रमणमार्गस्यातीव समीपवर्त्ती बभूव, तेन हि तदाब्दिक-जून-मासस्य त्रयोदश दिवसः पृथिव्या अन्तिमदिवसत्वेन स्थिरीकृतः।

एवमनेकशो ज्योतिर्व्विद्भिः सुनिर्द्धारित-प्रताकिचक्रमुक्त्योऽपि पृथिवीयं न निर्विघ्ना जाता। "Fifteen years, and the world shall be destroyed" इतः पञ्चदशवत्सरान्ते पृथिव्या नाशो भविष्यतीति भविष्यद्वाणी पुनरेव पाश्चात्यभूमौ प्रादुर्भूता।

संप्रति प्रोक्टार (Proctor) नामधेयेन प्रथितयशसा ज्योतिर्व्विदा पञ्चदशवत्सरान्ते महाप्रलयो भविष्यतीति निर्द्धारितं। तत्कारणन्तु धूमकेतुसंघट्टः। १८८० खृष्टाब्दे यो धूमकेतुर्दृष्टोऽभूत् स पूर्व्वं १८४३ खृष्टाब्दे मनुष्यदृक्पथवर्त्ती बभूव। तस्य गतिस्वरूपं वेगप्रमाणादिकञ्च गणयित्वा प्रोक्टार-साहेबेन निर्द्धारितमिदं यत्, सहि धूमकेतुरितः परं पञ्चदशवत्सरान्ते प्रचण्डवेगेनागत्य सूर्य्यस्यान्तर्निपतिष्यति। ततस्तत्संघट्टमासाद्य तेजोराशेः सूर्य्यस्यातीव तेजोवृद्धिर्भविता। तेन चातिवर्द्धितेन तेजसा सर्व्वं सौरं जगत् युगपदेव दग्धं भविष्यतीति।

इदानीं भोः परलोककातराः! पञ्चदशवत्सरमात्रं कालं तूष्णीं भवत ; ततो न किमपि भवतामशान्तिकारणं स्थास्यति। भोः सन्ततिरक्षणकृतप्रयत्नाः! युष्माकं सन्तत्यभावजन्यदुःखं पञ्चदश-वत्सरस्थायिमात्रं, ततः परं सर्व्व एव भवत्तुल्यकक्षतामाप्स्यन्ति। अयि बाल्यवैधव्यव्यसनार्त्ते हिन्दुकुल-ललने! पञ्चदशवत्सरमात्रं प्रतीक्षस्व, तेनैव प्रज्वलितशोकाग्निना युष्मदीयः सर्वाङ्गान्तरीण-तापो निःशेषमेव शमिष्यति।

अस्माकं मते जनो यदा बन्धुबान्धवादीन् धनरत्नानि च विहायैक एव म्रियते, तदैव मृत्युयातनामात्रं सन्तापयति। किन्तु यदि सर्व्वेषामेव स्वजनानां विपन्नानां धनादीनाञ्च युगपदेव नाशो भवेत् तदा मरणमेव सुखमुत्पादयति। यथा सर्व्वं स्वजना-दिकं विहायैकस्य परलोकगमने क्लेशो भवति, सर्व्वेषामात्मीयानां नाशे कस्यचिदेकस्यावस्थाने तथैव क्लेशः, सर्व्वेषां युगपन्नाशे तु सुखमेव जायते दुःखभोगकर्त्तुर्विरहात्।

परमेतदपि नावगन्तव्यं यदितः पञ्चदशवत्सरान्ते निश्चित-मेव धूमकेतुसंघट्टेन सौरजगतः क्षयो भविष्यतीति, नास्त्यस्मा-कं स्तोकोऽपि विश्वासः। येन विचित्रवीर्य्यशालिना सर्व्व-शक्तिमता सृष्टमिदं विचित्रं विश्वं, स कदापि नैवमुदासीनो भवि-ष्यति यदेकदैव सर्व्वस्य नाशं सहिष्यते। इत्यलं।

---

## वर्णविवेकः।

(पूर्व्वप्रकाशितानन्तरम्।)

इत्थं विवाहभेदं तत्तद्भेदानां स्वरूपञ्चोक्ता तन्नियमं कथयति

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृता।
ते च स्वा चैव राज्ञश्च, ताश्च स्वा चाग्रजन्मनः॥"

यदा कश्चिद्द्विजातिः पुत्त्रकामः पाणिग्रहणं कुर्य्यात्, तदा सवर्णामेव उद्वहेत्—यथा विप्रो विप्रकन्यां, क्षत्त्रियः क्षत्त्रकन्यां, वैश्यो वैश्यकन्यामिति। कामवशात् केवलमिन्द्रियसुखसाधनार्थं विवाहप्रवृत्तानान्तु तेषां हीनजातीयाभिश्च कन्याभिः सह विवाहो भवितुमर्हति; तत्र त्वयं विशेषः—कामतो विवाहप्रवृत्तानां ब्राह्मणानां असवर्णासु भार्य्यासु शूद्रापेक्षया वैश्यायाः श्रेष्ठत्वं, वैश्यातः क्षत्त्रियायाः; इत्थं कामतो विवाहप्रवृत्तस्य क्षत्त्रियस्यासवर्णासु भार्य्यासु वैश्यायाः श्रेष्ठत्वमित्यादि। इदानीं सिद्धान्तं कथयति शूद्रेति। कामतो धर्म्मतो वा विवाहप्रवृत्तस्य शूद्रस्य शूद्रैव भार्य्या भवति। स्वोत्कृष्टजातीयया कन्यया विवाहस्य शास्त्रतोऽसिद्धत्वात्, पुत्त्रकाम्यया विवाहप्रवृत्तस्य वैश्यस्य सजातीया भार्य्या विहिता, कामतः प्रवृत्तस्य तु तस्य शूद्रापीति, वैश्यस्य वैश्याशूद्रे द्वे भार्य्ये, एवं क्रमेण क्षत्त्रियस्य क्षत्त्रिया वैश्या शूद्रा चेति तिस्रः, विप्रस्य तु चतस्रो ब्राह्मणी, क्षत्त्रिया, वैश्या,

शूद्रा चेति। इति सामान्यतो विवाहनियममुक्त्वा विशेष-नियमं कथयति

"न ब्राह्मण-क्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥"

यदि च पूर्व्वोक्तस्थविर-वचन-बलेन, सामान्यतः सर्व्वेषामेव द्विजातीनां शूद्रा भार्य्याऽभिजायते किन्तु न स विधिः कदापि ब्राह्मणक्षत्रियाभ्यामनुसरणीय इति विशेषमभिधित्सुराह न ब्राह्मण-क्षत्रिययोरिति। धर्म्म-कामयोः कथा दूरे एतास्तु आपद्यपि वर्त्तमानयोरवश्यम्भावि-मृत्युकवलप्रवेशयोः ब्राह्मण-क्षत्रिययोः शूद्रापरिणये जीवनरक्षासम्भवेऽपि न तस्याः पाणिग्रहणं कार्य्यं,यतो द्विजातयो ब्राह्मण-क्षत्रिय-जातयो मोहादत्यन्तकामवेगादिप्रभवादविवेकात् हीनजातीयानामतीवगर्हिताचारव्यवहाराणां शूद्राणां स्त्रियं कन्यां उद्वहन्तः ससन्तानानि तत्तद्भार्य्यासु स्वोत्पादित-पुत्रादिदूषितानि कुलान्याशु स्वल्पेनैव कालेन शूद्रतां नयन्ति।

आर्य्यर्षिभि र्हीनजातीयपुरुषाणां यदुच्चजातीयस्त्रीभिः सार्द्धं विवाहो निषिद्धस्तत्रैतदेव कारणं यज्जातीयगतगुण-दोषा हि तत्तज्जातीयेषु पुंस्त्वाधिक्येन वर्त्तन्ते। यथा यथा जातीनां हीनत्वं भवति तथा तथैव तासां स्वभावतारतम्यमौद्धत्या-विमृश्यकारित्वादि-दोषबाहुल्यञ्च जायते। तत् कथं स्वभावादेव

मुग्धाभि र्निर्दोषाभि स्तेजस्विनीभिरुच्चजातीयाभिः स्त्रीभि-स्तेषां विवाहबन्धनं सम्भवेत्। तादृशः समागमः केवलं दुःख-हेतुरित्यत्र ययाति-देवयान्यादिवृत्तानि सन्ति बह्वन्युदाहर-णानि। सर्व्वत्रैव स्त्रीस्वभावस्य प्रायश ऐकरूप्यात् कामतः प्रवृत्त-स्योच्चजातीयस्य पुरुषस्य हीनजातीयया स्त्रिया सह निहितेऽपि विवाहे तात्कालिकानां शूद्राणामतीवानार्य्याचारव्यवहारदर्शनात् तज्जातीयया स्त्रिया सहोत्तमवर्णयोः ब्राह्मणक्षत्रिययो र्विवाहः सर्व्वथैव निषिद्धः, तत्कारणन्तु जनन्येकैव सन्तानानां बाल्ये शिक्ष-यित्री, तेषां रुचिस्वरुचि व्यवहार इत्यादिकं सर्व्वं प्रायो मातृ-शिक्षानुरूपं भवति। मातुः शूद्रधर्मत्वे तेषामपि समुत्पत्स्यमान-शूद्रधर्मं प्रति को नाम बुद्धिमान् सन्देहं कुर्य्यात्। अंग्रेज-देशी-याधमजातीयस्त्रीसंसर्गात्पन्नान्यपत्यान्यत्रोदाहरणानि।

पूर्व्वं योऽष्टविधो विवाहः कथितस्तत्र कीदृग्विवाहे कस्याधि-कार इत्याशङ्कायामाह

"षड़ानुपूर्व्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्।

विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्॥"

राक्षसपैशाचौ विहाय षट्प्रकारा विवाहा विप्रस्य धर्म्याः,क्षत्रस्यासुर-गान्धर्व्व-राक्षस-पैशाचा इति चत्वारः क्षत्रस्यानुमताः, वैश्यशूद्रयोस्तु प्राजापत्यासुरगान्धर्व्वपैशाचा इति चत्वारो धर्म्मानुगतविवाहाः। एवं विवाहविभागोऽपि तत्तज्जातीयस्वभावानुसारेणैव कृत इतिध्येयं।

इति वर्णविवेके विवाहविभागो नाम प्रथमोऽध्यायः।

## शिक्षा-रीति-जिज्ञासु-सभा।

इतिहास-परम्परा-समालोचनेन ज्ञायते हि भारताभिधेयं वर्षमिदं विद्यायाः प्रथमोत्पत्तिस्थानं। अन्धतमसा संवृते हि जगति अस्मिन् प्रथमं ज्ञानालोकस्य प्रकाशोऽभवत्। ऋग्वेदस्य सदृशं प्राचीनतमं पुस्तकं नाद्यापि मानवदृग्गोचरं गतम्। अत्रार्य्याणां प्रथमोदयादारभ्य यवनाक्रमणपर्य्यन्तं भारते सदैव विद्यायाः संवर्द्धनं जातं। ततः आर्य्यविरुद्धवृत्तीनां यवनानां संसर्गेण विलुप्तप्राया मार्य्य विद्या, भारतमिदञ्च मूर्खसङ्कुलं सञ्जातम्। ततः परमकरुणालय-परमेश्वरस्य कृपया भारतीयानां पूर्व्वकृतसुकृति-प्रभावेण चायत्तीकृतमिदं भारतराज्यं सभ्यतादिगुणवद्भिरिङ्गलण्ड-भूमिवासिभिः। एते हि सुकौशलोपयोग-द्विगुणित-भुजबलेन भारतभूमिमधिकृत्यैव विद्यायाः प्रचारे समुद्यता जाताः। एतेषां प्रसादेन यवनानीतिप्रवृत्तं घोरमज्ञानान्धतमः क्रमेण दूरं प्रयाति; अपयान्ति च तत्सहचरा अविवेक-मोहानृतादि-दोषनिचयाः। सम्प्रति भारते प्रतिदिनमेव कृतविद्यानां संख्या संवर्द्धते, बहवश्च तेषां सुकवि-सदाचारादिसद्गुणसम्पन्नाः स्वदेशोन्नमनकृतप्रयत्नाः सदैव शुभमनुतिष्ठन्ति।

न केवलमेतावन्मात्रं इङ्गलण्डीय-राजपुरुषाणामनुग्रहेण देशेषु देशेषु विविधा विद्यालया महाविद्यालया विश्वविद्यालयाश्च प्रतिष्ठिता विलसन्तितराम्। इदानीं विरल एव तादृशो ग्रामो

यत्र नैकोऽपि राजकीयः प्राप्तसाहाय्योऽप्राप्तसाहाय्यो वा विद्यालयो वर्त्तते। विद्यालोकमन्तरेण मनुष्यजीवनमतीव दुःखो-त्तरं सर्व्वदैव भारभूतं प्रतीयत इत्यभिज्ञा बहूनां चेतसि समु-दिता। पूर्व्वं भारते विद्याया बहुलप्रचारार्थं लर्ड-मेकले-नामधेयेन कतिचिन्नियमाः प्रवर्त्तिताः। तैरेव मूलीभूतै-र्नियमैरद्यावधि शिक्षाविभागस्य कार्य्यजातमनुष्ठितं भवति। सम्प्रति हि तन्नियमानुसरणेन कीदृशं फलमधिगतं, कथं वा ते नियमा ईप्सितप्रदा इत्यादि विषयविज्ञानार्थं एडुकेशन-कमिशन्-नाम्नी काचित् सभा प्रधानतम-राजपुरुषेण संस्थापिता। प्रसिद्धनाम्ना डक्टर हण्टराभिधेयेन तत्र सभापतिपदमलङ्कृतं। अपरे च भारतीय-वर्त्तमान-शिक्षावस्थाभिज्ञा बहवो यूरोपीया विविधभारतजनपदवासिनश्च सभ्यपदवीमलङ्कुर्व्वन्ति।

तस्याः सभाया अग्रतः शिक्षाकार्य्यतत्त्वकथनार्थं पृथक् पृथक् प्रदेशेभ्योविविधसम्प्रदायाग्रसराः शिक्षाविभागोन्नतिपदमारूढाश्च कति विद्वांसः साक्षित्वेन निर्व्वाचिताः। तेषां च परीक्षणार्थं सप्तति प्रश्ना निर्म्मिताः। येषां स्वरूपमग्रे यथाक्रमं लिख्यते।

## प्रश्नाः।

१। भारत-प्रचलित-विद्याशिक्षाविषये स्वमत-प्रकाशनार्थं भवता कथं योग्यतार्ज्जिता? कुत्र च प्रदेशे तादृक् योग्यतार्ज्जनं जातम्?

२। कच्चिद्भवदधिष्ठितप्रदेशे प्राथमिकशिक्षापद्धतिः सुदृढ़मूला वर्त्तते ? तथा किमस्ति सा तत्रत्यानामभीप्सितफलोत्पादनक्षमोन्नयनयोग्या ? किमिदानीं शिक्षाकार्य्यनियमेषु शिक्षितव्यपुस्तकेषु च कानिचिदुन्नतिविधायकानि परिवर्त्तनानि भवद्भिरिष्टानि सन्ति ?

३। भवदधिष्ठितप्रदेशे किं सर्व्वाभिरेव प्रजाभिः प्राथमिकशिक्षाभिलष्यते उत तासां श्रेणिविशेषैः। सन्ति किं तत्र एवंविधा जना ये न तादृशीं शिक्षां कामयन्ते ? सन्ति चेत् कथं ? तादृशशिक्षाबहिष्कृता अपि किं केचित् सम्प्रदायविशेषा वर्त्तन्ते ? वर्त्तन्ते चेत् किन्तत्र कारणानि ? तत्रत्यसमाजधुरन्धराणां स्वसमाजान्तर्वर्त्तिषु जनेष्वावश्यककार्य्यनिर्व्वाहक्षमशिक्षाप्रचारार्थं कीदृक् प्रयत्नो वर्त्तते ?

४। भवदीयप्रदेशे देशीयविद्यालयानां विस्तृतिः कीदृक् ? तेषु च विद्यालयेषु प्राच्यप्राचीनशिक्षापद्धतेः कियदवशिष्टं चिह्नं ? तत्रत्यशिक्षायाः स्वरूपं विषयांश्च कथयितुमस्ति कच्चित् भवतः सामर्थ्यं ? कीदृशी च तत्र विनयन-रीतिः ? गृह्यते कच्चित् तत्र छात्रेभ्यः किमप्यध्यापनमूल्यं ? तेषां विद्यालयानां शिक्षकाः किंजातीया भवन्ति ? तेषां गुणवत्ता च कीदृशी ? तद्विद्यालयशिक्षकान् विनेतुं किमवलम्बितः कश्चिन्नूतनो नियमः ? किंविधायां पद्धतावबलम्बितायां भवन्मते देशीय-विद्यालया जातीयशिक्षामुपकर्त्तुं समर्था भवेयुः ? किं देशीय-विद्याल-

यानां शिक्षका राजकीयसाहाय्यमादातुं तत्साहाय्यग्रहणावश्यक-नियमांस्तानुगन्तुमभिलषन्ति ? देशीयविद्यालयेषु राजकीयसाहाय्य-दानस्य कियान् प्रचारो वर्त्तते ? कथं वा तदाधिक्यं भवितुमर्हति ?

५। विद्यालय-प्रवेशमन्तरेण गृहशिक्षाया विस्तारे तस्याः उपकारित्व-विषये च भवतः कीदृगस्ति सम्मतिः ? कश्चिद् गृह-शिक्षिता बाला राजकीय-कार्य्यसम्पादनयोग्यता-परीक्षणे विद्या-लयशिक्षितानां बालानां समकक्षतामाप्तुमर्हन्ति ?

६। कर्षकादीतरजनबहुलेषु जनपदेषु प्रजानां स्वस्वाव-श्यक-कार्य्य निर्व्वाहक्षम-शिक्षाप्रचारार्थं प्राप्ताप्राप्तराजसाहाय्यस्य तासामुद्यमस्योपरि भारतराजपुरुषाणां कियदालम्बनं कर्त्तव्यं ? प्राथमिकशिक्षामुन्नमयितुं भवत्प्रदेशे कति स्वाधीन-साधनानि सन्तीति गणयितुं किं समर्थो भवान् ?

७। ग्राम्यजनबहुलेषु जनपदेषु जानपदपरिषद्भिः स्थानीय सदोभिश्च प्राथमिकशिक्षा-प्रयोजननिर्व्वाहार्थं निर्द्धारितं धनं कथं सम्यक् फलवत्तया व्ययितं भवेत् ? तत्तत्सभानाञ्च तत्त-द्विद्यालयानामुपरि कियती प्रभुता भवितुमर्हति ?

८। किंविधस्य विद्यालयस्य पोषणादि-भारो म्युनि-सिपल-सभाया हस्ते न्यस्तव्यः ? क्षुद्रनगरस्थ-विद्यालयनिचये तत्तत्स्थानीय-म्युनिसिपल-सभानां शासनान्तर्निवेशिते यदि सभा-सदो निर्द्धारितधनदानेऽसमर्था भवेयुस्तदा तावत्परिमित-धन-लाभार्थं कश्चिच्चिन्त्यते भवद्भिः कोऽप्युपायः ?

८। प्राथमिक-विद्यालयेषु शिक्षकनियोजनस्य या रीति-र्वर्त्तते तस्याः किमपि परिवर्त्तनादिकं किं भवदभिमतमस्ति? ग्राम्यविद्यालय-शिक्षकाणां सामाजिकावस्था कीदृशी? ते ग्रामस्थान् कथमप्युपकर्त्तुं समर्थाः किं? अस्ति कश्चिदेवमुपायो येन विनापि वेतनवृद्धिं ग्राममध्ये तेषां सम्मानवृद्धि र्भवेत्?

[ क्रमशः। ]



## प्राप्तपत्रम्।

### समस्यापूर्त्तिः।

(१)

पूर्व्वं पितुर्निवसतौ सुदती स्वसख्या
पृष्टेष्टसद्मनववाससुखं लपन्ती।
वीणेव या मम मनः सहसा जहार
तामिन्दुसुन्दरमुखीं सततं स्मरामि॥

(२)

भूषावितानपरिशोभितहस्तशोभा
या दिद्युते निटलरत्ननिभा धरायाः ।
ज्योत्स्नावितानजड़िता शशभृत्कलेव
तामिन्दुसुन्दरमुखीमित्यादि ॥

(३)

मल्लीस्रजावलितचारुशिरोजबन्धा
हस्तस्थितस्थलसरोजविभूषिता च ।
दत्तोपदेव वयसा मदनाय मुग्धा
तामिन्दुसुन्दरमुखीमित्यादि ॥

(४)

सौन्दर्य्यनिर्ज्जितसमस्तजगत्पदार्था
छायेन्दुकुन्दकुमुदेषु विभाति यस्याः ।
केशैः कदर्थितकलापिकलापशोभां
तामिन्दुसुन्दरमुखीमित्यादि ।

(५)

ईषद्विकासिकुचकुड्मलसन्नताङ्गी
या राजते स्म नलिनीव सिताब्जदृष्टी ।
लोलाक्षिभिः कवलिताखिलमर्त्त्यधैर्य्या
तामिन्दुसुन्दरमुखीमित्यादि ॥

(६)

पीयूषरश्मिकरसारविनिर्म्मिताङ्गी
नीलोत्पलच्छदविनिन्दिविलोलनेत्रा ।
द्वेधाकृतस्मरशरासनसन्निभभ्रूः
तामिन्दुसुन्दरमुखीमित्यादि ॥

(७)

संसारसागरमणी रमणी मनोज्ञा
या पूर्व्वपुण्यविभवैरपि कष्टलभ्या ।
लोकत्रयस्य जयदस्त्रमनङ्गभर्त्तुः
तामिन्दुसुन्दरमुखीमित्यादि ॥

—

श्रीं Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भैः-लोकवृत्तानुशीलनैः ।
विद्योदयोनिराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डः ११ ] मार्च्च १८८२ [ ३ सङ्ख्या

सूची



लाहोरे

एल्बर्ट नामके यन्त्रे लालादित्तराम्राय नामधेयेन मुद्रितः

दि विषयं वा अन्यथा वाक्यभेदे गौरव । तत्स्वीकारेऽपि आनेन वचनेन क्षेत्रजदत्तकादीनां सत्यौरसे स्वोचितांशो निषिध्यते किन्त्वौरस सत्वे तेषां अभिषेकं निषिद्धौरसस्य राज्येऽभिषेको विधीयते । तथा च, क्षेत्रजदत्तकादयः सामान्यशास्त्र-प्राप्तमंशं लभन्त एव तत्सङ्कोचाऽभावात् । न चैतदेव वचनं बाधकं भिन्नविषयत्वात् । अत एव "भागार्हास्तनया इमे" इत्यनेन पूर्व्ववचने भागार्हत्वं स्पष्टोक्तं । "राज्यातिरिक्तस्य भाग" इति न भण्यते वक्तु राज्यस्यैव तत्रोपस्थित त्वात् । पौनर्भवादीनां तु पूर्वपूर्वाभावेपि राज्यनियोजनाभावः पृथगभिधान-सामर्थ्यात् ।

किसी ने आशंका की कि यद्यपि क्षेत्रज और दत्तकादि का सामान्य धन में अधिकार होता है तथापि राज्य में अधिकार नहीं है, जैसे औरस, क्षेत्रज, दत्तक, कृत्रिम, गूढोत्पन्न और अपविद्ध ये सब पुत्र धनभागी होते हैं और कानीन, सहोढ क्रीत, पौनर्भव स्वयंदत्त और दास ये निन्दनीय पुत्र हैं और इनमें से पूर्व २ के अभाव होने पर दूसरे को राज्य में अभिषिक्त करना चाहिये और पौनर्भव, स्वयंदत्त और दास इनको राज्य में अभिषिक्त नहीं करना । और यहभी कहा है कि क्षेत्रजादि पुत्र को राजा कभी राज्य में अभिषिक्त न करे । औरस पुत्र ही पितरोंके राज्य में अधिकारी होता । इस विषय में यह कहा जाता है कि जब शास्त्रान्तर इष्ट होता है तब विशेष शास्त्रको

सामान्य रूपसे निर्देश करना अच्छा होता है क्योंकि इसमें ला-
घव है । इसलिये पूर्व २ के अभाव में पर २ का अधिकार बो-
धक जो वाक्य है वह पूर्वोक्त शारदादि के वचन के साथ एक
वाक्यता लाभ करता है, इसलिये उससे समग्र राज्य में क्षेत्रजादि
का अधिकार विदित होता है और परवचन से औरस पुत्र रह-
ने पर क्षेत्रजादि के समानांश निषेध करते हैं या असवर्ण क्षेत्र-
जविषयक यह वचन है ऐसा न होता तो बड़ा गौरव होता ।
यदि ऐसा भी होय तो इस वचन से क्षेत्रज दत्तकादि को भी औरस
पुत्र रहने पर अपने २ उचित अंशप्राप्ति का निषेध नहीं किन्तु
औरस पुत्र रहने पर उनके राज्याभिषेक का निषेध करके औरस
पुत्र के राज्याभिषेक का विधान होता है किन्तु क्षेत्रजदत्तादि
सामान्य शास्त्रप्राप्त अंश लाभ करेगा इसमें कोई संकोचकविधि नहीं
है । और "भागार्हास्तनया इमे" इस पूर्व वचन से उनका भागा-
र्हत्व स्पष्ट कथित हुआ है इसको तुम राज्यातिरिक्त भाग भी नहीं
कह सके क्योंकि यहां राज्य का ही उल्लेख किया गया है और
पौनर्भवादि का पूर्व पूर्व के अभाव पर भी राज्य में नियोग न
करना सिद्ध हुआ क्योंकि उनको पृथक् करके कहा है ।

एतावता प्रबन्धेनाभिहितोऽयं क्षेत्रजदत्तकादीनामौरसेन
सह विभागः प्रकारः सतु शूद्रस्य न सम्भवति तस्य तु दास्यां वा
दास दास्यां वा यः शूद्रस्य सुतो भवेत् । सोऽनुज्ञातो हरेदंशमिति

धर्म्मो व्यवस्थित इति मनुवचनेन जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्। अभ्रातृकोहरेत् सर्वं दुहितॄणां सुतादृते इति याज्ञवल्कीयेन च दासी पुत्रस्याप्यौरसेन समांशाभिधानेन पितुरनन्तरं भ्रातृरहितस्य तस्यैव दौहित्रेण सह विभाग दर्शनेन च दत्तकापूपायितः सति पितरि क्षेत्रज दत्तकादीनामौरसेन समांशः असति तु तदर्द्धांशः। अन्यथा यत्र च क्षेत्रजदत्तकादीनामौरस चतुर्थांशित्वं तत्र तदपेक्षया चात्यन्त विप्रकृष्टस्य दासीपुत्रस्यौरस समांशित्व मिति महद्वैषम्यं स्यात्; एवं खलु क्षेत्रजादिषु सत्स्वेव पत्नीकन्ययोर्दौहित्राधिकारेऽकृताधिकार विधिवाधापत्तिः। तेन दौहित्र पर्य्यन्ताधिकारि शृङ्खलायां तदेकतमे सत्यपि न दासीपुत्रस्य सर्वहरत्वं किन्तु तत् समांशः।

इस प्रबन्ध में औरस के साथ क्षेत्रज और दत्तकादि का जो विभागप्रकार कहा गया है वह शूद्र का नहीं होसक्ता क्यों कि मनुने कहा है कि दासी में वा दास की दासी में जो शूद्र का पुत्र होता है वह अनुज्ञा से ही अंश को प्राप्त होता है ऐसा धर्म्म है इस मनुवचन से और दासी के गर्भ में उत्पन्न शूद्र पिताकी इच्छामें अंशभागी होता है, और पिता की मृत्यु के पीछे भ्रातृगण उसे अपने अर्द्धांश भागी अर्थात् तृतीयांश भागी करें और यदि उसका कोई भ्राता न रहे तो

दासीके पुत्रका सारे धनका अधिकार होता और यदि दुहिता के पुत्र रहे तो उस की सब धन में अधिकार नहीं होता किन्तु अंश मिलता है। इस याज्ञवल्क्य के वचन से भी दासी पुत्र को औरस के साथ अंशका कथन होने से और यदि उस्का कोई भाई नहो तो दौहित्र के साथ उस्का विभाग दिखलाने से दण्डा* पूप न्याय से यह बात सिद्ध हुई कि यदि पिता रहे तो क्षेत्रज और दत्तकादि का औरस के साथ समांश होगा और पिता न रहे तो तृतीयांश ; और भी, जिस्के मतमें क्षेत्रज और दत्तकादि को औरस का चतुर्थांश मिलता है उस मत के अनुसार उस से अतिशय दूरसम्बन्धी दासी पुत्रको समांश मिलने की विधि बहुत अनुचित होगी और जहां क्षेत्रजादि पुत्र रहे और पत्नी और कन्याभी रहे वहां दौहित्र के अधिकार में जो विधि निर्दिष्ट हुई है उस्का बाद हो जायगा इसकारण जहां दौहित्र पर्य्यन्त अधिकारी शृंखला है वहां उन्में से किसी एक के रहने पर भी दासी पुत्र का सर्व अधिकार नहीं किन्तु आंशिक है।

* यदि किसी एक स्थान में दण्ड और आपूप अर्थात् पूआ रहेतो उन्में से यदि मूषिक दण्ड को खा ले तो आपूप को पहले खाना सहज से ही अनुमित होता है। इस अनुमान को दण्डापूप न्याय कहते हैं।

अत एव दत्तपुत्रे यथा जाते कदाचित्त्वौरसोभवेत् । पितुरिक्थास्य सर्वस्य भवेतां समभागिनौ इत्यपि वचनं शूद्रविषय एव योजनीयम् । तथा शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते । तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् इत्यत्र वचने शूद्राणां भार्य्योत्पन्नानां सर्वेषां समांशमभिधाय पुनर्यदि पुत्रशत मित्यनेन पुत्रान्तराणामपि समांशता प्रतिपादिता । औरस मात्र परत्वे पूर्वेणैव तत् प्राप्तया पुनरेव तदभिधानं व्यर्थं स्यात् ।

इसी कारणसेही दत्तपुत्र रहने पर यदि औरस पुत्र उत्पन्न हो तो वह दत्तक और औरस, पिता के समुदय धन के समांश भागी होते हैं इस वचन को शूद्र विषयक ही समझना क्योंकि यह वचन है कि शूद्र को सवर्ण में से ही भार्य्या होती है और अन्य वर्ण से नहीं ; और शूद्र की भार्य्या में उत्पन्न हुए पुत्र समांशभागी होते हैं चाहे सौ पुत्र हो इसवचन में शूद्र की भार्य्या में उत्पन्न समुदय पुत्र को समांशभागी कह कर फिर जो कहा कि चाहे सौ पुत्र होवे इस्से और प्रकार के पुत्रों का भी समांशभागित्व सिद्ध होता है क्योंकि यदि केवल औरस पुत्रको समांश प्राप्ति इस वचनका तात्पर्य्य होता तो चाहे सौ पुत्र हो इतना कहना व्यर्थ होता और शूद्र की भार्य्या में उत्पन्न हुए को समांश मिलता है इतनामात्र कथन ही युक्त होता ।

दत्तमुपायण दत्तकस्य तु जनक प्रतिग्रहीत्रो रुभयोर पुत्रत्वे

सर्वरिक्थहरत्वं सत्यौरसे गृहीतस्य तु नांशहरत्वं ग्रहणानन्तर-मौरसोत्पत्तौ तु जनकधने तदौरसार्द्धहरत्वञ्चेति । यदाह प्रवरा-ध्यायः । यद्येषां कासु भार्य्यासु अपत्यं न स्यात् तदा रिक्थं हरेयुरिति तथा । नारदः द्व्यामुष्यायणका दद्यु द्वाभ्यां पिण्डोदके पृथक् । रिक्थादर्द्धांश मादद्यु र्बीजिक्षेत्रिकयोस्तथेति । बीजिक्षेत्रि-कपदयो र्जनक प्रति ग्रहीत्रुभयोरुपलक्षकत्वं प्रागेवाभिहितम् ।

अथान्य पङ्गु प्रभृति पुत्राणां धनाधिकारितया तदौरस क्षेत्रजयो रेव पितामहधनभागित्व-श्रुते र्न तद्गृहीत दत्तक पुत्रादेः पितामहधनाधिकारः किन्तुभरणमात्रं अन्याहि भार्य्याणां भरण विधानेन तद्भरणस्य दृष्टादृष्टार्थतत्वात् । तथाहि अन्य पङ्गु दीननधिकारि पुत्रानभिधायाह । औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः । अपुत्रायोषितश्चैषां भर्त्तव्याः साधुवृत्तयः । सुताश्चैषां प्रभर्त्तव्या यावद्व भर्त्तृसात् कृता इति । एवं ग्रहणान्तरमुत्पन्नौर-सेन सह दत्तकस्य विभागदर्शनात् सत्यौरसे गृहीतस्यापि नांश-भागित्वमित्याह । तस्मिन् जाते सुते दत्ते न कृते च विधानके । तत् स्वं तस्यैव वित्तस्य यः स्वामी पितुरप्यसौ । तथामनुः अविधाय विधानं यः परिगृह्णाति पुत्रकं । विवाह विधिभागं तं न कुर्य्यात् धनभाजन मिति । अन्य जातीय दत्तकस्यापि नांशभागित्व मि-त्याह यदि स्यादन्य जातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्य्यात् शौनकस्य मतं हि तत् ।

॥ इत्युक्त प्रायश्चित्यास्तां विस्तरः ॥

द्व्यामुष्यायण दत्तकका यह नियम है कि यदि उत्पादक और लेनेवाला पिता अपुत्र अर्थात् उस पुत्र को छोड़ कर उनका कोई और पुत्र न हो तो द्व्यामुष्यायण का सर्व धनाधिकारित्व होता है। यदि लेनेवाले का औरस पुत्र हो तो उसको अंश नहीं मिलता किन्तु ग्रासाच्छादन मात्रही मिलता और यदि लेनेके पीछे उत्पादक और लेनेवाले में से किसी के औरस पुत्र उत्पन्न हो तो उत्पादक पिता के धन में उस्के औरस का तृतीयांश उस-द्व्यामुष्यायण को मिलता है और लेनेवाले के धन में शास्त्र के अनु-सार जैसा अंश साधारण दत्तक को मिलता है, उस्का तृतीयांश उसे मिलेगा जैसा कि प्रवराध्याय में कहा है कि, यदि अपनी भार्या में अपत्य न रहे तब ही दत्तकादि धनभागी होते हैं, नारद ने भी कहा है कि द्व्यामुष्यायण पुत्र उत्पादक और लेनेवाला इन-दोनों को पृथक् २ पिण्ड और पानी देवे और उत्पादक और ले-नेवाले के धन से अर्द्धांश लेवे। अन्ध और पंगु प्रभृति का धन में अधिकार नहीं किन्तु उनके औरस तथा क्षेत्रजों का पितामह धन में अधिकार है। इस स्मृति से अंध और पंगु आदिकरके गृहीत दत्तकादियों का पितामह धनमें अधिकार नहीं ऐसा सिद्ध होता है किन्तु अन्धादिकी भार्या के लिये ग्रासाच्छादन के विधान से उनके दत्तकादि का भी केवल ग्रासाच्छादन का विधान दण्डापूप

मे सिद्ध होता है और अन्धपंगु प्रभृति अनधिकारि पुत्रोंका नाम लेकर जो यह वचन कहा है कि इनके निर्दोष औरस और क्षेत्रज अंशभागी होते हैं और उनकी जो भार्या साधुवृत्त हो उनको ग्रासाच्छादन मिलता है तथा उनको कन्याओं को भी उनके विवाह के पहले ग्रासच्छादन मिलता है। अब देखो लेनेके पीछे औरस पुत्र के साथ दत्तक के विभाग दर्शित होनेपर, औरस के रहने पर गृहीत पुत्रका अंशभागित्व नहीं होता। पूर्व्वोक्त वशिष्ठ और शौनकादि के वचन से जो विधान किया गया है उस व्यवस्था से विना गृहीत हुए दत्तक का भी अंशभागित्व नहीं सिद्ध होता। मनुने भी कहा है कि जो विधान से विना दत्तक लेवे उस दत्तक को धनभागी न करे किन्तु उसके विवाह में जो व्यय होगा वही मिलेगा। अन्यजातीय दत्तक को भी शौनक के मत से अंश नहीं मिलता ॥

संघः स्मृतीनां श्रुतिभिः समेतः सुमृती मुदा नृत्यति यस्य नित्यम्।
शास्त्राणि चान्यानि सुहृत् समानि यत् कण्ठ मालिङ्ग्य सुखं वसन्ति ॥
वशिष्ठ वंश प्रभवो द्विजन्मा शिष्टाध्वसेवी विदुषां विनेता ।
श्रीभट्टपल्ली वसतिः स्थितिज्ञो जयत्यसौ श्रीमधुसूदनाह्वः ॥
तत् सूनुना तच्चरणं विचिन्त्य शाकेऽग्निखेभक्षितिमितपक्षे ।
अनूदिता दत्तक चन्द्रिकेयं सतां मुदे सम्प्रति भाषयाऽस्तु ॥

इति हृषीकेश शास्त्रिप्रणीता भाषा-दत्तक-चन्द्रिका समाप्ता ।

॥ मेघदूतक्षेपकम् ॥

पिष्टान्यन्यान्यखिल कुसुमान्युज्वलत्वं त्यजन्ति
प्रायोगंधं जहति दधते भूषणा ऽयोग्यतां च ।
एतत्पिष्टं मुहुरपि चिराराष्टिपोपोष्टि गन्धं
मुख्या भूषा भवति च मनोहारि सङ्कोचपुष्पम् ॥ २३ ॥

त्वत्सभूतानवमणिगण प्रोतमालाभि रामा
नृत्यन्दिव्या अकथत मुदा दृष्टकाश्मीरशोभाः
लुषन् माला गलितमणिभि र्भूषितोयत्र देशो
यस्मिन्निस्थं घुसृण पटलंवीक्ष्य नोत्प्रेक्षते कः ॥ २४ ॥

स्निग्धा स्वर्थासरसमधुराश्रोतलापित्तजूर्ति
श्वासप्रोयाफलततिरिदं दधतः सत्कवीनाम् ।
यत्कल्यानांसुवचन सुधां किं निनीषन्ति नाकं
दृष्ट्वावल्लरः पयधरतनूचुम्बित्रत्राययाताः ॥ २५ ।

यत्र श्रीमन् शिशिरविगमे नूतनं नूतरूपं
यातामानां सुमसमुदयं फुल्लमुल्लासिताशम् ।
आगामिश्रीसुरभिपरमानन्द भूहास्य देश्यं
सान्द्रामोदाहृतमधुकरं द्रक्ष्यसि स्फोतरेणुम् ॥ २६ ॥

---

सुरभिपामुख्या श्रेष्ठा च ॥ २३ ॥ ॥ २४ ॥

दृष्ट्वंभत इत्येकं पदं । अस्याः फलततिः कैतवात् ॥ २५ ॥

नूतंस्तुतं रूपं यस्य सः तं ॥ २६ ॥

यस्य स्वच्छं सुजनमतिवत्पावनं शीतमम्भः
पायं पायं वहुदस्तुहिते प्राणिवर्गोऽपि तृप्तिं ।
प्रसं वर्ही पिवति सलिलं केवलं स त्वयैव
लातुम्मानी जठर मितरं कोनभेदो महान्तम् ॥ ४१ ॥
अन्तस्तोयं प्रतिकृति मवेक्ष्यापि हंसः प्रियायाः
पद्मस्थायाः प्रणय विवशोमज्जनं शङ्कमानः ।
यस्मिन्वरोमस्सपदि पतितः शोकतोऽस्तनहासो
माभूदेवं व्यसनगरिमा हन्त कस्यापि सौम्य ॥ ४२ ॥
लीलाभङ्गाद्रुतमकृत यन्मल्लिकाच्चायताच्चो
भाव्यं यस्मिन् कलम कृतवन्मन्थरं सञ्चरन्तो ।
तस्याभ्यासं वकसहचरी कल्पकोट्यापि कर्त्तुं
किञ्चिन्मात्रं घन वद कथं शक्नुयात् पुण्यकीर्त्तें ॥ ४३ ॥
भावान्नर्भं सपदि नलिनी यत्र भिन्नोपमूढा
प्रातस्तूते मलिनतनयान् चञ्चरीकस्वरूपान् ।
युक्तं चैषां भ्रमन यमुना कालकूटं तु कार्ष्णं
स्यन्तु स्वानैः कथय पथिकान् वारिदामो कथं नो ॥ ४४ ॥

(प्रातपत्रम्)

(पत्रमिदं कर्पूरस्थलवासि पण्डितवरश्रीरामनाथ महो-

---

कहुदेति संवाधन कृतवोऽन्यो नोचस्व ॥ ४१ ॥

प्रदिदिवस्थंपतो कोरोलं श्रीमधुसूदन इति धररिः ॥ ४४ ॥

द्वैन लवपुर संस्कृतशाला-प्रधानाध्यापक पण्डित श्रीलक्ष्मीमुक्ता-
गुरुप्रसाद महाशय समीपे प्रेषितं)

वेदान्त सिद्धान्त निशान्त पन्था

मध्यास्य योऽध्यक्ष पदं निवष्टे ।

चेतः समाधान विधान दक्षः

ख्यातिं एवध्येति च पुंचलाभ्योः ॥ १ ॥

यः पाणिनीयागम नैपुन्दर्शी

फणीन्द्र भाष्येपि कृत प्रयत्नः ।

भवत्प्रसादार्जित भाग्यपाणिः

स रामनाथो भवतोभि वन्दे ॥ २ ॥

भवादृशः प्राज्ञवरोपपत्त्यै

अहर्निशं साधु जनायतं ते ।

तेषां प्रयत्नस्य फलं भवद्भि

र्हेमन्तरेणेव पिपक्षयापि ॥ ३ ॥

किं तद्यशो यन्न हिमांशुकल्पं

किं तद्वचो यन्न विनीतरूपं ।

का सा क्रिया या न परोपकार्यै

सोपक्रिया का समुपाश्रिते या ॥ ४ ॥

ते जन्मिनो धर्म धुरंधरा ये

यथा जनन्या जनिता स्तदन्ये ।

ह्रीयमाना धरणिः कथं चित्
सदानुषंगादिव तान् बिभर्त्ति ॥ ५ ॥
यः शास्त्र चिन्तोपचित प्रबोधः
कुर्वीत कस्यापि हिताय नेहां ।
नूनं सविद्यानपि भारभूतः
जायेत दुःखाय न किं पृथिव्याः ॥ ६ ॥

॥ चित्र वार्त्ता ॥

वयं पूर्व्वं बहुषु भारतीयदेव-प्रतिमाङ्कितेषु चित्रफलकेष्व-र्धनराकृतीनां नागकन्यानां प्रतिमा अवलोक्य भारतीय कवीना-मद्भुतकल्पना शक्तिं प्रति विस्मिता अभूमः। सम्प्रति टाइमस् अफ-इण्डिया नामके पत्रे ऽर्धनराकृतीनां केषामपि मत्स्यानां वृत्तान्तो-ल्लिखितः। सम्प्रति तज्जातीय मत्स्यानामेको जेड्डा नामके देशे जीवितावस्थायामेव धृतोऽभवत्। एतस्य दैर्घ्यं षड्हस्त-परिमि-तं, तथा पूर्व्वकायं मनुष्यवत् मुखनासिकाद्यवयवशालि। पश्चार्द्ध-न्त्वस्य मत्स्यवत् केवलं पुच्छाकृति। न ज्ञायते कत्यपराणि विचित्र-वस्तूनि सन्त्यत्र विश्वमण्डले।

॥ पुस्तकप्राप्तिस्वीकारः ॥

वयमतीवानन्दितहृदयेन भारतहितैषीति नामधेयस्य कस्यापि हिन्दीसाप्ताहिक पत्रस्य प्राप्तिं स्वीकुर्म्मः। पत्रमिदं लव-पुरे ज्ञानयन्त्रे मुद्रितं भवति। एतत् सम्पादकः पण्डितश्रीहर-

मुकुन्दशास्त्रीत्यभिधः संस्कृतशास्त्रतत्त्वज्ञो हिन्दीभाषा-प्रचार वर्द्धनो-त्साही, भाषा प्रचारिणसभा कार्याध्यक्ष गुरुकुलवड़ीय विद्यालत प्रयत्नोऽस्मद् भूतपूर्व काल च कश्चिद्भूवा। एतस्यास्य न वयं सम्यक् समालोचका भवितुं अर्हामः। स्वजन सम्पादितत्वादस्यास्मिन्नस्माकं परमः स्नेहबन्धो येनेद मस्मदृष्टौ सर्वाङ्गपूर्णमिव लक्ष्यते ।

वयं सर्वात्मना एतस्यास्य सर्वथोन्नतिं कामयेमहि। परमेश्वरः कृपयैतत्सम्पादकं दीर्घायुषं विधाय तस्य हिन्दीप्रचार विषयकं प्रयत्नं सफलयत्वित्यास्तां विस्तरः ।

अक्षरारम्भः—पञ्चनद संस्कृत सभामन्त्रि पण्डित श्रीहेम-राजगोस्वामि विशारदेन निर्माय संस्कृत सभायै समर्पितः पुस्तक-मिदं प्रारम्भितशिक्षाणां बालानामक्षरपरिचयार्थं निर्मितमतो-ऽस्य बहुल समालोचन मनावश्यकं विशेषश्चैतदप्यस्मत्सभाधिनि-र्मितत्वादतीव प्रीतिप्रदम्। आशास्महे अपरेऽपि कृतिनोऽस्माद्वि-द्यार्थिन एवं गुणवत्ताप्रकटनेन स्वदेश मुपकुर्वन्तो लब्धप्रतिष्ठा भवन्त्विति।

—०—

श्रीं Registered No. 12

# विद्योदयः

(मासिक-संस्कृत-पत्रम्)

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकहृत्तानुशीलनः ।
विद्योदयो निराकुर्य्यादविद्यातिमिरम्भुवि ॥

खण्डं ११ ] फब्रुयारि १८८२ [ २ संख्या

सूची



लाहोरे

रिलाइं नामके यन्त्रे लालाहिरनाम्राय नामधेयेन मुद्रितः

याद और छ अदायादबंधु होते हैं। उनमें से पूर्व्व २ क्रमसे श्रेष्ठ होते हैं और पीछे कहे हुए अश्रेष्ठ हैं। और पिताके मृत्युके पीछे यथाक्रम पूर्व्व २ काही धनाधिकार होता है। और पूर्व्व २ के अभाव होनेपर उत्तर २ कहे हुए धनाधिकारी होते हैं विष्णु और याज्ञवल्क्यने भी ऐसी ही व्यवस्था की है।

मनुः। न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः तथा -श्रेयसः श्रेयसोऽभावे यवीयान्रिक्थ मर्हति। बहवश्चेत्तु सदृशाः सर्व्व रिक्थस्य भागिनः। सदृशा गुणेन औरसत्वक्षेत्रजत्वाद्युपाधिना वा। श्रेयस औरसादेः। यवीयान् न्यूनः क्षेत्रजादिरित्यर्थः। तथा औरसः क्षेत्रजौ पुत्रौ पितुरिक्थस्य भागिनौ। दशाऽपरेच क्रमशः पितुरिक्थांश भागिनः। दश दत्तकादयः।

मनु ने भी कहाहै कि भाई वा पिताआदि धनभागी नहीं होतेहैं किन्तु पुत्रही धन भागी होता है। और पुत्रों में से जिनका क्रम से श्रेष्ठत्व कहा गया वे ही क्रमसे धनभागी होतेहैं। और उनके अभाव पर पीछे कहे हुओंको क्रम से धन मिलताहै। यदि अनेक पुत्र गुण से वा क्षेत्रजत्वादि-धर्म्मसे समान होय तो उनको बराबर धनका अंश मिलताहै। और यह भी कहाहै कि औरस और क्षेत्रजपुत्र पिताके धनभागी होतेहैं और अपर दत्तकादि दश क्रमसे अंशभागी होते हैं।

हारीतः। स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो

गूढोत्पन्न श्चेति बन्धुदायादाः । दत्तः क्रीतोऽपविद्धः सहोढः स्वय मुपागतः सहसादृष्टश्चेत्यबन्धु दायादाः ।

हारीत ने भी कहा है कि औरस, क्षेत्रज, पौनर्भव, कानीन, पुत्रिकापुत्र, और गूढोत्पन्न, ये छः बन्धु दायाद होते हैं; दत्त, क्रीत, अपविद्ध, सहोढ, स्वयं उपागत, और सहसादृष्ट ये छः अबन्धु दायाद होते हैं ।

मनुः । पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः । तेषां षड् बन्धु दायादाः षडदायाद-बान्धवाः । औरसः, क्षेत्रज,श्चैव दत्तः कृत्रिम, एवच । गूढोत्पन्नो,ऽपविद्ध,श्च दायादा बान्धवास्तुषट्, कानीन,श्च सहोढ,श्च क्रीतः, पौनर्भव,स्तथा स्वयंदत्त, श्च शौद्र, श्च षडदायादबान्धवाः ।

मनु ने और भी कहा है कि औरस, क्षेत्रज, दत्त, कृत्रिम, गूढोत्पन्न, अपविद्ध ये छः दायादबन्धु और कानीन, सहोढ, क्रीत, पौनर्भव, स्वयंदत्त, और शौद्र, ये छः अदायाद बन्धु हैं ।

बौधायनः । औरसं, पुत्रिकापुत्रं, क्षेत्रजं, दत्त, कृत्रिमौ । गूढजं, चापविद्धञ्च,रिक्थभाजः प्रचक्षते । कानीनं च सहोढञ्च क्रीतं पौनर्भवं तथा । स्वयंदत्तं निषादञ्च गोत्रभाजः प्रचक्षते । एतञ्च कानीनादीनां गोत्रमात्र भागित्वकथनमौरसादीनां कस्याऽपिसम्भवे ऽप्याहरत्वप्रतिषेधार्थम् । सहोढ दत्तक क्रीत स्वयमुपागतापविद्ध शौद्रानभिधाय औरसादीन् पराम्रस्य पुनर्वशिष्ठः यस्य तु सर्वेषां

वर्णानां न कश्चिद्दायादः स्यात् एते तस्य भागं हरेयुः ।

बोधायन ने भी कहा है कि औरस, पुत्रिकापुत्र, क्षेत्रज, दत्त, कृत्रिम, गूढ और अपविद्ध इन्को धनभागी कहते हैं और कानीन सहोढ, क्रीत,, पौनर्भव, स्वयंदत्त और निषाद इन्को गोत्र, भागी कहते हैं ।

यहां जो कानीन आदिका केवल गोत्र भागी कहाहै इस से यहभी समझलेना चाहिये कि औरसादि में यथासम्भव किसीका अंश भागित्व नहीं होता । वशिष्ठने फिर भी सहोढ, दत्तक, क्रीत स्वयमुपागत, अपविद्ध और शौद्र इन्का नाम लेकर और औरस आदि पुत्रों को उद्देश करके यह कहा है कि, समुदाय वर्णों में जिसकादायाद नहीं होगा ये उस्का धन पाते हैं ।

औरस पुत्रिकापुत्र क्षेत्रज कानीन गूढोत्पन्नापविद्ध सहोढ पौनर्भव दत्तकस्वयमुपागत कृत क्रीतानभिधाय देवलः । एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः । आत्मजाः परजाश्चैव लब्धा याद्दच्छिकास्तथा । तेषां षड्बन्धुदायादाः पूर्व्वेऽन्ये पितुरेवषट् । विशेषश्चापि पुत्राणा मानुपूर्व्या विशिष्यते । सर्व्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते । तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । हीनास्तमुपजीवेयुर्ग्रासाच्छादन सम्भृताः ॥—

देवलने भी पूर्वोक्तद्वादश प्रकारके पुत्रों का नाम लेकर कहा है कि सन्तति केलिये ये द्वादश पुत्र हैं इन्मेंसे कोई

आकसोचज कानि भिवमानज और काईवह्का मे लब्ध होते हैं और इनमें से छ वन्धुदायाद छ अवन्धुदायाद हैं तथा पहिले कहे हुए का क्रमसे श्रेष्ठत्व है । जब औरस पुत्र उत्पन्न नहीं होता तब ये धनभागी होतेहैं । परन्तु औरस पुत्रके होनेपर इनका धनभागित्व नहीं रहता । उनमेंसे सवर्ण पुत्र तृतीयांश के भागी होते हैं और अपर ग्रासाच्छादन के भागी होते हैं ।

कात्यायनः । उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः । सवर्णा असवर्णास्तु ग्रासाच्छादन भागिनः । चतुर्थांश हराः स्मृताः इति द्वितीय चरणे क्वचित् पाठः । वसिष्ठः — तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्यते;स चतुर्थ भागभागी;यदि नाभ्युदयिकेषु प्रयुक्तं स्यात्। स प्रतिगृहीतपुत्रः; आभ्युदयिकेषु यज्ञादिषु यदि औरसेन प्रयुक्तं न स्यात्; प्रभूतं धनमिति शेषः । अत्र नानाविधमुनिवचनानाम् परस्परविरोध परिहारार्थमेवं व्याख्यायते, वृहस्पति वचने औरसमात्रस्य धन भागित्व कथन मन्येषां भरणमात्रकथनञ्च असवर्ण क्षेत्रज दत्तकादिविषय देवल कात्यायन वचनैकवाक्यत्वात्, नारदादिवचनेषु च औरसाद्यभावे क्षेत्रज दत्तकादीनामनुक्रम ग्रहण विधिरपि सर्वधनग्रहणविषयः । अतश्च दत्तकग्रहणानन्तर मौरसोत्पत्तौ तदौरस चतुर्थांश विधिर्वसिष्ठोक्त दत्तकविषये ज्ञेयः । तथा देवल-कात्यायन वचने तृतीयांशग्रहणविधिरत्युत्कृष्टगुण दत्तकविषयो वाच्यः ।

उपपन्नो गुणैः सर्व्वैः पुत्रो यस्य हि दत्त्रिमः । स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः, इतिमनुवचनैकवाक्यत्वात् गुणैः जातिविद्या विचारैः । समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः । त्रिभागं चैत्रजोभुङ्क्ते चतुर्थं पुत्रिकासुत इति ब्रह्मपुराण दर्शनात् । क्षेत्रज विषय इत्यन्ये । तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येनचादायादत्वमुक्तम् । तत् गुणवदगुणवद्भेदेन समाधेयम् । पितुरिव बन्धूनां सपिण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वाद् बन्धु, यादत्वम्, तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् इत्यत्र पितुरेवेत्येवकारश्रवणात् । एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्व्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तम् एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना सम्बन्धेनाधिकारित्वम्, । तादृशेनैव सम्बन्धेन तादृश दत्तकस्याऽपि यथासम्भव मुचितांशभागित्वमवधेयम् । एवं धनिनः पुत्रान्तरसत्त्वे मृतपितृकस्य दत्तकपौत्रस्यापि दत्तोचितांशभागित्वम् तदसत्त्वे सर्व्वहरत्वमपीति । नच पौत्रस्य स्वपितृयोग्यांशभागित्वनियमात् दत्तकस्य ग्रहीतुः पितामहौरसत्वे तादृशपितृव्यतुल्यस्यैवांशस्य तद्योग्यत्वाद्दत्तकपौत्रं पितृव्यतुल्यमेवांशं लभतामिति वाच्यम्; पुत्रस्य दत्तकत्वे चतुर्थांशं पौत्रस्य तु तथात्वे समानांश इति वैषम्यात् । ततश्च स्वसमानरूपस्य पितुर्या दृशांशः प्राप्तिसिद्धस्तस्यैव स्वपितृयोग्यांशतेति यथोक्तमेव साधु । एवं रीतिः प्रपौत्रेऽप्यनुसर्त्तव्येति ।

कात्यायनने भि कहा है कि औरस पुत्र के उत्पन्न होने पर सवर्ण दत्तकादि तृतीयांश के भागी होते हैं, और असवर्णों को केवल ग्रासाच्छादन मिलता है। किसी पुस्तक में "तृतीयांशहराः" इसके स्थानमें "चतुर्थांशहराः" ऐसा पाठ है। वशिष्ठने कहा है कि, दत्तकादिके ग्रहणके पीछे यदि औरसपुत्र उत्पन्न होय तो वे दत्तकादि चतुर्थांशके भागी होते हैं, परन्तु यदि औरसपुत्र यज्ञादि कार्यों में प्रतिबन्धकता करे। यहां नाना प्रकार मुनिवचनों के विरोध हटाने के लिये ऐसी व्याख्या की जाती है, कि बृहस्पति वचन से जो केवल औरस पुत्र का धनभागित्व और दूसरोंका ग्रासाच्छादन का विधान पाया जाता है वह केवल असवर्ण क्षेत्रज और दत्तकादि के विषय में समझना चाहिए क्योंकि ऐसी व्याख्या से देवल और कात्यायन के वचनों के साथ इसका एक वाक्यत्व होता है। नारदादि के वचन में औरसादि के अभाव पर जो क्षेत्रज दत्तकादि का धनग्रहणविधि लिखा हुआ है वह सवर्णविषयक जानलेना और इसलिये जो दत्तकग्रहणके अनन्तर औरसपुत्र की उत्पत्ति होने में वशिष्ठ ने जो चतुर्थभाग का उल्लेख किया है वह दत्तकविषयक जानलेना। ऐसा देवल और कात्यायन के वचनमें जो तृतीयांशग्रहण की विधि कही गई है वह उत्कृष्ट गुणयुक्त दत्तक के लिये समझ लेनी, क्योंकि ऐसीव्यवस्था से "उपपन्नो गुणैः सर्वैः पुत्रो यस्य हि दत्रिमः

सद्दरेतैव तद्‌क्थं सम्मासो ऽ प्यन्यगोत्रत: —

इस मनुवचन से उस की एकता होती है। कोई कहते हैं कि, वह तृतीयांश का विधान क्षेत्रजविषय है क्योंकि "समग्रधन भोक्ता स्यादौरसोऽपि जघन्यजः त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः, अर्थात् असवर्ण औरस भी समग्र धनका भागी होता है और क्षेत्रज को तृतीयांश मिलता है और पुत्रिकापुत्रको चतुर्थांश मिलता है। इस ब्रह्मपुराण के वाक्य से उस विधानका ऐक्य होता है। जो किसी २ मुनिने दत्तकको बन्धुदायाद कहा है और किसी २ ने अदायाद कहा है, वह गुणवान् और निर्गुण के भेद में समझना चाहिये। जो पिताकी नांई समुदय सपिण्डों का धनभागी होता है उसका नाम बन्धुदायाद है और जो केवल पिता का ही धभागी होता है उसका नाम अबन्धुदायाद है, क्योंकि "तेषां षड्‌बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्" इस में जो "एवकार" है उसी से ऐसाअर्थ निकलताहै। ऐसे दत्तकके धनग्रहण में जो पूर्वापरोक्ति का वैषम्य देखा जाता है वह भी गुणवान् और निर्गुण के भेदसे समझलेना और औरसके भ्राता आदि के धन में यादृशभ्रातृत्वसम्बन्ध से अधिकार होता है तादृश भ्रातृत्वादि सम्बन्ध से यथा सम्भव दत्तकको भी उस धन में अधिकार होता है। ऐसा धनी का यदि दूसरा पुत्र रहे तो जिसका पिता मरगया वैसे दत्तकके पौत्रको दत्तकके योग्य अंश मिलता है

और पुत्रान्तर न रहे तो उसका सर्वधनभागित्व होता है, किसीने आशंका की कि जैसे पौत्रको अपने पिता के योग्य अंश मिलता है, वैसे ही दत्तक के लेनेवाला पिता यदि पितामहका औरस पुत्र होतो दत्तकको भी अपने पितृव्य के साथ समानांश मिलना चाहिए। इसीलिये दत्तकके पौत्रकोभी अपने पितृव्यके साथ समानांश मिल जावे, ऐसी आशंका नहीं होसक्ती; क्योंकि पुत्र यदि दत्तकहोय तो उसको केवल चतुर्थांश मिलता है तो पौत्रके दत्तकहोनेपर उसको किस प्रकार समानांश मिल सकेगा। इस लिये इसमें एसी व्यवस्था करनी चाहिये कि अपने सदृश पिता का जैसा अंश शास्त्र से सिद्ध हुआ है पुत्र को भी ऐसा ही अंश मिलना चाहिये और पौत्रप्रपौत्रादि में भी इसी प्रकार जानना।

ननु क्षेत्रजदत्तकादिनां सामान्यधनाधिकारि-त्वेऽपि राज्येऽनधि कारःश्रूयते यथा "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएवच। गूढोत्पन्नोपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भव स्तथा स्वयं दत्तश्च दासश्च षडिमे पुत्रपांशुलाः। अभावे पूर्वपूर्वेषां परान्समभिषेचयेत्। पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्" तथा "न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितॄणां साधयन्नित्यमौरसे तनये सती"ति उच्यते शास्त्रान्तरसद्भावे विशेष शास्त्रस्य सामान्यपरत्वमेव लाघवात्। अतएव पूर्वपूर्वाऽभावे पर पराधिकारबोधकं हि पूर्वं वाक्यं प्रागुक्तनारदादिवचनैकवाक्यतया समग्रराज्यमेव विषयीकरोति, परवचनञ्च सत्यौरसे क्षेत्रजदत्तका

वर्णविवेकः

अथ कियन्तो विद्यन्ते वर्णा इति जिज्ञासायां मनुराह, "लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्;"ब्राह्मणः क्षत्रियो वैश्यस्त्रयोवर्णा द्विजातयः चतुर्थएकजातिस्तु शूद्रोनास्तितु पञ्चमः" ब्राह्मण क्षत्रियविशामोञ्जीबन्धनाङ्कोपनयनसंस्कारसत्त्वात्द्विजातित्वम् द्विजन्मत्वमिति भावः । तथाच स्मृतिः "मातुरग्रेधिजननं द्वितीयं मौञ्जी बन्धनात्" शूद्रस्त्वेक जाति रेक जन्मा तस्य तादृक् संस्काराभावात् । याज्ञवल्क्यो ऽपि "ब्राह्म क्षत्रिय विट् शूद्रा वर्णा स्त्वाद्या स्त्रयोद्विजाः" ।

एते चत्वार एवामिश्रवर्णा मूलरूपा इत्यर्थः एतेषामेव सन्तति परम्परया विविधानां वर्णानामुत्पत्तिः । सन्ततिश्च तेषां द्विधोत्पन्ना स्तत्र केचित् धर्म्म पथानुगमनेन केचिच्चाधर्म्म संसर्गेण च । तत्र विवाहितस्त्रोषुत्पन्ना धर्म्या अन्यथोत्पन्नास्त्वधर्म्याः ।

विवाहश्चाष्टविधः

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्व्वोराक्षसश्चैव पैशाचश्चाष्टमोऽधमः । मनु ३ अ २१ । तत्र श्रुत शीलवते द्विजाया इव वस्त्रालङ्कृता कन्या दीयते स ब्राह्मो विवाहः यत्र वितते यज्ञे पुरोहिताय कन्या दीयते दक्षिणारूपेण स दैवः । यत्र वरादेकं गोमिथुनं द्वे वा समादाय कन्यादानं क्रियते स आर्षः । यत्र "युवामुभौ सहैव धर्मं चरता"मिति वरकन्ययो रुपदिश्य कन्या प्रदीयते स

कात्यायनने भि कहा है कि औरस पुत्र के उत्पन्न होने पर सवर्ण दत्तकादि तृतीयांश के भागी होते हैं, और असवर्णों को केवल ग्रासाच्छादन मिलता है। किसीर पुस्तक में "तृतीयांशहरा:" इसस्थानमें "चतुर्थांशहरा:" ऐसा पाठ है। वशिष्ठने कहा है कि, दत्तकादिके ग्रहणके पीछे यदि औरसपुत्र उत्पन्न होय तो वे दत्तकादि चतुर्थांशके भागी होते हैं, परन्तु यदि औरसपुत्र यज्ञादि कार्यों में प्रचुरधनव्यय ना करे। यहां नाना प्रकार मुनिवचनों के विरोध हटाने केलिये ऐसी व्याख्या की जाती है, कि वृहस्पति वचन से जो केवल औरस पुत्र का धनभागित्व और दूसरोंका ग्रासाच्छादन का विधान पाया जाता है वह केवल असवर्ण क्षेत्रज और दत्तकादि के विषय में समझना चाहिए क्योंकि ऐसी व्याख्या से देवल और कात्यायन के वचनों के साथ इसका एक वाक्यत्व होता है। नारदादि के वचन में औरसादि के अभाव पर जो क्षेत्रज दत्तकादि का धनग्रहणविधि लिखा हुआ है वह सर्वधनविषयक जानलेना और इसलिये जो दत्तकग्रहणके अनन्तर औरसपुत्र की उत्पत्ति होने में वशिष्ठ ने जो चतुर्थभाग का उल्लेख किया है वह दत्तकविषयक जानलेना। ऐसा देवल और कात्यायन के वचनमें जो तृतीयांशग्रहण की विधि कही गई है वह उत्कृष्ट गुणयुक्त दत्तक केलिये समझ लेनी, क्योंकि ऐसीव्यवस्था से "उपपन्नो गुणैः सर्वैः पुत्रो यस्य हि दत्रिमः

सहैरेव तदुक्थं सम्मातो ऽ न्यगोत्रतः —

इस मनुवचन से उस की एकता होती है। कई कहते हैं कि, वह तृतीयांश का विधान क्षेत्रजविषय है क्योंकि "समग्रधन भोक्ता स्यादौरसोऽपि जघन्यजः त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः, अर्थात् असवर्ण औरस भी समग्र धनका भागी होता है और क्षेत्रज को तृतीयांश मिलता है और पुत्रिकापुत्रको चतुर्थांश मिलता है। इस ब्रह्मपुराण के वाक्य से उस विधानका ऐक्य होता है। जो किसी २ मुनिने दत्तकको बन्धुदायाद कहा है और किसी २ ने अदायाद कहा है, वह गुणवान् और निर्गुण के भेद में समझना चाहिये। जो पिताको नाईं समुदय सपिण्डों का धनभागी होता है उसका नाम बन्धुदायाद है और जो केवल पिता का ही धनभागी होता है उसका नाम अबन्धुदायाद है, क्योंकि "षेषां षड्बन्धुदायादाः पूर्व्वेऽन्ये पितुरेव षट्" इस में जो "एवकार" है उसी से ऐसा अर्थ निकलता है। ऐसे दत्तकके धनग्रहण में जो पूर्वापरोक्ति का वैषम्य देखा जाता है वह भी गुणवान् और निर्गुण के भेदसे समझलेना और औरसके भ्राता आदि के धन में यादृशभ्रातृत्वसम्बन्ध से अधिकार होता है तादृश भ्रातृत्वादि सम्बन्ध से यथा सम्भव दत्तकका भी उस धन में अधिकार होता है। ऐसा धनी का यदि दूसरा पुत्र रहे तो जिसका पिता मरगया ऐसे दत्तकके पौत्रको दत्तकके योग्य अंश मिलता है

और पुत्रान्तर न रहे तो उसका सर्वधनभागित्व होता है, किसीने आशंका की कि जैसे पौत्रको अपने पिता के योग्य अंश मिलता है, वैसे ही दत्तक के लेनेवाला पिता यदि पितामहका औरस पुत्र होतो दत्तकको भी अपने पितृव्य के साथ समानांश मिलना चाहिए। इसरीतिसे दत्तकके पौत्रकोभी अपने पितृव्यके साथ समानांश मिल जावे, ऐसी आशंका नहीं होसकी; क्योंकि पुत्र यदि दत्तकहोय तो उसको केवल चतुर्थांश मिलता है तो पौत्रके दत्तकहोनेपर उसको किस प्रकार समानांश मिल सकेगा। इस लिये इसमें एसी व्यवस्था करनी चाहिये कि अपने सदृश पिता का जैसा अंश शास्त्र से सिद्ध हुआ है पुत्र को भी ऐसा ही अंश मिलना चाहिये और पौत्रप्रपौत्रादि में भी इसी प्रकार जानना। ननु क्षेत्रजदत्तकादिनां सामान्यधनाधिकारि-त्वेऽपि राज्येऽनधिकारःश्रूयते यथा "औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएवच। गूढोत्पन्नोपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा स्वयं दत्तश्च दासश्च षडिमे पुत्रपांशुलाः। अभावे पूर्वपूर्वेषां परान्समभिषेचयेत्। पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्" तथा "न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितृणां साधयन्नित्यमौरसे तनये सती"ति उच्यते शास्त्रान्तरसद्भावे विशेष शास्त्रस्य सामान्यपरत्वमेव लाघवात्। अतएव पूर्वपूर्वाऽभावे पर पराधिकार बोधकं हि पूर्वं वाक्यं प्रागुक्तनारदादिवचनैकवाक्यतया समग्रराज्यमेव विषयीकरोति, परवचनश्च सत्यौरसे क्षेत्रजदत्तका

## वर्णविवेकः

अथ कियन्तो विद्यन्ते वर्णा इति जिज्ञासायां मनुराह, "लोका-
नान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निर-
वर्त्तयत्;" "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः चतुर्थ एकजा-
तिस्तु शूद्रो नास्ति तु पञ्चमः" ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनाङ्गको-
पनयनसंस्कारसत्त्वात् द्विजातित्वम् द्विजन्मत्वमिति भावः । तथाच
स्मृतिः "मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धनात्" शूद्रस्त्वेकजा-
तिरेकजन्मा तस्य तादृक्संस्काराभावात् । याज्ञवल्क्योऽपि
"ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः" ।

एते चत्वार एवामिश्रवर्णा मूलरूपा इत्यर्थः । एतेषामेव
सन्ततिपरम्परया विविधानां वर्णानामुत्पत्तिः । सन्ततिश्च तेषां
द्विधोत्पन्ना तत्र केचित् धर्म्मे पद्धानुगमनेन केचिच्चाधर्म्मसंसर्गे-
ण । तत्र विवाहितस्योत्पन्ना धर्म्या अन्येऽन्यथोत्पन्नास्त्वधर्म्याः ।

### विवाहश्चाष्टविधः

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पै-
शाचश्चाष्टमोऽधमः ।" मनु ३ अ २१ । तत्र श्रुतशीलवते द्विजाया-
हूय यथालङ्कृता कन्या दीयते स ब्राह्मो विवाहः यत्र वितते यज्ञे
पुरोहिताय कन्या दीयते दक्षिणारूपेण स दैवः । यत्र वरादेकं गो-
मिथुनं द्वे वा समादाय कन्यादानं क्रियते स आर्षः । यत्र "सहोभौ

प्रजापत्यः। कन्यापक्षीयेभ्यः कन्यायैव द्रविणं दत्वा यो विवाहः क्रियते स आसुरः। वरकन्ययो रिच्छया यः परस्परं संयोगो भवति स गान्धर्वः; रुदतीं कन्यां बलादादाय यो विवाहः भवति स राक्षसः; पैशाचस्तु सुप्तायां मत्तायां प्रमत्तायां वा कन्यायां रहस्युपगमनम्;

## संक्षिप्तसमालोचनम्

वयमतीव कृतज्ञहृदयेन वक्ष्यमाण मासिकपत्रयोः प्राप्तिं स्वीकुर्म्मः; भारतेन्दुः। लवपुरस्थित प्रसिद्ध गोस्वामिकुलसमुद्भवेन पण्डित श्रीज्वालादत्तनामधेयेन महोदयेन हिन्दीभाषारसिकानामन्तस्तमोऽपनोदनाय लवपुरे मित्रविलास यन्त्रे प्रकाशितः नवाभ्युदितोऽपि भारतेंदु र्बालेंदुरिव सहृदय हृदयचमत्कारमावहति। अत आशास्महे चन्द्रमस इवास्य प्रात्यहिकीं वृद्धिं। ज्ञानप्रदायिनीपत्रिका लवपुरपुरस्थितज्ञानयन्त्रे मुद्रितः। अस्याःसम्पादकः प्रसिद्धनामा श्रीमान् नवीनचन्द्रराय महोदयः। नाममात्र मप्यस्य महोदयस्य पत्रिकायाः सम्यक् परिचायक मेव,तथापि कथ्यते ज्ञानप्रदायिनीयं यथार्थनाम्नी यस्यां बहवो हि ज्ञानप्रदा विषया सन्निवेशिताः येषामध्ययनेन जनानां परमोपकारो भविष्यति। वयं तत्र वेदविषयक मेकं प्रस्ताव मुद्धृत्य पाठकेभ्यउपहरामः। यथा —

## मेघदूतक्षेपकम्

यत्र क्षौमन् कलयसि पुरा तत्पुरं पद्मपूर्वं
धीराङ्कुरैः स्फुरितमभितो हारहूराभिरामम् ॥
पक्वाक्षोटैरमृतमधुरैर्नव्यमव्याच टङ्कैः
सौख्ये यस्मिन् सति नन जनो मन्यते द्यां तृणाय ॥२३॥

क्षौमतन्त्वं तरिकरतलस्थास्नु गाङ्गेयकुम्भ-
भ्याततत्सान्द्रामृतरसभरीविन्दु-वीचीविततम् ॥
पक्वं शीतं गुरुरसमयं पित्तवातामपघ्नं
नूनं स्वादु त्वयि वन गते यत्र धन्याश्वदन्तु ॥२४॥

भुक्तं राज्यं तृणमिव जहत् सन्धिमानार्थरात
स्तस्मा यस्मिन् मुनिरगमद्योगिगम्यां सतीं ताम् ॥
नान्दिक्षेत्रे शुचिमुनिजने तत्र नत्वा त्रिनेत्रं
भक्त्या भूयः प्रयतसलिलैस्सौद्रराख्याभिषिञ्च ॥२५॥

यत्र द्वेधा कपिपुरुलसं चाक्र च क्षीरमेवं
तच्चाप्येवं मधुशुचिमुखी सा हसन्ती तथैव ॥
किन्तु द्वेधापि च नहि पुनःकाचनोद्वेगधारी
हन्ताधीरोनच खलु तथास्तिकुत्रापि यस्मिन् ॥२६॥

मन्ये धाता सकलभुवनाभोगभाजां गुणानां
कारं कारं सुचिरमनघं सर्वसैकत्रसारम् ॥
काश्मीरान् स स्वयमनुपमान् साधुनैवेव तत्त्व
न्दृष्टीन्दृष्टीं विरमति न भोयद्गताद्दृष्टदृग्भिः ॥२७॥

स्तोका गोस्तनीद्राक्षा हारहूराचसामतेति हलायुधः ॥२३॥
सौद्राख्यस्तीर्थविशेषः काश्मीरे नीलपुराणप्रसिद्धः ॥२५॥
कपिपुत्रस्तमनश्च शुचिमुखोऽग्निमुखो पवित्रमुखो नारीपक्षे ॥

कीर्तिस्तोमैरिव हिमकणैस्तावकैर्मौक्तिकाभै

रभ्यादित्सौ भवति वदलंकर्तुमम्भोद विष्वक् ॥

द्वैराजीव्यः सहकलकलं सप्रहासं सदर्पं ॥

वर्षैर्युक्तास्तुलितदलितश्यामकञ्जानपाङ्गान् ॥२८॥

विष्वक् तन्वन्नपि हि मल्लिकाचन्द्ररेणुप्रवर्षं

यस्मिन् यावत् क्वचिदपि न तु प्रेक्षसे चन्द्ररेणून् ॥

गर्भे नक्तंदिवमपि दधत्युत्पलान्तावरौकौ

हन्त द्रष्टव्यपि नहि सखे दुष्पवन्तो लताभिः ॥२९॥

पारन्तीनां परिणतिरियं किन्नु सन्ध्याभ्रशोभा

पर्यायः किं किमुत हुतभुग्ज्वालसर्वानुवादः ॥

एषाहोस्वित् प्रतिकृतिरसंख्यातवन्धूकपंक्तेः

किंवा विद्योतितदशदिशां विद्रुमाणां विवर्तः ॥३०॥

संपृष्टा या द्विजपरिषदे प्राग् जलौकेन राज्ञा

माणिक्याली किमुतविधुतापूर्णभूत्येनया सा ॥

इत्थं तर्कास्तववहुविधाश्च प्रविष्यन्ति दृष्ट्वा

धीर क्षेत्रं विकसिततरं वाह्लवं सौम्य यस्मिन् ॥३१॥

युग्मम् ॥ काश्मीराणामनणकगुणान् पालकश्रीनगाया

कृत्वा शेषः क्षितिमुदगमन्मङ्क्षु भित्वा हिदन्तुः ॥

तस्यैवासौ फणमणिघृणिर्भाति किं तर्कयेत्वं

यस्मिन् दृष्टा तवतु भविता कुङ्कुमाली प्रफुल्ला ॥३२॥

---

अभ्यादानसारंभः तत् कर्तुं मिच्छौ, यत् काश्मीरमंडलं ॥२८॥
काव्यचोर चंद्ररेणु रिति निकांडशेषः निष्प्रभे विगतारोकौ ॥२९॥
पारतीपुष्पंरक्ततरम् आरग्वधम् कर्णिकारम् पारमती नवमालिकेति
शारदातिलके ॥३०॥ कर्णतुल्योजलौको नाम राजाराजतरंगिणी

विविधविद्या

शुक्लयजुर्वेदः वाजसनेय संहिता माध्यन्दिनीशाखा ।

ओं

अथ दर्शपौर्णमासयागो प्रथमोऽध्यायः १ मकण्डिका

इषेत्वोर्जेत्वा वायव स्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्याइन्द्रायभागम्प्रजावतीरनमीवा अयक्ष्मामावः स्तेन ईशत माघशं० ध्रुवा अस्मिन् गोपतौस्यात् बह्वीर्यजमानस्य पशून् पाहि ।१। टीका। (नवीनटीका) (हेशाखे) इषे 'इषे' त्वा त्वां (छिनद्मि) 'ऊर्जे' (बलाय) त्वा त्वां ऋजूकरोमि। हेवत्साः यूयं मातृभ्यः सकाशात् अन्यत्र (वायवः) गन्तारः 'स्थ' भवत। (हेगावः) 'सविता देवः' द्योतमानः परमेश्वरः 'वः' युष्मान् प्रापयतु (प्रभूततृणोपेतं वनं) गमयतु श्रेष्ठतमाय कर्मणे यज्ञाय हे 'अघ्न्याः' हन्तुमयोग्याः (गावः) 'इन्द्राय' भागं क्षीरं 'आप्यायध्वं' समन्तात् वर्धध्वं। 'प्रजावतीः' बहुपत्याः 'अनमीवाः' नास्तिव्याधि यासां ताः 'अयक्ष्माः' यक्ष्मारूपप्रबल रोग रहिताः। 'वः' युष्मान् (अपहर्तुं) 'स्तेनः' चोरः 'माईशत' समर्थोमाभूत्। 'अघशंसः' हिंस्रजन्तवः (हिंसांकर्तुं समर्थो) (मा) माभूत। (हेगावः यूयं) 'अस्मिन् गोपतौ' युष्माकं पत्यौ यजमाने 'ध्रुवाः' शाश्वतिकीः 'बह्वी' बहुविधाः 'स्यात' भवत। हेपलाशशाखे त्वमुन्नत प्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशून् पाहि ॥

अर्थ। (हे शाखे) ईप्सित (इष्यादि) प्राप्तिके निमित्त तुम्हें मैं काटता हूं बल प्राप्त होनेके निमित्त तुम्हें (सीधाकरता हूं)। हे बछड़े तुम अपनी माता गौओं के पास से अलग जाओ। हे गावो श्रेष्ठतम कर्म (यज्ञ) के निमित्त परमेश्वर तुम्हें (बछड़े वत्सयुक्त बनावे) प्रेरे। हे अवध्य (गौवो) इन्द्र के निमित्त भाग (हवि हेतु दुग्ध) को तुम बढ़ाओ (तुम) प्रजावती, यक्ष्मारोग रहिता और सर्व व्याधि रहिता होवो। चोर तुम्हें चुरा न सके। पापी हिंसक तुम्हें हिंसा न करसकें तुम इस (अपने गोपति (यजमान) के पास बहुत होकर (और सन्तान प्रसवादि द्वारा) बढ़कर रहो। (हे शाखे तू) तुम यजमान के पशुओं को रक्षा करो॥

वक्तव्य। महीधर जी भाष्यकार कहते हैं कि इस मन्त्र द्वारा से दर्श की आवश्यकता होती है उस दर्श के निमित्त जो दोहनादि कार्य सम्पादन से उक्त मन्त्रोंका प्रयोग होता है। पहिले गायसे बछड़े को पृथक करने के निमित्त एक शाखा की छड़ी आवश्यक होती है। उस छड़ी के काटने के समय उक्त कण्डिका का पहिला भाग प्रयुक्त होता है॥ बछड़े को पृथक किये बिना गौसे दूध सञ्चित नहि होता इसलिये बछड़े को पृथक करते हैं॥

श्री ... ered No. 12

# विद्योदयः

(मासिक-संस्कृतपत्रम्)

श्रीहृषीकेश भट्टाचार्येण शास्त्रिणा सम्पादितः

स्वस्तु राजकुलं प्रकृतिभिः सह भवतु वेदविदां परिवर्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भैः लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्याद् अविद्यातिमिरं भुवि ॥

खण्ड ११ ] जनवरी १८८२ [ १ संख्या

सूची



लाहौरे

ऐल्बर्ट नामके यन्त्रे लालादित्तराम राय नामधेयेन मुद्रितः

पुत्र होवे तो वह उस्का दैनेवालेका उस्केपिताका और उस के दादाकाइन तीनों का स- पिण्डन करै और यदि लेनेवालाभी दत्त कहो तो उस्काऔर उस्केलेनेवालेका और उस लेनेवाले के पिता का सपिण्डन करे और यदि द्व्यामुष्यायण हो तो उस द्व्यामुष्यायण, और उस्के पिता औरपितामहका और उस द्व्यामुष्यायण के लेनेवाला, तथा उस्कापिता और पितामहइन छ पुरुषों का सपिण्डनकरे। औरदत्तक जब आप पार्वणकरेगा तो उसमें जिन्का है बतालहै, दत्तकके पुत्र से किये हुए सपिण्डीकरणमें भी उन्का देन ताल होता है,। दत्तकका पुत्र, दत्तकका सपिण्डीकरण उस्के लेने वालेके साथ औरउसके तीन पितरोंके बीच दोनोके साथ करेगा और दत्तक के पौत्र दत्तक और लेनेवाले के तीन पितरों के बीच में एक के साथ करेगा। चतुर्थ पुरुष में छेद होगा इस्का तात्पर्य्य यहहै कि जो जब जिस्कासपिण्डी करण करते हैं उस्के पितादि तीन पुरुषोंका ही करतेहैं चतुर्थ पुरुष में सपिण्डन तो निषिद्धही है तब यहां जो पुनर्वा-र निषेध किया इस से जनाया कि यहनियमहै क्योंकि सिद्धवातकापुनर्वार कथन हुआ है और यह भी कहा है कि सपिण्डता त्रिपौरुषी है और उस्के उपरान्त पुरुषोंको लेप भाजकहतेहैं जो नल्व पुराण से साविण्डय को सासपौरुष कहा है वह सामान्यविधानहै। इस विशेष विधान के द्वारा उस्का भी बाध हुआ समझना।

अतएव हारीतेन। लेपिनस्त्रीन् वाचचाण:

आसप्तमादित्येके इति पक्षान्तरं पूर्व्वं तं सङ्गच्छते तदेव संष्ट
ह्याभ्यलोकम् । दत्तकानान्तु पुत्राणां सपिण्ड्यं स्यात्त्रिपौरुषम् । ज
नकस्य कुले तद्वद् वक्तीतुरिति शाङ्कृति । यदिदमुभयत्र त्रिपुरुष
सापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण तस्य त्रिकद्वयेन सपि
ण्डनाभिधानात् । शुद्ध दत्तकस्तु "गोत्ररिक्थे जनयितुर्न हरेद्दत्रि
मः सुतः गोत्ररिक्थानुगः पिण्डोव्यपैति ददतः स्वधेति" प्रागुक्तमनु
वचने पिण्डनिवृत्तिदर्शनात् प्रतिग्रहीतृ-कुल एव सापिण्ड्यमिति

यह हारीतने भी कहा है कि जो साप्तपौरुष सापिण्ड्य है
वह सबके मत में वही और यह जो त्रिपौरुष सापिण्ड्य है वह
अपने उत्पादक पिता और लेनेवाले पिता के कुल में समझना
चाहिये । यह वचन द्व्यामुष्यायण पर है । शुद्धदत्तक का पूर्व्वोक्त
"गोत्ररिक्थे जनयितुः" इत्यादि मनुवचन के द्वारा अपने
उत्पादक पिताके कुल में सापिण्ड्य निषिद्ध हुआ । केवल लेनेवाले
पिता के कुल में ही उसका सापिण्ड्य रहता है ।

यत्तु, वृद्धगौतमीयम्—सगोत्रेषु कृताये स्युर्दत्तक्रीतादयः सुताः
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते । सगोत्रेषु मध्ये कृता
अपि दत्तकादयो विधिनैव गोत्रं भजन्ते, परन्तु तेषु सापिण्ड्यं नोत्प
द्यते सगोत्रेष्वपि सापिण्ड्यानुपपत्तौ परगोत्रेषु सुतरां सापिण्ड्यानु
पपत्तिरिति । तत्तु पुत्रान्तरवत् साप्तपौरुष सापिण्ड्य प्रसक्तौ निषे
धकं सापिण्ड्य प्रयुक्त दशाहाशौचादि प्रतिषेधकं नतु सामान्यतः

सापिण्ड्य निषेधकं उक्तं विवाहोपन्यस्त

वृद्धगौतम से जो उन [illegible] समान गोत्र में जो दत्तक वा क्रीतादि पुत्र किये जाते हैं [illegible] से ही सगोत्रत्व को प्राप्त होते हैं परन्तु उनका सापिण्ड्य नहीं होता; इस वचनसे समानगोत्र में किये हुए दत्तकादि में भी जब सापिण्ड्य निषिद्ध हुआ तब परगोत्रमें से किये हुए दत्तकादिमें किसप्रकार सापिण्ड्य होगा इस का उत्तर यह है, कि इस वचनसे साप्तपौरुष सापिण्ड्य का निषेध हुआ वा सापिण्ड्य में जो दशाह अशौच होता है उसका निषेध हुआ। यह नहीं कि एक बार ही सापिण्ड्य का निषेध हुआ क्योंकि पूर्वोक्त वचनों से दत्तकादिमें सापिण्ड्य की सिद्धि हुई

अथ दत्तकाशौचनिर्णयः। तत्र शुद्ध दत्तकस्य जनककुले परस्पर मशौचं नास्त्येव, गोत्र पिण्डनिवृत्त्या अशौच निवृत्तेरर्थं सिद्धत्वात्, द्व्यामुष्यायणस्य तु उभयत्रैवाशौचमिति। तथा पुराणे दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीत एवच अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते। भिन्नगोत्राः पृथक् पिण्डाः पृथग्वंशकराः स्मृताजनने मरणे चैव त्र्यहाशौचस्य भागिनः। पराशरः। भिन्न गोत्रःसगोत्रोवा नीतः संस्कृत्य चेच्छया। जनने मरणे तस्य त्र्यहाशौ। चंविधीयते। तथा—औरसं वर्ज्जयित्वा च सर्व्ववर्णेषु सर्व्वदा क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चयः। सर्व्वदा उपनयनानन्तरमपि अत्र सगोत्रस्यापि

विधिना जनकगोत्र विच्छित्ति-पूर्व्वक-ग्रहीतृगोत्रप्रामावत्तगोत्र दत्तकाविशेषात्। तदृशाशौचमुक्तं युक्तमेव। तथा दत्तके अकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहे न परिवेदन-दोषः, नवा दत्तकस्याग्रजसोदरात् पूर्व्वं विवाहकरणेऽपि क्षतिः।

उन दत्तकादिमेंसे शुद्ध दत्तकके जनक कुल में अशौच नहि होता क्योंकि गोत्र और पिण्डको निवृत्ति से अशौचको भी निवृत्ति सिद्ध हुई है। द्व्यामुष्यायण का उभय कुलमें अर्थात् अपने उत्पादक पिता और लेनेवाले के कुल में अशौच होता है। ब्रह्म पुराण में भी लिखा है कि दत्तक, स्वयंदत्त, कृत्रिम, क्रीत, और अपविद्ध ये सब पुत्र सर्व्वदा पोषणीय हैं। ये सब भिन्नगोत्र,पृथक् पिण्ड और पृथकवंश कर कहलाते हैं इनके जनन और मरन में तीनदिन अशौच होता है। पराशरने भी कहा है कि यदि भिन्नगोत्र वा समानगोत्र से दत्तकादिक्रिए हुए हों तो उन सब के जनन और मरनमें तीनदिन मात्र अशौच होता है और यह भी कहा है कि समुदाय वर्णोंमें औरस पुत्र कोछोड़कर क्षेत्रजादि पुत्र उत्पन्न होने पर और मरणे पर केवल तीन रात ही अशौच होता है। चाहे वह पुत्र उपनयन संस्कार के पीछे भी मरे तोभी इनके तीन रातअशौचहोता है। और यदि दत्तक का विवाह न हो तो दत्तकलेने के पीछे उत्पन्न हुए पुत्र के विवाह होने पर परिवेदन*दोषनहिहोता वैसे ही यदि दत्तकअपने अग्रज भ्राता के पहिलेविवाहकरेतो उसमें भी परिवेदन दोषनहीं होता

* परिवेदन दोषवह है कि ज्येष्ठ के पहलेछोटेने अग्नि ग्रहिण

ननु शुद्रदत्तकस्य जनककुले सापिण्ड्य विच्छेदस्य दर्शितत्वात् तत्र विवाहः प्रसज्येत प्रसज्येतच द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरित कन्या सन्तति परम्परया विवाहः । मैवं "असपिंडा च या मातु रस गोत्रा च या पितुः । साप्रशस्ता द्विजातीनां दारकर्म्मणिमैथुने"। चकारात् पितुरसपिण्डाच इतिमनुवचने ग्रहीत-मातृगोत्रस्यापि दत्तकस्यजनकस्यापि सपिण्डासगोत्रावर्ज्जनाय पितुरितिपदोपादानात्,नच तथापि दत्तकस्य पितुरपि दत्तकत्वे तत्त्रिपुरुषानन्तरितकन्यासन्ततेर्व्विवाहः केन वार्य्यते पितृसापिण्ड्यसगोत्रत्वयोरभावादितिवाच्यम्, यतोविवाहे नैतत् सापिण्ड्य मुपयुज्यते किन्तु सर्व्वसाधारणंपारिभाषितं पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्चपौरुष ञ्चेतिनकाप्यनुपपत्तिः । तत्प्रपञ्चस्तुतत्र तत्र वक्तव्य इति ।

अब यह आशंका हुई कि शुद्र दत्तक के अपने उत्पादक पिताके कुलमें सापिण्ड्यके विच्छेद होने से वहां उसके विवाहकी प्रसक्ति हुई और द्व्यामुष्यायण के भी तीनपुरुषों के उपरांत कन्या के साथ विवाहकी प्रसक्ति हुई क्यों कि उत्पादक पिताके कुलमें तीन पुरुष के ऊपर उसका सापिण्ड्य नहीं रहता । यह आशंका किसीकामकी नहि क्योंकि "असपिण्डाचयामातु रसगोत्राचयापितुः" अर्थात् जो कन्या माताके साथ सापिण्ड्य नहि रखती और जो पिताकेसाथ सगोत्रा नहि होती वही कन्या विवाहमें प्रशस्त है इस वचन में "असगोत्रा"च यहां चकार के द्वारा पिताके भी सापिंड्यका नि

पेध हुआ और "पितुः" इसपदसे उत्पादक और लेनेवाला इनदों नोका ही ज्ञानहोताहै । यदि ऐसा हुआ तो किसीने आशंका की कि यदि दत्तक के लेनेवाला पिता दत्तक हो तो उसके तीन पुरुष के उपरान्त कन्या से विवाह किसीप्रकारसे निषिद्ध नहीं होसक्ता । क्योंकि वहां पिताके सापिंड्य वासगोत्रत्व नहीं रहता" ऐसा भी नहीं कहना क्योंकि विवाह में जो सापिंड्य का ग्रहण होताहै वह सर्व्वसम्मतपितृपक्षमें सप्तपौरुष सापिंड्य और मातृ पक्षमें पंचपौरुष सापिंड्य का ग्रहण होता है ।

अथ दत्तकविभागः । तत्र बृहस्पतिः । एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् । शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषां ।आनृशंस्यं दया। प्रजीवनं भरणम्। तथा यमः। पुत्रास्त्रयोदशप्रोक्ता मुनिभिस्तत्वदर्शिभिः। नतेषां षड्बंधुदायादाः षडदायादबांधवाः । स्वयमुत्पादितस्त्वेको द्वितीयःक्षेत्रजःस्मृतः तृतीयः पुत्रिकापुत्रोजातिधर्मविदोविदुः। पौनर्भवश्चतुर्थ स्तुकानीनःपंचमःस्मृतः। गृहेचगूढउत्पन्नःषष्ठे पिण्डदायिनः। अपविद्धः सहोढश्च दत्तः कृत्रिम एवच। क्रीतश्च पञ्चमः पुत्र यश्चोपनयते स्वयम्। इत्येते सप्तुरोत्पन्नाः षड़दायाद बान्धवाः। नारदः। औरसः क्षेत्रजश्चैव पुत्रिकापुत्रएवच ।कानीनश्च सहोढश्च गूढोत्पन्नस्तथैवच। पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्त्तिताः। तेषां षड्बन्धु

दायादाः षडदायाद बान्धवाः पूर्व्वः पूर्व्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने । ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात् । पूर्व्वं पूर्व्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः । औरस क्षेत्रज पुत्रिकापुत्र पौनर्भव कानीन गूढोत्पन्न सहोढ दत्तक क्रीत स्वयमुपागतापविद्ध यत्र क्वचनोत्पादिता नभिधाय विष्णुः तेषां पूर्व्वः पूर्व्वः श्रेयान् स एव दायहरः सचान्यान् बिभृयात्। औरस पुत्रिकापुत्र क्षेत्रज गूढज कानीन पौनर्भव दत्तक क्रीत कृत्रिम स्वयन्दत्त सहोढापविद्धानभिधाय याज्ञवल्क्यः" पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः ।

दत्तक दाय भाग विधि।

वृहस्पति ने कहाहै कि एक औरस पुत्र ही पितृधन में सम्पूर्ण अधिकारी होताहै । और अपरों को दया करके भरण पोषण के लिये कुछ धन देनाचाहिये । अर्थात् वे अंशभागी नहीं होतेहैं । यमने कहाहै किजो द्वादश प्रकार के पुत्रहै उनमें से छः बन्धु दायाद और छः अदायाद बन्धु अर्थात् औरस, क्षेत्रज, पुत्रिकापुत्र पौनर्भव, कानीन, और गूढोत्पन्न, ये छः बन्धुदायाद और पिण्डप्रदहैं और अपविद्ध, सहोढ, दत्त, कृत्रिम, क्रीत, स्वयंप्रागत, ये सब अदायदबंधुहैं । नारदने भीकहाहै कि औरस, क्षेत्रज, पुत्रिकापुत्र, कानीन, सहोढ़, गूढोत्पन्न, पौनर्भव, अपविद्ध, दत्त, क्रीत, कृत्रिम, और स्वयंउपागत, ये द्वादशपुत्र है इनमें से छः बन्धु दा

द्दिकं यथावर्णितं तेन सह कथासरित्सागरस्य सम्यक् वैपरीत्यमेव लक्ष्यते ह्योयान्सङ्गनामधेयेन हि पाणिनिद्वयस्य नामोल्लेखः कृतः। एक औपन्यासिकसमयवर्त्ती द्वितीयो बौद्धावतारात् ५०० वत्स रानंतरं जातः। बौद्धात् ४०० वत्सरानन्तरं कनिष्क नामा नृप तिर्बभूव। सहि नृपतिः ४० खृष्टाब्दे वर्त्तमान आसीदित्यवधारि तं,ततएव द्वितीय पाणिनेः १४० खृष्टाब्दे स्थिति काल इति वि ज्ञायते। तेनेत्थमभिहितं यत् तदागमनकाले सिन्धुनद तीरव र्त्तिनि फोलोठालोनामधेये नगरे कश्चिद्ब्राह्मणबालः पाणिनि रित्यभिहितआसीत्। सच पाणिने रवतार इति तात्कालिकी प्रसिद्धिः।

भाषातत्त्व नियमानुसारेण संस्कृतशाला तुरीयशब्दस्य चीनभाषायां फोलोटोलस इति रूपं भवति। अन्यैश्च वैयाकरणैः पाणिनेः पर वर्त्तिभिर्भगवान् पाणिनिरेव शालातुरीयेति नाम्नाऽभिहितः। पाणिनिर्भारतवर्षस्योत्तरपश्चिमप्रदेशीय विभाग विशेषेष्वेव जन्म ग्रहणञ्चकार नतु प्राच्यप्रदेश इति तद्ग्रन्थीय देशनामोल्लेखेन प्रतो यते। यद्यपि तद्ग्रन्थे प्राच्यदेशाना मपि केषाञ्चित् समुल्लेखो दृश्यते तत्र तस्य पश्चात् प्राच्यदेशे निवसनमेव हेतु रिति प्रज्ञायते।

वेटलिंग साहेबेन पाणिनेः समयनिर्द्धारणार्थं द्वे प्रमाणेऽवलंबि ते। तत्र प्रथमं पाणिनिरमरसिंहस्य प्राग्वर्त्ती, सचामरसिंहः खृष्टीय प्रथमशतवत्सरे प्रादुर्बभूवेति तत्र अमरसिंहस्य तत्समय वर्तिता

खण्डयद्भिरस्माभिः खण्डितमेव । द्वितीयं राजतरंगिणीग्रन्थान्त मत्र लभ्यत्र समुद्भावितं । राजतरंगिणीनाम कथासरित् सागरवत् न स म्यक् प्रामाण्यमर्हतीति प्रथमतो द्वैध पक्षे स्थिता तथापि तत्र पा णिनेः समयनिर्द्धारणं नामोदीच्य दाक्षिणात्यबौद्धवत्सराणां सम्मिश्रणं कृत्वा कृत मित्यभ्युपेयमेव ।

राजतरङ्गिण्यां वर्णितमस्ति यदभिमन्य, नामधेयस्य नृपते रनु ज्ञया पतञ्जलिकृत महाभाष्यंचन्द्रेण तद्राज्ये प्रचारितं सोऽपि चन्द्र स्वयमपि व्याकरणग्रन्थमेकं निर्ममे । उदीच्यबौद्धानां मते तस्या भिमन्यो रव्यवहितपूर्व्व-वर्ती कनिष्कनामा नृपति र्बुद्धस्यमृत्यो ४०० वत्सरानन्तरं जातः

श्रीरामस्तोत्रम्
(१०५)

भ्रमामि भ्रान्त्याहं विषयमृगतृष्णार्णवपयः
पिपासुस्त्वत् प्रेमामृतरस वितृष्णो यदितदा ।
कथं कस्मात् केन क्व च क इममानन्दयतु वा
हरे राम इत्यादि ।—
( १०६ )

शरीरं न स्थायि क्षयि विषय सङ्गीन्द्रियसुखम्
मनो जानन्नस्मिन्नपि मम ममत्वं घटयति ।
गभीरे संसारार्णवपयसि मग्न ममतया
हरे राम इत्यादि ।—

( १०७ )

हृषीकेश ! क्वासि प्रबलवलभीबीन्द्रियगवै
गृहीतं संदष्टं विषय विषदंष्ट्रैविरहितम् ।
अथैतस्योद्धारं कुरु सदय कालीयदमन !

हरे राम इत्यादि—

(१०८)

तपस्या वाक् दूरे ऽस्तु,स-सुचितनुश्चापिपतिता,
क्वसा भक्तिः प्रायः प्रतिदिनमभूत् संशयशतम् ।
असद्भाग्यग्रस्तं कुमतिपतितं पापिनमिमं

हरे राम इत्यादि—

(१०९)

गुरुर्मैं कारुण्यार्णव इवहि तापत्रययुतं
विपन्नं पश्यन् मां स्मृत सकल दुःख प्रहरणम्।
भवन्तं श्रीरामं दशरथसुतं स्मारयति मां

हरे राम इत्यादि—

(११०)

सीतारामासीमशक्तिर्भीमभङ्गभवार्णवात्
निस्तारयति पापिष्ठान् सर्व्वान् नामाश्रितान् जनान् ।

( २११ )

सीता रामेति नाम द्वयमपि चरमं तारकं तारकाणां

तारा सीतान्त वर्णादपि भवति तथा रामपूर्व्वाक्षराच्च ।

विष्णो रष्टाक्षरो वा शिव परम मनु स्तारको रामनाम-

वर्णाभ्यां नायनाय प्रभवति न शिवायेति ताभ्यां विना तौ ॥

( २१२ )

पावकं जगति तारकं तथा राम राम तव नाम केवलम् ।

व्यत्ययाक्षरजपान्न किं फलं दुष्टदस्यु रभवन् मुनिर्महान् ।

इति भट्टपल्लीवासि-वासिष्ठानन्दचन्द्रशिरोमणि विरचितं श्रीराम

स्तोत्रं समाप्तम् ओंतत् सत्

क्षुधा

क्षुधा-भोजनेच्छा । तत् कार्य्याणि यथा-व्याधयो निर्ज्जिताः सर्व्वे क्षुधयानृपसत्तम । कुण्डली मुकुटी स्रग्वी तथैवालङ्कृतोनरः । क्षुधार्त्तो न विराजेत मे तवक्तृषितो नृणाम् । स्त्रीरत्नं विविधान् भोगान् वस्त्राण्याभरणानि च नचेच्छति नरः किञ्चित् क्षुधयाकलुषी कृतः । यथा भूमिगतं तोयं रविरश्मिर्हि शुष्यति । शरीरस्थस्तथा धातुः शुष्यते जठराग्निना । न शृणोति नचाघ्राति चक्षुषा नच पश्यति । दह्यते वेपते मुढः शुष्यते च क्षुधार्द्दितः । मुकत्वं वधिरत्वञ्च जडान्धत्वन्तु पङ्गुतां । रौद्रम् मर्य्यादाहीनत्वम् क्षुधा सर्व्वं प्रवर्तते । भगिनीं जननीं पुत्रम् भार्य्यां दुहितरम् तथा भ्रातरम् स्वजनं वापि क्षुधाविष्टो न विन्दति ।

## ज्ञान प्रदायिनी पत्रिका।

यह मासिक पत्रिका ज्ञान प्रेस लाहौर से प्रति मासकेप्रारम्भ मे प्रकाशित होतीहै । २० पृष्ठका इसका कलेवर है परमूल्य साम्वत्सरिक महसूल सहित केवल १।) रक्खागयाहै । सब विद्या का कुछ २ यथा क्रम वर्णन, सामयिक वृत्तान्त, और उपकारी विषयों के प्रस्ताव तथा धर्म और समाजिक नीति प्रभृति इसमें प्रकटित हुआ करती है । जिन्हे ग्राहक होनेकी इच्छा होवे मेरे नाम पत्र भेजे ।

श्रीनवीनचन्द्र राय,

ओरियेण्टल कालेज,

लाहौर ।

श्रीः    Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्नम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



स्वस्तु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।

विद्योदयो निराकुर्य्या-दविद्यातिमिरं भुवि ॥

खण्डं १२ ]  डिसेम्बर १८८३  [ १२ सङ्ख्या

## सूची



कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# साहित्यदर्पणः।

## अलङ्कारपरिच्छेदः।

यद्यपि सरस्वतीकण्ठाभरणे छेक इति नाम न दृश्यते, तथापि तदुदाहृतेषु बहुषु वर्णवृत्त्युदाहरणेषु चास्य लक्ष्याणि दृश्यन्ते। अथवा छेकोक्ति वर्णानुप्रासो नाम, केवलं विदग्धप्रयोज्यत्वाच्छेक इत्यभिधां भजते। सरस्वतीकण्ठाभरणे वर्णानुप्रासलक्षणं यथा—

यथाव्यातकपुष्पादिः स्रगादौ वर्ण उच्यते।
वर्णावलिस्तथा वाचां वर्णानुप्रास उच्यते॥

तद्भेदास्तु—स्तबकवान्, स्थानी, गर्भः, निरन्तसंहतः, प्रतीतमुखः, क्रमवान्, विपर्ययः, संपुटं, मिथुनं, वेणिका, चित्री, विचित्रश्च। तत्र स्तबकानुप्रासोदाहरणं—

"यस्या वामीकमलकिमगिरेर्गुञ्जतां कुञ्जराणा-
माविश्यन्ते वनगजमदामोदधारायितानि।
दर्पात्फुल्लस्फुरणविकटाकाण्डकण्डूलगण्ड-
स्वैरक्रीडाकपक्षणितसरलाभोगकक्षस्थलस्थः॥"

अत्र यथा स्थाने स्थाने पुष्पविशेषा ग्रथितास्तथात्रापि स्थाने स्थाने वर्णविशेषा इति स्तबकवान्।

नियतविवक्षितस्थानविशेषः स्थानी, यथा—

"भालि मालियमुखे न भवति गगनव्यापिनी नीरदाली
किं त्वं पक्ष्मान्तरालैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः।
एषा प्रोद्गतमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योमलग्ना मलिनयति दिशां मण्डलं धूमलेखा॥"

अत्र पादप्रथमद्विभागस्थानेषु नियमेनावृत्तिः।

आद्यन्तवर्णान्तरावृत्तिर्गर्भः। यथा—

"वाल्यं कपालमालाढ्यमेकमम्बकमुद्वहन्।
वन्दे वरदमीशानं शासनं पुष्पधन्वनः॥"

क्रमेण द्विशाखा विषमरूपाणां वर्णानामन्योन्यस्वराणामावृत्तिः क्रमवान्। यथा—

"नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोक्षमग्नौ॥"

अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा ।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ ४ ।

एकधा स्वरूपत एव न तु क्रमतोऽपि । अनेकधा स्वरूपतः क्रमतश्च । सकृदपीत्यपिशब्दादसकृदपि । उदाहरणं

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमा-समागम-रसोल्लासैरमी वासराः ॥"

अत्र रसोल्लासैरमी इति रसयोरेकधैव साम्यं न तु तेनैव क्रमेणापि । द्वितीये पादे तु कलयो रसकृत् तेनैव क्रमेण च । प्रथमे एकस्य तकारस्य सकृत् धकारस्य चासकृत् ।

रसविषयव्यापारवती वर्णरचना वृत्तिस्तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृत्त्यनुप्रासः । १ ।

---

कालिदासस्य श्लोकाः प्रायश एतल्लक्षणानुगताः । एभ्योऽन्येषु वर्णानुप्रासभेदेषु न छेकानुप्रासचिह्नं सम्यक् दृश्यते । विश्वतसंहते तु किञ्चिद् दृश्यत एव । यथा—

"न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान् ।
म्लानापि न म्लायति केसरस्रग् देवो न खण्डप्रणया कथञ्चित् ॥"

(१) अनेकस्य (व्यञ्जनसङ्घस्य), एकधा (स्वरूपत एव) साम्यं (पुनरावृत्तिः, यथा रसोल्लासैर इत्यादिरूपेण) न तु क्रमतोऽपि (रसौ रसौ इत्यादिरूपेण) तथा अनेकस्य (व्यञ्जनसङ्घस्य) असकृत् (बहुवारं) अनेकधा (स्वरूपतः क्रमतश्च 'रस रस रस' इत्यादिरूपेण) साम्यं (पुनरावृत्तिः) अपि चैकस्य व्यञ्जनस्य सकृदसकृद्वा साम्यं (पुनरावृत्तिः) वृत्त्यनुप्रासः, अनेकव्यञ्जनानां एकवारं स्वरूपमात्रतः पुनरावृत्त्या वृत्त्यनुप्रासो भवति, तथा तेषां वारंवारं स्वरूपतः क्रमतश्च पुनरावृत्त्या वृत्त्यनुप्रासो भवति, प्रथमेकस्य व्यञ्जनस्य

एकवारं बहुवारं वा पुनरावृत्त्या वृत्त्यनुप्रासो भवति। केचित्तु एकस्यैव सकृदसकृत्, अनेकस्य त्वसकृत् साम्यं वृत्त्यनुप्रास इति वदन्ति, अन्ये तु "एकस्य सकृत्साम्यं न चमत्कारजनकमिति नास्यानुप्रासत्वमिति 'एकस्याप्यसकृत् परः' इति काव्यप्रकाशीय-वृत्त्यनुप्रासलक्षणस्य यथाश्रुतमर्थं (एकस्य अनेकस्य च द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रास इति)" बहु मन्यन्ते, तत् न ग्रन्थकारलेखतः समायाति।

उदाहरणम्—अमी उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकली-कलकलैरुद्गीर्णकर्णज्वरा वासरा ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैः पथिकैः कथं कथमपि नीयन्ते। काकलीकलकलैः,=सूक्ष्ममधुरशब्दप्राचुर्यैः, ध्यानावधानक्षणः= चिन्ताप्रवृत्तिसमयः, कथं कथमपि=महता कष्टेन, नीयन्ते=याप्यन्ते। अवशमन्यत्।

काव्यप्रकाशमते उपनागरिका, परुषा, कोमला चेति त्रिविधा वृत्तिः, तत्र माधुर्य-व्यञ्जकैर्वर्णैरुपनागरिका, ओजःप्रकाशकैः परुषा, अवशिष्टैः (मिश्रकैः) कोमला, एताश्च उपनागरिकादयो दर्पणकारमते क्रमेण वैदर्भी-गौडी-पाञ्चालाख्या रीतयः।

अलङ्कारसर्वस्वमते वृत्त्यनुप्रासलक्षणं यथा "अन्यथा वृत्त्यनुप्रासः। अन्यथा छेकानु-प्रासभिन्नं, तथाहि केवलव्यञ्जनसादृश्यम्, एकधा समुदायसादृश्यं, पदादीनां परस्पर-सादृश्यमिति। एतन्मतेऽपि परुषकोमलमध्यमवर्णारब्धत्वात्त्रिविधैव वृत्तिः। दिङ्मात्र-मुदाह्रियते

> "सद्यः पन्नगपुङ्गवानलशिखा नाराचपाणीऽपि वा
>
> राकेन्दोः किरणा विषद्रवमुचो वर्षासु वा वायवः।
>
> न लताः सरलाः सितासितरुचः साचीकृताः कालकाः
>
> साकूताः समदाः कुरङ्गकदृशो मानानुविद्धा इव॥"

सरस्वतीकण्ठाभरणे वृत्त्यनुप्रासलक्षणं यथा—

> "सुकुमारवर्णमानेषु यः स्ववर्गेषु वर्तते।
>
> काव्यव्यापी न सन्दर्भो वृत्तिरित्यभिधीयते"॥

सा च द्वादशधा—कार्णाटी (१), कौन्तली (२), कौङ्गी (३), कौङ्कणी (४), वानवासिका (५), द्राविडी (६), माथुरी (७), मात्सी (८), मागधी (९), ताम्र-लिप्तिका (१०), औण्ड्री (११), पौण्ड्री (१२)। अथैतासां क्रमेण लक्ष्योदाहरणानि यथा—

तत्र—कवर्गानुप्रासवती कार्णाटी यथा

"कान्ते कुटिलमालोक्य कर्णकण्डूयनेन किम् ।
कामं कथय कृत्यापि किङ्करः करवाणि किम् ॥"

चवर्गानुप्रासवती कौन्तली यथा—

"ज्वलज्जटिलदीपार्चिश्छत्रमोचयचारवः ।
चम्पकेषु चकोराक्षि चञ्चरीकाश्चकासति ॥"

टवर्गानुप्रासवती कौङ्की यथा—

"कुम्भकूटाट्टकूटाककुटिलोत्कटपाविकट् ।
हरिः करटिपिंटेन न दृष्टुमपि चेष्टते ॥"

तवर्गानुप्रासवती कौङ्कणी यथा—

"मधुर्मधूनि गान्धर्व्वमन्दिरे मदिरेक्षणा ।
इन्दुरिन्दीवरं दाम काममानन्दयन्ति नः ॥"

पवर्गानुप्रासवती वानवासिका यथा—

"प्रिया प्रगल्भा ताम्बूलं परिबृतफुल्लसुत्पलम् ।
पुष्पत्काः पञ्चबाणस्य पञ्चमः पञ्चमध्वनिः ॥"

अन्तःस्थानुप्रासवती द्राविड़ी यथा—

"प्रियालवल्लीतालतमालैलावनावली ।
भाति पल्लवहिन्तालहतपुञ्जा वधूरिव ॥"

उष्मानुप्रासवती माथुरी यथा—

"पुष्णती पुष्पधनुषं मुष्णती मीनविभ्रमः ।
निषन्ती निर्निमेषेण चक्षुषा मानुषी न सा ॥"

विविधवर्गानुप्रासवती मात्सी यथा—

"कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥"

द्वाभ्यां त्रिभिश्चैकवर्ग्यां मागधी यथा—

"अद्योर्ध्वं नो नृसिंहस्य घनाघनघनध्वनिः ।
श्वभ्रादुद्धरघाघोरः सुदीर्घो घोरघर्घरः ॥"

# मिश्रजातीय-जातीयवस्तुप्रदर्शनी ।*

डिसेम्बरमासस्य चतुर्थदिवसे कलिकातानगर्य्यां जुबार्टनामक-महोदयस्य प्रयत्नेनेयं महती मिश्रजातीय-वस्तुप्रदर्शनी साधारण-नयनानन्दसन्दोहार्थं प्रतिष्ठिता। प्रतिष्ठासमये हि तत्र भारतीय-राजपुरुषप्रधानः श्रीमान् लर्डरिपन् महोदयः राजकुमारः डुक अव कनाट इति प्रख्यातनामा अपरे च देशीया विदेशीया महान्तः समाजमूर्द्धन्याजनाः समवेता आसन्। लर्डरिपन्महोदये-नास्याः प्रतिष्ठा कृता। परन्तद्दिवसे वर्षापातजनितदैवदुर्गत्या महोत्सवस्य महान् विघ्नः संवृत्तः।

अस्यां महत्यां प्रदर्शन्यां भूमण्डलस्य नानादिग्देशेभ्यो महार्घाणि रमणीयानि च नैसर्गिककृत्रिमद्रव्यजातानि समा-हृतानि, परमनैपुण्येन सज्जीकृतानि, दर्शकवृन्दानां मनांसि बलादिवाकर्षन्ति। अस्याश्चारुत्वमलौकिकमेव, न तद्वर्णनाया-मस्माकं सामर्थ्यं विद्यते। महाकविना श्रीहर्षेण नेत्रगोचरीभूतं नलमवलोक्य दमयन्त्या अवस्था इत्थं वर्णिता—

* बहुषु देशीयसंवादपत्रेषु "International Exhibition" इत्यस्य परिभि-शब्दस्य 'अन्तर्जातीयप्रदर्शनी' इत्यनुवादः कृतः। अयं हि न तथानुवादः समीचीनः? पश्यामः। यतोऽन्तर्जातीयशब्दस्य मध्यजातीय इत्येव सार्वत्रिकोऽर्थो न तु नानाजातीय इति।

"तत्रैव मग्ना यदपश्यदस्य
नास्या दृगस्याङ्गमथास्वदन्यत् ।
नादादमुष्यै यदि बुद्धिधारां
विच्छिद्य विच्छिद्य चिरान्निमेषः ॥
दृशापि सालिङ्गितमङ्गमस्य
जग्राह नाग्रावगताङ्गहर्षैः ।
अङ्गान्तरेऽनन्तरमीक्षिते तु
निवृत्य सस्मार न पूर्वदृष्टम् ॥
हित्वैकमस्यापघनं विशन्ती
तद्दृष्टिरङ्गान्तरभङ्गिसीमां ।
चिरं चकारोभयलाभलोभात्
स्वभावलोला गतमागतञ्च ॥
निरीक्षितञ्चाङ्गमवीक्षितञ्च
दृशा पिवन्ती रभसेन तस्य ।
समानमानन्दमियं दधाना
विवेद भेदं न विदर्भसुभ्रूः ॥

वयमपि प्रदर्शनीदर्शकस्यैवमवस्था भवतीति कथयामः । यदि निमेषो विच्छिद्य विच्छिद्य चिराद्बुद्धिधारां न दद्यात् तदा तस्य दृक् प्रथमं यत्पश्यति तत्रैव मग्ना वस्त्वन्तरं न यायात् । अपिच दर्शकः पूर्वप्रेक्षितवस्तुजनितमोदभरैरालिङ्गितान्यपि वस्तूनि न गृह्णाति, यदा तु स वस्त्वन्तरं पश्यति तदा पूर्वदृष्टं

न स्मरति। एवञ्च दर्शकस्य इत्येकं वस्तु विहाय वस्त्वन्तर-भक्तिमीमां विशन्ती उभयलाभलोभाच्चिरं गतमागतञ्च करोति। तथा दर्शको निरीक्षितमवीक्षितञ्च वस्तु दृशा पिबन् समान-मानन्दं दधानस्तयोरन्तरं न वेत्ति। एतद्धि स्वरूपवर्णनमेव, नचात्र काव्यतिशयोक्तिर्विद्यत इति पाठकेषु प्रदर्शनीदर्शकैरवश्यं स्वीकृतं भविष्यति। येषान्नामैषा प्रदर्शनी न दृग्गोचरीभूता, तेषां जन्म वृथैवेति तर्कयामो यत ईदृङ्नयनानन्दकरी प्रदर्शनी न कदापि भारते भूता, कदाचिदपि भविष्यति न वेत्यनिश्चित-मेव। अत्राहृतस्यैकस्यापि वस्तुनः स्वरूपवर्णनैर्विद्योदयस्य बहवः संख्या निःशेषिता भवेयुः। अत्र कृत्रिमेषु फलमूलजीवादिषु स्वाभाविकत्वभ्रमः समुदेति, प्राकृतेषु च कृत्रिमत्वभ्रमः। किं बहुना तत्र शिल्पनैपुण्यस्य परमोत्कर्षः प्राकृतोत्कर्षेण बद्धस्पर्द्ध इव विराजते। क्वचिच्च प्राकृतोत्कर्षमुपहसन्निव स्थितः। क्वचिद्बहु-विधचित्रपटानां निचयाः कुड्यशोभां वर्द्धयन्ति, प्रकाशयन्ति च तत्कार्य्येषु निर्मातॄणामनन्यसाधारणनैपुण्यं। क्वचिद्रत्नानां राशयः नीलपीतरक्तादिप्रभया गृहमध्यं कर्व्वुरयन्ति, क्वचिद्बहुविधानि विविधदेशजातानि वस्त्राणि, क्वचिन्नानारूपाणि सुवर्णहीरकादि-विनिर्म्मिताद्भुतभूषणानि, क्वचित् कृत्रिमपुत्तलिकाः, क्वचित् शस्त्राणि, क्वचित् पात्राणि, क्वचित् वाद्यजातानि, एवमनेकविधा-न्यसंख्यानि वस्तूनि स्थाने स्थाने राशीकृतानि स्थितानि, तेषां सर्व्वेषां नामोल्लेखोऽप्यसम्भव एव, वर्णनस्य तु कथैव नास्तीति

तत्कार्य्यात् प्रतिनिवृत्ता वयं पाठकान् सम्भावितवृत्तान् वार-
मेकमेतद्दर्शनार्थमनुरुन्ध्मः । असम्भावितवृत्तास्तु कल्पनया
जगतीतलस्थितानि रत्नवस्तुजातान्येकत्र समाहृत्य मनसैव
दर्शनकौतूहलमनुभवन्तु इत्यलं ।

---

## यूरोपीयसंस्कृतविद्या ।

(पूर्व्वप्रकाशितानन्तरम्)

"अध्यापक मूलर महोदयेन स्वकृतप्राचीनसाहित्यविषयक-
प्रस्तावेऽन्यविधा अपि ऋग्वेदमन्त्राः प्रदर्शिताः, ये खलु यज्ञकर्म्मसु
न किमप्युपयोगित्वमावहन्ति । (See Muller's Ancient Sanskrit
Literature, page 495, एवं ऋग्वेदीय-सप्तममण्डलान्तर्गत-तृती-
यानुवाकञ्च पश्य) ।

ऋग्वेदस्यान्तिममण्डले कश्चिन्मन्त्रो विद्यते यत्र कस्यचिद्द्यूत-
कारस्य स्वपापकर्म्मणोऽर्थेऽनुतापस्तत्परित्यागाय प्रयत्नश्च वर्णितः ।
एतेऽन्ये चैवंविधामन्त्रा इन्द्रादिभूताधिष्ठातृदेवतास्तवाभिधायकेभ्यो
यज्ञकर्म्मसु व्यवहृतेभ्यश्च मन्त्रेभ्यो भिन्नप्रकाराएव ।

ऋग्वेदो नाम प्रथमं न यज्ञकर्म्मनिर्व्वाहार्थमाविर्भूतइत्येतत्-
प्रमाणार्थमन्यदपि प्रमाणमस्ति । यदा सङ्गीतानि साधारण-
स्तवोपासनादिकार्य्यार्थं निर्म्मितानि भवन्ति, तदा तेषां यत्प्रयो-

जनाय निर्माणं तत्सिद्धो व्यवहारः स्वतःसिद्ध एव ; परं यदा तान्यात्मनः प्रेमप्रवाहत उद्गतानि, कवित्वप्रतया वा विकशितानि भवन्ति, तदा समयवशाद्धर्मकार्य्येषु बलादावद्धतान्यपि न कदाचि, दपि तत्र तत्र प्रकृतोपयोगित्वमर्हन्ति । यजुःसाममन्त्राणां संग्रहश्चैव तत्तद्धर्मकार्य्येषु प्रकृतोपयोगित्वं दृश्यते ; ऋग्वेदसंहिताया मन्त्राणान्तु तद्वैपरीत्यमेव ।

गूढतात्पर्य्यार्थकान् अन्तिमाध्यायस्य मन्त्रान् विहाय यजुर्वेदस्यापरेषामध्यायानां मन्त्रास्तत्तद्विशेषयज्ञानुष्ठानकार्य्येषु संविभक्ताः यदर्थं तेषां प्रथमोच्चारो जातः । सामवेदसंहितामन्त्रास्तु यज्ञसामान्येषु विशेषतः सोमयज्ञेषु समुद्गीतये उपन्यस्ता एव लक्ष्यन्ते । ऋग्वेदसंहितामन्त्राणामुपन्यासस्तु सम्यग्भिन्नरूप एव, तत्र न कश्चित् यज्ञानुष्ठाननियमो दृश्यते, ऋग्वेदसंहितामन्त्राणां विन्यासे न कस्यचिदपि यज्ञकर्म्मणः सम्बन्धो दृश्यते । ते हि मन्त्राः स्वाभिधेयदेवतानामानुसारतः स्वप्रकाशक-ऋषीणां नामानुसारतश्च विन्यस्ताः क्वचिदेकदेवताविषयकमन्त्रसमष्टिर्दृश्यते, क्वचिदेकऋषिप्रकाशितमन्त्राणां समष्टिरिति भावः । इत्थं नाम यद्यद्धर्मकार्य्यसम्पादनाय यजुःसामसंहितामन्त्राणां सृष्टिः, तत्तद्धर्मकार्य्यप्रवृत्तेः पूर्व्वमेव ऋग्वेदसंहितायाः स्थितिरासीदिति सिद्धमेव ।

सामान्यतश्चतुर्णां वेदानां स्वभावमुक्त्वा साम्प्रतं तेषां विशेषस्वभावं तथा तेभ्यः प्रादुर्भूतानि पुस्तकानि च समालिख्यन्ते ।

साम्प्रतं ऋग्वेदोऽतिप्रसिद्धः प्रधानं प्रथमश्च वेदः शाकल-

शाखानुगतएव लभ्यते। अस्य संहिता मन्त्रसमूहो वा द्विविधया रीत्या संगृहीतः। तत्र प्रथमा संग्रहरीतिः स्वाभिधेयदेवताद्यनुसारिणी, द्वितीया च मन्त्रनिर्म्मातॄणां नामानुसारिणी। उभया हि रीतिः परस्परमेकत्र समाश्रित्य संहिताया अवयवीभूतमन्त्रस्वरूपसंख्यादावविभिन्नरूपैव स्थिता। प्रथमरीत्यनुसारतः संहिताष्टसु अष्टकेषु विभक्ता, अष्टकानि च प्रत्येकमध्यायेषु विभक्तानि, अध्यायास्तु वर्गेषु, वर्गाश्च प्रत्येकं पञ्चसु ऋक्षु विभक्ताः। द्वितीयरीत्यनुसारतः संहिता नाम दशसु मण्डलेषु विभक्ता, मण्डलानि प्रत्येकं पञ्चाशीत्यनुवाकेषु, एकैकमनुवाकमष्टाविंशत्यधिकसहस्रसूक्तानि विभर्त्ति। सूक्तानि अशीत्यधिकपञ्चशतान्वितदशसहस्रश्लोका ऋग्रूपाणि। मण्डलानां प्रथमाष्टकं अग्निदेवताविषयकमन्त्रैः समारब्धं, ये च मन्त्रा इन्द्रदेवताविषयकैर्मन्त्रैरनुगताः। ततश्च प्रायो विश्वदेवविषयकमन्त्रा दृश्यन्ते, ततःपरमपरदेवताविषयकाः। नवममण्डलं हि सोमलताविषयकैर्मन्त्रैः सम्पूर्णं। अस्य च सामवेदसंहितया विशेषसंबन्धो दृश्यते। दशममण्डलन्त्वथर्व्ववेदमन्त्रसंग्रहप्रधानोपादानभूतमित्यनुमीयते। द्वितीयमण्डलस्य ऋषिर्निर्म्माता वा गृत्समदनामा, तृतीयस्य विश्वामित्रः, चतुर्थस्य वामदेवः, पञ्चमस्य अत्रिः, षष्ठस्य भरद्वाजः, सप्तमस्य वशिष्ठः, अष्टमस्य कण्वः, नवमस्य त्वङ्गिराः। प्रथमदशमयोर्निर्म्मातारो बहवो दृश्यन्ते।

[सप्तमः।

# विनयपीठकम् ।

## (बौद्धशास्त्रम्)

(पूर्व्वप्रकाशितानन्तरम्)

"प्रादुर्भवन्मगधेषु पूर्व्वस्मां धर्म्मोऽशुद्धः समलो हि चिन्तितः । अपावुरेतममृतस्य द्वारं, शृण्वन्तु धर्म्मं विमलेनानुबुद्धम् । शैलो यथा पर्व्वतमूर्ध्नि स्थितो यथापि पार्श्वे जनता समन्तात्, तथोपमं धर्म्ममयं सुमेधाः प्रासादमारुह्य समन्तचक्षुः शोकावतीर्णाञ्जनतामपेतशोकोऽवैक्षत जातिज्वराभिभूताम् । उत्तिष्ठ वीर विजितसंग्राम, सार्थवाह अनृणविचार, लोके दिशतु धर्म्मं, अन्यतरे भविष्यन्तीति (७) ।

एवमुक्तो भगवान् ब्रह्माणं सहाम्पतिमेतदवोचत् । मह्यं खलु ब्रह्मन्नेतदभवत् । अधिगतः खलु मयायं धर्म्मो गम्भीरो दुर्धर्षो दुरनुबोधः । स मामस्य विहिनस्ति । अपि स्वमे ब्रह्मन् इमा अनाश्चर्य्या गाथाः प्रतिभासु पूर्व्वं मेऽश्रुतपूर्व्वा अश्रुत्वा इति च मे ब्रह्मन् प्रतिसङ्ख्यानस्याल्पौत्सुक्यतया चित्तं नमति नो धर्म्मदेशनायेति (८) ।

[ क्रमशः ।

## पत्रप्रेरकान् प्रति ।

साम्प्रतमस्मद्धस्तगतानि द्वित्राणि संस्कृतकवितायुक्तानि पत्राणि सन्ति । परं विद्योदयस्याल्पावयवत्वान्न तानि प्रकाशयितुम् अवकाशो भवति । विशेषतः कलिकातास्थितपत्रप्रेरकस्य कविता दोषवहुला, विशेषशोधनमन्तरेण न तां प्रकटयितुमुत्सहामहे ।

## प्राप्तपत्रम् ।

---

प्रार्थनाष्टकम् ।

(१)

गर्भक्लेशमवाप्य दुःसहतमं स्वप्राणनाशक्षमं
भूमिष्ठं वत मां निरीक्ष्य सहसा सर्व्वं विसस्मार या ।
मत्तः पूर्व्वकृतां कथामिव तथा सुप्तोत्थितः स्वप्नवत्
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(२)

या मां स्तन्यरसैरसृक्पिशितयोः पिण्डं पुपोषार्भकं
यस्याः स्नेहरसोऽमृतं चितितले मूर्त्तानुकम्पा च या ।
मत्प्रस्रावपुरीषपूयवमथुक्लिन्नापि या निर्घृणा
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(३)

मदङ्कं मुकुरीयते स्म खलु या स्वं हास्यपूर्णं यथा
दीनो रत्नमिवान्यपाणिनिक्षितं निष्टं यथा वा शिशुः ।
दृष्टा या हसति क्षितौ लुठति च क्लिष्टा रुदत्याकुला
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(४)

या मामङ्कतले निधाय विदधौ सर्वं कृतं जागरे
निद्रायामुरसि, स्पृहा बलवती सर्वं यदीया नु मे ।
मामेति श्रुतिमात्रतो मम मुखाम्बा सुधासागरे
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(५)

या देवी नयनान्तरालपतिते दृक्पातमात्रं मयि
सर्वं शून्यमवेक्ष्य वेगविगलद्बाष्पाम्बुलान्यापतन् ।
विश्वेषां स्थितिकारिणो भगवतस्तन्मायया मोहिता
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(६)

कः प्रेमाणमधाद् गुणग्रहणजं गर्भस्थमात्रे मयि
कैषा वा बहुसंस्कृतेः फलमसंस्कारस्य पत्नी सदा ।
याप्येवं समये स्वपोषकरसैः पुष्टिं स्थितिञ्च व्यधात्
सा माता ममतामयी मयि सदा कारुण्यमालम्बतां ॥

(৭)

অস্মিন্ স্বার্থপরপ্রতারকবৃতে সংসারমার্গে বয়ং
পান্থা দুঃখমরীচিশুষ্কহৃদয়াঃ ক্ষুৎক্ষামকণ্ঠা নরাঃ।
তেষাং নঃ শরণং প্রপামৃতময়ী যা নির্মিতা বেধসা
সা মাতা মমতাময়ী ময়ি সদা কারুণ্যমালম্বতাং॥

(৮)

অন্নং ধান্যচয়ৈর্বসূনি খনিভিঃ স্বোদ্ভূতবৃক্ষৈঃ ফলং
স্বাদু স্বাদুতমাচ্ছশীতলজলং স্বস্থৈস্তড়াগাদিভিঃ।
দত্ত্বা যা ধরণী বভার সকলান্ তস্যা অপি শ্রেয়সী
সা মাতা মমতাময়ী ময়ি সদা কারুণ্যমালম্বতাং॥

(৯)

অপদদাবুরসো রুধিরাণি যা
সুরপদেষু গতে সমুপস্থিতে।
সমুদপাদি যদীয়মুদশ্রুভিঃ
মম সুখে জননীং প্রণতোঽস্মি তাং॥

শ্রীরামকৃষ্ণ-শর্ম্মণঃ।

ओं Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।

विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२ ] अक्टूबर १८८३ [ १० सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस्य लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# विज्ञापनम् ।

प्राकृतव्याकरणमिङ्गलण्डीयानुवादसहितं मुद्रितमभूत् ।

मूल्यं १।।।)

(लाहौर-संस्कृतपुस्तकालयाध्यक्ष-लालामेहरचन्दसमीपे प्राप्तव्यं, ग्रहणेच्छुभिस्तन्निवेदनं कार्य्यम् ।)

---

## विशेषद्रष्टव्यम् ।

सम्प्रति २४-परगणान्तर्गत-नैहाटी-समीपस्थ-भट्टपल्ली-ग्रामाद्विद्योदयः प्रकाशते, इतःपरं पत्रादिकं भट्टपल्ल्यां सम्पादकसमीपे प्रेषणीयम् ।

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

,, पश्चाद्देयं ... ... ... ३।/०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः /० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

संस्कृतश्रुतबोधः (छन्दोग्रन्थः) मूल्यं २ आने

(कलिकाता गिरिश विद्यारत्न-यन्त्रे प्राप्तव्यः)

হিন্দীব্যাকরণ (বাঙ্গালীদিগের হিন্দী শিক্ষা করিবার প্রধান উপযোগী)

(কলিকাতা ক্যানিং লাইব্রেরিতে প্রাপ্য) মূল্য ||০ আনা।

ডাকমাশুল ৵০

---

# साहित्यदर्पणः ।

## अलङ्कार-परिच्छेदः ।

---

अथावसरप्राप्तानलङ्कारानाह

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ १ ।

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारका ये तेऽलङ्काराः । अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः । १ ।

---

१। ननु "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इति स्वयमुक्तवती गुणनिरूपणानन्तरमलङ्काराणां निरूपणमुचितमासीत् । प्रकृते तु तत्क्रममुल्लङ्घ्य प्रथमं रीतिर्निरूपिता, ततोऽलङ्कारानत् कथमुक्तमवसरप्राप्तानलङ्कारानित्यत आह अवसरो नाम प्रतिबन्धकीभूत जिज्ञासान्तराभावनिवृत्तिः । स चात्र सूचीकटाहन्यायेन बोध्यः; * प्रथमं स्वल्पविषयाया रीतिनिरूपणं विधाय तद्विषयिणीं जिज्ञासां निराकृत्य बहुविषयाणामलङ्काराणां निरूपणेन तद्विषयकजिज्ञासानिवृत्तिः क्रियत इति भावः ।

---

* सूचीकटाहन्यायस्तु यथा कश्चित् कर्मकारो बहुकालसाध्यकटाहं निर्मापयन् कश्चिदपि यदि केनापि सूचीं निर्मातुमुच्यते, तदा स्वल्पकालसाध्यत्वात् सूचीं प्रथमं तामेव निर्माति ततः कटाहमिति ।

शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह—

---

अलङ्कारस्य सामान्यलक्षणमाह शब्दार्थयोरिति। शरीरस्याङ्गदादय इव ये शब्दार्थयोरस्थिराः शोभातिशायिनः शरीरिण इव रसादीनामुपकारका धर्मास्तेऽलङ्काराः। अस्थिराः=अनियताः, एतेन निरलङ्कारमपि काव्यमस्तीति सूचितं; धर्माः=अनुप्रासोपमादयः; शोभातिशायिनः=वैचित्र्यातिशयप्रयोजकाः, तेन वाच्यत्वप्रकर्षत्वादीनां शब्दधर्मत्वेऽप्यतद्रूपत्वान्नालङ्कारता। नीरसशब्दार्थयोरनुप्रासोपमादीनामलङ्कारत्वव्यवच्छेदायाह रसादीनिति, आदिना भावादीनां परिग्रहः, उपकुर्वन्तः उत्कर्षयन्तस्तेन "तरङ्गनिकरोन्नीततरणीगणसङ्कुला। सरिद्वहति कल्लोलवाह्यव्याहततीरभूः॥" इत्यादौ रसानुसन्धानरहिते यद्रूपकानुप्रासयोरलङ्कारव्यवहारः स गौण एव। लौकिकदृष्टान्तमाहाङ्गदादिवदिति। आदिना कुण्डलादिपरिग्रहः। यथेति—यथा अङ्गदादयः शरीरिणम् आत्मानम् उपकुर्वन्ति उत्कृष्टतया भावयन्ति तथा येऽनुप्रासादयो रसादेरुपकारकास्तेऽलङ्काराः। गुणानामपि काव्यशोभाजनकत्वेनालङ्कारत्वप्रसक्तौ तद्वारणाय अस्थिरा इत्युक्तम्। गुणास्तु नित्यधर्मा अलङ्कारास्त्वनित्या इति भावः।

वामनेनालङ्कारशब्दोऽयं भावव्युत्पत्त्या करणव्युत्पत्त्या च साधितः। तत्र भावव्युत्पत्तिलब्धस्य शब्दस्यास्य सौन्दर्यमात्रमर्थः, करणव्युत्पत्तिलब्धस्य तूपमादिरूपोऽर्थः।

वाग्भटालङ्कारेऽलङ्कारस्य सामान्यलक्षणं यथा। "दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः। स्त्रीरूपमिव नो भाति तं ब्रुवेऽलङ्क्रियोच्चयम्॥"

कुवलयानन्दटीकायां चन्द्रिकायामलङ्कारलक्षणं यथा "अलङ्कारत्वं च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वं"।

मम्मटेनालङ्कारस्य सामान्यलक्षणमित्थमुक्तं "उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्। हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥" *

एवं सर्वैरेवालङ्कारग्रन्थेष्वलङ्कारस्य सामान्यलक्षणं प्राय एकरूपमेव वर्णितं।

---

* ये शब्दार्थरूपाङ्गद्वारेण मुख्यं रसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः इति।

आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।

पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥ २॥

उदाहरणं—"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।

जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः॥"

अत्र भुजङ्गकुण्डल्यादिशब्दानां आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्या प्रतिभासनं; पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम्। पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः, पायादित्यस्यापायादित्यत्र पर्य्यवसानात्। भुजङ्गकुण्डलीति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वं, हरः शिवः इति द्वितीयस्यैव,

---

१। "शब्दार्थयोरस्थिरा ये" इत्यलङ्कारस्य शब्दार्थधर्म्मत्वप्रतिपादिकायां कारिकायां शब्दस्य प्रथमोच्चारणात् प्रथमश्रोतुर्बुद्धिविषयत्वमतः शब्दालङ्काराणामपि प्रथममेव बुद्धिविषयतोचिता; अथवा शब्दप्रत्ययानन्तरमर्थबोधस्य सर्वानुभवसिद्धत्वात् शब्दस्य प्रथमं बुद्धिविषयत्वं ततः शब्दालङ्काराणां प्रथममेव वक्तव्यता सिद्धा तत् कथमत्र शुद्ध-शब्दालङ्कारान् परिहाय शब्दार्थोभयालङ्कारस्य मिश्ररूपस्य पुनरुक्तवदाभासस्य प्रथमं निर्देश इत्याशङ्क्याह "शब्दार्थयोरिति" (१मपृ०)। प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु प्रथमं वक्तव्येष्वपि यदत्र तान् विहाय शब्दार्थालङ्कारः पुनरुक्तवदाभासः प्रथममभिहितस्तत्र प्राचीनैरस्य शब्दालङ्कारमध्ये पठितत्वं शब्दालङ्कारान्तरमपेक्ष्य वैचित्र्यातिशयवत्त्वस्य हेतुत्वेन तत्रैव प्रथमं शिष्याणां जिज्ञासेति भावः।

पुनरुक्तवदाभासं लक्षयति आपातत इति—

यदर्थस्य—यदलङ्काराश्रितार्थस्य, आपाततः—तात्पर्य्यानवधारणदशायां पौनरुक्त्यतया प्रतीतिर्भवति न तु तात्पर्य्यावधारणानन्तरं, स एकार्थकत्वप्रतीयमानपृथग्रूप-शब्दद्वयनिष्ठालङ्कारः पुनरुक्तवदाभास इत्यभिधीयते। विभिन्नरूपयोर्ययोर्भिन्नार्थयोरपि

शशिशुभ्रांशु इति द्वयोरपि; "भाति सदानत्यागः" इत्यत्र न द्वयोरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालङ्कारत्वम् । २ ।

शब्दयोरापातत एकार्थतया प्रतीतिः पुनरुक्तवदाभास इत्यर्थः । अत्र भिन्नाकारशब्दगा इति विशेषणन्तु लाटानुप्रासवारणाय * इति केचित्तच्चिन्त्यम् ।

उदाहरणं—भुजङ्गेत्यादि । अत्र आपाततो भुजङ्गकुण्डलीत्येताभ्यां सर्परूपोऽर्थः, शशिशुभ्रांशुशीतगुरित्येताभ्यां चन्द्ररूपोऽर्थः, पायादव्यादित्येताभ्यामेक एव 'रक्षतु'रूपोऽर्थस्तथा हरः शिव इत्येताभ्यामेकश्च शिवरूपोऽर्थः प्रतीयते । अर्थावधारणदशायान्तु भुजङ्गरूपं कुण्डलं विद्यतेऽस्य स भुजङ्गकुण्डली, शिवस्य विशेषणमेतत्, शशिनश्चन्द्रमसः शुभ्रांशुभिः विशदकिरणैः शीतः शीतलो गौः प्रभा यस्य स चेतोहरः सुन्दरः शिवोऽपायादनिष्टात् अव्यात् रक्षतु इत्येवंरूपोऽर्थः प्रतीयते ।

"अलङ्काराः शब्दार्थयोर्धर्माः" इत्यनेन तेषां द्वैविध्यमुक्तमायाति शब्दार्थालङ्कारभेदात् । तत्र शब्दालङ्कारस्य लक्षणं—योऽलङ्कारो यस्मिन् कस्मिंश्चिदेकस्मिन् शब्दे सति तिष्ठति, तत्पर्यायान्तरशब्दोपादाने न तिष्ठति स शब्दालङ्कारः, अर्थालङ्कारस्तु तस्मिन् शब्दे तत्पर्यायान्तरोपादाने च तिष्ठति शब्दालङ्कारस्थले शब्दाः परिवृत्तिं ( परिवर्तनं — पर्यायान्तरोपादानं) न सहन्ते, अर्थालङ्कारस्थले तु शब्दाः परिवृत्तिं सहन्ते, इत्यनयोर्भेदः ।

एवं स्थिते यत्र तु कश्चित् शब्दः परिवृत्तिं सहते कश्चिन्न सहते तदुभयालङ्कारो भवितुमर्हति । पुनरुक्तवदाभासोदाहरणेष्वपि शब्दानां केषाञ्चित् परिवृत्तिसहत्वं केषाञ्च परिवृत्त्यसहत्वमस्तीत्यस्योभयालङ्कारतायां स्थितायामपि केवलं चिरन्तनपद्धत्यनुसारतः शब्दालङ्कारमध्ये गणितोऽयं । इत्युक्तमेवास्यानन्तरकारिकायां, अस्योभयालङ्कारतां साधयति 'भुजङ्गकुण्डलीति' भुजङ्गकुण्डलीति शब्दयोः प्रथमस्यैव(भुजङ्ग इत्यस्यैव)परिवृत्तिसहत्वं पर्यायशब्दोपादानेऽपि प्रकृतोपयोगित्वं । सर्पकुण्डली, भुजगकुण्डलीत्याद्यनेक-

* लाटानुप्रासलक्षणन्तु "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः" । तात्पर्यमात्रतः अन्वयमात्रतो भेदे शब्दार्थयोः पौनरुक्त्यं लाटानुप्रासः, भिन्नान्वयपराणां समानानुपूर्वीकाणां तुल्यस्वरूपाणामेकार्थानां वर्णानाम् अव्यवधानेनावृत्तिर्लाटानुप्रासः इति फलितार्थः । अत्र तु न केवलं शब्दानां भिन्नरूपत्वं भिन्नार्थत्वमपि ।

## परिवर्त्तनम् ।

न केवलमस्य मनुष्यप्रधानस्य भूमण्डलस्य, सप्रपञ्चभूतनिचय-स्यास्य विश्वमण्डलस्यापि प्रतिक्षणमलौकिकं परिवर्त्तनं परि-दृश्यते। तच्च परिवर्त्तनं न केवलं "पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्" इत्येवंरूपं भौतिकमात्रं यावन्मनुजानामान्तरिक-मपि बाल्येऽस्माकं मनोवृत्तयो यादृश्य आसन्, यौवने ता अन्यरूपा एवाभवन्; साम्प्रतं क्रमशो वार्द्धक्यमुपसर्पतस्तस्मासु मनोवृत्तीनां गतिरप्यन्यादृशी भवति। दृश्यतान्तावदुयद्येकस्यैव मनुजस्य कालभेदेनैवमान्तरिकवृत्तीनां विवर्त्तनं, तदा भिन्नकालजातानां मनुजानां मनोवृत्त्या सहेदानीन्तनानां मनोवृत्तेः पार्थक्यन्नामा-वश्यम्भाव्येव। तथाहि पुरा प्राक्तनाचार्य्यैर्मनुजेन कीदृग्वर्त्तितव्य-मित्यत्रोपदिष्टम्—

> "मित्रं स्वच्छतया, रिपुं नयबलैर्लुब्धं धनैरीश्वरं
> कार्य्येण, द्विजमादरेण, युवतिं प्रेम्णा, समैर्बान्धवान्।
> अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
> विद्याभीरसिकं रसेन, सकलं शीलेन, कुर्य्याद्वशम्॥"

विचार्य्यतान्तावदेतद्वचनस्य कियन्तोऽंशाः साम्प्रतं ग्राह्या भवितुमर्हन्तीति।

१। "मित्रं स्वच्छतया (अकपटव्यवहारेण) वशं कुर्य्यात्" इत्ये-तत्प्राचीनवचनं किमिदानीं यथायथं गृहीतेऽभीष्टफलावगतिः सम्भवति? न, यतो वर्त्तमानसमये मैत्री तावन्नास्ति, वर्त्तमान-

मैत्री नाम केवलं स्वार्थसाधनमपेक्ष्य कदाचित् कस्मिंश्चिज्जायते। यावत् स्वार्थापेक्षा मैत्री च, तावदस्य स्वार्थसिद्धौ मैत्री दूरेऽस्तु वाङ्मात्रेणाभाषणमपि भवति न भवति वा। इदानीन्तनमित्रं हि तृणाच्छन्नः कूप इव वाह्यरमणीयतां प्रदर्श्य स्वार्थसिद्धं रूपाय-भूतं जनमाकृष्यात्मोदरे पातयति। प्राचीनैरेवं पयोमुख-विष-कुम्भरूपस्य मित्रस्य वर्णनमुपदिष्टं, साम्प्रतन्त्वादर्शतेषां वर्णनं मैत्री ह्येव कथाशेषा भवति—सहजमैत्राः प्रकृतोपकारिणश्च मित्रस्याभावात्। अतएवेदानीमस्वच्छतैव मित्रवशीकरणे उपायो न तु स्वच्छता।

२। "रिपुं नयबलेर्वशं कुर्यात्" इत्येतद्वचनन्तु राजविषय-कमेव। अस्मद्देशीयानां राजता सुचिरं विनष्टैव, तत्र यावत् राजपक्षेऽप्येतद्वचनस्य कीदृक्प्रसरोऽस्तीति, परमस्मद्देशे इङ्गलण्डीय-राजपुरुषैर्यावन्तो रिपवो वशीकृतास्तत्रानीतिरेव प्रधानोपाय-आसीदितीतिहासेभ्योऽवगम्यते।

३। "लुब्धं धनैर्वशं कुर्यात्" इत्येतद्वचनस्य कदाचिदपि प्रसर आसीन्नवेत्यत्रास्माकं महान् सन्देहः। यतो लुब्धानां शास्त्रकारैश्छिद्रसहस्रपरीतेन घटेन सहोपमितिः प्रदत्ता; यथाहि छिद्रसहस्रसङ्कुलो घटः समुद्रापर्णेनापि न पूर्णत्वमा-प्नोति तथा कुवेरसम्पत्तिप्रदानेऽपि न लुब्धानां परितृप्तिर्भवति, अतृप्तौ च कुतो वशित्वम्। लुब्धा हि धनप्राप्त्याशया वाङ्मात्रेणैव धनिनमनुरञ्जयन्ति, न कदाप्यस्य वशीभवन्ति।

४। "ईश्वरं (स्वामिनं) कार्य्येण (स्वकर्त्तव्यसम्पादनेन) वशं कुर्य्यात्" एतद्वचनस्यापीदानीं कियत् सत्यत्वमस्तीति न विभाव्यते, परं बहवो हि वर्त्तमानराजकार्य्यालयनियुक्ता भारतीयाः स्वकर्त्तव्यातिरिक्तसाधनेनापि प्रभूणामनुकम्पामलभमाना नियतं रोदनपरा दृश्यन्ते।

५। "द्विजं (ब्राह्मणं) आदरेण (सम्मानेन) वशं कुर्य्यात्" एतदपीदानीं न सम्भवति। प्रथमतः शास्त्रोक्तगुणवतां ब्राह्मणानामभावः। कश्चित्तादृग्ब्राह्मणभावेऽपि नेत्यमर्थापेक्षिणि समये केवलमादरेण तेषां वशीभावः सम्भवति।

६। "युवतिं प्रेम्णा" वचनमिदमिदानीं सर्व्वथा कविकल्पितमिव प्रतिभाति। न जाने वचनस्यास्य कदाचिदपि सत्यतासीन्नवेति। आसीचेत् रामसीतादिभिः सह सा विलुप्तैव। साम्प्रतं तावत् हृदयाकर्षणकारि प्रेमैव नास्ति, कश्चित्तथाविधप्रेमसत्त्वे वा न तेन युवतिर्वशतामेति। इदानीं वस्त्रालङ्करादीन्येव युवतिवशीकरणे प्रधानसाधनानि, न तु प्रेम।

७। "अन्यं स्तुतिभिः" एतद्वचनस्य सत्यता तु "शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः" इत्येवं श्लोकयतः कालिदासस्य समयादेव विलुप्ता। स्तुतिभिर्दुर्ज्जनस्य दौर्ज्जन्यं वर्द्धते। इच्छति च दुर्ज्जनः सदैव विनयं प्रति मद्दविनयमाचरतीति। दुर्ज्जनोपशमनं प्रति यष्टिः (लट्ठी) एवौषधं, न तु स्तुतिः।

८। "गुरुं प्रणतिभिः" इत्येतस्य याथार्थ्यन्तु विनादि-

प्राप्ति "माता निन्दति चातिनिन्दति पिता" इत्यादिसामयिक-पण्डितवचनैः पूर्व्वमेव खण्डितम्। साम्प्रतं केवला प्रणतिर्हि गुरुजनसन्निधौ शुष्कभक्तिं प्रकाशयति। अर्थं प्राप्य गुरवो मह-दपमानं सहन्ते, विनार्थं त्रिसन्ध्याप्रणाममपि तं भक्तचिह्नरूपेण गृह्णन्ति, तत् कुतस्तेन वशीभावप्रसङ्गः।

इत्थं प्राचीनैर्मनुष्याणां यादृग्व्यवहाराः कर्त्तव्यतयोपदिष्टा-स्ते सर्व्वे इदानीं वैपरीत्यमेवावहन्ति। इदानीं हि शीलं न सर्व्ववशीकरणस्य कारणं, किन्तु धनमेव। तथाह्युक्तं "तस्मादर्थ-मुपार्ज्जनं कुरु सखे! ह्यर्थेन सर्व्वे वशाः।"

# यूरोपीयसंस्कृतशिक्षा।

(पूर्व्वप्रकाशितानन्तरम्)

"ततस्ते च पैलादय ऋषयोऽधिगतवेदार्थाः बहून् शिष्यान् स्वस्ववेदमध्यापयामासुः, तेऽपि चापरान् स्वशिष्यानित्थं क्रमेण वेदानां बहुः प्रचारोऽभवत्। परन्तेनानेकत्र मूलपाठानां व्यतिक्रमो जातः, ततश्च क्रमेण परस्परं भिन्नपाठवतां चरणानां प्रवृत्तिरिति स्पष्टमनुमीयते। ते च चरणाः * स्वस्वपाठमाद्रियन्ते, विशेषतो यजुर्व्वेदीयचरणानां क्रमेषु पाठविभागेषु च वैशिष्ट्यमेव प्रधानतयानुसन्धीयते। इत्थं वेदानां प्रत्येकस्य बहवः शाखाः शाखास्वरूपाः सञ्जाताः, शाखा नामास्माकं मते भिन्नजनकृतमूलसंग्रहभेदरूपाः, सर्व्वास्वपि तासु शाखासु मूलस्यैक्ये स्थितेऽपि पाठानां क्रमभेद एव तासां तादृग्विभागं प्रति सम्यक् हेतुत्वमर्हति। चरणव्यूहाभिधेये पुस्तके चरणानामशेषविवरणं वर्त्तते। तत्र चरणानां नामानि संख्याश्च वर्त्तन्ते। तदनुसरत ऋग्वेदस्य पञ्च, यजुर्व्वेदस्याष्टाधिकषष्टिः, सामवेदस्य सहस्रं, अथर्व्ववेदस्य तु नव चरणा वर्त्तन्ते। किन्त्वस्मदधन्यतया तत्र कतिचिदेवाल्पसंख्यकाश्चरणा इदानीमस्मद्धस्तगता भवन्ति, बहवस्तु विनष्टा एव। एवंविधग्रन्थानां विलोपनं

* चरणशब्दोऽयं वेदानां विभागभेदे तदध्येतरि च जने वर्त्तते।

प्रोच्यमेव। तथाहि यदि ते विलुप्ता नाभविष्यन् तदा वेदानां सर्व्वेषां केषाञ्चिद्वा साधारणमन्त्रेषु यद्वैशिष्ट्यं सञ्जातं तत् सर्व्वं विदितमभविष्यत्, तथाच कालक्रमोद्भूताज्ञानबाहुल्यं यद्वैदिक-समयेऽपि लब्धावकाशमनिरुद्धञ्चाभवत् तत् सर्व्वमपि विज्ञातमभ-विष्यत् यथेदानीं भाषातत्त्ववेदाध्ययनेन ज्ञायते"।

"वेदानां प्रकृतिवैशिष्ट्यमवगन्तुं यद्यस्माभिर्भारतीयाचार्य्य-मतान्यालोचितानि भवेयुस्तदास्माकं शतपथब्राह्मणान्मानवीयाच्च धर्म्मशास्त्रात् स्वल्पमेव साहाय्यं लब्धं भवेत्। तथाच मनुः (१।२३) "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनं। दुदोह यज्ञ-सिद्ध्यर्थमृग्यजुःसामलक्षणं॥" शतपथब्राह्मणे चैतान्येवाक्षराणि दृश्यन्ते। भागवततृतीयस्कन्धद्वादशाध्यायसप्तत्रिंशच्छ्लोके विष्णु-पुराणप्रथमांशपञ्चमाध्याये च वेदोत्पत्तिविषयकं यद्वर्णितमस्ति ततश्च नास्माकं विद्या किञ्चिदप्युन्नीयते।"

"तथाच भागवतम्

"ऋग्यजुःसामाथर्व्वाख्यान् वेदान् पूर्व्वादिभिर्मुखैः।
शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात् क्रमात्॥

विष्णुपुराणम् (१।५)

"गायत्रीञ्च ऋचश्चैव त्रिवृत्सोमं रथन्तरम्।
अग्निष्टोमञ्च यज्ञानां निर्म्ममे प्रथमान्मुखात्॥
यजूंषि त्रैष्टुभं छन्दःस्तोमं पञ्चदशं तथा।
बृहत्साम तथोक्थञ्च दक्षिणादसृजन्मुखात्॥

सामानि जगतीच्छन्दःस्तोमं सप्तदशन्तथा ।
वैरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात् ॥
एकविंशमथर्व्वाणमाप्तोर्य्यामाणमेव च ।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥

परमेभ्यः सर्व्वेभ्य एव कौषीतकिब्राह्मणवचनमस्मादुपयोगमर्हति ; तत्र हि "यजुःसामनी ऋग्वेदात् परमुत्पन्ने" इति कथितम् (Muller, Anc. Sans. Lit. p. 457) । सायनाचार्य्येण ऋग्वेद-भाष्यभूमिकायां कौषीतकिब्राह्मणमतं (ऋग्वेदस्य प्राथम्यविषयकं) स्पष्टीकृतमेव । तथाहि सायनकृतऋग्वेदभाष्यभूमिकायां "प्राथम्यस्य पुरुषसूक्ते विस्पष्टं, तस्माद्यज्ञात् सर्व्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत "(Muir's Original Sanskrit Texts, i., p. 6) । किञ्च सायनेन ऋग्वेदस्य प्राथम्यमन्येनापि प्रमाणेन सप्रमाणीकृतं, यथा "न केवलमृचां पाठप्राथम्येनाभ्यर्हितत्वं, किन्तु यज्ञाङ्गदार्ढ्यहेतुत्वादपि । तथाच तैत्तिरीयाः (कृष्णयजुर्वेदानुयायिनः) आमनन्ति 'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यदृचा तद्दृढम्' इति । मन्त्रकाण्डेष्वपि यजुर्व्वेदगतेषु तत्र तत्राध्वर्य्युणा प्रयोज्या ऋचो बह्वयः आम्नाताः, साम्नान्तु सर्व्वेषामृगाश्रितत्वं प्रसिद्धम् । आथर्व्वणैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते" (Sâyana in Muller's Ed. of the Rigveda, i., p. 2) । एतस्मात् सायनवचनात् ऋग्वेदस्य न केवलमन्येभ्यो वेदेभ्योऽभ्यर्हितत्वं परमस्य प्राथम्यमपि स्पष्टं प्रतीयते, प्रतीयते च सामवेदः सर्व्वतोऽपरो यदौ

वेदावंशत ऋग्वेदादुत्पन्नाविति। भाष्यकृतः सायनस्य मतमिदं वेदानां तत्तत्स्थलपर्य्यवेक्षणेन सुप्रतीतं भवति। यत्तु अध्यापक-'वेनफि'-नामधेयेन स्वप्रकाशितसामवेदभूमिकायां सामवेदस्थैकसप्ततिमन्त्रा न ऋग्वेदमन्त्रेष्वन्तर्भवन्ति. दृश्यते च ऋक्सामयोरनेकत्र पाठभेद इत्यभिहितम्; नैतेन ऋग्वेदस्य सामवेदात् परवर्त्तित्वं तथा सामवेदस्य ऋग्वेदमन्त्राणां वर्त्तमानऋग्वेद-ग्रन्थस्थलेभ्यः प्राग्भवत्वं वा सिध्यति (Professor Weber, in his 'Akademesche Vorlesungen,' p. 962); परमत्राध्यापकमूलरमहोदयेन सत्यमभिहितम् (Anc. Sans. Lit. p. 475) यत् 'सर्व्वासां ऋग्वेदशाखानामनधिगमान्न वयमेतं पाठभेदं प्रति किमपि कारणं निर्द्देष्टुं प्रक्रमः'।" इति

वेदानां परस्परमेवं सम्बन्धो नाम यज्ञाद्यनुष्ठानसौकर्य्यार्थं जात इति भारतीयाचार्य्याणां वचनतः प्रतीयते।

इति क्रमशः।

# विनयपीठकम् ।

( पूर्व्वप्रकाशितानन्तरम् । )

अथ खलु भगवत एतदभूत् (मनसीति शेषः) ; न खलु तथागता हस्तेषु प्रतिगृह्णन्ति कस्मिन्नु खल्वहं प्रतिगृह्णीयाम् मन्थांश्च मधुपिण्डकांश्चेति । अथ खलु चत्वारो महाराजा भगवतश्चेतसा चेतः परिवितर्क्य अज्ञाय चतुर्द्दिक्षु शिलामये पात्रे भगवत उपानैषुः । इह भगवान् प्रतिगृह्णातु मन्थांश्च मधुपिण्डकांश्चेति । प्रतिजग्राह भगवान् प्रत्यग्रे शिलामये पात्रे मन्थांश्च मधुपिण्डकांश्च प्रतिगृह्य चाभुङ्क्त (४) । अथ खलु तपुस्सवाल्लीका वणिजो भगवन्तं अपनीतपात्रपाणिं विदित्वा भगवतः पादयोः शिरसा निपत्य भगवन्तमेतदूचुः । एते वयं भगवन्तं शरणं गच्छामः धर्मांश्च उपासकानां नो भगवान् धारयतु । अद्यावधि प्राणान्तं यावत् शरणं गता इति ।

देवलोके प्रथमं उपासका अभूम । द्विवाचिका । ५ ।

राजायतनकथा निष्ठिता ।

---

अथ खलु भगवान् सप्ताहस्यात्यये तस्मात् समाधेर्व्युत्थाय राजायतनमूले येन ( यत्र ) अजापालन्यग्रोधस्तेन ( तत्र ) उपसमक्रामत् । उपसंक्रम्य तत्र भगवान् अजापालन्यग्रोधमूले

विहरति। अथ खलु भगवतो रहोगतस्य प्रतिसंलीनस्यैवं चेतसः परिवितर्क उदपद्यत। अधिगतः खलु मयायं धर्मो गम्भीरो दुर्दृशो दुरनुबोधः शान्तः (सन् वा) प्रणीतोऽतर्क्योऽवचारी निपुणः पण्डितवेदनीयः। आलयरामः खलु प्रणयः, प्रजा आलयरता आलयसमुदिताः। आलयरामायै खलु पुनः प्रजायै, आलयरतायै, आलयसमुदितायै दुर्दृशमिदं स्थानं, यदयं इदम्प्रत्ययतः कार्य्यकारणभावः; इदमपि खलु स्थानं सुदुर्दृशं यदयं सर्व्वसंस्कारसमर्थः, सर्व्वोपाधिप्रतिनिसर्गः तृष्णाक्षयः, विरागो, निरोधोनिर्व्वाणम्। अहञ्चेत् खलु पुनर्धर्मं देशयेयम् परे च मे न जानीयुः, स मामस्य क्लमयति, स मामस्य क्लिश्यतीति।

(२) अपिस्तुर्भगवन्तमिमा अत्याश्चर्य्या गाथाः प्रतिभाताः पूर्व्वस्मिन्नश्रुतपूर्व्वाः।

कृत्येन मेऽधिगतोऽलमिदानीं प्रकाशितुं,
रागदोषपरीतैर्नायं धर्मः सुसम्बोधः।
प्रतिश्रोतोगामिनं निपुणं गम्भीरं दुर्दृशमणुम्,
रागरक्ता न द्रक्ष्यन्ति तमस्कन्धेनावृता इति। १।

इति ह भगवतः प्रतिसञ्चाणस्याल्पोत्सुकतायै चित्तं नमति न धर्म्मदेशनायै। अथ खलु ब्रह्मणः सहलोकाधिपतेर्भगवतश्चेतसः चेतःपरिवितर्कं अज्ञायैषोऽभवत्। नश्यति बत भो लोको, विनश्यति बत भो लोको, यत्र हि नाम तथागतस्यार्हतः सम्यग्बुद्धस्य अल्पोत्सुकतायै चित्तं नमति न धर्म्मदेशनायै। ४।

ओं Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टा[illegible]र्य्येण शास्त्रिणा सम्पादितः

[illegible] प्रकाशितश्च ।

---

चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२ ] सेप्टेम्बर १८८३ [ ९ सङ्ख्या

सूची




कलिकाता-राजधान्याम्

नं २५, गिरिश-विद्यारत्न लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिचन्द्र कविरत्नेन मुद्रितः ।

# यूरोपीय-संस्कृतशिक्षा।

( अवतरणिका )

वर्त्तमानसमयो हि भारतेऽस्मिन्नुपप्लवपरम्परामुत्पादयितु-मायात इवेत्यस्माकं मनसि प्रतिभाति। तथाहि साम्प्रतं भारतीयानां समाजगृहावरोधप्रमुखबाह्यविषयेषु, धर्म-नीति-शिक्षा-रुचि-प्रवृत्त्याद्याभ्यन्तरीण-सामग्रीष्वपि महान्त उपप्लवाः संवृत्ताः। एवंविधसर्वव्यापकोपप्लवानां सत्स्वपि बहुष्ववान्तरकारणकलापेषु त्रीण्येव मूलतया प्रतिभान्ति। तत्राद्यमस्मद्देशे पाश्चात्त्यज्ञान-ज्योतिषो बाहुल्येन प्रकाशरूपं, द्वितीयं स्वदेशशास्त्रेषु प्रयुक्त-परि-श्रमस्य सम्यग्वैफल्यदर्शनात् तदध्ययनं प्रत्यनस्थाहेतुकं तेषां क्रमशो विलोपनं, तृतीयं यूरोपे संस्कृतशिक्षायाः प्रचाररूपम्। तथाचाबाल्यपाश्चात्त्य-शास्त्राध्ययनवशाच्च तत्तच्छास्त्र-पक्षपातित्वं, तेन च स्वयमनालोचितानां स्वपूर्वपुरोहितपरम्परागतैतिह्यश्रवण-मात्र-विदितार्थानामस्मच्छास्त्राणामसारतोपकल्पनात् तन्मूलक-धर्माचार-व्यवहारादीनामुपरि अस्माकमनास्था जायते, ततः यूरो-पीय-पण्डितास्तु संस्कृतशास्त्राणां स्वाभिलषितानुरूपं व्याख्यानं कृत्वा प्राचीन-व्याख्यानानि दूषयित्वा च तामेवानास्थां परिवर्द्ध-यन्ति। अतएव यूरोपीय-संस्कृतशिक्षाया वर्त्तमानोपप्लवपर-म्परां प्रत्यन्यतमहेतुत्वमुक्तमस्माभिः।

अपिच यूरोपीय-पण्डिता हि अगाढ़ाभिनिवेश सहकारतो ऽस्मद्देशीयाधुनातन-पण्डितवर्गैरप्यश्रुतपूर्व्व-शास्त्रसमूहानुशीलनेन विविधतत्त्वान्याविष्कुर्व्वाणाः पृथिव्याः परमं हितं साधयन्तोऽपि बहुशो भ्रमावर्त्तपतिता अन्धानन्धा इव स्वदेशीयशास्त्रानभिज्ञानङ्गलभाषाकृतविद्यानस्मद्देशीयान् यूनः सम्यग्भ्रमयन्ति । परिशोधनमन्तरेण च क्रमशस्तद्भ्रमाणां बद्धमूलता भवति । येन पुनः प्रकृततत्त्वविज्ञाने महान् प्रत्यूहो जातः । तादृग्भ्रमानपाकर्त्तुमुभयेषामेव सामर्थ्यं लक्ष्यते, अङ्गलसंस्कृतशास्त्रपारदर्शिनां राजकीयसंस्कृतपाठशाला-लब्धप्रतिष्ठच्छात्राणां, स्वदेशीयशास्त्रानुशीलनपराणां भारतीय-पण्डितानाञ्च । तत्र पूर्व्वेषां संख्या न केवलं परिमिता, यावदर्थोपार्ज्जनहेतोर्बहुकार्य्यव्यापृतत्वादनवकाशश्च । अपरेषामपि संख्या क्रमशो हीयते, साम्प्रतं सर्व्वशास्त्रार्थनिपुणाः पण्डिता विरला एव । विरलानामपि तेषामिङ्गलण्डीयभाषानभिज्ञत्वादङ्गलभाषालिखितानां पुस्तकानां मर्म्मग्रहोऽपि न सम्भवति, दूरेऽस्तु तावत् समालोचनवार्त्ता । किञ्च तेभ्योऽन्येषामेवंविधकार्य्यपर्य्यालोचने प्रवृत्तिर्न सम्भवति, यतोऽस्मत्प्राचीनाचारव्यवहाराद्यस्तानेवाश्रित्य साम्प्रतं तिष्ठन्ति, अतस्तेषां विलोपेऽन्येषां कोऽत्ययः । इत्यमेव मनसि समालोच्य यूरोपीयपण्डितनिर्म्मित-संस्कृतशास्त्रविषयक-पुस्तकानां मर्म्माण्यत्र संस्कृतभाषया क्रमशः समुद्घाटयितुं प्रयत्नः क्रियते । तत्र वेदानामभ्यर्हितत्वादपरशास्त्रमूलत्वाच्च प्रथमं वेदविषयकाण्येव यूरोपीय-मता-

न्यालोच्यन्ते । इदानीं वयमङ्गलीयपण्डितानामालस्यं विहाय तत्र सदसद्विवेकं कुर्य्युस्तदैवास्मच्छास्त्रमूलक-प्राचीनधर्म्माचारव्यवहाराणां रक्षा भवेदन्यथा तेषां कथाशेषतैव स्यात् ।

एतदपि विज्ञाप्यते—यदि पण्डिताः स्वमतानि परीक्ष्यारोप्य तत्प्रेरणेनास्माननुगृह्णीयुस्तदा वयमपि तानि यथाकालं विविदिषये प्रकाशयेम इत्यलम् ।

---

## अथ ग्रन्थारम्भः ।

### वेदानाम् ।

(डक्टर-थियोडोर-गोल्डष्टुकर-साहब-महोदयस्य मतानि)

वेदशब्दोऽयं विद् ज्ञाने इत्यस्माद्धातोर्निष्पन्नः । भाषान्तरेष्वप्येवंप्रकारका ज्ञानार्थका धातवो दृश्यन्ते (यथा लाटिनीभाषायां विद्, युनानीभाषायां इद्, गथिकभाषायां वेत् इत्यादि ) । अस्य यौगिकार्थस्तु ज्ञानरूपो विद्यारूपो वा ; परमयं (वेदः) साम्प्रतं वर्णाश्रमधर्म्म(Brahmanic belief)मूलप्राचीनसंस्कृतग्रन्थविशेषेषु निरूढः । भारतीयार्य्याणां वेदोऽयं तत्तद्वक्तृविशेषैः पुरुषविशेषैराविर्भावित एव, न तु कस्य निर्म्मितिरित्यर्थः ।

वेदः प्रथमतस्त्रिधैवासीत्—ऋग्वेदो यजुर्वेदः सामवेदश्चेति । ततो गच्छत्सु कालेषु तैस्त्रिभिः सह कश्चिच्चतुर्थो वेदः संयोजितः, किन्त्वयं पुरोभवास्त्रय इव प्रतिष्ठां नालभत । तथाहि ऋग्वेदीय-

पुरुषसूक्तान्तर्गते नवमे मन्त्रे ऋग्यजुःसाम्नां समुल्लेखो दृश्यते, न तत्रान्यस्य कस्यचिन्नामगन्धो विद्यते। छान्दोग्योपनिषदि, मानवे च धर्म्मशास्त्रे केवलं त्रयाः समुल्लेखो विद्यते न तु चतुर्थस्य; मानवे धर्म्मशास्त्रे तु त्रय्या एव भूरिप्रयोगः, केवलमेकादशाध्यायस्य त्रयस्त्रिंशच्छ्लोके अथर्व्वाङ्गिरसीति नाम्नाथर्व्ववेदस्य विवरणं कृतं न त्वथर्व्वेति नाम्ना। किन्तु दुरवगाह-वेदवाक्य-मीमांसनपरा अपि मीमांसका ऋग्यजुःसामाभिधेयानां त्रयाणामेव वाक्यानि व्याख्यातवन्तो नत्वथर्व्ववेदस्य।

वेदानामेकैकस्य संहिता-ब्राह्मणाभिधमंशद्वयं वर्त्तते।

संहिता नाम—मन्त्रसमष्टिः। मन्त्रस्तु (मन आख्याने इत्यस्माद्धातोर्निष्पन्नः) स्तुतिरूपेऽर्थे निरूढः। वेदानां व्याख्याता सायनोपाधिको माधवाचार्य्यो जैमिनीयन्यायमालाविस्तरे तथा ऋग्वेदैतरेयब्राह्मण-भाष्यावतरणिकयोश्च मन्त्रशब्दस्यैवं परिभाषाञ्चकार—

"मन्त्रशब्दस्य न किमप्यनुगतं लक्षणं विद्यते। अत 'याज्ञिकानां समाख्यानं लक्षणं दोषवर्ज्जितम्। तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते॥' विहितार्थाभिधायको मन्त्र इत्युक्ते वसन्ताय कपिञ्जलानालभेतेत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः। मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः। एवमसिपदान्तो मन्त्रः उत्तमपुरुषान्तो मन्त्र इत्यादिलक्षणानां परस्परमव्याप्तिरिति चेत्, नैवं, याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्।

तत्र समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति। तथाहि केचिन्मन्त्रा अनुष्ठानस्मारकाः, केचित् स्तुतिरूपाः, अन्ये त्वा-न्ताः, अपरे आमन्त्रणोपेताः, केचित् प्रैषरूपाः, केचित् परि-देवनरूपाः, एके प्रश्नरूपाः, अपरे उत्तररूपाः। एवमन्यदप्यु-दाहार्य्यं। ईदृशेष्वन्यविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चि-दनुगतधर्म्मोऽस्ति यस्य लक्षणमुच्यते, लक्षणस्योपयोगः पूर्व्वा-चार्य्यैर्दर्शितः—'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः' इति तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम्।"

भारतीयार्य्यशास्त्रकृतां मतं, यो यस्य मन्त्रस्य प्रथमवक्ता, द्रष्टा, स्मर्त्ता, यस्मिन् वा यस्य मन्त्रस्य प्रथमाविर्भावः, स तस्य मन्त्रस्य ऋषिरित्यभिधीयते। वयं (यूरोपीयाः) तु तं तन्निर्म्मा-तारमेव ब्रूमः। यां देवतामुद्दिश्य ऋषिणा स्वार्थसिद्ध्यै यो मन्त्र-उच्चार्य्यते सैवास्य मन्त्रस्य देवता। परमेवं बहवो विद्यन्ते मन्त्रा येन कामपि देवतामुद्दिश्य प्रार्थना स्तुतिर्वा कृता। तथाविध-स्थले हि यत् विषयीकृत्य तत्तन्मन्त्राणां प्रवृत्तिः, तदेव तेषां देवता। तथाहि मन्त्रनिर्म्मातारो राजभ्यो धनमधिगत्य तेषां सद्गुणप्रशंसां विषयीकृत्य बहून् मन्त्रान् निर्ममुः। सा प्रशंसैव तत्तन्मन्त्राणां देवता।

ब्राह्मणं (ब्राह्मणशब्दोऽयं क्लीवलिङ्गकस्तस्य पुंलिङ्गाज्जाति-विशेषवाचकात् ब्राह्मणशब्दाद्भिन्न एव) ब्रह्मन्शब्दादण्प्रत्ययेन

सिद्धम्। तच्च द्विविधं, तथाहि माधवः "तथाहि द्विविधं ब्राह्मणं विधिरर्थवादश्च।" तथाचापस्तम्बः 'कर्म्मचोदना ब्राह्मणानि ब्राह्मणशेषोऽर्थवादः' इति। ततश्च ब्राह्मणे कुचित् कर्म्मानुष्ठानस्य विधानं वर्त्तते, कुचिच्च विधेयप्राशस्त्यप्रतीतिजननम्। अतएव वेदानां ब्राह्मणभाग एव वैदिककर्म्मकाण्डस्य मूलं, यच्चि कर्म्मकाण्डं सूत्रनामधेयेषु कर्म्मव्यवस्थापनग्रन्थविशेषेषु सम्यक्तया विस्तरेण चालोचितम्। ब्राह्मणादेवाविभाज्यतात्पर्य्यकाण्यारण्यकानि तत्त्वज्ञानविषयका उपनिषदश्च प्रादुर्भूताः। या नाम कालक्रमेण वेदान्तदर्शनेषु परिणताः, तथा वेदान्तशास्त्रेभ्यः सम्यग्भिन्नमतव्यवस्थापकेष्वपि दर्शनान्तरेषु यद्वाक्यानि प्रमाणतया समुद्धृतानि च।

एतदपि सम्यक् सम्भाव्यते यत् पुरा चत्वारो वेदा अविभक्ता एकत्रैव समवेता आसन्। एतदैतिह्यं वर्त्तते यत्, पराशरपुत्रो व्यासापरपर्य्यायः कृष्णद्वैपायनः श्लोकसमष्टिरूपेणावस्थितं वेदं संगृह्य तांश्च श्लोकान् विषयभेदेन पृथक्श्रेणीषु विनिवेश्य चतुर्व्वेदीमुपकल्प्य चतुरः शिष्यानध्यापयामास। तथाहि ऋग्वेदं पैलमध्यापयामास, यजुर्व्वेदं वैशम्पायनं, सामवेदं जैमिनिम्, अथर्व्ववेदञ्च सुमन्तुमिति।*

[ क्रमशः ।

* एतन्मतसमालोचनेप्सुभिः प्रबन्धशेषपर्य्यन्तं प्रतीक्षितव्यमित्यस्माकमनुरोधः। विषयस्यास्य सम्यग्विज्ञानात् न तस्य समालोचनं सम्भवतीत्यपि स्मरणीयम्।

## प्रेमोन्मत्त-वचनम् ।

( प्रायम् )

(१)

संवेश्य पुष्पशयने सुमनोमयीं त्वां

सञ्चालयामि नलिनीदलतालवृन्तम् ।

त्वं मे निधाय हृदये कमनीयमङ्गं

निर्व्वापयिष्यसि मनोभवदाववह्निम् ॥

(२)

तास्ता गिरोऽभिदधती स्मरशिञ्जितेव

सर्व्वेन्द्रियाणि सुमुखि द्रवतां नयन्ती ।

निद्रामनोहरभुजान्तरदत्तदेहा

रात्रिं निशाकरमुखि क्षपयिष्यसि त्वं ॥

(३)

प्रातर्निरीक्ष्य सुमनःशयने शयानां

निद्रालसां विधुवनश्रमपीड़िताङ्गीम् ।

त्वामेव शिन्दुमुखि बोधयितुर्व्वचो मे

वक्त्राद्भविष्यति कुरङ्गमनोज्ञनेत्रे ॥

(४)

यस्याः समागमजशर्म्म विचिन्तयन्त्यः
प्रौढ़ा दिनानि युगवत् खलु यापयन्ति ।
मुग्धा भयङ्करनिशाचरमोददात्री
रात्रिर्गता सुनयने शयनं विमुञ्च ॥

(५)

उत्तिष्ठ नेत्रशफरी चपलस्वभावा
लावण्यनिर्झरहृदि स्फुरतामशङ्कम् ।
हे मञ्जुभाषिणि सुपाठय पञ्जरस्था-
मेतां स्वयंवरवधूं शुकपुङ्गवस्य ॥

(६)

बाले विलोकय दिगन्तगतं तमिन्दुं
प्रातर्नवारुणकरैः कवलीकृतांशुम् ।
सायं य एष उदयाद्रिमुपेत्य लोक-
नेत्रस्य निर्वृतिमधादमृतांशुभिः स्वैः ॥

(७)

प्राणेश्वरि प्रथममेष शुकः शयानां
त्वां वीक्ष्य कातरगिराह्वयते जनन्याः।
नामाक्षरैर्घटितया तदिमं प्रबुध्य
सम्भावयेन्दुमुखि मिष्टतमैर्वचोभिः॥

(८)

सौभाग्यगर्वकलुषीकृतचित्तवृत्ते
धिङ् निद्रितं तव पतिः पतितः पदान्ते।
इत्याक्षिपत्यपि सखी सुमुखीत्यतस्त्वं
निद्रां विहाय परितोषय तां वयस्यां॥

(९)

कान्तालकान्तमवृतांशुमुखे भवत्याः
विच्छिन्नवारिदनिभं तनुते नभस्वान्।
शैवालवत् सरसिजे बलजे प्रबुध्य
प्रोत्सार्य्य तत् भव घनोज्झितचन्द्रवक्त्रा॥

(१०)

गुञ्जन्ति कुञ्जभवने तव मञ्जुभृङ्गाः
पुंस्कोकिला मधुगिरो मधुरं रुवन्ति ।
मूकं तवेदमधुना कथमास्ति वक्त्रं
ध्वान्तान्तरालिरवनीरजवद्दुनोति ॥

(११)

प्राभातिकारुणकरेण सुशोभिते द्वे
कान्तं तवाननमिदं कमलञ्च तन्वि ।
सन्त्यज्य जृम्भनमिषेण पुनर्विमुद्रां
पूर्णोपमां सरसिजेन मुखं दधातु ॥

(१२)

गुञ्जन्मधुव्रतविबोधितपद्मिनीयं
पाथोजनाथमुदितं विकसत्युदीक्ष्य ।
प्रत्योत्थितं पतिमवेक्ष्य शुकादिवाक्यैः
निद्रां विहाय भव हृष्टतमा तथा त्वम् ॥

—

## पुराण-कथा ।

"वैण्य इव चापकोटिसमुत्सारितसकलारातिकुलाचलो राजा शूद्रको नाम ।" कादम्बरी ।

इत्यादिवाक्यव्याख्यानावसरे वक्ष्यमाणा पुराण-कथा अपेक्ष्यते ।

अथ कदाचित् वेणतनये पृथौ राज्यं शासति पृथिव्या सर्व्वाओषध्यः ग्रस्ताः । ततः प्रजाः पृथुमुपेत्य प्रोचुः—

"अराजके नृपश्रेष्ठ ! धरित्र्या सकलौषधिः ।
ग्रस्ता ततः क्षयं यान्ति प्रजाः सर्व्वाः प्रजेश्वर ॥
ततोऽथ नृपतिर्दिव्यमादायाजगवन्धनुः ।
शरांश्च दिव्यान् कुपितः सोऽभ्यधावद्वसुन्धराम् ॥
ततो ननाश त्वरिता गौर्भूत्वा तु वसुन्धरा ।
सा लोकान् ब्रह्मलोकादींस्त्रासादगमन्मही ॥
यत्र यत्र ययौ देवी सा तदा भूतधारिणी ।
तत्र तत्र तु सा वैण्यं ददर्शाभ्युद्यतायुधम् ॥
ततस्तं प्राह वसुधा पृथुं पृथुपराक्रमम् ।
प्रवेपमाना तद्बाणपरित्राणपरायणा ॥

पृथिव्युवाच—

स्त्रीवधे त्वं महापापं किं नरेन्द्र न पश्यसि ।
येन मां हन्तुमत्यर्थं प्रकरोषि नृपोद्यमम् ॥

पृथुरुवाच—

एकस्मिन् यत्र निधनं प्रापिते दुष्टकारिणि ! ।
बहूनां भवति क्षेमन्तस्य पुण्यप्रदो वधः ॥

पृथिव्युवाच—

प्रजानामुपकाराय यदि मां त्वं हनिष्यसि ।
आधारः कः प्रजानां ते नृपश्रेष्ठ भविष्यति ॥

पृथुरुवाच—

त्वां हत्वा वसुधां बाणैर्मच्छासनपराङ्मुखीम् ।
आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥
ततः प्रणम्य वसुधा तं भूयः प्राह पार्थिवं ।
प्रवेपिताङ्गी परमं साध्वसं समुपागता ॥
उपायतः समारब्धाः सर्व्वे सिध्यन्त्युपक्रमाः ।
तस्माद्ददाम्युपायं ते त्वं कुरुष्व यदिच्छसि ॥
समस्तास्ता मया जीर्णा नरनाथ महौषधीः (महौषध्यः)।
यदिच्छसि प्रदास्यामि ताः क्षीरपरिणामिनीः ॥
तस्मात् प्रजाहितार्थाय मम धर्म्मभृतां वर ।
तन्तु वत्सं प्रयच्छस्व क्षरेयं येन वत्सना (वत्सेन) ॥
समाञ्च कुरु सर्व्वत्र येन क्षीरं समन्ततः ।
वरौषधी वीजभूतं वीर सर्व्वत्र भावये ॥
ततं उत्सारयामास शैलान् शतसहस्रशः ।
धनुष्कोट्या तदा वैण्यस्तेन शैला विवर्द्धिताः ॥

# विनयपीठकम्

## (बौद्धशास्त्रम्)

पालीभाषातः अनूदितम् ।

अथ खलु भगवान् सप्ताहस्यात्यये तस्मात् समाधेर्व्युत्थाय अजापालन्यग्रोधमूलात् येन (यत्र) मुचलिन्दस्तेन (तत्र) उपसमक्रामत् । उपसंक्रम्य मुचलिन्दमूले सप्ताहं एकपर्य्यङ्के न्यषीदत् विमुक्तिसुखप्रतिसंवेदी । तेन खलु पुनः समयेन महाकालमेघो उदपद्यत, सप्ताहञ्चाभवन् वर्षाप्रभवाणि शीतवातदुर्द्दिनानि । अथ खलु मुचलिन्दो नागराजः स्वभवनान्निष्क्रम्य भगवतः कायं सप्तकृत्वः भोगेन परिवेष्ट्य उपरि मूर्द्धनि महान्तं फणं कृत्वातिष्ठत् । मा भगवन्तं शीतं मा भगवन्तं उष्णं मा भगवन्तं दंश-मशक-वातातप-सरीसृपसंस्पर्शोऽस्त्विति । अथ खलु मुचलिन्दो नागराजः सप्ताहस्य अत्यये विगतवलाहकं देवं विदित्वा भगवतः कायात् भोगं आकृष्य स्वकं वर्णं प्रतिसंहृत्य माणवकवर्णम् अभिनिर्माय भगवतः पुरतोऽतिष्ठत् बद्धाञ्जलिर्भगवन्तं नमस्यन् । अथ खलु भगवान् एतं अर्थं विदित्वा तस्यां वेलायां इदं उदानं उदगात् ।

सुखं विवेकस्तुष्टस्य श्रुतधर्मस्य पश्यतः ।<br>
अव्यापादं सुखं लोके प्राणभूतेषु संयमः ॥<br>
सुखा विरागता लोके कामानां समतिक्रमः ।<br>
अस्मिमानस्य (१) विनय एतद्वै परमं सुखम् ॥

मुचलिन्दकथा निष्ठिता (३) ।

(१) अस्मि = अहङ्कारः, मानं गर्वः ।

अथ खलु भगवान् सप्ताहस्यात्यये तस्मात् समाधेर्व्युत्थाय यत्र राजायतनं तत्रोपसमक्रामत्। उपसंक्रम्य च सप्ताहं राजायतन-मूले एकपर्य्यङ्के न्यषीदत् विमुक्तिसुखप्रतिसंवेदी (१)। तेन खलु पुनः समयेन तपुस्सवाल्लीका वणिज उत्कलास्तत्र देशे अध्व-मार्गप्रतिपन्ना भवन्ति। अथ खलु तपुस्सवाल्लीकानां वणिजां मानाहिता देवता, तपुस्सवाल्लीका वणिजा एतदूचुः—अयं मारिषो भगवान् राजायतनमूले विहरति प्रथमाभिसम्बुद्धः, गच्छत तं भगवन्तं, मन्थेन ( पिष्टकविशेषेण ) च, मधुपिण्डि-कया च प्रतिमानयत तं वो भविष्यति दीर्घरात्रं हिताय सुखाय च। (२)

अथ खलु तपुस्सवाल्लीका वणिजो मन्थान् मधुपिण्डिकाश्चा-दाय यत्र भगवान् तत्रोपागमन्। उपगम्य भगवन्तं अभि-वाद्य एकान्तं अस्थासुः। एकान्तं स्थित्वा खलु तपुस्स-वाल्लीका वणिजो भगवन्तमेतदूचुः—प्रतिगृह्णातु नो भगवां भगवान् मन्थांश्च मधुपिण्डिकाश्च यदस्माकमस्य दीर्घरात्रस्य हिताय सुखाय चेति।

[ क्रमशः ]

ओं



# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२ ] जुलाइ १८८३ [ ७ सङ्ख्या

सूची



कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्न् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# विनयपत्रिका

## (बौद्धशास्त्रम्)

( पालीभाषातोऽनूदिता )

---

### महावर्गः ।

नमो भगवतेऽर्हते सम्यक्सम्बुद्धाय ।

तेन समयेन बुद्धो भगवान् उरुवेलायां विहरति। नद्याः निरञ्जनायास्तीरे बोधिवृक्षमूले प्रथमाभिसम्बुद्धः। अथ खलु भगवान् बोधिवृक्षमूले सप्ताहानि एकपर्य्यङ्के न्यषीदत् विमुक्तिसुखप्रतिसंवेदी। (१) अथ खलु भगवान् रात्र्याः प्रथमे यामे कार्य्यकारणसम्बन्धानि अनुलोमप्रतिलोमानि मनस्यकरोत्। अविद्याप्रत्ययात् संस्काराः, संस्कारप्रत्ययात् विज्ञानम्, विज्ञानप्रत्ययात् नामरूपं, नामरूपप्रत्ययात् षड़ायतनम्, षड़ायतनप्रत्ययात् स्पर्शः, स्पर्शप्रत्ययात् वेदना, वेदनाप्रत्ययात् तृष्णा, तृष्णाप्रत्ययात् उपादानं, उपादानप्रत्ययात् भवः, भवप्रत्ययाज्जातिः, जातिप्रत्ययात् जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः सम्भवन्ति। एवमेतस्य केवलस्य दुःखस्कन्धस्य समुदयो भवति। अविद्यातत्त्वमेवम्। अशेषविरागनिरोधात् संस्कारनिरोधः, संस्कारनिरोधात् विज्ञाननिरोधः, विज्ञाननिरोधात्

नामरूपनिरोधः, नामरूपनिरोधात् षडायतननिरोधः, षडायतननिरोधात् स्पर्शनिरोधः स्पर्शनिरोधात् वेदनानिरोधः, वेदनानिरोधात् तृष्णानिरोधः, तृष्णानिरोधादुपादाननिरोधः, उपादाननिरोधाद्भवनिरोधः, भवनिरोधाज्जातिनिरोधः, जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः निरोधं प्राप्नुवन्ति। एवमस्य एतस्य केवलस्य दुःखाङ्कस्य निरोधो भवति। (२) अथ खलु भगवान् एतं अर्थं विदित्वा तस्यां वेलायां इदं उदानं ( गाथाविशेषं ) उदगायत—

> "यदा ह वै प्रादुर्भवन्ति धर्म्मा आतापिनो ध्यायतो ब्राह्मणस्य।
> अथास्य काङ्क्षा व्यपयान्ति सर्व्वा यतः प्रजानाति स हेतुधर्म्मानिति। (३)

[ क्रमशः।

---

## वाणभट्टः।

कादम्बरी-नाम-कथाग्रन्थो (१) हर्षचरिताभिधेयाख्यायिका-

---

(१) संस्कृतगद्यकाव्यं हि कथाख्यायिकादिभेदेन बहुविधम्। तत्र कथाया लक्षणं यथा साहित्यदर्पणे—

> "कथायां सरसं वस्तु पद्यैरेव विनिर्म्मितम्।
> क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके॥
> आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्।"

आर्य्यावक्त्रापवक्त्रकाणि छन्दांसि। आर्य्यालक्षणं यथा—

यन्यञ्च (२) बाणभट्टकृतित्वेन प्रसिद्धौ। उभयत्रापि बाणेन स्ववंशकीर्त्तनेनात्मविवरणं कथितम्। तत्र कादम्बर्य्यां यथा—

"बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम्।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः॥
उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे॥
हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः॥
स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलामलं क्रमेण कैलासमिव क्षमाभृताम्॥
सरस्वतीपाणिसरोजसम्पुटप्रसुप्तहंसीमधुसीकराम्भसः।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत॥"

एतेर्हि महाकविबाणभट्टस्य वात्स्यायनगोत्रप्रसूतिस्तथास्य अपि-

---

"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥"

वक्त्रलक्षणं यथा—

"वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्।"

अस्यार्थः—अनुष्टुभि अष्टाक्षरपादके छन्दसि आद्यात् अक्षरात् नसौ नगणसगणौ न स्याताम्, अब्धेः चतुर्थादक्षरात् यगणः स्यात्, अन्यत्र न नियमः। अपवक्त्रलक्षणं यथा—

"अयुजि ननरला गुरुः समे नजजमपरवक्त्रमिदं ततो जरौ॥

(२) आख्यायिकालक्षणं यथा साहित्यदर्पणे—

"आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम्।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित्॥
कथांशानां व्यवच्छेद आश्वास (उच्छ्वासः) इति बध्यते।
आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥

आर्य्यादीनां लक्षणं पूर्व्वमुक्तम्।

तामहात् कुबेरादारभ्य कुलं पाण्डित्यादिभिर्ब्राह्मणगुणैरत्यु-ज्ज्वलमासीदित्येव ज्ञायते, न त्वस्य जन्मभूमिविषयकमवस्थानसमय-विषयकं वा किमपि ज्ञानं भवति। हर्षचरिते स्वात्मविवरणं कादम्बरीतः किमपि विस्तृतमस्ति। हर्षचरितन्नामाष्टभिरुच्छ्वासैः परिच्छिन्नम्। तत्र प्रथमोच्छ्वासद्वयं बाणस्यात्मपरिचयेनैवाव-सितमभूत्। यथा—

"पुरा किल स्वर्लोकमधितिष्ठन् (१) परमेष्ठी पद्मविष्टरे समुप-विष्टो देवैः परिवृतो ब्रह्मोद्याः कथाः कुर्वन् विद्यागोष्ठीर्भाव-यंश्च कदाचिदासाञ्चक्रे। तथासीनञ्च त्रिभुवनपूज्यं तं मनुदक्ष-प्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरःसरा महर्षयः सिषे-विरे। अथ विद्याविवादप्रवृत्तेषु तेषु दुर्वासा मन्दपालनाम्ना मुनिना कलहायमानः साम गायन् क्रोधान्धो विस्वरमकरोत्। तदाकर्ण्य नवे वयसि वर्त्तमाना कुमारी भगवती सरस्वती जहास। दृष्ट्वा च तथा हसन्तीं तां स मुनिः "आः पापकारिणि! दुर्गृहीत-विद्यालवावलेपदुर्विदग्धे मामुपहससीत्यभिधाय कोपकम्पिताङ्गु-लिना करेणाक्षमालामावर्त्य कामण्डलवेन (२) वारिणा समुप-स्पृश्य शापजलं जग्राह। ततो "मर्षय भगवन्! न भूमिरेषा

---

(१) स्वर्लोकं = ब्रह्मलोकं, न तु स्वर्गं।

(२) कामण्डलवेन = कमण्डलुसम्बन्धिना।

शापस्य" इत्यनुनीयमानाऽपि विबुधैः, "पुत्र! मा कृथास्तपसः प्रत्यूहम्" इति निवार्य्यमाणोऽप्यत्रिणा रोषाविष्टचित्तो दुर्व्वासाः "दुर्विनीते! व्यपनयामि ते विद्याजनितामुन्नतिमिमामधस्ताद्गच्छ मर्त्त्यलोकम्" इत्युक्त्वा तच्छापोदकं विससर्ज्ज। ततो रोषाधिक्षिप्तदुर्व्वासाः कमलासनः "वत्से! सरस्वति! विषादं मागाः एषा त्वामनुयास्यति सावित्री, आत्मजमुखकमलावधिश्च ते शापोऽयम्" इत्यादिवचनेन तां सान्त्वयामास।

अन्येद्युरुदिते भगवति भास्करे सावित्रीद्वितीया सरस्वती ब्रह्मलोकतो निर्गत्य मन्दाकिनीमनुसरन्ती मर्त्त्यलोकमवततार। अवतरणावसरेऽम्बरतलस्थितैव महानदं शोणमालोक्य रामणीयकहृतहृदया तस्यैव तीरे वासमरोचयत्।

तत्र स्थितायास्तस्या अतिक्रामत्सु दिवसेष्वेकस्मिन्नहनि महर्षेश्च्यवनस्यात्मजं ख्यातस्य राज्ञो दौहित्रमश्ववारपरिवृतं पारशोणं च्यवनपुरनिवसतः पितुश्च्यवनस्यान्तिकं गच्छन्तं दधीच-नामानमपश्यत्। ततः परस्परालोकनाकृष्टहृदययोस्तयोः क्रमेण चेतसि प्रौढो मदनविकारः सञ्जातः, येन च त्वरमाणौ तौ दम्पती गान्धर्व्वेण विधिना पाणिग्रहणञ्चक्रतुः। ततः कालेन बभार गर्भं सरस्वती, असूत चानेहसा सर्व्वलक्षणाभिरामं तनयम्। तस्मै जातमात्राय "सरहस्याः सर्व्वे वेदाः सर्व्वाणि शास्त्राणि सकलाश्च कला मत्प्रसादात् स्वयमाविर्भविष्यन्ति" इति वरं दत्त्वा पितामह-वचनमनुस्मृत्य च सावित्र्या समं ब्रह्मलोकमारुरोह। दधीचोऽपि

सगोत्रस्य भ्रातुर्जायामक्षमालाभिधानामात्मसूनोः संवर्द्धनाय नियुज्य तपसे वनमगात्। यस्मिन्नेव वासरे सरस्वत्यसूत तनयं तस्मिन्नेवावसरेऽक्षमालापि पुत्रमेकं प्रसूतवती। एकस्तयोः सारस्वताख्य एवाभवत्, द्वितीयस्तु वत्सनामा। आसीच्च तयोः सोदर्य्ययोरिव स्पृहणीया प्रीतिः। अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यः तस्मिन् सवयसि प्राणसमे भ्रातरि वत्से समस्तमेव वाङ्मयं सञ्चारयामास। चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीतिकूटनामानं निवासं, स्वयं ब्रह्मचर्य्यमवलम्ब्य तपस्यतो जनयितुरेवान्तिकं जगाम। अथ वत्साद्भागीरथीप्रवाह इव पावनः प्रावर्त्तत विपुलो वंशः। यस्मादजायन्त वात्स्यायना नाम गृहमुनयः कवयो वाग्मिनो विमत्सरा नृत्यगीतवादित्रेष्वबाह्याः सर्व्वगुणोपेताः पुण्यालयाः कामजितोऽसाधारणा द्विजातयः।

तेषु चैवमुत्पद्यमानेषु, संसरति संसारे, गच्छत्सु युगेषु, अवतीर्णे कलौ, बहुषु वत्सरेषु व्रजत्सु, प्रसवपरम्पराभिरनवरतमापतति विकासिनि वात्स्यायनकुले क्रमेण कुबेरनामा द्विजो-जन्म लेभे। तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारस्तनयाः। तत्र पाशुपतस्यैक एवाभवदर्थपतिरिति नाम्ना महात्मा सूनुः। सोऽजनयद् भृगुं, हंसं, शुचिं, कविं, महीदत्तं, धर्मं, जातवेदसं, चित्रभानुं, त्र्यक्षं, अहिदत्तं विश्वरूपञ्चेत्येकादश पुत्रान्। अलभत च चित्रभानुस्तेषां मध्ये वाणमात्म-

नम्। अयञ्च बाणो बाल एव व्ययुज्यत जनन्या, जातस्नेहस्तु पितैवास्य मातृतामकरोत्। (१)

ततः कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दश-वर्षदेशीयस्य पितापि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेनादशमीस्थएवास्तमगात्। परलोक-प्रयाते च पितरि महता शोकेन दह्यमानहृदयः कथं कथमपि कतिपयान् दिवसाननैषीत्। ततो विरलतां गते च शोके शनैः शनैरविनयनिदानतया स्वातन्त्र्यस्य, कुतूहलबहुलतया बालभा-वस्य, धैर्य्यप्रतिपक्षतया यौवनारम्भस्य, शैशवोचितान्यनेकानि चापलान्याचचार। अभवंश्चास्य वयसा समानाः सुहृदः सहा-याश्च,—भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, भाषाकविरीशानः, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाण-वासबाणौ, वर्ण-कविर्वेणीभारतः, प्राकृतकृत् कुलपुत्रो वायुविकारः, बन्दिनौ अनङ्गबाण-सूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गुलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तक-वाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्म्मा, पुस्तकृत् कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ सैरिन्ध्री कुरङ्गिका,

(१) कादम्बर्यां हि अर्थपतिनामा कुबेरस्य पुत्रत्वेन निर्द्दिष्टः, हर्षचरिते तु पौत्रत्वेन। न ज्ञायते किंकारणकमेतत् पार्थक्यमिति।

वांशिकौ मधुकर-पारावतौ, गान्धर्वोपाध्यायो दर्दुरकः, कितवो भीमकः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः करालः, धातुवादविद्विहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चकोराक्षः, मस्करी ताम्रचूडः इत्यादयः। स एतैरन्यैश्चानुगम्यमानो देशान्तरालोकनकौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितविभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहान्निरगात्। अथ शनैः शनैर्बृहन्ति राजकुलानि वीक्षमाणो निरवद्यविद्याविद्योतितगुरुकुलानि सेवमानः स्वभावगम्भीरधीधनानि विदग्धमण्डलानि चावगाहमानः पुनरपि तामेव वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत। प्रत्यागमच्च भूयो वात्स्यायनवंशाश्रयमात्मजन्मभुवम्। तत्र च चिरदर्शनादभिनवीभूतस्नेहसद्भावैर्ज्ञातीयैरुत्सवदिवसइवाभिनन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतः सुखमन्वभवत्।

अथैकदा श्रीकण्ठनामजनपदाधिपतिना हर्षदेवेनाहूतो बाणस्तदन्तिकं जगाम। तत्र च राजसम्मानितः कियत्कालमतीत्य पुनरेवात्मग्रामभूमिमाजगाम। तत्र ज्ञातिभिः पृष्टो हर्षचरितमाचष्ट।

एतेन हि वृत्तेन बाणस्य निवासस्थानं वंशादिकञ्च विज्ञातं भवति। वायुपुराणे गयामाहात्म्येऽपि गयाप्रदेशे च्यवनाश्रमस्यावस्थितिर्दृश्यते —

"कीकटेषु गया पुण्या, नदी पुण्या पुनःपुना ।
च्यवनस्याश्रमं पुण्यं, पुण्यं राजगृहं वनम् ॥

परमेतेन बाणस्यावस्थानकालस्य न किमपि निर्द्धारणं भवति। हर्षचरितारम्भे हि बाणेन सुबन्धु-हरिचन्द्र-भास-कालिदासग्रन्थानामुल्लेखः कृतः (१)। परन्तु सुबन्धुप्रमुखास्तत्-समकालवर्त्तिनः पूर्ववर्त्तिनो वेति न स्पष्टं ज्ञायते ।

सुबन्धुनामा कविर्वासवदत्ताभिधेयस्य कथाग्रन्थस्य रचयिता। सहि विक्रमादित्यस्य सभ्य आसीदिति तदीयस्य "सारसवत्ता निहता नवका विलसन्ति चरति नो कंकः। सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये" इत्येतच्छ्लोकस्य व्याख्यानावसरे "कविरयं विक्रमादित्यसभ्यः, तस्मिन् राज्ञि लोकान्तरं प्राप्ते एतन्निबन्धं कृतवान्" इत्येतत् नरसिंहनाम्ना पण्डितेन निरणायि। "अथ धारा-

(१) कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥
वासवदत्ता सुबन्धुरचिता कथा ।
पदबन्धोज्ज्वलो हारीकृतवर्णक्रमस्थितिः ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥
सूत्रधारकृतारम्भै र्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥
निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

नगरे न कोऽपि मूर्खो निवसति। क्रमेण पञ्चशतानि सेवन्ते विदुषां श्रीभोजम्। वररुचि-सुबन्धु-बाण-मयूर-रामदेव-हरिवंश-शङ्कर-कलिङ्ग-कर्पूर-विनायक-दमन-विद्याविनोद-कोकिल-तारेन्द्र-प्रमुखाः” इत्येतद्भोजप्रबन्धीयवाक्यमवलम्ब्य सुबन्धोर्विक्रमादित्यसमकालीनत्वमैतिहासिकरत्नेन श्रीमता डकटर-रामदाससेन-महोदयेन निर्णीतम्। तथाहि “इति श्रीवररुचिभागिनेयसुबन्धु-विरचिता वासवदत्ताख्यायिका समाप्ता” इति वासवदत्तासमापक-वचनेन सुबन्धुर्वररुचेर्भागिनेय आसीदिति प्रतीयते; वररुचिश्च “धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-वेतालभट्ट-घटकर्पर-कालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥” इत्यनेन विक्रमादित्यसभ्य इति स्पष्टं ज्ञायते। ततश्च सुबन्धुरपि विक्रमादित्यसभ्य इति सिद्धमेव। लोकान्तरं गते तु विक्रमादित्ये सुबन्धुप्रमुखा भोजमाशिश्रियुरिति सेनमहोदयस्य वचनं कालिदासविषयकप्रस्तावे भोजप्रबन्धस्याप्रामाण्य-मुपकल्पयतापरवचनेन विरुद्धमिव प्रतिभाति।

> “भासो रामिल-सौमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
> र्मेंठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः।
> दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
> सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते”॥

इत्यादि वचनानि तु—

> “यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो-
> भासो हासः कविकुलगुरुः कालिदासो विलासः।

हर्षोहर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥"

इत्यादिवचनवत् तत्तत्कवीनामुत्कर्षमात्रस्याभिधायकानि, न तु तेषामेककालवर्त्तितायाः प्रतिपादकानि। सन्त्येवंविधानीव भूयांसि वचनानि यथा—

"सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥"

कविराजो राघवपाण्डवीयस्य निर्म्माता, स तु न कथमपि सुबन्धुबाणयोः समकालवर्त्ती भवितुमर्हति। राघवपाण्डवीयं नामाधुनिकमेव काव्यं, प्राचीनालङ्कारसन्दर्भेष्वस्य समुल्लेखाभावात्। ननु मम्मटग्रन्थेऽपि बाणभट्टकृतेरनुल्लेखादेतथैव युक्त्या बाणभट्टस्य मम्मठ-परवर्त्तित्वमायातमिति चेन्न, काव्यप्रकाशात् भूयः प्राचीनतरेषु सरस्वतीकण्ठाभरणप्रमुखेषु सन्दर्भेषु बाणभट्टकृतेरुदाहरणदर्शनात्। भट्टारहरिचन्द्रस्य किमपि ग्रन्थादिकमधुना न नयनगोचरं भवति, न वान्यत्र कुत्राप्यस्य नाम। भासस्य नाम बहुधा सत्कवीनां गणनासु दृश्यते, परं न किमपि तत्कृतं पुस्तकम्। डक्टर हल साहेबेन हि भासधावकयोरैक्यं सम्पादितम्, तन्मते धावकोनाम न कोऽपि कविरासीत्, भासएव भ्रान्त्या धावक इति लिख्यते। भासस्यैव नाटकरचनानैपुण्यं सुप्रसिद्ध-

मेव। दृश्यते बहुषु मालविकाग्निमित्रपुस्तकेषु "धावकसौमिल्लादीनां" इत्यत्र "भासकवीसौमिल्लादीनामिति पाठः" कालिदासस्तु विक्रमादित्यसभ्यः प्रसिद्ध एव।

भवतु बाणकर्तृककालिदासादिनामोल्लेखनेन स कालिदासादीनां पूर्व्वो नासीदित्येव निश्चितं भवति, परं स तेषां समकालवर्त्ती परवर्त्ती वेति निर्णेतुमापाततो न किमपि सुदृढं प्रमाणं दृश्यते।

बाणकृतहर्षचरितानुसारतः स श्रीकण्ठजनपदाधिपतेर्हर्षदेवस्य समकालस्थ आसीदिति ज्ञायते। हेमचन्द्रमते "श्रीकण्ठः कुरुजाङ्गलदेशः, स तु हस्तिनापुरस्योत्तरपश्चिमे वर्त्तते", कुरुजाङ्गलशब्देन यदि कुरुक्षेत्रस्य ग्रहणं भवेत्, तदा न किमपि निर्णीतं भवेत्, यतो भारतेतिहासेषु कुरुक्षेत्रप्रदेशे हर्षाभिधेयस्य कस्यापि राजत्वं न दृश्यते। यदि श्रीकण्ठेत्यनेन भारतस्योत्तरभागो गृह्येत, तदा कथमपि तत्र हर्षराजतायाः सङ्गतिर्भवेत्। श्रीहर्षनामा कश्चित् काश्मीरं शशासेति राजतरङ्गिणीतो ज्ञायते। परं नामश्रुतिमात्रतएव श्रीहर्षहर्षदेवयोः पार्थक्यमनुभूयते। विशेषतस्तु काश्मीराधिपतिः श्रीहर्षो हि १११३ खृष्टाब्दे राज्यञ्चकार, तत्पूर्व्ववर्त्तिनोभोजराजस्य कृतौ सरस्वतीकण्ठाभरणे बाणस्य कादम्बरी समुदाहृता, अतएव बाणस्य श्रीहर्षात् पूर्व्ववर्त्तित्वे न कोऽपि सन्देहः। ततश्च काश्मीराधिपात् श्रीहर्षादन्यएव बाणोल्लिखितो हर्षदेवः।

डक्टर हल साहेव-महोदयस्य मते कान्यकुब्ज एव श्रीकण्ठ-जनपदः। तत्र हि ६०० खृष्टाब्दात् ६२५ पर्य्यन्तं हर्षदेवनामा कश्चिद्राज्यञ्चकारेति प्रसिद्ध-चैनिक-परिव्राजकस्य होयाङ्सङ्-नामकस्य पुस्तकात् प्रतीयते।

मनातुङ्गाचार्य्यनामा कश्चिज्जैनिकाचार्य्यः स्वकृतभक्तमाल-स्तोत्रटीकायां बाणमयूरयोरेककालवर्त्तित्वं तथा परस्परं प्रति परस्परस्य प्रतिद्वन्द्वित्वञ्चावर्णयत्। यतः सूर्य्यशतकं रचयित्वा मयूरभट्टं कुष्ठरोगादिनिर्मुक्तं दृष्ट्वा बाणोऽपि तस्य स्वतः समुत्-कर्षो भविष्यतीति भिया निजहस्तपादादीनवयवानुत्कृत्य चण्डिकास्तवं निर्म्माय पुनरेव तानवयवान् प्राप। स हि वृत्तमिद-मुल्लिख्य पश्चादेताभ्यामप्यात्मनः शतगुणोत्कर्षं वर्णयामास; यथा, स स्वयं चतुश्चत्वारिंशल्लौहनिगडैरात्मानं निबध्य पश्चाद्भक्तमालस्तोत्रं विरचय्य बन्धनान्मुक्तो बभूव। तस्यैवमलौकिकं प्रभावमवलोक्य वृद्धभोजो नृपतिर्जैनधर्म्मं जग्राहेति। न ज्ञायतेऽत्र कियत्तथ्यम्; यतो बौद्धानां ब्राह्मणेभ्यः स्वोत्कर्षकथनायैवं बहूनि वृत्तानि कल्पितानि दृश्यन्ते।

ऐतिहासिकरहस्यप्रणेतुः डक्टर-रामदास-सेनमहोदयस्य मते बाणो मयूरस्य जामाता आसीत्। मयूरश्चैकदा निज-कन्ययाभिशप्तः कुष्ठरोगाक्रान्तो बभूवेति च किंवदन्ती वर्त्तते। बाणमयूरयोरेककालवर्त्तित्वे राजशेखरकृतशार्ङ्गधरपद्धत्यामपि प्रमाणं दृश्यते—

"अहो ! प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः ॥"

हलमहोदयेन मातङ्गदिवाकर इत्यनेन मनातुङ्गाचार्योऽभि-
प्रेत इति निश्चितम्। तेन च महोदयेन रत्नावलीनाटिकापि
बाणरचितेति हर्षचरिते "द्वीपादन्यस्मादिति" श्लोकमवलोक्या-
नुमितम्; परमेवंविधानुमानं कीदृक्सत्यमूलं नास्माभिर्विभा-
व्यते, दृश्यन्ते हि भिन्नग्रन्थकर्तृनिर्मितेषु संस्कृतसन्दर्भेषु एक-
रूपाणि वचनानि।

सम्प्रति बाणभट्टकृतं पार्वतीपरिणयं नाम किमपि नाटकं
प्रकाशमगमत्। तत्प्रस्तावनाश्लोकेऽपि बाणस्य वात्स्यायनवंश-
सम्भूतत्वं कथितम् —

"अस्ति कविसार्वभौमो वात्स्यायनवंशसामसम्भवो बाणः ।
नृत्यति यद्रसनायां वेधोमुखलालिता वाणी ॥"

—

श्रीः Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-चोकटत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्ड १२ ] जुन १८८३ [ ६ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

## प्रजा-भूम्यधिकारिणाम्।

(प्राप्तम्)

विदितमस्त्येतत् सर्व्वस्य यत्, साम्प्रतं प्रजा-भूम्यधिकारिणां परस्परं महान् विवादो वर्त्तते। तत्र बहवः समाजशीर्षस्थानीयाः प्रजापक्षपातिनो बहवश्च भूम्यधिकारिपक्षपातिनः। अस्माभिरेतावन्ति दिनानि प्रस्तावेऽत्र मध्यस्थैरवस्थितं। इदानीं समाजहितचिकीर्षया किमपि कथयामस्तत्र।

अत्रत्याः कर्षकाः समुचितशिक्षाभावात् हिताहितविवेकशून्या एव; ते आत्मनि यादृक् तदनुरूपं दूरे तिष्ठतु किमपि फलं नासादयन्ति। केवलं श्रावणे अनवरतधारासम्पातसिक्तसर्व्वाङ्गा हलाकर्षणसमये "समुत्पत्स्यमानशस्यैः संवत्सरं दारापत्यैः सुखं स्थास्यामः" इत्यादिकं कल्पनासुखमनुभवन्ति। दुर्भाग्यमेतत् हलाकर्षणसमये क्षेत्रे तेषां यादृक् प्रभुत्वं फलावाप्तिसमये न तादृक्। तदा सप्रमथेनैव भूतपतिना, सानुचरेण भूम्यधिकारिप्रधानामात्येन पूर्व्वदत्तधनस्य चक्ररीत्या वर्द्धितकुसीदनिरूपणपरेणागत्य विस्फार्य्य भ्रुकुटीमवस्थीयते। अनन्तरं जाते तस्य निर्णये यस्य भाग्यं चेत् गृह्णाति सहि सुखीभूय स्मरति पूर्व्वसुकृतस्य। हाहाः! ते पशव इव केवलं परोपकारे नियुक्ताः; परं भूम्यधिकारिणो महोपकारिणोऽपि तान् पशुपालादव गृहीत्वा साधयन्ति स्वकार्य्याणि।

प्रजाश्च तेभ्यो भिया यथावदन्ति तथैवाविचारितमेव सम्पादयन्ति । यदि कश्चित् भूम्यधिकारिणः स्वार्थपरं चेष्टितमतिक्रम्य वर्त्तते, तदा भूम्यधिकारी क्रुद्धस्तस्य सर्व्वस्वहानावपि न पराङ्मुखीभवति । वस्तुतस्तु प्रजासु भूम्यधिकारिणां यादृक् अत्याचारो दृश्यते सहि वर्णयितुं न शक्यते ।

एवञ्च परमोपकारिषु प्रकृतिवर्गेषु भूम्यधिकारिणां अत्याचारः सर्व्वथानुचितः । ये खलु ग्रीष्मस्योत्तापं वर्षाणां वारिधाराः शीतस्य हिमानीं जीविकार्थं अनन्यगतितया सहन्ते, ये जलकर्दमपूर्णक्षेत्रे (सर्पाभिपातभिया) कथञ्चिदुदरपूर्त्तिमेव कृत्वा शस्योत्पत्तौ यतन्ते, फलपाककाले तेषां वञ्चनं येनाकार्य्येण तुल्यं तदकार्य्यं नास्त्येव । फलतः मनुष्यलोके यदि प्रकृतं हितं तत् कर्षका एव सम्पादयन्ति ; तेषामेतादृक्कदने राज्ञः दृष्टिः सर्व्वथोचिता ।*

---

* सम्प्रति हि नवे प्रजाभूम्यधिकारिघटितराजविधौ भारतीयशासनविधिव्यवस्थापकी सदसि समालोचनविषयीभूते केचित् प्रजापक्षपातिनो नूतनविधेः प्रवर्त्तनमनुमोदयन्ति। अन्ये च भूम्यधिकारिसपक्षाः पुरातनविधेः (१०साल्लीयस्य) परिवर्त्तनमनावश्यकमामनन्ति । वयन्तु प्रागुक्तयोर्विध्योः कतरो हितकृदिति विनिर्णेतुमक्षमाः तूष्णीं स्थिताः, यतो भूपतीनां चरितं हि निसर्गदुर्बोधं वयञ्चाबोधविक्लवाः । अत्रान्तरे केनचिदभिज्ञेन सन्निवेशितैतत् पत्रं प्रेषितम् । तेन च राजनियमानभिज्ञेन विषयस्यास्यैकदेशमात्रमवलम्बितम् । अतः पत्रमिदमसम्पूर्णम् । इति सं ।

सुरेन्द्रकाराजनितखेदः ।

(कस्यापि भट्टपल्लीचतुष्पाठीच्छात्रादधिगतः)

सुरेन्द्र !

(१)

हे हिन्दुसुन्दरकुलोज्ज्वलरत्नखण्ड !
सन्तापमाप्तमखिलं तव मन्युजन्यं ।
प्रोत्साहभङ्गकदितं हृदयं सुरेन्द्र !
कीदृग्गिरात्र समये बत सान्त्वयामि ॥

(२)

मान्द्राजमध्यमगधप्रभृतिप्रदेशान्
वार्त्ताधिरोहति यदा विपदस्तवेयं ।
किंनाम तत्र समये सहसा समस्त-
मस्तं पतद्विधुरिवाविधुरं न चास्ति ॥

(३)

रे वङ्गसोदर दरैर्निहतार्य्यवीर्य्य
तारस्वरैः स्वरवधि स्फुटय स्विरान्तं ।
जानासि नास्ति रुदितादिह किञ्चिदन्यत्
पथ्यं कथं कथय मूकइव स्थितोऽसि ॥

(४)

ह आतपत्र समये नयने निमील्य
कान्तासनाथशयनं भजसे सुखेन ।
किं निद्रयावन ! सुखं शयनं विमुञ्च
किं वृत्तमद्य सुहृदः क्षणमस्य पश्य ॥

(५)

ह वङ्गबान्धव तव व्यथितं नितान्तं
चित्तं न पातयति साम्प्रतमश्रुभारं ? ।
आबालवृद्धवनिताकुलमस्य दुःखैः
शोकं दधाति सततं सुमहाश्रयतैः ॥

(६)

हा वङ्ग भग्नहृदयाहृतपूर्वगर्व्वं
नायाति नूनमचिरं तव पूर्व्वभावः ।
किं क्रन्दितैरनुदिनं तनुभागधेय !
कर्म्मानुगच्छति फलं सततं नियत्याः ॥

(७)

हा हन्त भारत चिरं किमु जीवितेन
सौभाग्यसुन्दरमणिह्र्दमध्यमग्नः।
अस्मात् परं हृदयभेदकरं किमन्यत्
दुःखं तवास्ति लिखितं ननु भागधेये ! ॥

(८)

आसिन्धुहिन्दुहृदयोद्गततीव्रदुःखैः
दग्धं जगत् यदभवत् किमिदं तदुक्तैः।
निर्बन्धबन्धुविरहः किल लोकजातं
बध्नाति निष्ठुरमिति प्रकृतिप्रसिद्धिः ॥

(९)

कां वच्मि वाचमधुना न च वाञ्छ्मस्ति
नायाति किञ्चिदथवा वचनं ममेति ।
मा गाढ़पीडय * मनस्तव शोकशुष्क-
माश्वासय स्वयमिदं सततं सुरेन्द्र ॥

* गाढ़पीड़ां मा प्रापय इत्यर्थे णिच् ।

## संक्षिप्तसमालोचनम् ।

वयमतीवकृतज्ञहृदयेनाधोलिखितानां पुस्तकादीनां प्राप्तिं स्वीकृत्य तेषु यथामति स्वाभिप्रायं प्रकाशयामः ।

(१) वाल्मीकिजयं—प्रबन्धपुस्तकं श्रीहरप्रसादशास्त्रि-एम् ए-प्रणीतं । प्रबन्धोऽयं काव्यदर्शननीतिशास्त्रेतिहासिकोपन्यासानां कतमस्मिन्नन्तर्भवितुमर्हतीति नास्माभिर्निर्णेतुं शक्यते, यतएव पूर्व्वोक्तानां सर्व्वेषामेव शास्त्राणां सारान् सङ्कलय्य तैरपूर्व्वतया निर्म्मितं प्रतिभाति ; संस्कृतभाषायामेतत्प्रतिद्वन्द्वि किमपि पुस्तकं नेदानीं दृष्टिगोचरं भवति, वङ्गभाषायान्त्विदमेव प्रथमं । नामाकर्णनमात्रतो ग्रन्थस्यास्य विषयो यथानुमीयते वस्तुतस्तु न तथा । अत्र हि कथाच्छलेन वीर्य्यज्ञानशङ्कराणां मध्ये वृद्धधर्म्मस्य विजयो वर्णितः । एवंविधस्य गुरुविषयस्य प्रबन्धस्य संक्षिप्तसमालोचनेन केवलं ग्रन्थगौरवहानिर्भवेदित्याशङ्कयानेव निवृत्तावयम् ।

(२) अष्टादशविद्याः—श्रीगोविन्दमोहन-राय-विद्याविनोद-वारिधि-महोदयेन सङ्कलिता प्रकाशिता च ।

"सषड़ङ्गा चतुर्व्वेदी मीमांसा न्यायविस्तृतिः ।
आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वञ्चार्थशासनं ।
पुराणं धर्म्मशास्त्रञ्च विद्या अष्टादश स्मृताः ।

इत्येतासां प्रसिद्धानामष्टादशविद्यानां तथा माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिक-चार्व्वाक-दिगम्बरादि- नास्तिक-मतानामपि स्थूलमर्म्माणि संक्षेपतः समुद्घाटयितुमस्मान्मित्रं सर्व्वशास्त्रतत्त्वज्ञः प्रसिद्धनामा ग्रन्थकृत् प्रवृत्तस्तत्र कतिचिन्मतानि वङ्गभाषया सङ्कलय्य पुस्तकाकारेण प्रकाशयामास । तच्च पुस्तकं प्रथमखण्ड-मित्यभिहितम्। खण्डमात्रमालोक्य सम्पूर्णस्यालोचनं साहसकार्य्य-मेवेति साम्प्रतं तूष्णीं स्थिता अपि वयमनेनैव कथाशेषं कुर्म्मो यद्विद्याविनोदवारिधिरपि यदि विद्यानां स्थूलमर्म्ममात्रं प्रकाशयेत् तदा को नामापरो विद्यानां विस्तृतविवृतिं कथयितुमुत्साही भवेदिति ।

(३) सारस्वतपत्रम्—पत्रमिदं ढाका-लक्ष्मीवाजारस्थ २५ संख्यकभवने रघुनाथयन्त्रे श्रीश्यामाचरणदासेन प्रति शनिवासरं मुद्रितं प्रकाशितञ्च भवति ।

दृश्यन्ते साम्प्रतं वङ्गभाषायां बहूनि संवादपत्राणि, परं तत्रे-दमेकमेव स्वदेशहितार्थमात्मानमुत्ससर्ज्ज । वङ्गभाषोन्नतिविषये सन्तु नामानेकान्येतत्तुल्यकक्षाणि संवादपत्राणि, वङ्गदेशोन्नति-विषये न तावत्पर्य्यन्तमेतत्प्रतिपक्षीभूतं किमपि संवादपत्रं दृष्टं। वयमस्यैतत्सम्पादकानाञ्च दीर्घजीवनं प्रार्थयामः ।

---

# हर्षचरितम्।

प्रस्तावना।

हर्षचरितं नाम पुस्तकं सुप्रसिद्धेन कविना श्रीमता बाण-भट्टेन विरचितमष्टभिरुच्छासैः परिच्छिन्नं। तत्र साम्प्रतं पञ्च-मोच्छासो विश्वविद्यालयस्य एन्ट्रेपरीक्षायां संस्कृतपुस्तकेषु निर्णीतः। अतोऽस्य (पञ्चमोच्छासस्य) संक्षिप्तविवरणं छात्राणां किमप्युप-कारि भविष्यतीति तदत्र प्रकाश्यते। परं तत्प्रकाशनात् पूर्व्वं तत्पूर्व्ववृत्तस्यापि समुल्लेखनमुचितमिति तदपि कतिपयैर्वचनैः समुच्यते।

आसीत् पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः श्रीकण्ठो नाम जनपदः। तत्र च साक्षात् सहस्राक्ष इव सर्व्वादि-राजतेजःपुञ्जनिर्म्मित इव नाम्ना पुष्पभूतिरिति राजा बभूव। कदाचित् तस्य वीर्य्योत्कर्षेण वशीकृता लक्ष्मीरवादीत् "उत्पत्-स्यते हि त्वदीये वंशे सर्व्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषुर्द्वितीयो मान्धातेव, यस्यार्थं करः स्वयमेव कमलमपहाय ग्रहीष्यति चामर"मिति।

अथ तस्मात् पुष्पभूतेः श्रीधरात् विश्वरूपप्रकारादिवा-जायन्त राजानस्तेषु च हूण-सिन्धु-लाट-गुर्ज्जर-गान्धार-मालवानां विजेता प्रतापशील इति प्रथितापरनामा प्रभाकरवर्द्धनोनाम राजाधिराजो बभूव। तस्य च राज्यवर्द्धनो हर्षश्चेति द्वौ पुत्रौ कन्या चैका बभूवुः। यथा द्वयोः सुतयोरुपरि स्तनयोरिवैका-वलीलतया नितरामराजत जनयित्री। ततो यथाकालं कन्यां पात्रसात् कृत्वा ज्येष्ठपुत्रं हूणानां जयाय प्रेषितवान्। अग्र-वृत्तन्त्वाग्रे लिख्यते।

पञ्चमोच्छ्वासस्य संक्षिप्तविवरणम् ।

अथ कदाचित् राजा प्रभाकरवर्द्धनो राज्यवर्द्धननामानं स्वसूनुमाहूय तमपरिमितबलानुयातं विधाय चिरन्तनामात्यैरनुरक्तैश्च सामन्तैः परिवृतं कृत्वा च हूणदेशविजयायोत्तरापथं प्राहिणोत् । प्रयान्तञ्च तं स्वानुजः कुमारो हर्षः तुरङ्गैः कतिप्रयाणकानि(१) अनुययौ । ज्येष्ठे भ्रातरि उत्तरां दिशं प्रविष्टे स विक्रमैकरसो युवा हर्षो मृगयां चरन् कतिपयान्यहानि प्रवासे व्यलम्बत । चकार च स्वल्पीयोभिरेव दिवसैर्निःश्वापदान्यरण्यानि ।

एकदा प्रसुप्त एव स्वप्ने दुर्निवारदावेन दह्यमानं केसरिणमद्राक्षीत् । तस्मिन्नेव च दहने शावकानुत्सृज्योत्प्लुत्यात्मानं पातयन्तीं सिंहीञ्चापश्यत् । तदवलोक्याचिन्तयच्चाहो तिर्य्यग्भिरपि प्रियविरहो दुःसह इति । प्रतिबुद्धस्य चास्य वामाक्षि पस्पन्दे, अजायताकस्मादेव गरीयसी दुःखासिका(२); किमिदमिति चिन्तापगतधृतिस्तस्मिन्नहनि शून्येनैव चेतसा मृगयां व्यक्रीडत् । अथ मध्यमह्नः भवनमागत्य वेत्रपट्टिका(३)मधिशयानः स्वाम्यादेशेन पृष्ठतः प्रेर्य्यमाणमिव द्रुततरमायान्तं कुरङ्गकनामानं राजवार्त्ताहरमद्राक्षीत् । दृष्ट्वैव तं पूर्व्वनिमित्तपरम्पराविर्भावितभीतिरभिद्यत हृदयेन । कुरङ्गकस्तु कृतप्रणामोऽस्मै लेखमुपानिन्ये ।

---

(१) प्रयाणकानि वसतीः ( Marches ? ) ।
(२) आसनं = आसिका, दुःखेन आसिका दुःखासिका अरतिरिति शङ्करः ।
(३) वेत्रनिर्म्मितं कटं ।

तत्र देवो हर्षः स्वयं बाष्पविलोलितहृदयोऽप्यपृच्छत् "कुरङ्गक ! किं मान्द्यं तातस्येति ।" सोऽपि बाष्पगद्गदया वाचाकथयत् "देव ! दाहज्वरो महानिति ।" तच्छ्रुत्वा सहस्रधेवास्य हृदयं पफाल । पितुरायुष्कामस्तत्क्षणमेव कृताचमनोऽपरिमितं धनं ब्राह्मणसा-दकरोत् । अभुक्त एव, ससम्भ्रमपरिजनोपनीतं तुरङ्गमारुह्य एकाक्येव प्रतस्थे । अपरे चानुयायिनस्तमनुजग्मुः । आगच्छन् हि स पथि बहूनि दुर्निमित्तानि(४) पितुरनिष्टसूचकान्यपश्यत् । तद्दर्शनोपजातहृदयवेगेन च तेन बहुयोजनसम्मितोऽध्वा एके-नैवाह्ना लङ्घितः ।

अथान्यस्मिन्नहनि मध्यन्दिने, अमङ्गलैर्वेष्टितमिव, यातु-धानैर्विध्वस्तमिव, शून्यमिव, सुप्तमिव, मूर्च्छितमिव, छलित-मिव, मुषितमिव स्कन्धावारमाससाद ।

प्रविशन्नेव विपणिवर्त्मनि कुतूहलाकुलबालकपरिवारितं यमालयचित्रं दर्शयन्तं यमपटिकं (५) ददर्श, तेनैव च गीय-मानं श्लोकमशृणोत्—

"मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि, कस्य ते कस्य वा वयम्" ॥

एतेन चाधिकतरविदीर्यमाणहृदयः क्रमेण राजद्वारं ययौ ;

(४) गोमायुसारङ्गगणानामन्यथागमनं, वायसानां विराव इत्यादि ।

(५) यमपटेन जीवति यः सः, यमपटे लिखितानां नरकयातनाप्रकाराणां प्रदर्शनेन आजीविको भिक्षुकविशेषः ।

तत्र च राजभवनान्निष्क्रामन्तं सुषेणनामानं वैद्यकुमारं दृष्ट्वा प्रणम्याप्रच्छत् "सुषेण ! अस्ति विशेषस्तातस्य न वेति"। सोऽवदत् नास्तीदानीं, यदि भवेत् कुमारं दृष्ट्वेति। ततो द्वारपालैः प्रदर्शिताध्वा नुष्ठितविविधस्वस्त्ययनं राजकुलं विवेश। तत्र चाकुलितपरिजनं तृतीयं कक्ष्यान्तरमासाद्य धवलगृहे (६) स्थितं क्षयेण स्वीकृतं व्याधिना विधेयीकृतं कालेन क्रोडीकृतं वपुषि क्षीणं मुहुर्मुहुरार्यपुत्र ! स्वपिषीति व्याहरन्त्या देव्या यशोमत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत्। दृष्ट्वा च तमन्तकपुरगतमेवामन्यत, क्षणन्त्वान्तःकरणेन निराकृत इवासीत्; किंकर्त्तव्यविमूढश्चाभवत्। नृपतिस्तमतिदयितं तनयं दृष्ट्वा तदवस्थोऽपि विस्मृतज्वरसंज्वरः शरीरार्द्धेन शयनादुत्थाय सुचिरमालिलिङ्ग।

अथ कथं कथमपि चिराद्विमुक्तं प्रणतजननीकं शयनान्तिके समासीनं कुमारं पुनःपुनर्वेपथुमता पाणितलेनावमृशन् क्षयक्षामकण्ठोऽवादीत्, वत्स ! नितरां कृशोऽसीति। कुमारानुचरो भण्डिनामाकथयत् "देव ! तृतीयमहोऽकृताहारस्यास्याद्य" इति। तच्छ्रुत्वा बाष्पावरुद्धकण्ठः कथं कथमप्यायतं निश्वसन् प्रोवाच "वत्स ! जानामि त्वां पितृप्रियं, दहति खल्वहमधिकतरमनेन युष्मदाधिना, निशितमिव शस्त्रं तक्ष्णोति मां त्वदीयस्तनिमा; सुखञ्च, राज्यञ्च, वंशश्च, प्राणाश्च त्वयि मे स्थिताः,

(६) धवलगृहे सौधोत्सङ्गे।

यथा मम तथा सर्व्वासां प्रजानां। न खलु पुण्यभाजां वंशमल- ङ्कुर्व्वन्ति भवादृशाः, करतलगतमिव कथयन्ति चतुर्णामर्णवाना- माधिपत्यं ते लक्षणानि। प्रजाभिर्हि बन्धुमन्तो राजानो न ज्ञातिभिः। तदुत्तिष्ठ, कुरु सर्व्वाः क्रियाः, कृताहारे च त्वय्यहमपि सुखमुपयोक्ष्ये पथ्यं। पित्रैवं पुनः पुनराहारार्थमादिश्यमानो धवलगृहादवततार कुमारः। राजपुरुषेणाधिष्ठितश्च स्वधाम जगाम। तत्र महापातकमयानिवोत्पादितघृणान् क्षारमया- निवानीतवेदनान् कतिचित् कवलानगृह्णात्।

ततोऽस्याभिलाषिणि सवितरि सर्व्वानेव वैद्यानाहूय पप्रच्छ "किमत्र विधेयमधुनेति"। ते व्यज्ञापयन्, देव! धैर्य्यमवलम्बस्व, कतिपयैरेव दिवसैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितर- मिति। ततस्तेष्वष्टाङ्गायुर्व्वेदस्य पारं गतं राज्ञा स्वसुतनिर्विशेषं लालितं रसायननामानमपृच्छत् "सखे रसायन, कथय तथ्यं यद्- साध्विव पश्यसीति"। असावब्रवीत्, देव! श्वःप्रभाते यथाव- स्थितमावेदयिताऽस्मीति। अत्रैवान्तरे भवनकमलिनीपालः कोक- माश्वासयन्नपरवक्त्रमुच्चैः पद्यमपठत्

"विहग! कुरु दृढं मनः स्वयं, त्यज शुचमाशु विवेकतर्कानि।
सह सकलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः" ॥ *

तच्चाकर्ण्यवाङ्निमित्तज्ञः पितरि जीविताशां सुतरां शिथिली- चकार। गतेषु चाभिषक्षु पितुः सकाशमुपगम्य तस्य दुःखमयान्

---

* अपरवक्त्रं छन्दोविशेषः। अत्र [illegible] श्लोकः।

प्रलापाननन्तरमाकर्णयन् दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशामनैषीत्। प्रातः स्वमन्दिरमागत्य भ्रातुरानयनार्थं दीर्घाध्वगान् द्रुपालान् प्राहिणोत्। अत्रान्तरे रसायनो राजजीविते हताशो वह्निं प्रविष्टः। तद्वृत्तमाकर्ण्य हर्षः सुहृद्वान्तस्तापेन सद्योविवर्णतामगात्, उत्पाट्यमानमिव न शशाक शोकान्धं धारयितुं हृदयम्।

इत्थंभूते च कुमारे हर्षे राजनि च तदवस्थे सर्वस्यैव लोकस्याधरेषु लिखितानीव परिदेवितपदानि, हृदयेषु निधानीकृतानीव दुःखान्यभवन्। रात्रौ च भूकम्पादिकमहोत्पातानां सम्पातो बभूव। तेन च दूयमानमानसः कुमारः कथमपि निशां निनाय।

तत्परेद्युः क्व कुमारः क्व कुमारः इति व्याकुलं प्रतिपुरुषं पृच्छन्ती वेलेति नाम्ना यशोमत्याः प्रतिहारी तमुपेत्य विज्ञापितवती "देव! परित्रायस्व परित्रायस्व, जीवत्येव भर्त्तरि किमपि अध्यवसितं देव्येति"। तदाकर्ण्य दुःखाकुलितः कर्त्तव्यप्रतिपत्तिहीनः कुमार उत्थाय त्वरमाणोऽन्तःपुरमगात्। तत्र मन्युमुखतानां राजमहिषीणां "तात चूत! चिन्तयात्मानं, प्रवसति ते जननी; मया विनाद्यैवानाथासि भगिनि भवनदाडिमलते!; रक्ताशोक! मर्षणीयाः पादप्रहाराः; चेटि! मुञ्च चरणं; तात कञ्चुकिन्! किं माम् अलक्षणां प्रदक्षिणीकरोषि" इत्येवंरूपाणि विविधानि करुणपरिदेवनान्यशृणोत्। ददर्श च

तत्र परलोकप्रयाणोद्यतां शोकदुःखाभिभूतहृदयां चित्रपुत्रिका-श्यामन्त्रयमाणां, गृहपतत्रिणामपि पुरस्तादञ्जलिमुपरचयन्तीं पशूनप्याप्रच्छमानां भवनपादपानपि परिष्वजमानां मातरम्। दूरादेव वाष्पायमाणदृष्टिरभ्यधात्, देवि! त्वमपि मन्दभाग्यं परित्यजसि, प्रसीद, निवर्त्तस्व, इत्यभिदधान एव चरणयोर्न्य-पतत्। देवी तु यशोमती तथा पादनिहितशिरसि कनीयसि प्रेयसि तनये मूर्च्छान्धतमसं रसातलमिव प्रविशन्ती कृतान्तं गर्ह-माणा शाकुन्तलमदेवातिचिरं मुक्तकण्ठं प्रारोदीत्।

प्रशान्ते च मन्युवेगे सस्नेहं कुमारमुत्थाप्य विविधैर्हितैः प्रियैश्च वचनैस्समाश्वास्य, शिरसि समाघ्राय, चरणाभ्यामन्तःपुरान्निर्गत्य सरस्वतीतीरं ययौ। तत्र च भगवन्तं प्रज्वलितं हुतवहं प्राविशत्। कुमारश्च मातृमरणविक्लवो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्।

अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं जनयि-तारम्। राजा तु उपरुध्यमानदृष्टिरपि अविरतरुदितशब्देन प्रत्यभिज्ञाय शनैः शनैरवादीत्, "पुत्र! नार्हस्येवं भवितुम्। भवद्विधा न मुह्यन्ति महासत्वाः। क्व भवान् क्व वैक्लव्यम्। कुल-प्रदीपोऽसि, क्षितिरियं तवैव, उह्यतां राज्यभारः, परिरक्ष्यन्तां प्रजाः, पाल्यतां परिजनः, शत्रवो निरवशेषतां नेयाः, केयश्चिन्ता इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील लोचने। हर्षस्तु शोकपरीतचेता दुःखदुःखेन सर्वा अन्त्येष्टिक्रियाः समाप्य ज्येष्ठस्य भ्रातुः प्रत्यागमनं प्रतीक्षमाणः शून्ये राजभवने कथमप्यतिष्ठत्।

---

श्रीं

Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्नम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा गिरिजाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्याद्-दुर्व्विद्यातिमिरम्भुवि ॥

खण्डं १२ ] मई १८८३ [ ५ सङ्ख्या

सूची



कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्न लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः ।

---

### विशेषद्रष्टव्यम् ।

सम्प्रति २४ परगना नैहाटीसमीपस्थ-भट्टपल्लीग्रामाद्विद्योदयः प्रकाशते, इतःपरं पत्रादिकं भट्टपल्ल्यां सम्पादकसमीपे प्रेषणीयम् ।

### विद्योदयस्य मूल्यादीनां नियमः ।

| | | |
|---|---|---|
| वार्षिकमूल्यं प्रथमदेयं | ... ... ... | २।०/० |
| ,, पश्चाद्देयं | ... ... ... | ३।०/० |

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)



---

## नूतन-पुस्तकम् ।

"दत्तकचन्द्रिका"—हृषीकेश-शास्त्रि-प्रणीता, हिन्दीभाषानुवाद-सहिता, मूल्यं ॥० विद्योदय-कार्य्यालये प्राप्तव्या ।

तत्र संवादपत्र-सम्पादकमतम्—

"इसकी भाषा बहुत ही सीधी और सरल है, निःसन्देह भट्टाचार्य्य महाशयने बड़े श्रमसे इसका अक्षरार्थ अनुवाद किया है, प्रतिमास विद्योदय संस्कृत मासिकपत्र पढ़नेसे इनकी संस्कृतमें योग्यता और संस्कृत लेखकी उत्तमता भरपूर हमारे नेत्रगोचर थी, अब इस पुस्तकका भाषानुवाद देख हिन्दी लेखमें भी इनकी योग्यता का सम्यग् ज्ञान होगया" ।

हिन्दी-प्रदीप, मासिक पत्र, १ली नवम्बरकी संख्या । प्रयाग अहियापुर ।

# तर्कामृत

पण्डित श्रीहृषीकेश भट्टाचार्य्य
शास्त्रि प्रणीत

तर्कानन्द नाम हिन्दी अनुवाद सहित

पञ्जाब विश्व विद्यालयकी

रेजिष्ट्रार साहिबकी आज्ञासे

प्रकाशित हुआ।

---

कलिकाता

नं २४, गिरिश-विद्यारत्नस् लेन

गिरिश-विद्यारत्न यन्त्रमें

पण्डित श्रीहरिश्चन्द्र कविरत्नने

मुद्रित किया।

संवत् १९३९।

---

मूल्य — ॥०

# विज्ञापन।

विदित हो कि विद्योदय नाम मासिक पत्र जो केवल संस्कृत भाषामें था और केवल संस्कृत रसिकोंको यथाशक्ति आनन्द देताथा परन्तु संस्कृत अनभिज्ञके जिनकी संख्या आजकल बहुत हुई किसी काममें नहीं आता इसलिये उसका आदर भी जैसा चाहिए ऐसा नहीं था। इस न्यूनताको दूर करनेके लिये मैंने अच्छे अच्छे संस्कृत ग्रन्थके हिन्दीमें उल्थाकर इस पत्रमें छपनेको संकल्प किया, और जिनमेंसे दत्तकचन्द्रिका और यह तर्कामृत सम्पूर्ण होकर साधारणके अवलोकनके लिये अलग भी मुद्रित किए गए।

कणाद मुनिकृत वैशेषिक दर्शन और महर्षि गौतम मुनि प्रणीत न्याय दर्शन आपसमें बहुतही मिलाप रखते हैं। इसलिये आधुनिक पण्डित लोगोंने इन दोनोंके प्रवेशोपयोगी प्रथम पाठ्य ग्रन्थोंको प्रायश एकही रीतिसे बनाया है, जिन ग्रन्थोंमेंसे अनंतभट्टकृत तर्कसंग्रह, विश्वनाथकृत भाषापरिच्छेद, लौगाक्षि भास्कर विरचित तर्ककौमुदी, और जगदीश तर्कालङ्कार कृत यह तर्कामृत बहुत प्रसिद्ध हैं। परन्तु उन सभोंसे तर्कामृतकी भाषा बहुतही गभीर और नैयायिकतासे भरी हुई है, जिस कारण इसमें और सभोंसे भलीभांति पदार्थोंके विचार करने पर भी पठन पाठनमें इसका तादृश प्रचार न था।

निस्सन्देह ऐसा उत्तमग्रन्थका प्रचार न होना बड़ी खेदकी बात है। मालुम होता है ऐसा समझकर कलिकाता संस्कृत कालेजके अध्यक्ष सर्व्वशास्त्रपारंगत श्रीमहेशचन्द्र न्यायरत्न महाशयने कठिन कठिन पदोंको व्याख्याके साथ इसको छापाया,

और एम.ए. परीक्षामें इसका निवेश किया होगा। ऐसा उत्तम ग्रन्थका प्रचार जितना बढ़ेगा उतनाही अच्छा है, ऐसा विचार कर मैंने सरल और सीधी हिन्दी बुलिमें इसका अनुवाद किया है। अनुवादके समय मैंने अपने पितृव्य और न्यायशास्त्रके अध्यापक भाटपाड़ानिवासि पूज्यपाद श्रीयुक्त यादवचन्द्र तर्करत्न तथा कलिकाता संस्कृत कालेजके अध्यक्ष माननीय श्रीमहेशचन्द्र न्यायरत्न सि, एस, आइ, महोदयसे कठिन स्थलोंमें पुछकर और कलिकाता संस्कृत कालेजके पुस्तकालयसे इसकी टीका चषकनाम पुस्तक लेके विचार कर अनुवाद किया।

अन्तमें यह कहना योग्य है कि इसके संशोधनमें मेरा परममित्र पण्डित श्रीयुक्त हरिश्चन्द्र कविरत्न महोदयने बड़ी सहायता की, जिसलिये उनको बहुत बहुत धन्यवाद देताहूं।

संवत् १९३९। हृषीकेश शर्म्मा।

---

भ्रम संशोधन।

इस ग्रन्थमें ६३।६४ पृष्ठ दो दफे छप गये। पहिला ठीक नहीं इसलिये उसको छोड़ कर दूसरेको रखो।

## नरेश-सम्भ्रमः ।

यथा दुश्मन्तानुयान्त्रिकस्यन्दनालोकभीतेन केनचिद्वन्य-गजेन पीड्यमानं तपोवनमवलोक्य तपोवनवासिनामाबालवृद्ध-वनितानां सर्व्वेषामेव मनःसु हस्तिसम्भ्रमोऽभवत्, यथाच काद-म्बरीकथाप्रस्तावके शम्पायनेतिवृत्तसंश्लिष्टव्याधाक्रमेण वृक्षस्थानां सर्व्वेषामेव पक्षिणां मनःसु व्याधसम्भ्रमो जातस्तथैवाद्य माननीय-श्रीमन्नरेशमहोदयानुष्ठितसुरेन्द्रकारावासकर्म्मणा निखिलभारत-वासिनां मनःसु नरेशसम्भ्रमः संवृत्तः । साम्प्रतं हि तपोवन-विषया ऋषयइव पञ्चनद-महाराष्ट्र-वङ्गाद्यखिल-भारतप्रदेश-वासिनः ऋषिवंश्या मिलिताः "भो भो भारतवासिनो निरीहाः मनुजाः ! स्वस्वस्वत्वरक्षणाय सज्जीभवन्तु भवन्तः, प्रत्यासन्नः खलु युष्माकं स्वत्वलोपसमयः" इत्येवमार्त्तकोलाहलैः प्रियजनैः सह हिमगिरेरेकान्तप्रदेशे विश्रामसुखमनुभवतः श्रीमतो लर्ड रिपन-महोदयस्य कर्णोपघातं जनयन्ति, तथा व्याधस्य तथाविध-भीषणमूर्त्त्यवलोकनेनोद्गतप्राणाः पक्षिण इवैकस्वरेणाव्यक्तमुच्चैः परिदेवयन्ति ।

छात्रवर्गा हि मनोवाक्कायकर्म्मभी राजपुरुषाणां किमप्यप्रिय-मनुष्ठाय तेषामाश्रितानुग्रहं विद्रावयन्ति । युवान एवंविधा-नुष्ठानस्य नियमराहित्यप्रदर्शनाय सर्व्वैव [illegible]

दिषु महतीं समितिं विधाय व्याख्यानवचनैर्दिशः प्रतिध्वनयन्तः स्वस्वसम्मतिं प्रकटयन्ति। पण्डितास्तु शास्त्राण्युद्धाव्य तत्र कार्य्य-घटकीभूतधर्म्माधिकरणविष्णुप्रतिमानयनस्याशास्त्रीयतां प्रतिपाद-यितुं कोलाहलं कुर्व्वन्ति। इत्थं सर्व्वएव समयोचितं चेष्टन्ते। भारते तादृशीं सर्व्वव्यापिनीं चेष्टामवलोक्य विदेशीयानां चक्षुरीष-दुन्मीलितं जातम्। परमत्रान्तरे ज्यैष्ठमास आयातः। जलधारया-ग्निरिव पक्वाम्रस्वरूपदर्शनेन भारतीयानां परिभवाग्निर्मुहूर्त्तेनैव निर्व्वाणतां गतः। सुरेन्द्रस्य कारावासो यथावत् स्थित एव। भवतु, एतद्गतः सर्व्व एव वृत्तान्तः सर्व्वत्र भूयः प्रचारितः, तत् किमनेन पिष्टपेषणेनैतदालोचनेन। इत आम्रभोजन-मेव श्रेयः।

---

# पण्डितचातुर्य्यं।

अथ कदाचित् कश्चिदान्वीक्षिकीं पिपठिषुः कमपि हठतर्क-कारिणं वैदान्तिकमध्यापकं गुरुत्वेनावृणोत्। तत एकदा शिष्यः कारिकावलीपाठावसरे स्वपुस्तकमालोक्य "गणनव्यवहारे तु हेतुः संख्याभिधीयते" इति पाठमपाठीत्, तदाकर्ण्य गुरुः शान्तं शान्तमित्युदीर्य्य कर्णौ पिधाय त्वरितं स्वपुस्तकमुद्घाट्याकथयत् "अहो! दुष्टं ते पुस्तकं, गणनव्यवहारे तु इत्येवं पाठो न कथमपि सङ्गच्छते, पश्य मदीयपुस्तके गगनव्यवहारे तु हेतुः संख्याभिधीयते इत्येवं युक्तियुक्तः सङ्गतार्थश्च पाठो विद्यते।" वस्तुतो गुरोः पुस्तके गणनव्यवहारे इत्येवं पाठ आसीत् किन्तु वङ्गाक्षरे ण-गयोः सादृश्यात् चीणदृष्टेर्गुरोर्णकारे 'ग'कारभ्रमो-ऽभवत्। काष्ठगतप्राणा अपि पण्डिता नात्मभ्रमं स्वीकुर्व्वन्ति। स च हठतर्ककारी वेदान्तवित् वेदान्तमतमवलम्ब्य गगनस्याखण्डरूपे-णैकत्वं तथा घटपटाद्युपाधिगतत्वेन नानात्वमतस्तद्व्यवहारे संख्याया मुख्यहेतुत्वमिति मतमविच्छिन्नतर्कवादैरसाधयत्।

वयमत्रान्यदेकं पण्डितचातुर्य्यमुदाहरामः।

भिसोहि हिँ हिं। अ, ८। ४ पादः। ६ सूत्रं। भिसः स्थाने केवलः सानुनासिकः सानुस्वारश्च हिर्भवति। इति हेमचन्द्रस्य प्राकृतविषयकं सूत्रमस्ति। परं प्राकृतव्याकरणानामस्मद्देशे बहुलप्रचाराभावादस्मद्देशीयाः प्रायः टीकाकृतप्राकृतवाक्यानां

संस्कृतरूपाणि तथा पूर्व्वप्रदर्शितप्राकृतोदाहरणानि च विलोक्य प्राकृतनियमाननुमानेन जानन्ति । किन्तु प्रायः सर्व्वत्र प्राकृतप्रबन्धे "भिसोर्हिं" इति रूपं दृश्यते । "हि" इत्यस्य प्रयोगो विरल एव । ततः प्राकृते भिसो "हि" इति रूपं सिध्यति नवेति न तेषां विज्ञानमस्ति । ते हि गद्ये "हि" इति रूपं प्रति लिपिकरप्रमादं हेतुत्वेनोदाहरन्ति, यत्र तु पद्ये 'हि'प्रयोगस्तत्र ते हेमचन्द्रसूत्रगतस्वकीयाज्ञानतामावरीतुं कामपि कल्पनापरम्परामाश्रयन्ति । पश्य मृच्छकटिकटीकाकृत् कलिकाता संस्कृतविद्यालयभूतपूर्व्वाध्यापकः परलोकगतश्च तर्करत्नोपाधिक-रामनयशर्म्मात्र कीदृशं चातुर्य्यमवलम्बते । नहि सुतमिदमजानन् मृच्छकटिकस्य प्रथमेऽङ्के शकारवचने "अम्हेहि वरं अहिणालि-अन्ति" इत्यत्र अम्हेहि इति रूपं प्रति न किमपि व्याकरण-नियमरूपं कारणमुद्भावयितुं समर्थश्छन्दःशास्त्रमाश्रयाय । अलि-खच्च अम्हेहि इत्यत्र छन्दोऽनुरोधादनुस्वाराभाव इति । छन्दोऽनु-रोधादनुस्वाराभाव एतावत्पर्य्यन्तं न कापि संस्कृतसन्दर्भे दृष्ट-पूर्व्वोऽस्माभिः भवतु 'दादा'वाक्यं प्रमाणं ।

अनन्तरं अष्टमेऽङ्के शकारवचने "एदेहि मे [illegible]-णेहिं हत्थेहि" इत्यत्र "एदेहि हत्थेहि" निरनुस्वारहिकारस्य द्विःप्रयोगदर्शनात् स किञ्चिदिव व्याकुलमना बभूव । स प्रथमं "एदेहि इत्यत्र हत्थेहि इत्यत्र चानुस्वाराभावश्छन्दोऽनुरोधा-दवगन्तव्यः" इत्येवं लिलेख, ततस्तस्य चिन्ताभवत् कथं सर्व्वत्र

छन्दोऽनुरोधादनुस्वाराभाव इति मद्वचनं प्रमाणं विना सादरं गृहीतं स्यान्नेति। अतएव "एदेहिं" "इत्थेहिं" इत्येवं-प्रकारस्यापि पाठस्य समर्थनमुचितमेवेत्थं विचिन्त्य तेनैवमुक्तं—यत्र च एदेहिं इत्थेहिं इति सानुस्वारः पाठः, तत्र हकारद्वयस्य सानुस्वारतया गुरुत्वेऽपि तीव्रप्रयत्नोच्चार्य्यतया लघुत्वावगतेर्न छन्दोभङ्गः। यथाह कण्ठाभरणः "यदा तीव्रप्रयत्नेन संयोगादेरगौरवं, न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः"। इत्यतां तावद् यदि तर्करत्नमहोदयस्य हेमचन्द्रसूत्रं विदितमभविष्यत्तदेत्थं वागाडम्बरमन्तरेणैव भिसोविकल्पेन "हि" भवतीत्येवं कथनेनैव सर्व्वमवदातमभविष्यत्। किन्तु पण्डितानां चातुर्य्यं लोकोत्तरमेव। न ते कदाप्यज्ञानं प्रकटयन्ति, किन्त्वेकविषयकमज्ञानमपरविषयकज्ञानेनावृण्वन्ति, ते न्यायविषयकमज्ञानं वेदान्तविषयकज्ञानेनाच्छादयन्ति, तथा व्याकरणविषयकमज्ञानं छन्दोज्ञानेनावृण्वन्ति।

किञ्च यच्च तेनोक्तं "यत्र च एदेहिं इत्थेहिं इति सानुस्वारः पाठः, तत्र हकारद्वयस्य गुरुत्वेऽपि तीव्रप्रयत्नोच्चार्य्यतया लघुत्वावगतेर्न छन्दोभङ्गः" इति, तदपि न सङ्गच्छते—यतस्तदुद्धृते कण्ठाभरणीयप्रमाणे "संयोगादि" शब्देन संयोगस्य आदिः (पूर्व्वः) एव ग्राह्यः। तथाहि "संयोगाद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रं" इत्यादि छन्दःशास्त्रवचनबलात् संयोगपूर्व्वस्यैव गुरुत्वं प्रतिपद्यते न तु संयोगस्य, तत् संयोगादिपदस्य 'संयोगप्रभृति'

इत्यर्थमुद्भाव्य सानुस्वारस्य ग्रहणं छन्दःशास्त्रविरुद्धमेव। छन्दोमञ्जर्य्यामपि संयोगादिपदेन संयोगपूर्व्वस्य ग्रहणं कृतं, यथा, प्राप्तनाभिह्रदमज्जनमित्यत्र संयोगपूर्व्वस्य 'भेः' तीव्र-प्रयत्नोच्चारणेन लघुत्वमिति कण्ठाभरणः। इत्यलं पल्लवितेन।

---

## पुराणकथा।

महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः।
चकार वाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः॥
(रघुवंश-सप्तमसर्गः)

श्लोकस्यास्य व्याख्यानावसरे पुराणकथैवोदाह्रियते।—

पुरा हि त्रेतायां देवानामसुरैः सह महद्युद्धमभूत्, तत्र दानवमायया पराजिता देवा नारायणं तुष्टुवुस्ततः प्रसादाभिमुखो भगवान् तान्देवानाह—

"अस्ति कश्चित् परञ्जयो नाम शशादस्य राजर्षेस्तनयः क्षत्रियवर्य्यः। तच्छरीरेऽहमंशेनावतीर्य्य तानसुरानशेषं निहनिष्यामि, तद्भवद्भिः परञ्जयोऽसुरवधार्थायेहामन्त्रयितव्य" इति। एतच्छ्रुत्वा प्रणम्य भगवन्तं विष्णुममरा परञ्जयसकाशमाजग्मुः।

ऊचुश्चैनं, भो भोः क्षत्रियवर्य्य! अस्माभिरभ्यर्थितेन भवताऽस्माकमरातिवधोद्यतानां साहायकं कृतमिच्छामः। तद्भवतास्माकमभ्यागतानां प्रणयभङ्गो न कार्य्य इत्युक्तः परञ्जयः प्राह—

सकलत्रैलोक्यनाथो योऽयं युष्माकमिन्द्रः शतक्रतुः, अस्य यद्यहं स्कन्धमारूढ़ो युष्मदरातिभिः सह योत्स्ये, तदाहं भवतां सहायः। इत्याकर्ण्य समस्तदेवैरिन्द्रेण च वाढ़मित्येवोक्तम्।

ततश्च स परञ्जयः शतक्रतोर्वृषभरूपधारिणः ककुदि स्थितो-हर्षसमन्वितोभगवतश्चराचरगुरोरच्युतस्य तेजसाप्यायितो देवासुर-संग्रामे समस्तानेवासुरान् निजघान। यतश्च वृषभककुत्स्थेन राज्ञा निसूदितमसुरबलं ततश्चासौ राजापि काकुत्स्थसंज्ञामवाप।

इति विष्णुपुराणम्, ४र्थ. २अ.।

---

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः॥
धातारं तपसा प्रीतं ययाचे सहि राक्षसः।
दैवात् सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः॥

रघु. १०सर्गः।

श्लोकद्वयं न सम्यग्रामायणानुगतत्वेन प्रतीयते, रामायणे हि प्रथमं ब्रह्मा देवेभ्यो रावणस्य मनुष्यवध्यत्वमकथयत्, ततोदेवा रावणवधोपायं जिज्ञासवे विष्णवे तद्वृत्तं कथयामासुः। भवत्वेतत्-श्लोकद्वयस्य व्याख्यावसरे रामायणकथैवानुसर्त्तव्या। यथा

ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः।
अब्रुवन् लोककर्त्तारं ब्रह्माणं वचनं ततः॥
भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः।
सर्व्वान् नो बाधते वीर्य्यात् शासितुं तं न शक्नुमः॥

उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥
नैनं सूर्य्यः प्रतपति पार्श्वे वाति न मारुतः ।
चलोर्म्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥
तन्महन्नो भयं तस्मात् राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्त्तुमर्हसि ॥
एवमुक्तः सुरैः सर्व्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
हन्तारं विद्धितस्तस्य वधोपायो दुरात्मनः ॥
तेन गन्धर्व्वयक्षाणां देवतानाञ्च रक्षसां ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्ता च तन्मया ॥
नाकीर्त्तयदवज्ञानात् तद्रक्षो मानुषांस्तदा ।
तस्मात् स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥

ततो देवा विष्णुं तुष्टुवुः । विष्णुश्च तान् रावणवधोपायं पप्रच्छ । ततः सर्व्वे सुरास्तं पप्रच्छुः—

"मानुषं रूपमास्थाय रावणं जहि संयुगे ।
सहि तेपे तपस्तीव्रं दीर्घकालमरिन्दम ॥
येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्व्वजः ।
सन्तुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ॥
नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥

इति रामायणं बालकाण्डे, १६सर्गः ।

---

## अकालवृष्टि-व्यवस्था ।

प्रश्नः——

महात्मन्,

अनुगतानुग्रहो हि महानुभावकतेति कस्यचित् वचनात् जातविश्वासः कमपि संशयितं विषयं त्वां पृच्छामि, निर्णायकोपदेशदानेन सफलयतु अस्माकं मनोरथम् ।

यथा, वर्त्तमानज्यैष्ठमासस्य चतुर्थपञ्चमदिनयोरुपनयनकाल आसीत्, किन्तु ताभ्यां दिवसाभ्यां पूर्व्वम् उक्तज्यैष्ठस्य प्रथमदिनात् त्रिदिनव्यापिका महती वृष्टिर्जाता न तूपनयनदिनयोः । अत्र प्रष्टव्यमेतत्—उल्लिखितदिनयोः कृतमुपनयनादिकं सिद्धं न वा ? अस्मिन् भवतः कीदृशं मतं, भट्टपल्लीवासिनाम् अध्यापकप्रवराणाञ्च ?

वशग श्रीसीतानाथ शर्म्मा तर्करत्नस्य

सानुनयनिवेदनम् । काशीहाटि ।

सकर्त्तृकस्य प्रश्नस्यास्य यथायथं समुल्लेखनेनास्माकं परित्राणं, यतः प्रश्नोऽयमशुष्कल एव वर्त्तते । अतएव प्रथमं प्रश्नमिमं साधारणबोधविपर्य्ययीकर्त्तुमंशतः परिवर्त्त्य परिवर्द्ध्य च पुनरेवावतार्य्यते ।

"नाकालवृष्टौ कुर्वीत व्रतबन्धशुभक्रियाः"। "एकेनाका चैकदिनं द्वितीयेन दिनत्रयं। तृतीयेन च सप्ताहं व्यापेदकाल-वर्षणे"। इति सामान्यविशेषवचनाभ्यामकालवर्षणात् सप्तदिनान्त-रुपनयनादिशुभक्रियानुष्ठाननिषेधात्, "चतुर्मासनिवृत्तौ तु चक्रपाणौ समुत्थिते। अकालवृष्टिं जानीयात् यावन्न स्वपते हरिः" इत्यनेन हरेरुत्थानात् पुनः शयनपर्यन्तं यावन्तो मासा भवन्ति तत्र कस्मिंश्चिदेकस्मिन् मासे दिनत्रयं व्याप्य वर्षणे संवृत्ते ततः सप्ताहः उपनयनादौ वर्जनीय इति स्थितम्। अथ पृच्छ्यते गत-ज्यैष्ठमासस्य प्रथमदिनादारभ्य तृतीयदिनं यावत् वर्षणे सति तस्यैव चतुर्थपञ्चमदिनयोः कृतमुपनयनं सिद्धं न वेति ?

## अस्योत्तरं।

ज्यैष्ठमासस्य वृष्टिं प्रत्यकालत्वे मतभेददर्शनात् केषाञ्चिन्मते तथाविधदिनयोः कृतमुपनयनमदुष्टमेव। तथाहि "पौषादि-चतुरो मासान् ज्ञेया वृष्टिरकालजा" इत्यनेन पौषाच्चैत्रपर्यन्तं या वृष्टिर्भवति सैवाकालजा वृष्टि न तु वैशाखादौ वृष्टेरकाल-जत्वमिति ज्ञायते। किञ्च "मार्गान्मासात् प्रभृति मुनयो व्यासवाल्मीकिगर्गास्त्वेवं यावत् प्रवर्षणविधौ नेति कालं वदन्ति। नाडीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालौ मासावेतावशुभफलदौ पौष-माघौ न शेषाः॥"

पितृचरणाः (भट्टपल्लीवासि स्मृतिरत्नोपाधिक श्रीमधुसूदन भट्टाचार्य्याः) तु न कस्यापि मते ज्यैष्ठमासस्य वृष्टिं प्रति अकालता भवितुमर्हतीति वदन्ति, तथाहि तन्मते "यावन्न सुप्यते हरिः" इत्येतदुक्ताकालवर्षणावधिप्रतिपादकं हरिशयनं नाम तस्मा-च्छ्रुत्याद्यनुमोदितकर्मविशेषानुष्ठानाननुष्ठानहेतुभूतात् प्रसिद्धाद्धरिशयनादन्यदेव किमपि "आवैशाखात् भुजगवनिताचुम्बनायास-खिन्नो देवो दैत्यप्रमथनपटुर्यावदेकान्तशान्तः। अम्भःशय्या-परिणततनुर्योगनिद्रामुपैति तावद्वृष्टेः समयउचितो ब्रह्मणा भाषितोऽयम्॥" इत्येतदुक्तं काल्पनिकं वैशाखावधि प्रवृत्तं हरिशयनमेव ग्राह्यं, अन्यथा "प्रावृट्काले समायाते रौद्रऋक्षगते रवौ।" "आर्द्रादितो विशाखान्तं रविचारेण वर्षति।" इत्येताभ्यां "यावन्न सुप्यते हरिः" इत्येतस्य विरोधापत्तिः। यत एताभ्यां आषाढ़स्य षष्ठदिवसे वर्षाकालप्रवृत्तिर्ज्ञायते, परमाषाढ़स्य षष्ठदिवसान्तं कथमपि तत्प्रसिद्धं हरिशयनं सम्भवति। अतएव हरिशयनपदेन "आवैशाखा"दित्येतदुक्ते काल्पनिके हरिशयने गृहीते ज्यैष्ठमासस्य कस्मिन्नपि मते न वृष्टिं प्रत्यकालत्वम्। इति विदुषां परामर्शः।

---

# श्रीमत्प्रचालित-विद्योदय-निर्द्दिष्ट-व्याकरण-प्रश्नान् प्रतिवक्तुं श्रीकृष्णशर्म्मणः परामर्शः ।

वारणार्थानामीप्सितइति—यच्चेप्सितार्थस्यापादानत्वमुक्तं तत् कस्येप्सितार्थस्य वारयितुर्निवार्य्यमाणस्य वेति दो विमर्शोभवद्भिः प्रादर्शि, यश्च मल्लिनाथप्रदर्शितेन "निवारयन्ती महतो मुनिव्रता" दित्येतद्व्याख्यानस्वारस्येन तन्मते वारयितुरीप्सितार्थस्यैव यश्चा-विद्यासागरमते व्यसनात् पुत्रं वारयति इत्युदाहरणेन वार्य्यमाण-स्येप्सितार्थस्यैवेति, स सर्व्वईप्सितशब्दस्याभिप्रेतपरताज्ञान-मूलकः (सा च यथा उभयोरभीप्सिता इति भवदुक्तेराभिव्यक्ता) । अत्र सुगमः पन्थाः, अत्रेप्सितशब्दः क्रियापरो नाभिप्रेतपरो रूढ़-स्तदर्थस्याप्तुमिष्टः, आप्तिश्चात्र सम्बन्धः, स च प्रत्यासत्त्या वारणा-कर्त्तृविशेषणीभूतव्यापारद्वारकएव, तथाच वारयितृनिष्ठव्यापार-प्रयोज्यवारणार्थधात्वर्थफलाश्रयत्वेन सम्बद्धुमिष्यमाणोऽपादानमि-त्यर्थः; वारणं च प्रवृत्तिविघातोनिवृत्तिरिति यावत्, तेन निवृत्ति-विषयोऽपादानमिति लभ्यम्; प्रवृत्तिश्च भक्षणाद्युद्देश्यकयवादिसंयो-गाद्यनुकूला, तथाच संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारो वारयतेरर्थः, अत्रचार्थे व्यापारद्वयं फलद्वयञ्च सन्निविष्टम् ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपस्तदुदा-

हरणेषु च तद्धात्वर्थसंयोगाद्यनुकूलगोव्यापारजन्यसंयोगादि-रूपफलाश्रयत्वात् यवादीनामपादानत्वं प्रधानीभूतव्यापारप्रयोज्य-मुख्यफलाश्रयत्वात् यवादीनां कर्मत्वमेतद्देवेप्सिततममित्यत्र तमपः फलप्रदर्शनेऽग्निं माणवकं वारयतीति प्रत्युदाहरता भाष्यकृता निरवायि, अथच वक्तव्यं कर्मणो यदीप्सितमिति प्रत्याचक्षाणेन वारणार्थेषु कर्मग्रहणानर्थक्यं कर्त्तुरीप्सिततमेति वचनात् इति भाष्येणापि माणवकादीनामीप्सिततमत्वात् कर्मसंज्ञा बोधिता, अथच यस्य तु खलु गावो न माषाः कथं तस्य माषा ईप्सिता इति प्रश्ने तस्यापि माषा एवेप्सिता इत्युत्तरभाष्याणामाशयं व्यञ्जयता-मुद्योतकाराणाम् ईप्सितशब्दोऽत्र क्रियाशब्द आश्रीयते न तु रूढ़ि-शब्दस्तत्र वारणक्रियया परकीया अपि माषा वारयितुराप्तु-मिष्टा भवन्ति मा नशन्निति इत्येतेभ्योऽसौ गा वारयति इत्युक्त्या पुनश्च कूपादन्धं वारयतीत्यप्युदाहरता वारयितुरपि कूप एवेप्सितः पश्यत्ययमन्धः कूपं मा प्रापदिति भाष्येण करणेन तस्यापीत्यस्य वारणक्रिययाप्तुमिष्ट इत्येवं व्याख्याता कैयटेन च वारणकर्त्रा वारणक्रिययाप्तुमिष्टेऽपादानमित्यर्थ एव सम्यक् प्रतीयते, न तु साक्षात् क्रियान्तरेण वा वारयितु र्नापि वार्य्यमाणस्य चाभिप्रेत-मिति । अयं निष्कर्षः, वारणस्य प्रवृत्तिविघातरूपत्वेन प्रकृते यद्वि-षयिणी प्रवृत्तिनिवृत्तेरपि तद्विषयिण्या एव यहात् प्रवर्त्तमानस्य यः प्रवृत्तिविषयः स एव निवारयितुस्तन्निष्ठनिवृत्तिविषयत्वेने-ष्टोऽपादानम् । एवं च निवारयन्ती मक्षतामुनिमतादित्यत्र मेन-

कायां सुनिव्रतस्याभिप्रेतत्वाभावेऽपि तस्यास्तत्र वारणक्रिययाप्तुमिष्ट-तया, एवं व्यसनात् पुत्रं वारयतीत्यत्रापि पितुर्वारणक्रियया व्यस-नस्याप्तुमिष्टतया चोभयत्रापि वारणार्थानामित्यनेनैवापादान-त्वम् ; वारयितुरेवेप्सितत्वपर्य्यासिका मल्लिनाथोक्तिस्तु कर्त्तु-रीप्सिततममिति सूत्रानुरोधेन कारकाधिकारात् तेषु च कर्त्तुरेव मुख्यत्वाद्वा कर्तृपदलाभे तन्मूलिका भाति,—विद्यासागरोक्तिस्तु नियामकाभावात् कर्त्तुरीप्सितस्य कर्म्मसंज्ञाविधानात् कर्म्मण एवे-प्सितस्येतद्विषयत्वादिति विचारमूलेति सम्भाव्यं। अत्र सूत्रे ईप्सितशब्दोऽभिप्रेते रूढ इति यत् तदुक्तिद्वयेऽनुकूलम्, तत्त्व-पर्य्यालोचने तु ईप्सितशब्दस्य क्रियापरतयास्मत्प्रदर्शितमार्गेणा-करादिसम्मतोऽनुमन्तव्योऽनुमन्तृभिरित्यलम् ।

भवादृशाः परिशोधयन्तु धीशालिनः ।

१८८३ मई १४ ।

ओं

Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



स्वस्तु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।

जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।

विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२ ] एप्रेल १८८३ [ ४ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । यदीच्छुभिर्ग्राहकैः पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः ।

---

### विशेषद्रष्टव्यम् ।

सम्प्रति २४ परगन नैहाटीसमीपस्थ-भट्टपल्लीग्रामाद्विद्योदयः प्रकाश्यते, इतःपरं पत्रादिकं भट्टपल्ल्यां सम्पादकसमीपे प्रेषणीयम् ।

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।/०

" पश्चाद्देयं ... ... ... ३।/०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः /० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

"दत्तकचन्द्रिका—हृषीकेश-शास्त्रि-प्रणीता, हिन्दीभाषानुवाद-सहिता, मूल्यं ॥० विद्योदय-कार्य्यालये प्राप्तव्या ।

तत्र संवादपत्र-सम्पादकमतम्—

"इसकी भाषा बहुत ही सीधी और सरल है, निःसन्देह भट्टाचार्य्य महाशयने बड़े श्रमसे इसका अक्षरार्थ अनुवाद किया है, प्रतिमास विद्योदय संस्कृत मासिकपत्र पढ़नेसे इनकी संस्कृतमें योग्यता और संस्कृत लेखकी उत्तमता भरपूर हमारे नेत्रगोचर थी, अब इस पुस्तकका भाषानुवाद देख हिन्दी लेखमें भी इनकी योग्यता का सम्यग् ज्ञान होगया" ।

हिन्दी-प्रदीप, मासिक पत्र, १ली नवम्बरकी संख्या । प्रयाग अहियापुर ।

त्पत्तिभूतत्वं च; भूतत्वमतीतत्वं, तच्चोत्पत्तौ अन्वेति, तथाच वियमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धं। लिटोऽनद्यतनत्वं, परोक्षत्वम् अतीतत्वं चार्थः, तदन्वयः पूर्ववदुत्पत्तौ। लङोऽनद्यतनत्वमतीतत्वं चार्थः। विधिलिङोऽर्थः कृतिसाध्यत्वे सति बलवदनिष्टाजनकेष्टसाधनत्वं; 'स्वर्गकामो यजेत' इत्यादौ कृतिसाध्य-बलवदनिष्टाजनकेष्टसाधनयागकर्त्ता स्वर्गकाम इत्यर्थः। आशीर्लिङ्लोटोरर्थः वक्तृच्छाविषयत्वं; तेन 'घटमानय' इत्यत्र घटकर्मक-मदिच्छाविषयानयनानुकूलकृतिमान् त्वमित्य-

---

अर्थ अनद्यतनत्व (किञ्चित् भविष्यत्)। लुङका अर्थ अतीतमें उत्पत्ति अर्थात् वर्त्तमानध्वंसप्रतियोग्युत्पत्तिकत्व (अब जिस वस्तुका नाश हुआ उस वस्तुकी उत्पत्ति जिस कालमें थी। लिटका अर्थ अतीत, परोक्षत्व (जो अपने सामहने नहीं हुआ ऐसा काल) यहां भी उत्पत्तिसे उस कालका अन्वय है, लङका किञ्चित् भूत और संपूर्ण भूत रूप अर्थ। विधिलिङका अर्थ अपने यत्नसे साध्य, अतिशय अनिष्टका अजनक और इष्टके साधन करनेवाले कामका अनुष्टान, जैसा "स्वर्गकामो यजेत" इसका अर्थ स्वर्गके चाहनेवाला पुरुष अपने यत्नसे साध्य, अतिशय अनिष्टका अजनक और इष्टका साधक जो याग उसको करनेवाला है। लोटका जो अर्थ आशीर्लिङका ऐसाही अर्थ, उस अर्थमें कहनेवालेकी इच्छाका विषयभी संश्लिष्ट है; इसलिये "घटमानय" घट है कर्म जिसका ऐसा जो मेरा अभीप्सित आनयन, उस

न्वयबोधः। व्याप्यक्रियया व्यापकक्रियाया आपादनं लृङोऽर्थः; तात्पर्य्यवशात् क्वचित् भूतत्वं, क्वचिद्भविष्यत्वञ्च लृङा बोध्यते।

(४८) सनः कर्तुरिच्छा अर्थः, सन्नुत्तराख्यातस्याश्रयत्वे लक्षणा, सविषयकार्थकप्रकृतिकाख्यातस्य आश्रयत्वे लक्षणाया 'घटं जानाति' इत्यादौ क्लृप्तत्वात्। यङोऽर्थः पौनःपुन्यं, तच्च तदानीन्तनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्त्तमानादिकृतिविषयत्वं, 'पापच्यते'—इत्यादौ; तादृशकालीनत्वमेव यङा प्रत्याय्यते, आख्यातस्य चरमदलवाचकत्वात् न विशिष्टवाचकत्वं, यङः तदानीन्तनत्वं च स्थूलकालमादाय।

---

आनयनकी अनुकूल कृतिमें तुम हुए हो। व्याप्यकी क्रियाके द्वारा व्यापककी क्रियाका साधन लृङ्का अर्थ; तात्पर्य्यके वशमें लृङ् कभी भूतकालका वाचक, कभी भविष्यत्का वाचक होता है।

(४८) सनका अर्थ कर्त्ताकी इच्छा, और सनके उत्तर जो तिङ् उसका आश्रयत्व (कर्तृत्व) लक्षणासे प्रतीत होता है; विषयार्थकप्रकृतिक जो आख्यात उसके आश्रयत्वमें लक्षणा क्लृप्त है। यङ्का अर्थ पौनःपुन्य अर्थात् किसी क्रिया वारंवार अनुष्ठान करना। * जैसा "पापच्यते" यहां यङमें तत्कालीनत्व

---

* पौनःपुन्यत्वका संस्कृतमें ऐसा अर्थ "तदानीन्तनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्त्तमानादिकृतिविषयत्वं" जिस कालमें यङ होता है उस काल में वर्त्तमान जो प्रकृत्यर्थका समानजातीय दूसरी क्रिया उसके ध्वंसके समय स्थित होकर वर्त्तमान प्रथम कृतिका विषयत्व।

(४८) पूर्वकालीनत्वं कर्त्ता च क्त्वार्थः, पूर्वत्वं च सन्निहितक्रियापेक्षया बोध्यं; तत्पूर्वकालीनत्वं तत्प्रागभावकालवृत्तित्वं, तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा, तेन 'भुक्त्वा व्रजति' इत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्तृभिन्नो व्रजतीत्यर्थः। समानविभक्तिकताम् अभेदेन धर्मिवाचकत्वात्, अव्ययत्वेन क्त्वापरविभक्तिलोपात्। कालः तात्पर्य्यवशात् व्यवहिताव्यवहितसाधारणो बोद्धव्यः, तेन 'पूर्वस्मिन् अब्दे गतोऽस्मिन्नब्दे समागतः' इत्येतादृशप्रयोगसङ्गतिः। इच्छावान् तुमु-

---

रूप अर्थका बोध होता है, और तिङ वर्त्तमान प्रथम कृतिका विषयत्व रूप अर्थका वाचक है इसलिये विशिष्टका वाचक नहीं। यङसे जो तदानीन्तनत्व अर्थका ज्ञान होता उसमें स्थूल कालका ग्रहण हुआ।

(४८) क्त्वासे कर्त्ता और पूर्व्वकालीनत्व रूप अर्थका बोध होता है, पूर्व्वशब्दसे सन्निहित ( समीपवर्त्ती ) क्रियाकी अपेक्षा जो पूर्व्व उसीको जानना। सन्निहित क्रियाका पूर्व्ववृत्तित्व अर्थ उस क्रियाका प्रागभाव जिसकालमें रहनेवालेका धर्म्म अथवा काल उस क्रियाकी उत्पत्तिके समय स्थित जो ध्वंस उस ध्वंसके प्रतियोगीकी स्थितिके समय रहनेवालेका धर्म्म। इसलिये "भुक्त्वा व्रजति" इसका अर्थ गमनके पूर्व्वकालमें जिसने भोजन किया वही जाता है। कर्त्ताके साथ तुल्य विभक्ति युक्त जो क्त्व वह धर्म्मिके अभेदका बोध कराता है। क्त्वा अव्यय है, इस लिये

लोऽर्थः, 'भोक्तुं व्रजति' इत्यस्य भोजनेच्छावान् व्रजतीत्यर्थः। 'भोक्तुमिच्छति' इत्यत्र तु कर्त्तरि लक्षणा, भोजनकर्त्तारमात्मानमिच्छतीत्यर्थः। 'सविशेषणे हि' इति न्यायात् विशेषणे कृताविच्छान्वयः।

(पू०) प्रकृतधात्वर्थकर्त्ता शतृशानचोः, धात्वर्थजन्यफलवान् कर्म शानचोऽर्थः। शत्रादीनां कर्त्ता वाच्यः, सविषयार्थकप्रकृतिकानाम् आश्रयत्वे लक्षणा। एवं कर्तृकर्मकृतां तेन तेन रूपेण कर्त्ता कर्म च वाच्यं। भावकृतान्तु नञ्घञादीनां प्रयोगसाधुत्वमात्रं, धात्वर्थातिरिक्तस्य भावकृता अनुपस्थापनादिति।

---

इसके उत्तर विभक्ति नहीं रहती। यह कुछ नियम नहीं कि क्त्वासे अव्यवहित पूर्व कालका ग्रहण करना व्यवहित पूर्वकालका भी ग्रहण होता जैसा "पूर्वस्मिन्नब्दे गत्वा अस्मिन्नब्दे समागतः" (पहिले सालमें जाकर इस सालमें आया) ऐसा प्रयोगभी शुद्ध होता। तुमुनका अर्थ इच्छावान् (इच्छासे युक्त) जैसा "भोक्तुं-व्रजति" इसका अर्थ भोगमें जिसकी इच्छा है वह जाता है, "भोक्तु-मिच्छति" यहां लक्षणासे कर्त्ताका बोध होता है अर्थात् अपने को भोजन कर्त्ता रूपसे चाहता है। "विशेषणमें अन्वय का नियम है" इसलिये विशेषणव्यापारमें इच्छाका अन्वय है।

(पू०) शतृ और शानचसे प्रकृत (प्रासङ्गिक) धात्वर्थके कर्त्ताका बोध होता है। और कर्मवाच्य शानचका अर्थ धात्वर्थजन्य फलविशिष्ट। शतृ आदिका वाच्यार्थ (स्वाभाविक अर्थ) कर्त्ता लक्षणासे सविषयार्थक प्रकृतिओंका आश्रयत्वका

(५१) ननु 'नीलं घटमानय' इत्यादौ द्वितीयाद्वयश्रवणात् कर्मद्वयबोधापत्तिः, न तु विशिष्टस्य कर्मत्वमिति चेत्, न, अत्र विशेषणविभक्तिः साधुत्वाय, अथवा विशेषणविभक्तेरभेदोऽर्थः। अत्रायं विशेषः,—द्वितीयपक्षे वाक्यसमासयोः पर्य्यायता न घटते, वाक्ये 'नीलं घटम्' इत्यादौ अभेदस्य पदार्थत्वेन प्रकारत्वात् न संसर्गत्वं, 'नीलघटम्' इत्यादौ कर्मधारये लक्षणाया अस्वीकारेणाभेदस्यापदार्थत्वेन संसर्गत्वात्; तथा च वाक्यसमासयोः

---

बोध होता है। ऐसे कर्त्तृ और कर्मवाच्योंमें जो कृत् होता है उसमें कर्त्ता वा कर्मका स्वरूपसे वाच्य होता है। भाववाच्यमें कृत् केवल पदके साधनके लिये होता है, क्योंकि भाव कृत्से धात्वर्थके अतिरिक्तका बोध नहीं होता।

(५१) किसीने आशङ्का की है कि "नीलं घटं आनय" इस पदमें दोबेर द्वितीयाका श्रवण होता है अतएव दोनों कर्मोंका बोध होना चाहिए, परन्तु विशिष्टका कर्मत्व नहीं। इसके उत्तरमें कहता है कि यहां विशेषणमें जो विभक्ति है वह केवल साधुत्वकेलिये अथवा विशेषणमें जो विभक्ति है उसका अर्थ अभेद; इन दोनों पक्षोंमें विशेष यह है कि यदि विशेषण विभक्तिका अभेदरूप अर्थ मानाजावे वाक्य और समास इन दोनों स्थलमें एक क्रम नहीं रहता है, देखो वाक्यमें ( जहां समास नहीं कियागया ) 'नीलं घटं' यहां जो नीलाभिन्न

पर्यायानुरोधेन षष्ठीसमासे 'राजपुरुषः' इत्यादौ षष्ठ्यर्थसम्बन्धे लक्षणा न घटते, सम्बन्धस्य संसर्गमर्यादालभ्यत्वात्। वस्तुतस्तु विरुद्धविभक्त्यनवरुद्धस्य अभेदबोधकत्वव्युत्पत्तेः मुख्यार्थराजाभेदस्य बाधेन राजपदस्य राजसम्बन्धिनि लक्षणा। एवं बहुव्रीहौ चरमपदस्यान्यपदार्थे लक्षणा; तथा च द्वन्द्वकर्मधारयान्यसमासे सर्वत्र तत्तदर्थे लक्षणा।

---

घट ऐसा अर्थ होता है वह अभेद पदार्थ अर्थात् विशेषण विभक्तिका अर्थ है अतएव संसर्गसे ( पदोंको मिलाप मात्रसे ) उसका बोध हो परन्तु जब कर्मधारय समास करके 'नीलघट' ऐसा रूप होता तब विशेषणमें विभक्ति नहीं है, और कर्मधारयमें लक्षणाभी नहीं मानी जाती; अतएव संसर्गसे अभेदका बोध अवश्य करना होगा। देखो वाक्य और समास इन दोनोंमें एक क्रम रखनेको नियम, यदि न रखो तो षष्ठी समासके स्थलमें 'राजपुरुष' इत्यादि स्थलमें, षष्ठीका अर्थ जो सम्बन्ध उसमें लक्षणा नहीं घटती, क्योंकि संसर्गके बलसे सम्बन्धका लाभ होता है। वास्तवमें विरुद्ध ( भिन्न ) विभक्ति करके अनवरुद्ध ( अयुक्त ) पदसे ही अभेदका बोध होता है। मुख्यार्थ जो राजा भेद उसका अन्वय नहीं होता, यदि 'राज' पदसे राज सम्बन्धि बोध करानेके लिये लक्षणा, न की जावे। ऐसे बहुव्रीहिमें चरम पदमें अन्य प्रदके बोधके लिये लक्षणा की जाती है। फल यह है द्वन्द और कर्मधारय समासोंको छोड़ कर

(५२) एवं नञर्थोऽभावः, 'अघटं भूतलम्' इत्यादौ घट-भिन्ने लक्षणा। 'न कलञ्जं भक्षयेत्' इत्यादौ बलवदनिष्टजनके लक्षणा। क्रियासङ्गतस्य एवकारस्यात्यन्तायोगव्यवच्छेदोऽर्थः, यथा 'नीलं सरोजं भवत्येव'। विशेषणसङ्गतस्य अयोगव्यवच्छेदः, यथा 'शङ्खः पाण्डर' एव इति। विशेष्यसङ्गतस्य अन्ययोगव्यव-

---

और समासोंमें जो जो अर्थ प्रतीत होता वह लक्षणाके बलसे होता।

(५२) इसी प्रकार नञका अर्थ अभाव। "अघटं भूतलं" लक्षणासे अघटं इसका अर्थ घटभिन्न अर्थात् घटभिन्न वस्तुयुक्त भूतल "न कलञ्जं भक्षयेत्" यहां अतिशय अनिष्ट जनकमें लक्षणा अर्थात् "न कलञ्जं भक्षयेत्" इसका अर्थ कलञ्ज भक्षण अतीव अनिष्ट कारक है। जहां 'एव'कार क्रियामें लगा हुआ रहता वहां उससे अत्यन्तायोग व्यवच्छेद रूप अर्थका बोध होता, जैसा "नीलं सरोजं भवत्येव" नीलपद्म जरूर होता, यहां 'एव'कारसे अत्यन्तायोग जो नील पद्मका न होना उसका व्यवच्छेद (विनाश) हुआ है। जहां एव कार विशेषणमें लगा हुआ होता वहां उससे 'अयोगव्यवच्छेद' रूप अर्थका बोध होता जैसा 'शङ्खः पाण्डर एव (शङ्ख पाण्डर ही होता है)' यहां पाण्डरसे शङ्खका जो अयोग उसका व्यवच्छेद होता है अर्थात् शङ्ख केवल श्वेतही होता है, और किसी प्रकारका नहीं होता है ऐसे अर्थ का बोध होता है। जहां एवकार विशे-

च्छेदः, यथा, 'पार्थ एव धनुर्द्धरः' इत्यादौ । एवं दिशा सर्वत्र बोध्यम् ।

इति श्रीजगदीशभट्टाचार्यविरचितं तर्कामृतं समाप्तम् ।

---

ष्यमें युक्त होता वहां अन्ययोगव्यवच्छेद रूप अर्थका बोध होता है, जैसा "पार्थएव धनुर्द्धरः" (पार्थ ही धनुर्द्धर है) यहां 'एव' कार धनुर्द्धर पदका अन्यमें जो सम्बन्ध उसका हटाता है अर्थात् सिवाय पार्थके और कोई यथार्थ धनुर्द्धर नहीं ।

इति श्रीऋषीकेशशास्त्रिकृत तर्कानन्द नाम

भाषा अनुवाद समाप्त ।

## प्रणयिनिर्बन्धः ।*

अभिसर सरसीं सरोजवक्त्रे !
प्रियवचनं प्रतिपालयाद्य मुग्धे !।
अनुतटविपिनं विहर्त्तुमस्माः
मनसि रुचिङ्कुरु गौरवान्ममाद्य ॥ १ ॥
त्यज कनकमयप्रसाधनं त्वं
भज सुमनःस्रजमेणशावकाक्षि !।
रमणमनु नृपाध्वनि प्रयान्ती
किमपि सुखं कलयावरोधरुद्धे ॥ २ ॥
नरपतिसरणौ बहिर्भवन्तीं
तडितमिति प्रतिपत्स्यते जनस्त्वां।
खनिषु मणिरिव त्रिलोकरम्यं
वदनमिदं न हि शोभते प्रकोष्ठे ॥ ३ ॥

---

* न ज्ञायते कथं सम्पादकेन नैतेषां श्लोकानामुपरि दृष्टिः प्रदत्ता। अथवा-त्यन्तप्रत्ययादेव तेनैवं कृतमभवेत्। यद्भवतु तद्भवतु नाहमवसरे कर्त्तव्यतामुपेक्षितु-मिच्छामि। अत्र बहवो हि श्लोका दुष्टा एव लक्ष्यन्ते। यथा

१म श्लोके "मनसि रुचिङ्कुरु गौरवान्ममाद्य" इत्यत्र चिङ् शब्दोऽश्लीलार्थ-इति मम्मटेन काव्यप्रकाशस्य पञ्चमोल्लासे "कथं वा कुरु रुचिं" इत्यत्र पदव्यत्ययेऽभिधेयस्य यथास्थितावपि अश्लीलतादोष इति स्पष्टमुक्तम्। तथाच "प्रियवचनं प्रतिपालयाद्य मुग्धे" "मनसि रुचिं कुरु गौरवान्ममाद्य" इत्यादि वचनैर्नायिकाया रुचिनिरपेक्षी नायकस्य तु साहङ्कारहठकारित्वं ध्वनितं ततोऽत्र शृङ्गारे स्थायिभावस्य रतेर्न तथा परिपोषस्ततएवारस्यतापातः।

३ श्लोके "तडितमिति प्रतिपत्स्यते जनस्त्वां" अत्र तडित इति नाभिधानात् प्रथमैव भवितुमर्हति। तथा "खनिषु मणिरिव" इत्यत्र नोपमायाः समीचीनता सादृश्याभावात्। तथाहि खनिषु मणेः शोभैव नास्ति संस्काराभावात्, मधुराङ्गनानां वदनन्तु सर्व्वत्रैव समशोभि। प्रकोष्ठे तु तत्सौन्दर्य्यस्य दर्शकाभावे न तस्याभाव इति दिक्।

मुखपरिमललोलभृङ्गजालैः
प्रतिपदमद्य कदर्थिता भवन्ती ।
न खलु मनसि कोपमावहेथा
मलिनतमेष्वखिलेषु प्रमत्तवत्सु ॥ ४ ।

अधरकिरणं विशेषयन्ती
स्मितकिरणैः सुदती वितन्वती तां ।
प्रतिपदरणितेन (सुस्वरेण) नूपुरेण
गृहकलहंसवधूं निजानुगन्त्रीम् ॥ ५ ।

गजपतिसदृशं पदं क्षिपन्ती
चल सरसीं कलहंसकेलिरम्यां ।
कुवलयकलिकां निरीक्षितुं त्वं
मधुपवधूपरिहासवाक्प्रफुल्लां ॥ ६ ।

वहति च भयमन्थरोऽत्र वायुः
शमनदिशः (मलयगिरेः) कमलपवनगन्धचौरः ।
जलजवलुलितो यदीयसङ्गा-
दुदयति रोमरतीश्वराङ्घ्रियेव ॥ ७ ।

४ श्लोके "न खलु मनसि कोपमावहेथाः" इत्यत्र कोपावहननिषेधं प्रति न कोऽपि हेतुरुक्तस्तत एव निर्हेतुतादोषापातः । ननु "मलिनतमेष्वखिलेषु प्रमत्तवत्सु" इत्यनेनैव हेतुरुक्त इति चेत् तदपि न सङ्गच्छते, तथाहि यदि मलिनैः प्रमत्तैश्च वादरैर्न कुलस्त्रीणां न कोपस्तदा कुलगौरवहानिः यो हि मेवावहितैषपक्षे निराधिता ।

५ श्लोके "तां गृहकलहंसवधूं निजानुगन्त्रीं वितन्वती" अत्र विधूलिकस्य तनधातोः करोत्यर्थेऽवाचकत्वादवाचकत्वदोषः ।

६ श्लोके "गजपतिसदृशं पदं क्षिपन्ती" इत्यत्र गजपतिसदृशमिति पदं किं पदस्य विशेषणमुत क्षिपन्त्यास्याः क्रियाया इति सन्देहस्तत्र गजपतिसदृशं पदमित्यनेन पदस्य स्थूलत्वाभावात् विरुद्धमतिकारित्वं ।

विहसति कुमुदं श्रितोदयाद्रिं
सकलकलं शशिनं समीक्ष्य हर्षात् ।
विहरति वरटा प्रियेण साकं
कृतजलजातकुलप्रदक्षिणेन ॥ ८ ।

सुतनु तदतिमुग्धहंसयुग्मं
निजनयनेन निरीक्ष्य धर्त्तुकामा ।
पयसि किमवतीर्य धावसे नो
वद सरसीं स्ववनानहंसपद्मां ॥ ९ ।

सितगरुतमनु त्वां सन्तरन्तीं विलोक्य
पयसि दुरवगाहे क्लिश्यमासहाङ्गीं ।
सुहृदिव सरसी सा वारयिष्यत्यवश्यं
सुतनु तनुतरङ्गोत्कम्पितोन्नालपद्मा ॥ १० ।

अधिरजनि वनालीदर्शनाक्रीतचित्ता
पतति धुतपतत्रेऽप्यन्यदुत्प्रेक्षमाणा ।
भयचकितमृगाक्षी त्वन्तु मुग्धस्वभावा
स्वभवनमनुगन्तुं व्यग्रभावं भजेथाः ॥ ११ ।

---

७ श्लोके शमनदिशः शतपत्रगन्धचौरत्वं भयमन्थरगमनस्य हेतुत्वेन निर्दिष्टं तच्च न घटते । तथाहि सामान्यतः चौरस्यावेगत्वरितैव गतिर्लक्ष्यते, यत्तु शमनाधिकारादपहारकस्य गतेस्त्वरितत्वं सम्भवति नतु मन्थरत्वं । तथा "यदीयसङ्गादुद्यति रोमरतीश्वराद्भियेव" अत्र रतीश्वराद्भियेवेत्युत्प्रेक्षां प्रति न कोऽपि हेतुरुक्तः । तेन निर्हेतुता ।

८ श्लोके "वद सरसीं भवसानहंसपद्मां" अत्र "सरसीमित्यस्य पदस्य कस्याः क्रियायाः कर्मत्वं, किं 'वद' इत्यस्या उत 'धावसे' इत्यस्याः, उभयथापि न सङ्गतिः ।

इत्थं सर्व्वेष्वेव श्लोकेषु दोषसद्भावो विद्यते । अस्माकं समयाभावात् तेषां सर्व्वेषां प्रदर्शनं न कृतम् । इतःपरमस्मत्समीपे एवंविधश्लोकप्रेरणात् पूर्व्वं सम्पादकेन सावधानेन भवितव्यमित्यलम् । कश्चिद्वरयोक्षकः ।

सजलजमलनिर्य्यत्स्वर्णकान्त्या विमुग्धं
तटविपिनविहारोद्बोधशून्यं प्रियं मां ।
विधुमुखि सहसात्य प्राप्नते रथगारं
शशधरकरधौतं चारुशय्यासनाथं ॥ १२ ।

भट्टपल्लीनिवासिनः श्रीरामकृष्णशर्म्मणः ।

---

## व्याकरण-प्रश्नाः ।

वारणार्थानामीप्सितः । १ । ४ । २७ इति पाणिनीयसूत्रं श्रीमता भट्टोजिदीक्षितेन "प्रवृत्तिविघातो वारणं, वारणार्थानां प्रयोगे ईप्सितो योऽर्थः सोऽपादानं स्यादेवं व्याख्यातम् । "ध्रुवमपाये" इत्यनेनैवेष्टसिद्धौ सूत्रस्यास्य वैयर्थ्यं साधयितुमपाकर्त्तुं वा नास्माकं प्रवृत्तिर्यतोऽस्त्याकरे तद्विषयको विचारविस्तरः, प्रत्याख्याता च भाष्यकारेण "भीत्रार्थादि" सप्तसूत्री ।

प्रष्टव्यमेतदेवास्माकं यदत्रेप्सितार्थस्यापादानत्वमुक्तन्तत् कस्येप्सितार्थस्य वारयितुर्निवार्य्यमाणस्य वा ? "यवेभ्यो गां वारयतीति" कौमुदीकारप्रदर्शितोदाहरणेनापि न तस्य (ईप्सितार्थस्य) स्वरूपोपलब्धिर्भवति, यतो यवेषु वारयितुर्मनुष्यस्य वार्य्यमाणाया गोश्चेप्सितत्वं सम्भवति, यद्वा उभयोरपि अभीप्सिता भवितुमर्हन्ति । "ईप्सितः किं, चैत्रे यवेभ्यो गां वारयतीति" प्रत्युदाहरणेनापि न तदीप्सितार्थस्य स्फुटता । चैत्रं ह्यत्र न वारयितुर्नापि वार्य्यमाणस्येप्सितमित्युभयथापि न तस्यापादानत्वप्रसक्तिः ।

पण्डितगोष्ठीगरिष्ठेन श्रीमतेश्वरचन्द्रविद्यासागरमहोदयेन स्वप्रणीतव्याकरणकौमुद्यास्तुर्य्यभागे कारकप्रकरणे सूत्रमिद-मुद्धृत्य वार्य्यमाणस्यैवेप्सितोऽर्थोऽपादानं भवतीति व्याख्यातम्। "व्यसनात् पुत्रं निवारयति" इत्युदाहरणेनापि स्वमतस्य पुष्टिः कृता। किञ्च मल्लिनाथसूरिणा—"निवारयन्ती महतो मुनि-व्रतात्" इति कुमारसम्भवीयश्लोकस्य व्याख्यानावसरे "मुनिव्रता-दित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् वारणार्था-नामीप्सित इति नापादानत्वं, तथापि कृतोद्यमामिति मानस-प्रवेशोक्तत्वात् ध्रुवमपायेऽपादानमिति अपादानमेव स्यादिति" लेखनभङ्ग्या वारयितुरीप्सितस्यैवापादानत्वं सूचितमन्यथा मुनिव्रतस्य वार्य्यमाणेप्सितत्वेऽपि कथं तेन सूत्रमिदं परिहृत्य कष्टकल्पनया "ध्रुवमपायेऽपादान"मित्यस्यानुसरणं कृतम्।

पृच्छ्यते तावदत्र कतमः पन्थाः साधीयान्? "नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते" इति मल्लिनाथप्रतिज्ञावचन-सत्त्वान्मल्लिनाथवचनस्यावश्यमेव किमपि मूलं विद्यते। किन्त-न्मूलं? कथं वा तादृशमूलसत्त्वेऽपि विद्यासागरेण निवार्य्यमाण-स्येप्सितस्यापादानत्वं प्रतिपादितं? किमत्रैकतमस्य भ्रान्ति-रुतोभयोर्व्वेति, उभयोश्चेत् तदास्य सूत्रस्य कीदृगर्थो भवेदिति निर्णेतुं यदि कश्चित् समर्थोऽस्मत्पाठकानां तदा स्वमतमुरीकृत्या-स्मत्समीपे प्रेषणीयमित्यलम्।

---

## संक्षिप्तसमालोचनं।

वयं कृतज्ञहृदयेमानोल्लिखितमुद्रितपत्रिकादीनां प्राप्तिं स्वीकुर्म्मः।

(१) सौराष्ट्रदर्पणं—मासिकपत्रं जुनागड़स्थित सौराष्ट्र-

नीतिप्रचारनामके यन्त्रे मुद्रितं। वार्षिकमूल्यमस्य मुद्रैका। पत्रमिदं गुजराटीभाषायां लिखितमिति नास्मात्र सम्यक् समालोचनं भवितुमर्हति। भवतस्य वृद्धिं सर्व्वान्तःकरणैः प्रार्थयामहे।

(२) राजपुरस्थापित बान्धव पुस्तकालयस्य ५म सांवत्सरिक कार्य्यविवरणं—दुर्द्दैववशादज्ञानप्राबल्येन भारतीयानां मनांस्येवमनुदाराणि संवृत्तानि यत्ते कियत्कालं यावत् केवलं स्वार्थचिन्तयैव कालं नयन्ति। स्वार्थश्च तेषां केवलं कलत्रसुखसाधनेषु पर्य्याप्तः। एवंविधसमये साधारणोपकाराय यत् किमपि क्रियते तदेव अनुष्ठातुर्महत्त्वं स्वनयति, जनैश्चिरमभिनन्द्यते च, का कथा वंशपरम्पराकल्याणकरपुस्तकालयादिस्थापनस्य। एवंविधसदनुष्ठानप्रवर्त्तका न केवलं स्वदेशीयानां किन्तु सत्पथप्रदर्शकत्वेनापरेषामपि सादरधन्यवादमर्हन्ति।

पञ्चमवत्सरस्य कार्य्यविवरणमवलोक्य वयमतीवानन्दिताः संवृत्ताः। अस्मिन् वर्षेऽपि बहवो ग्रन्थकर्त्तारोऽस्य समुन्नतये स्वपुस्तकानि वितेरुः। केचनापरे धनिनोऽर्थसाहाय्यं कृतवन्तः। परमेशकृपयास्य प्रत्यहं समुन्नतिर्भवतु।

प्रेमप्रचारिणी—वैष्णव-पाक्षिक-पत्रिका, वाराकपुरसमीपस्थितनवावगञ्जग्रामात् प्रति हरिवासरं प्रकाशिता भवति।

यदि परमेश्वरस्य किमपि नाम स्यात् तदा हरिनामैव प्रथमकक्षामधिरोहति; हरिनामसदृशं मधुरमैश्वर्य्यव्यञ्जकञ्च न किमपि नाम जगति समुद्भूतम्। वयं सर्व्वान्तःकरणैर्हरिनामप्रचारवाञ्छां प्रार्थयामहे, तेन च प्रेमप्रचारिण्याः समुन्नतिमपि।

ओं

Registered No 12.

# विद्योदयः

## ( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्ड १२ ] मार्च्च १८८३ [ ३ सङ्ख्या

## सूची






कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रित.।

## विज्ञापनम् ।

इतः पूर्व्वं विद्योदये क्रमशः प्रकाशितं "प्राकृत-प्रकाश" नामधेयं प्राकृतभाषा-व्याकरणं महाकवि-वररुचि-विरचितं विद्योदय-सम्पादक-संगृहीत-विविधोदाहरण-सहितमचिरेणैव कालेन पृथङ्मुद्रितम्भविष्यति । ग्रहणेच्छुभिर्मदन्तिके पत्रिकया स्वाभिलाषः प्रकाशनीयः । विद्योदय-कार्य्याध्यक्षः ।

---

### विशेषद्रष्टव्यम् ।

सम्प्रति २४ परगन नैहाटीसमीपस्थ-भट्टपल्लीग्रामाद्विद्योदयः प्रकाश्यते, इतःपरं पत्रादिकं भट्टपल्ल्यां सम्पादकसमीपे प्रेषणीयम् ।

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... २।०

" पश्चाद्देयं ... ... ... ३।०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः /० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

"दत्तकचन्द्रिका"—हृषीकेश-शास्त्रि-प्रणीता, हिन्दीभाषानुवाद-सहिता, मूल्यं ॥० विद्योदय-कार्य्यालये प्राप्तव्या ।

तत्र संवादपत्र-सम्पादकमतम्—

"इसकी भाषा बहुत ही सीधी और सरल है, निःसन्देह भट्टाचार्य्य महाशयने बड़े श्रमसे इसका अक्षरार्थ अनुवाद किया है, प्रतिमास विद्योदय संस्कृत मासिकपत्र पढ़नेसे इनकी संस्कृतमें योग्यता और संस्कृत लेखकी उत्तमता भरपूर हमारे नेत्रगोचर थी, अब इस पुस्तकका भाषानुवाद देख हिन्दी लेखमें भी इनकी योग्यता का सम्यग् ज्ञान होगया"।

हिन्दी-प्रदीप, मासिक पत्र, १ली नवम्बरकी संख्या । प्रयाग आहियापुर ।

तदा पूर्वोक्तं वाक्यार्थं स्मरति, अनन्तरम् 'अयं गवयपदवाच्यः' इति शक्तिग्रहः,—सेयमुपमितिः। इत्युपमानं व्याख्यातम्।

(४३) आप्तोक्तः शब्दः प्रमाणं, प्रकृतवाक्यार्थगोचरयथार्थ-ज्ञानवान् आप्तः। पदज्ञानं करणं, पदार्थोपस्थितिर्व्यापारः। आकाङ्क्षा-योग्यतासत्ति-तात्पर्य्यज्ञानानि सहकारीणि, फलं शाब्दबोधः। स्वरूपयोग्यत्वे सति अजनितान्वयबोधकत्व-माकाङ्क्षा, तेन 'घटः, कर्मत्वं, आनयनं, कृतिः' इत्यत्र नान्वय-

---

स्मरण होता है, फिर यही 'गवय' है, ऐसा ज्ञान होता है; इस ज्ञानको उपमिति कहता है।

इति उपमान व्याख्या।

(४३) आप्तमनुष्यं जो शब्द कहते हैं वह प्रमाण है। प्राक-ृत्तिक वाक्यार्थके विषय ठीक् ठीक् जाननेवालेको आप्त कहते हैं। शब्दके बोधमें पदका ज्ञान करण है, पदार्थोपस्थिति व्यापार, आकाङ्क्षा, योग्यता, आसत्ति और तात्पर्य्य, यह इसमें सहकारी हैं, और शब्दबोध फल है। आकाङ्क्षा पदोंका वह धर्म है जो अन्वययोग्य पदमें अजनित (उससे प्रथम नहीं हुआ) अन्वय (सम्बन्ध) का बोध कराता है, इसलिये "घटः" "कर्मत्वं" "आनयनं" "कृतिः" इनपदोंमें अन्वयका अर्थात् किसी प्रकारके सम्बन्धका बोध नहीं होता, क्योंकि यहां अन्वयकी योग्यता नहीं।

बोधः स्वरूपायोग्यत्वात् । 'अयमेति पुत्रो राज्ञः, पुरुषोऽपसार्य्यताम्' इत्यत्र 'राज्ञः पुरुषः' इति नान्वयबोधः, पुत्रेण अनितान्वयबोधकत्वात् । बाधकप्रमाविरहो योग्यता, तेन 'वह्निना सिञ्चति' इत्यत्र नान्वयबोधः, अयोग्यत्वात् । अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिः, तेन 'गिरिर्भुक्तं वह्निमान् देवदत्तेन' इत्यत्र नान्वयबोधः । यत्तदर्थप्रतीतीच्छयोच्चरितत्वं तात्पर्यं, तेन भोजनप्रकरणादौ 'सैन्धवमानय' इत्युक्ते अश्वान्वयबोधो न भवति ।

तथा "अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतां" (यह आता है पुत्र राजाका पुरुष को हटाओ) यहां 'राजाका' इस पदसे पुरुषका अन्वय नहीं होता, क्योंकि उस राजपदका प्रथमही पुत्रके साथ अन्वय हुआ है । बाधक निश्चयका अभावको योग्यता कहते हैं । इस कारण "वह्निना सिञ्चति" "अग्निसे भिगाता", यहां अन्वयबोध नहीं होता क्योंकि यहां योग्यता नहीं, अग्निसे भिगाना नहीं होता । जिन दोनों पदोंसे अन्वय होता है उनका अव्यवधानसे (अर्थात् कोई पद बीचमें न हो ऐसे) समीपवर्त्ती होना आसत्ति है, इसलिये "गिरिर्भुक्तं वह्निमान् देवदत्तेन" (पर्व्वत खाया है अग्नियुक्त देवदत्तने ) इन पदोंसे पर्व्वत अग्नियुक्त देवदत्तने खाया है, ऐसा अन्वय नहीं होता । जिस अर्थको प्रतीतिके लिये पद उच्चारित होता उस अर्थमें उस पदका तात्पर्य्य रहता है, इसलिये यदि भोजनके समय 'सैंधव लाओ' ऐसा कहाजावे तो 'सैंधव' शब्दसे लवणका ज्ञान होता है, अश्वका नहीं ।

(४४) वृत्त्या विना, शब्देन नान्वयबोधो जन्यते। वृत्तिर्द्वि-विधा, शक्तिर्लक्षणा च। शक्तिः घटादिपदस्य घटादौ। लक्षणा यथा, 'गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदार्थे प्रवाहे घोषान्वयानुपपत्त्या, गङ्गापदस्य तीरे लक्षणा कल्प्यते, तया वृत्त्या उपस्थिते तीरे घोषः प्रतिवसतीत्यन्वयबोधो भवति।

(४४) अर्थबोध करानेके लिये शब्दमें एकप्रकारकी वृत्ति अर्थात् शक्ति अवश्य माननी पड़ेगी, उस वृत्तिसे विना केवल शब्दसे अन्वयबोध नहीं होता। वृत्ति दो प्रकारकी है—एक स्वाभाविक शक्ति, दूसरी लक्षणा (कल्पिता शक्ति)। स्वाभाविक शक्ति—जैसे घट इस पदके उच्चारण करते ही जिस शक्तिसे घट पदार्थ का ज्ञान होता, तथा गौ इस पदको उच्चारण करते ही, उस नामसे प्रसिद्ध जीवविशेषका ज्ञान होता है, इत्यादि। लक्षणाका उदाहरण जैसा 'गङ्गायां घोषः प्रतिवसति' (गङ्गापर गुजरका गांव बसा हुआ है), देखो गङ्गा शब्दका स्वाभाविक अर्थ जलका स्रोत उसपर कभी गुजरका गांव नहीं होसक्ता, इसलिये 'गङ्गायां' इस पदसे "घोषः" इसका अन्वय नहीं होसक्ता, उस अन्वयको सम्पादन करनेके लिये गङ्गाशब्दमें स्वाभाविकसे भिन्न लक्षणा नाम एक दूसरी शक्ति कल्पना करनी पड़ती, जिससे तीरका बोध होता है, उस शक्तिसे जब तीरका बोध हुआ तब "गङ्गायां घोषः प्रतिवसति" (गंगा पर गुजरका गांव बसा हुआ है) इस पदका ऐसा अर्थ न हो कर (गंगाके तीर पर गुजरका गांव बसा हुआ

गौणी वृत्तिरपि लक्षणैव, यथा 'अग्निर्माणवकः,' 'गौर्वाहीकः,' अत्र लक्षणया अग्न्यादिसादृश्यं प्रतीयते।

(४५) शक्तं पदं चतुर्विधं,—यौगिकं, रूढं, योगरूढं, यौगिकरूढं च। आद्यं यथा पाचकादिपदं, योगार्थं पाककर्त्तारि शक्तम्। द्वितीयं यथा, विप्रादिपदं रूढ्या ब्राह्मणवाचकम्। तृतीयं यथा, पङ्कजादिपदं योगरूढ्या पङ्कजनिकर्तृत्वेन

---

है) ऐसा अर्थ होता है। गौणी वृत्ति अर्थात् सादृश्य बोधकरानेवाली शक्ति भी लक्षणा है। जैसा—"अग्निर्माणवकः" (बालक ब्राह्मण अग्निका सदृश है) "गौर्वाहीकः (वाहीक गौका सदृश है) इत्यादि उदाहरणोंमें लक्षणा शक्तिसे ही सादृश्यका बोध होता है।

(४५) शक्त अर्थात् स्वाभाविक शक्ति युक्त पद चार प्रकारके हैं,—(१) यौगिक, (२) रूढ़, (३) योगरूढ़, तथा (४) यौगिकरूढ़। यौगिक अर्थात् प्रकृति प्रत्ययके योगसे उत्पन्न अर्थविशिष्ट शब्द, जैसा पच धातुके उत्तर कर्त्तृवाच्य प्रत्ययके योगसे सिद्ध पाचक यह पद पाककरनेवाले (रसुइये) को बोध करता है। रूढ़ि शब्दका अर्थ प्रसिद्धि, रूढ़का अर्थ प्रसिद्धिसे अर्थबोध करानेवाला, जैसा विप्र आदि शब्द रूढि अर्थात् प्रसिद्धिसे ब्राह्मणोंका बोधक है। योगरूढ़ अर्थात् जो शब्द प्रकृति प्रत्ययका योग और प्रसिद्धि इन दोनोंसे अर्थबोध कराता है, जैसा पङ्कज इस शब्दसे पद्मका बोध होता है, पङ्कज इस पदमें प्रकृति प्रत्ययके योगसे

पद्मलिन च पद्मवाचकम्। चतुर्थं यथा, उद्भिदादिपदं यौगिकं तरुगुल्मादेः, रूढ़ं यागविशेषस्य वाचकम्।

(४३) लक्षणा द्विविधा, जहत्स्वार्था अजहत्स्वार्था च; आद्या यथा, 'गङ्गायां घोषः' इत्यादौ। द्वितीया यथा, 'छत्त्रिणो यान्ति' इत्यादौ, अत्र छत्त्रिणः तदितरस्यापि गमनान्वयः।

---

पङ्कमें जो उत्पन्न हुआ ऐसा अर्थका लाभ हुआ और रूढ़िसे 'पद्म' इस अर्थका बोध हुआ, अर्थात् यद्यपि पङ्कमें बहुत वस्तु उत्पन्न हैं तथापि पङ्कज इस पदसे कमलको छोड़कर और किसीका बोध नहीं होता। यौगिकरूढ़ अर्थात् जो कभी यौगिक रूपसे व्यवहृत और कभी रूढ़ रूपसे प्रसिद्ध है, जैसा 'उद्भिद्' यह पद यौगिक रूपसे वृक्षलतादिका बोध कराता है, और रूढ़ रूपसे याग विशेषका।

(४३) लक्षणा दो प्रकारकी है। एक जहत्स्वार्था, जिस लक्षणाके साथ स्वाभाविक अर्थका कुछ सम्बन्ध नहीं रहता है, जैसा 'गङ्गायां घोषः' इस वाक्यमें स्रोतरूप स्वाभाविक अर्थ नहीं गिना जाता। दूसरी अजहत्स्वार्था अर्थात् जिस लक्षणामें स्वाभाविक अर्थको एकदमसे नहीं छोड़ा जाता है, जैसा सारे छातेवाले जाते हैं, इस वाक्यसे सिवाय छातेवालोंके औरोंका गमनभी विदित होता।

(४६) अथ शाब्दबोधप्रक्रिया,—'देवदत्तो ग्रामं गच्छति' इत्यत्र ग्रामकर्मक-गमनजनक-वर्त्तमानकृतिमानित्यन्वयबोधः। द्वितीयाया अर्थः कर्मत्वं, धातोर्गमनं, जनकत्वं संसर्गमर्य्यादालभ्यं, लटो वर्त्तमानत्वं, आख्यातस्य कृतिः, तत्सम्बन्धः संसर्गमर्यादालभ्यः। यत्र कर्त्तरि कृतेर्बाधः तत्र आख्यातस्य व्यापारादौ लक्षणा, यथा 'रथो गच्छति' इत्यत्र गमनजनकवर्त्तमानव्यापार-

(४६) अब शाब्दबोधकी प्रक्रियाका वर्णन किया जाता है। "देवदत्तो ग्रामं गच्छति" इस वाक्यमें "ग्रामकर्मक गमनजनक वर्त्तमान कृतिकरके युक्त * देवदत्त" ऐसा अन्वयका बोध होता है। ग्राममें जो द्वितीया है उसका अर्थ कर्मत्व, धातुका अर्थ जाना 'गमनजनक' यहां जो जनकत्व रूप अर्थका बोध होता है वह किसी प्रकृति वा प्रत्ययका अर्थ, पदोंके संसर्ग अर्थात् मिलापसे ऐसे अर्थका बोध होता है। लटका अर्थ वर्त्तमान, तिङ्का अर्थ कृति, कृतिमत्त्व ऐसे अर्थकाभी पहिलेकी न्याई संसर्गसे बोध होता है। जिस स्थलमें कर्त्तामें व्यापार नहीं रहता अर्थात् कर्त्ता जड़ वा निश्चेष्ट है, उस स्थलमें तिङ्में ही उस व्यापारको बोध करानेवाली लक्षणा शक्तिकी कल्पना करनी पड़ती, जैसा "रथो गच्छति" (रथ जाता है) यहां यद्यपि

* ग्राम है कर्म जिसका ऐसा जो गमन (क्रिया) उसका उत्पादन करनेवाली वर्त्तमान कृति (व्यापार) तद्विशिष्ट देवदत्त।

वान् रथः। 'दधि पश्यति' इत्यादौ द्वितीयालोपस्थले दधि-शब्द एवाजहत्स्वार्थलक्षणया दधिकर्मत्वं बोधयति। एकवच-नाद्युपस्थितमेकत्वादि सर्वत्र प्रथमादिपदमुपस्थापयति। देव-दत्तेन गम्यते ग्रामः इत्यस्य देवदत्तवृत्तिकृतिजन्य गमनजन्य-फलशाली ग्राम इत्यर्थः। कृतित्वं संसर्गबललभ्यं, तृतीया-र्थश्च कृतिः, जन्यत्वं संसर्गः, गमनं धात्वर्थः, जन्यत्वं संसर्गः, फलं

---

रथ जड़ है उसमें कृति नहीं तौभी लक्षणाके बलसे गमनजनक वर्त्तमान व्यापारवान् रथ ऐसा अर्थ प्रतीत होता है। "दधि पश्यति" (दही देखता है) दधिके उत्तर कर्मत्व रूप अर्थको बोध करानेवाली द्वितीयाका लोप हुआ, तथापि दधि शब्द अजहत्स्वार्था लक्षणाके बलसे कर्मत्वका बोध कराता है। तिङमें एकवचनके रहनेसे जो एकत्वकी प्रतीति होता है केवल उसी-सेभी प्रथमान्त पद (कर्त्तृपद)की उपस्थिति होती है, जैसा "दधि पश्यति" इसमें कर्त्तृपदका प्रयोग नहीं, तथापि एक वचनान्त तिङसे कर्त्तृपदकी उपस्थिति होती है। देवदत्तेन गम्यते ग्रामः (देवदत्त करके ग्राममें गमन किया जाता), इसका अर्थ देवदत्तमें वर्त्तमान जो कृति (व्यापार) उससे उत्पन्न हुआ जो गमन तिस गमनका फल ग्राममें वर्त्तमान है। देवदत्त-वृत्ति इस वृत्तिरूप अर्थ संसर्गके बलसे जाना जाता है, देवदत्तेन इसपदमें जो तृतीया है उसका अर्थ कृति (व्यापार), 'जन्यत्व' रूप अर्थ संसर्गका बलसे प्रतीयमान होता है, गमन (जाना)

कर्मात्मनेपदार्थः, शालित्वं संसर्गः। भावप्रत्यये तु 'देवदत्तेन सुप्यते' इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्वाप इत्यर्थः। भावप्रत्ययस्थले फलाभावात् आत्मनेपदार्थो न भासते। भविष्यत्त्वं लृटोऽर्थः, तच्च विद्यमान-प्रागभाव-प्रतियोग्युत्पत्तिकत्वं, तेन 'गमिष्यति' इत्यत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकगमनानुकूलकृतिमानित्यर्थः। लुटोऽर्थः अनद्यतनत्वमपि। लुङोऽर्थः

---

गमधातुका अर्थ, जन्यत्व रूप अर्थ संसर्गका बलसे प्रतीयमान होता है. फल कर्मवाच्य आत्मनेपदका अर्थ, 'शालित्व' संसर्गके बलसे प्रतीत होता है। भावप्रत्ययके स्थलमें, जैसा "देवदत्तेन सुप्यते" (देवदत्तने सोना) यहां देवदत्तवृत्ति कृति, जन्य स्वाप (देवदत्तमें वर्त्तमान जो कृति (व्यापार) उस व्यापारसे उत्पन्न शयन) ऐसा अर्थ प्रतीत होता, भाववाच्य प्रत्यय स्थलमें फल नहीं, इसलिये आत्मनेपदका कुछ अर्थ नहीं। लृटका अर्थ भविष्यत्त्व अर्थात् वर्त्तमान जो प्रागभाव उसका जो प्रतियोगी (जिस वस्तुका प्रागभाव वर्त्तमान है) उस प्रतियोगीकी उत्पत्ति जिसमें उसका नाम भविष्यत् (अब जो वस्तु नहीं उसकी उत्पत्ति जिस कालमें होगी उसका नाम भविष्यत्) इसलिये 'गमिष्यति' इस पदका अर्थ विद्यमान प्रागभाव प्रतियोग्युत्पत्तिक गमनानुकूल कृतिमान् ऐसा है (अब जो विद्यमान नहीं ऐसे वस्तुकी उत्पत्ति जिसमें होगी, उस कालमें जो गमन उस गमनको अनुकूल व्यापारसे युक्त कोई पुरुष)। लुटका अर्थ

## दुहितुः ।

"आत्मजस्तनयः सूनुः सुतः पुत्त्रः स्त्रियां त्वमी । आहु-र्दुहितरं सर्व्वे" इत्यमरकोषं "अमी सर्व्वे आत्मजादयः स्त्रियां वर्त्तमाना दुहितरं आहुः" इति महेश्वरकृतान्तस्य टीकामधीत्य दुहितृशब्दस्य स्त्र्यपत्यरूपमात्रमर्थं ज्ञातवन्तः । अथ क्रमेण वयःपरिणत्या सह व्याकरणव्युत्पत्तियोगात् "दुह दोहे" इत्य-स्मात्तृचप्रत्ययेन निष्पन्नो दुहितृशब्दोऽयं दोहनकर्त्तृरूपमर्थ-मभिदधातीति प्रत्ययोः जातः, परं तदानीमपि किम्प्रकारकं तद्दोहनं कथं वा स्त्र्यपत्यस्य तत्र कर्त्तृतेत्यादिविषयिणी जिज्ञासा चेतसि न समुदिता, ज्ञानस्य तु कथैव नास्ति ।

ततः कालानुरोधतः अङ्गलभाषामभ्यस्य तल्लिखितयूरोपीय-पण्डितावलीप्रदर्शितैतिहासिकरहस्यादिकमालोच्यास्मिन् दुहितृ-शब्दे सहदैतिह्यासिकतत्त्वमवगतवन्तस्तद्यथा "पूर्व्वमार्य्यजातीया हि पशुपालनेनैव जीविकामकार्षुः । पुत्त्रास्तेषां गोमहिषादीनां रक्षाविधानमन्वतिष्ठन्, कन्यका हि सन्ध्ये ता दुदुहुस्तत एव ताः कन्या दुहितृशब्देनाभिहिता अभवन् । अङ्गलभाषीय "डटर (Daughter)" शब्दस्यापीदमूलमयमपि मौलिकोऽर्थः ।

अहो समयप्रभावेणार्य्याणामस्माकमन्तर्हितेष्वपि पूर्व्वाचार-व्यवहारादिकेष्वतो विनिवृत्ते च गोपालनव्यवहारे दुहितॄणां

दोहनव्यापारस्य तथापि न निवृत्तिर्जाता। परमिदानीं गो-महिषप्रमुखाणां पशूनामभावात् पितर एताभ्यां दोहनक्रिया-कर्म्मत्वमधिगताः। ताहि शैशवादारभ्य पितरं दोग्धुमारभन्ते, विशेषतो विवाहसमये समुपस्थिते न केवलं वक्षायामसञ्चितमर्थजातं यावत् पितुर्हृत्पिण्डाद्रुधिरमपि दुहन्ति। काश्चिच्च विवाहान्तेऽपि पुत्रपौत्रादिभिः सह पितरं यथेच्छं सन्दुहन्ति, पिता तु गौरिव सर्व्वमेव दुहितचेष्टितं सहतेऽन्यथा लोकनिन्दावसरो येन हि चिराहृतगोभावापसरणान् मानहानिप्रसङ्गः।

पितृदोहने दुहितॄणां कालनियमो नास्ति। अवसरं प्राप्य न ता वृथा विजहति, यद्यपि भ्रातरं शिशुं दूरस्थं वावलोक्य सर्व्वामेव पैतृकसम्पत्तिमात्मसात् कर्त्तुं यतन्ते। अत्रेदमपि च वक्तव्यं यद्दुहितृषु न केवलं पूर्व्वकालीनदोहनकर्त्तृत्वधर्म्मस्यावस्थानं, दोहनकर्म्मीभूतस्य शुश्रूषाकारित्वमपि तासु पूर्व्ववदवस्थितं लक्ष्यते। पितृसेवायां दुहितॄणां समकक्षतामधिगन्तुं न कोऽपि समर्थोभवति। शुश्रूषानुकूलितश्चापि गुरुः स्वयमेव क्वापि पुत्राद्यपरपरिजनेभ्यः सङ्गोप्य दुहितॄणां भाण्डं पूरयति।

भवतु, दोग्धुनाम दोहनप्रकृतिकत्वात् दुहिता यावज्जीवं पितरमर्थान्, परमिदन्तु, सम्प्रतावर्द्धनेन सप्रात्यहेऽपि महदद्भुतं संवृत्तं; दुहितृसम्बन्धात् कुटुम्बिनामभीप्सवो हि वरपक्षीया विवाहात् पूर्व्वमेव कन्यापितरं एकदैव सर्व्वस्वं दोग्धुमभिलषन्तीति। परीक्षोत्तरणेन वराणामन्या कापि शक्तिर्वर्द्धेत न वा श्वशुरदोहन-

भ्रान्तिस्तु चतुरस्रं वर्द्धते, येन पाश्चात्यसमाजाभ्यन्तरे महती विशृ-ङ्खला जाता। यस्य तु दुहितृबाहुल्यं स साधारणी गौरिव मुहुर्दोहनभिया जीवन्मृत इव तिष्ठति।

---

## मोक्षमूलर-हिन्दुजातीयानाम्।

मिल-मेकले-प्रभृतयः कतिचिदिङ्गलण्डीयैतिहासिका हिन्दु-जातीयानां चरितान्येवं चित्रयामासुर्यत्तदवलोकनेन न केवल-मिङ्गलण्डीयप्रमुखाणां भिन्नदेशीयानां परमस्मज्जातीयेष्वप्यज्ञात-स्वजातीयशास्त्रतत्त्वानां बहूनामाधुनिककृतविद्यानामस्मज्जातीयेष्व-वज्ञा सञ्जाता। मेकलेनामा हि कोपनिचयात् सर्व्वाण्येव गर्हित-चारित्राभिधायकानि वचनान्याकलय्यैवमवज्ञया हिन्दुजातीयेषु प्रायुङ्क्त यत्तान्यवलोक्य यूरोपीयाणां मनसि वयं सर्व्वविधानां कुकार्य्याणामाकरा इति सुदृढ एव संस्कारो जातः। येन च हिन्दुयूरोपीयैर्विरोधितयानुष्ठिते कस्मिन्नपि दण्डार्हे कार्य्ये साक्षिभिः सर्व्वथा निर्द्दोषित्वेन प्रमाणीकृतमपि हिन्दुजातीयं दण्डयति प्राड्विवाकः नलपराधस्य कारकं यूरोपीयम्। ततश्च बहवः इङ्गलण्डीयभाषाकृतविद्या नव्या हिन्दुजातीया अपि तद्-वचनावलोकनोद्भूतनिर्व्वेदवशात् स्वधर्म्मं जातीयभावञ्च परित्यज्य तत्र तत्र वैदेशिकमनुकुर्व्वन्ति।

दिष्ट्या साम्प्रतं यूरोपे भारतीयशास्त्राणां विधिवदालोचनं वर्द्धते, बहवश्च तत्र भारतीयपण्डितेभ्योऽप्यधिकतरमस्य शास्त्रतत्त्वं विदितवन्तः। ते हि पूर्व्वोल्लिखितानां मेकलेप्रमुखाणां भ्रान्तिं परिज्ञाय सर्व्वत्र तदाख्यापनेन भारतीयानां प्रकृतस्वरूपं चित्रयन्ति। सम्प्रति तु तेषां भारतीयशास्त्रतत्त्वविदामग्रणीः अध्यापकः श्रीमान् मोक्षमूलरेति प्रसिद्धनामा भारतवर्षे प्रयाणोन्मुखान् सिविलसर्व्विसपदाभिषिक्तान् युन आङ्गयैवमचीकथत्—

"जेमस् मिलनामकस्य ब्रिटनीयभारतेतिवृत्तपुस्तकं हि सुमहाभ्रमसङ्कुलम्। एतदध्ययनं नाम भारते बहूनन्थांनुत्पादयामास। अध्यापक विलसन साहबकृत प्रतिकूलव्याख्यासत्त्वेऽपि नैतत्पुस्तकस्य बहुलदोषोपशमो जातः। सिविलसर्व्विस-परीक्षार्थिनामेवंविधपुस्तकाध्ययनमनुचितमेव।"

"मिलनामा न कदापि स्वयं भारतभूमिमाजगाम। स हि 'डुवर' नामकस्य फ्रान्सदेशीय-खृष्टधर्म्मप्रचारकस्य तथा ओर्मे, बुचानन, ऐनण्टवार्ड प्रभृतीनां सकाशाद्भारतीयतत्त्वमवगम्यैव स्वेतिहासं लिलेख। परमेतेषां भारतीयविज्ञानमल्पतरमेवासीज्जातस्ते तत्र सम्यग्विचारका भवितुमर्हाः। मिलनामकेन तु तेषां पुस्तकेभ्योऽपि भारतीयानां गुणाख्यापनवचनान्यवधूय केवलं दोषदर्शकानि वचनानि स्वकृतौ सङ्कलितानि।"

"सत्यं मेकलेनामधेयो भारतमधितस्थौ। किन्तु स कदापि न निजमन्दिराद्बहिरगच्छत्। सोऽपि पक्षपातित्वप-

ज्ञानशालिभिस्तत्त्वानि सङ्कलय्य स्वयमेव वञ्चितो बभूव । परमति-प्राचीनसमयादद्य-पर्य्यन्तं प्रकृततत्त्वनिपुणैर्भारतीयचारित्र्यमतिमहत्त्वेनैव चिन्तितम् ।”

“कैसियसनामा कश्चित् ग्रीसदेशीयकविः पारसीकराजसभायां हिन्दुजातीयानां चरित्रमाकर्ण्य निजपुस्तकस्याध्यायमेकं हिन्दुजातीयविचाररीतिवर्णनेन पूर्णमकरोत् । मेघास्थिनिस्नामा चन्द्रगुप्तसभास्थो ग्रीसदेशीयराजदूतोऽकथयत् ‘भारतभूमौ चौर्य्यस्यातीवाल्पत्वं तथा भारतीयाः सत्यवादिनो धर्म्मभीरवश्चाद्दृश्यन्त इति ।’

“आरियाननामा कश्चिदपरो ग्रीसदेशीयः कविरकथयत् ‘न कोऽपि भारतीयो मिथ्यावादापराधेन दण्डं प्राप्नोतीति ।’ ह्योयाङ्ग सङ्गनामा प्रसिद्धचैनिकपरिव्राजको हि सप्तसम्वत्सरान् भारतभूमौ नीत्वा भारततत्त्वानां विशेषाभिज्ञो बभूव । सोऽप्येवमाह ‘यद्यपि भारतवासिनां क्रोधबाहुल्यं दृश्यते तथापि ते स्वभावत एव सद्धर्मसेविनः, सत्यपरायणाश्च । तेषां राज्यशासनं हि न्यायानुगतत्वेन प्रसिद्धमिति ।’ मुसलमानग्रन्थकृतश्च हिन्दुजातीयानां बहून् गुणानाख्यापयामासुः । इद्रिसिनामा स्वभूगोलवर्णनग्रन्थेऽकथयत् ‘भारतीया हि निसर्गतो न्यायानुगताः । ते न किमपि न्यायविरुद्धं कर्म्मानुतिष्ठन्ति । तेषां धर्म्मरतिसत्यदृढव्रतत्वादयश्च गुणाः सुप्रसिद्धा एव ।’ आइन आकबरी पुस्तकरचयितापि हिन्दुजातीयानां दयाधर्म्मन्यायपरतादिगुणानां भूयसीं प्रशंसामकरोत् ।”

"आधुनिकाङ्गलराजपुरुषाणामपि सर विलियम स्लीमन, सर टमास मनसुअर्ट एलफिनिष्टन, सर जन मलकम प्रभृतयश्च प्रकृततत्त्वान्वेषिणो मुक्तकण्ठं भारतीयगुणानुवादांश्चक्रुः। स्लीमन साहब महोदयेन कथितं यत्तेन या याः पल्लयोऽवलोकितास्तत्र-त्या हि जना मिथ्यावादं न जानन्ति। असभ्या अपि हि जना न केनापि स्तेयाद्याय प्रलोभिता भवन्ति। सर टमास मनरोनाम-धेयेन कथितं हिन्दुजातीया हि यूरोपीयजातीयेभ्यो न कुत्रापि गुणेषु न्यूनाः, प्रत्युत यदि यूरोपदेशो भारतवर्षेण सह सभ्यताया विनिमयं कुर्यात् तदा यूरोपस्यैव लाभो भवेदिति"। एवं बहु-लश उदाहरणानि विद्यन्ते यैर्नाम निखिलकले प्रभृतीनां वचनानि सम्पूर्णं खण्डितानि भवन्तीति।

मातर्भारतधरे! समाश्वसिहि समाश्वसिहि, नैषोऽन्धकार-श्चिराय त्वामभिभवितुं प्रभविष्यति। तव चिरानुरक्तेषु पुत्रेषु कालवशादसमर्थेष्वपि त्वदीयशास्त्रजातावलोकनोन्मीलितज्ञान-चक्षुषो यूरोपीयपण्डितास्तव मन्युमपनेष्यन्ति। ततश्च पाश्चात्य-विद्याभया सम्वलितं त्वदीयज्ञानज्योतिः पूर्वापेक्षयाधिकतरंचिरतरं प्रतिभास्यति। अचिरेणैव समस्तं जगत् पूर्ववदेव तव चरणाराधनं करिष्यति।

---

श्रीः Registered No 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसांमनसामभिनन्दिनी ॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२] फेब्रुयारि १८८३ [२ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्न् लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रित.।

किंपि सपक्षसत्त्वरहितं चतुरूपमेवापेक्षितं। यत्र साध्यसन्देहः स पक्षः; यत्र साध्यनिश्चयः स सपक्षः; यत्र साध्याभावनिश्चयः स विपक्षः; साध्याभाववान् पक्षो बाधः; साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः।

(४०) सोपाधौ पक्षसपक्षसत्त्वाद्यन्यतमभङ्ग आवश्यकः; सोपाधिश्च स्वव्यभिचारितासम्बन्धेन उपाधिविशिष्टः। उपाधिश्च त्रिविधः,—साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः (१), साध-

होता अर्थात् जहां अनुमानकेद्वारा साध्यकी सिद्धि करनी पड़ती, उसका नाम पक्ष; जिसमें साध्यका निश्चय रहता, उसका नाम सपक्ष; जिसमें साध्यके अभावका निश्चय रहता, उसका नाम विपक्ष; जहां पक्षही साध्यके अभाव करके युक्त होता है, वहां बाध होता है। जो हेतु साध्यके विरोधी (प्रतिकूल) का साधक होता है, उसे सत्प्रतिपक्ष कहते हैं।

(४०) हेतु जहां सोपाधि होता है वहां हेतुमें पक्षसत्त्व (पक्षमें रहना), और सपक्षसत्त्व (सपक्षमें रहना) इन दोनोंमेंसे एक धर्म नहीं रहता है। जो हेतु स्वव्यभिचारिता सम्बन्ध करके * उपाधिविशिष्ट होता है उसे सोपाधि कहते हैं। उपाधि तीन प्रकारके हैं, (१) हेतुका अव्यापक होकर जो शुद्ध (केवल किसी प्रकारके धर्मसे युक्त नहीं) साध्यका व्यापक

* स्वव्यभिचारित्व-सम्बन्ध अपने अभावके अधिकरणमें वृत्तित्वरूप सम्बन्ध।

नाव्यापकत्वे सति पक्षधर्मावच्छिन्नसाध्यव्यापकः (२), साधना-
व्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकश्च (३)। आद्यो यथा,
'अयोगोलकं धूमवद् वह्नेः', अत्र आर्द्रेन्धनप्रभववह्निमत्त्वमुपाधिः
साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः। द्वितीयो यथा,

अर्थात् जो हेतुके अधिकरण जितने हैं उननेसे थोड़ेमें रहता
है और साध्यके अधिकरणमें और उसके अतिरिक्त स्थानोंमें
भी रहता है। (२) हेतुका अव्यापक होकर पक्षधर्मावच्छिन्न
साध्यव्यापक * होता है। (३) हेतुका अव्यापक होकर साधनाव-
च्छिन्नसाध्यव्यापक होता है†। प्रथमका उदाहरण जैसा "अयो-
गोलकं धूमवद् वह्नेः" (अयोगोलकमें धूम है, कारण इसमें वह्नि
है); अयोगोलक (गरम लोहेका गेंद) पक्ष, धूम साध्य, और वह्नि
हेतु। यहां आर्द्रेन्धनप्रभववह्निमत्त्व (भिगीहुई लकड़ीमें उत्पन्न
जो वह्नि तद्विशिष्टत्व) उपाधि, क्योंकि हेतु जो वह्नि उसके
अधिकरण जो अयोगोलक उसमें आर्द्रेन्धनप्रभववह्निमत्त्व
नहीं, इसलिये यह धर्म हेतुका अव्यापक हुआ, परन्तु साध्य
जो धूम उसके अधिकरण जो महानसादि उनमें आर्द्रेन्धन-
प्रभववह्निमत्त्व रहता है। दूसरेका उदाहरण जैसा "वायुः
प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्" (वायु प्रत्यक्ष है, कारण इसमें

* पक्षमें वर्त्तमान जो धर्म्म उस धर्म्मसे अवच्छिन्न (युक्त) जो साध्य उसके अधि-
करणोंमें वर्त्तमान।

† साधन जो हेतु तदवच्छिन्न जो साध्य उसके अधिकरणमें रहनेवाला।

'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्,' अत्र बहिर्द्रव्यत्वावच्छिन्नस्य प्रत्यक्षत्वस्य साध्यस्य व्यापकम् उद्भूतरूपवत्त्वमुपाधिः। तृतीयो यथा 'ध्वंसो विनाशी जन्यत्वात्', अत्र जन्यत्वावच्छिन्नविनाशित्व-व्यापकं भावत्वमुपाधिः।

---

प्रत्यक्षस्पर्शाश्रयत्व धर्म्म रहता है, अर्थात् यह प्रत्यक्षस्पर्शका आश्रय है); यहां वायु पक्ष, प्रत्यक्षत्व साध्य, और प्रत्यक्षस्पर्शा-श्रयत्व हेतु। इस स्थलमें 'उद्भूतरूपवत्त्व' उपाधि है, क्योंकि यहां हेतु जो प्रत्यक्षस्पर्शाश्रयत्व उसका अधिकरण जो वायु उसमें उद्भूतरूपवत्त्व नहीं, अतएव उद्भूतरूपवत्त्व हेतुका अव्यापक है; परन्तु यह पक्षधर्म्मावच्छिन्न साध्यका व्यापक है, पक्ष वायु उसमें वायुत्व बहिर्द्रव्यत्व इत्यादि धर्म्म है, उस बहिर्द्रव्यत्वावच्छिन्न जो प्रत्यक्षत्व उसका अधिकरण पृथिवी घट इत्यादि, उसमें उद्भूतरूपवत्त्व है, अतएव उद्भूतरूपवत्त्व साध्यका व्यापक है; पहिले यह सिद्ध कर चुका कि यह हेतुका अव्यापक अतएव उपाधि है। तृतीय प्रकारका उदाहरण जैसा "ध्वंसो विनाशी जन्यत्वात्" (ध्वंसमें विनाशित्व धर्म्म है, कारण वह जन्य है, जो जन्य उसमें विनाशित्व धर्म्म होता है, जैसा घटादि); यहां ध्वंस पक्ष, विना-शित्व साध्य, और जन्यत्व हेतु। इस स्थलमें भावत्व उपाधि, क्योंकि यह (भावत्व) साधन जो जन्यत्व तदवच्छिन्न जो साध्य अर्थात् जन्यत्वावच्छिन्न विनाशित्व उसके अधिकरण घट पट इत्यादि हैं, उनमें भावत्व है, अतएव भावत्व साध्यका व्यापक है,

(४१) अथ हेत्वाभासाः कथ्यन्ते।—सव्यभिचार-विरुद्ध-सत्-प्रतिपक्षासिद्ध-बाधिताः पञ्च हेत्वाभासाः। सव्यभिचारस्त्रि-विधः,—साधारणासाधारणानुपसंहारिभेदात्। साध्याभाववद्वृत्तित्वं साधारणत्वं, यथा 'धूमवान् वह्नेः'। सकलसपक्षव्यावृत्तत्वम् असाधारणत्वं, यथा 'पर्वतो वह्निमान् पर्वतत्वात्'। सर्व-

---

परन्तु साधन जो जन्यत्व उसका अधिकरण जो ध्वंस उसमें भावत्व नहीं रहता इसलिये उसका अव्यापक है, अस्मात् भावत्व उपाधि है।

(४१) अब हेत्वाभासों*का वर्णन किया जाता है।—हेत्वाभास पांच प्रकारके हैं—(१) सव्यभिचार,(२) विरुद्ध,(३) सत्प्रतिपक्ष,(४) असिद्ध, (५) बाधित। इनमेंसे सव्यभिचार तीन प्रकारके है—साधारण, असाधारण, और अनुपसंहारी। जो हेतु साध्यके और उसके अभावके अधिकरणमें भी रहता है उसका नाम साधारण, क्योंकि वह साध्यके अधिकरणमें रहता और साध्यके अभावके अधिकरणमें भी रहता, जैसा "धूमवान् वह्नेः" धूम साध्य, वह्नि हेतु, तो देखो यहां हेतु जो वह्नि वह साध्य(धूम)के अधिकरण महानसादिमें वर्त्तमान है, और साध्याभाव (धूमाभाव) के अधि-करण अयोगोलक (गरम लोहेका गेंद)में भी वर्त्तमान है, अतएव वह्नि यथार्थ हेतु नहीं, किन्तु हेतु की न्याई प्रतीत होता है। जो हेतु समुदय सपक्षोंमें भी नहीं रहता केवल पक्षमें रहता,

---

* हेत्वाभास इस शब्दका अर्थ हेतुकी न्याई आभास (प्रतीति) जिसका अर्थात् जो वास्तवमें हेतु नहीं किन्तु हेतुकी न्याई प्रतीत होता है।

पक्षकलम् अनुपसंहारित्वं, यथा 'सर्वं प्रमेयं अभिधेयत्वात्'।
साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा 'घटो नित्यः सावयवत्वात्'।

---

उसका नाम असाधारण, जैसा "पर्व्वतो वह्निमान् पर्व्वतत्वात्" (पर्व्वतमें वह्नि है क्योंकि इसमें पर्व्वतत्व धर्म्म है), पर्व्वत पक्ष, वह्नि साध्य, पर्व्वतत्व हेतु; अब देखो हेतु (पर्व्वतत्व) केवल पर्व्वतमें रहता, सपक्ष जो महानसादि उसमें नहीं रहता है; अतएव यह यथार्थ हेतु नहीं। जहां निखिल वस्तु पक्ष हैं उसका नाम अनुपसंहारी, जैसा "सर्व्वं प्रमेयं अभिधेयत्वात्" (समुदय वस्तुमें प्रमेयत्व है, कारण उनमें अभिधेयत्व है), यहां निखिल वस्तु पक्ष, प्रमेयत्व साध्य, और अभिधेयत्व हेतु; यहां निखिल वस्तु पक्ष हुआ इसलिये अनुपसंहारी। साध्याभावके अधिकरणमें वर्त्तमान जो हेतु उसे विरुद्ध कहते हैं। किसीने कहा की साध्यके अधिकरणमें वर्त्तमान जो अभाव उसका प्रतियोगी हेतु विरुद्ध, जैसा "घटो नित्यः सावयवत्वात्" (घटमें नित्यत्व धर्म्म है, क्योंकि उसमें सावयवत्व धर्म्म है)। घट पक्ष, नित्यत्व साध्य, और सावयवत्व हेतु, यहां देखो साध्याभाव जो नित्यत्वाभाव उसके अधिकरण जो त्रसरेणु आदि, उसमें सावयवत्व (अवयवसे युक्तत्व)के वर्त्तमान होनेसे हेतु विरुद्ध हुआ। अथवा साध्य जो नित्यत्व उसके अधिकरण जो परमाणु मन इत्यादि उनमें सावयवत्व धर्म्मका अभाव है (क्योंकि परमाणु मन इनका अवयव नहीं है), उस अभावका प्रतियोगी सावयवत्व है, इसलिये हेतु विरुद्ध

सत्प्रतिपक्षो यथा 'पर्व्वतो वह्निमान् धूमात्,' 'पर्व्वतो वह्न्य-भाववान् महानसान्यत्वात्'। असिद्धस्त्रिविधः, आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्च। यत्र पक्षोऽसन् सिद्धसाधनं वा, स आश्रयासिद्धः, यथा 'शशविषाणं नित्यं अजन्यत्वात्' 'शरीरं हस्तादिवत् हस्तादिमत्तया प्रतीयमानत्वात्'। यत्र पक्षाद्वृत्ति-

---

कश्च। सत्प्रतिपक्ष अर्थात् हेतु जहां साध्यके विरोधीका साधक है, जैसा "पर्व्वतो वह्निमान् धूमात्" (पर्व्वतमें वह्नि है क्योंकि इसमें धूम है) इस अनुमानके समय "पर्व्वतो वह्न्य-भाववान् महानसान्यत्वात्" (पर्व्वतमें वह्निका अभाव है, कारण इसमें महानस [रसुईका स्थान] अन्यत्व [भेद] है)। ऐसे अनुमानमें सत्प्रतिपक्षता दोष होता है। असिद्ध तीन प्रकार का है, (१) आश्रयासिद्ध, (२) स्वरूपासिद्ध, (३) व्याप्यत्वासिद्ध। जहां पक्षही वास्तवमें नहीं होता, अथवा जिस अनुमानमें किसी तरहसे सिद्ध वस्तुका ही साधन होता, किसी नई बातकी सिद्धि नहीं होती, ऐसे अनुमानको आश्रयासिद्ध कहते हैं, जैसा "शशविषाणं नित्यं अजन्यत्वात्" (शशको सिंग नित्य है, क्योंकि यह अजन्य है, उत्पन्न नहीं होता), शशविषाण (शशका सिंग) पक्ष, नित्यत्व साध्य, अजन्यत्व हेतु। देखो शशका सिंग ही नहीं होता, पक्षही अप्रसिद्ध। तथा "शरीरं हस्तादिवत् हस्तादि-मत्तया प्रतीयमानत्वात्" (शरीर हस्तादिविशिष्ट है, कारण हस्तादिविशिष्ट रूपसे प्रतीत होता है), शरीर पक्ष, हस्तादि-

हेतुः स स्वरूपासिद्धः, यथा 'पर्व्वतो वह्निमान् महानसत्वात्'। स च विशेषणासिद्ध-विशेष्यासिद्ध-भागासिद्ध-भेदाद्बहुविधः। आद्यो यथा 'शब्दोऽनित्यः चाक्षुषत्वे सति जन्यत्वात्'। द्वितीयो यथा 'शब्दोऽनित्यः गुणत्वे सति परमाणुवृत्तित्वात्'। तृतीयो यथा

---

वत्त्व साध्य, हस्तादिविशिष्ट रूपसे प्रतीयमानत्व हेतु; शरीरमें हस्तादिवत्त्व प्रत्यक्षसे ही सिद्ध है, फिर अनुमानसे उसीको सिद्ध करना सिद्धका साधनमात्र है। जहां हेतु पक्षमें नहीं रहता, उसे स्वरूपासिद्ध कहते हैं, जैसा "पर्व्वतो वह्निमान् महानसत्वात्" (पर्व्वतमें वह्नि है, कारण इसमें महानसत्व धर्म्म है), यहां हेतु महानसत्व पक्षमें अर्थात् पर्व्वतमें नहीं रहता है। यह स्वरूपासिद्ध, विशेषणासिद्ध, विशेष्यासिद्ध, भागासिद्ध इत्यादि रूपसे नाना प्रकारका है। विशेषणासिद्ध अर्थात् हेतुका विशेषण जहां पक्षमें नहीं रहता, जैसा "शब्दोऽनित्यः चाक्षुषत्वे सति जन्यत्वात्" (शब्द अनित्य है, क्योंकि यह चाक्षुष और जन्य है), शब्द पक्ष, अनित्यत्व साध्य, चाक्षुषत्वे सति जन्यत्व हेतु। यहां हेतुमें विशेषणीभूत जो चाक्षुषत्व वह पक्ष(शब्द)में नहीं रहता है। विशेष्यासिद्ध अर्थात् हेतुमें जो विशेष्य हो पक्षमें उसका न होना, जैसा "शब्दोऽनित्यः गुणत्वे सति परमाणुवृत्तित्वात्" (शब्द अनित्य है, कारण यह गुण है और परमाणुमें वर्त्तमान है), शब्द पक्ष, अनित्यत्व साध्य, गुणत्वे सति परमाणुवृत्तित्व हेतु। तो देखो हेतुमें विशेष्यरूप जो

'एतानि द्रव्याणि निरवयवत्वात्'। सोपाधिर्व्याप्यत्वासिद्धः यथा, 'धूमवान् वह्नेः'। बाधो यथा, 'जलहृदो वह्निमान् द्रव्यत्वात्'। तेन एतद्दोषरहितो हेतुः सद्धेतुः। इत्यनुमानं व्याख्यातम्।

४२। उपमितिकरणमुपमानं। कीदृशो गवयः?—इति प्रश्ने 'गोसदृशो गवयः' इत्युत्तरिते यदा गोसदृशं प्राणिनं पश्यति

---

परमाणुत्वादि धर्म्म वह पक्षमें (शब्दमें) नहीं रहता। भागासिद्ध जहां पदार्थोंके विभागमें ही भ्रम है, जैसा "एतानि द्रव्याणि निरवयवत्वात्" (ये द्रव्य हैं, क्योंकि निरवयव हैं), ये पक्ष, द्रव्यत्व साध्य, निरवयवत्व हेतु। द्रव्य दोप्रकारका ही होता—सावयव और निरवयव, अतएव केवल निरवयव रूपसे निर्द्देश करनेमें भागासिद्ध हुआ। उपाधियुक्त हेतुको व्याप्यत्वासिद्ध कहते हैं, जैसा "धूमवान् वह्नेः" इसका व्याख्यान पहिले हो चुका। बाध स्थलमें पक्ष साध्याभावका अधिकरण होता है। हेतु जहां साध्यविरोधीका साधक उसे सत्प्रतिपक्ष कहते हैं। जैसा "जल हृदो वह्निमान् द्रव्यत्वात्" (जलके हृदमें वह्नि है, क्योंकि इसमें द्रव्यत्व है), जलहृद पक्ष, वह्नि साध्य, द्रव्यत्व हेतु। यहां पक्षमें (जलहृदमें) वह्निके अभाव रहनेसे बाध हुआ। इन सभ दोषोंसे रहित हेतुको सत् हेतु कहते हैं।

इति अनुमान व्याख्या।

(४२) उपमितिके साधकको उपमान कहते हैं, जैसा 'गवय' कैसे है? इस प्रश्नपर किसीने कहा 'गवय' गोका सदृश है। अनन्तर गोके सदृश प्राणिको देखकर उस वाक्यका

## मृत डक्टर हीरालाल चट्टोपाध्यायस्य ।

विद्योदयस्य प्राचीनपाठकानामवश्यमेवैतत् स्मृतावस्ति यत् हीरालालचट्टोपाध्यायनामा कश्चित् कियत्कालं विद्योदयस्य प्रकाश-कार्य्यमन्वतिष्ठदिति । सहि साम्प्रतमस्मदधन्यतया पञ्चविंशति-परिमिते वयसि मातापितरौ प्रथमाभिनवप्रसूतां भार्य्यामस्मांश्च तत्प्रेमविमुग्धान् बान्धवान् दुस्तरशोकसागरे निक्षिप्य परलोकं प्राप्तः । सोऽतीव धर्म्मपरायणो विनीतश्चासीत् । युवावस्थायां तादृग्धर्म्मपरायणो निर्दोषो विनीतश्च कश्चिदस्माकन्नयनगोचरं न गतः । न केवलं तस्यान्तरेवं सुन्दरं, परं शरीरमपि पार्व्वणसुधाकर इव सर्व्वाङ्गसुन्दरमासीत् । संस्कृतानुरागिता चास्यैवं बलवत्यासीद् यत् सोऽत्र मेडिकलविद्यालयाध्ययनसमये मासैकाकिनं विद्योदयस्य प्रकाशनादिकार्य्यजातानुष्ठानासमर्थ-मवलोक्य निजावश्यकार्य्यपाठाभ्यासात् प्रत्यहं होराद्वयमवसरं गृहीत्वा मत्साहाय्यमकरोत् । विद्यालयान्तिमपरीक्षापर्य्यन्तं स एवं चकार । ततः १८८० खृष्टाब्दे त्रयोविंशतिपरिमिते वयसि परमेश्वरकृपया सोऽत्रत्यमेडिकलविद्यालयान्तिमपरीक्षो-त्तीर्णच्छात्राणां प्रथमस्थानमभजत् । ततः प्रभृति स बहुकार्य्या-सक्तो विद्योदयप्रकाशनकार्य्यमनुष्ठातुमशक्तो बभूव । अस्मिन् समये तद्वियोगो हि विद्योदयस्यातीव शोककारणमित्यंशेनोऽन्तर्गतः शोकः समुद्घाट्यते———

( १ )

उद्घाटयध्वमविलम्बितमीशदूताः !
द्वारं दिवस्त्वरति तत्र युवेष पूतः ।
यस्यातिशुद्धचरितस्य तु देहसङ्गात्
पूता किलाद्य भविता त्रिदशैरपि द्यौः ॥

( २ )

भ्रातस्त्वैतदतिसुन्दरशान्तरूपं
दृष्ट्वा विमुग्धहृदयास्त्रिदिवेऽप्यलभ्यम् ।
दिव्याङ्गना वियति चामरशङ्खहस्ताः
प्रत्युद्गताय भवतस्त्वरितं समेताः ॥

( ३ )

मर्त्येऽपि पार्व्वणसुधाकरचारुरूपं,
शुद्धं चरित्रमपि तत् त्रिदशैरगम्यम् ।
बालातिमुग्धहृदया कमलेव साक्षात्
पत्नी, तवैव मिलितोऽखिलदिव्यभोगः ॥

( ४ )

सर्व्वं विहाय सहसासमये दुराप-
मन्यैः कथं वद दिवं त्वमितः प्रयातः ।
त्वय्याश्रितातिबलवत्परिवर्द्धिताशान्
निक्षिप्य शोकजलधौ निजबान्धवांश्च ॥

( ५ )

आशैशवात् त्वयि समर्पितजीविताश-
स्तद्रूपदर्शनसमुत्थितचित्ततोषः ।
आकर्ण्य बान्धवमुखाद्विषमां त्वदीयां
वार्त्तां कथं नु भविता जनकस्तवाद्य ॥

( ६ )

स्नेहार्द्रभावमधुरा त्वयि बद्धचित्ता
त्वद्दर्शनक्षणमनुक्षणमीक्षमाणा ।
वृत्तं निशम्य जननी सहसा तवेदं
वज्राहतेव निपतिष्यति शालवल्ली ॥

( ७ )

तस्या अदृष्टचरशोकजवह्नितापे
मुग्धे हृदि प्रबलमात्मजशोकशल्यं ।
प्राणात्ययावधिदुरुद्धरमर्पयन्तं
नो वा विधे वद कथं करुणारुणत्त्वाम् ॥

( ८ )

न्यस्तुं सुतं प्रथमजं तव कोमलाङ्के
संप्रेक्ष्यमाणसमयाभिनवप्रसूता ।
पत्नी निशम्य विषमं ननु वृत्तमेत-
द्बालातिमुग्धहृदया भविता कथं वा ॥

( ९ )

अस्मिन् नवे वयसि सा भवता वियुक्ता
प्रेमाकरेण रजनीकरचारुभासा ।
शेषं गमिष्यति हताखिलजीविताशा
दर्शं विना शशभृता ननु कौमुदीव ॥ *

---

## आत्मशासनम् ।

( ५ )

नवम्बरमासस्याष्टमदिवसे निशि लवपुरीय-म्युनिसिपल-सभ्या भारताधिनेत्रेऽभिनन्दनपत्रमेकं समर्पयामासुस्तदुत्तरप्रसङ्गे तेनात्मशासनमुद्दिश्यैवं कथितम् ।——

"विदितमस्त्येतदवश्यं सर्वैरेव भवद्भिर्यद्वर्त्तमानात्मशासन-प्रवर्त्तनप्रयोजनं हि प्रजानां स्वहितबोधोन्मेषेण सह राज-नैतिकशिक्षाप्रवर्त्तनरूपं, तथा साम्प्रतं तासां यावन्ति हितानि कर्त्तुं शक्यन्ते तत्सर्वानुष्ठानञ्च । एतेन हि प्रजासु विवेचक-त्वादिगुणवत्तया प्रख्यातानां हस्ते तेषामात्मप्रदेशीयकार्य्य-

---

* शोका एते श्मशानभूमौ नदीतीरे शोकोच्छ्वासीकृताः ।

भारो विन्यस्तो भविष्यति, ततएव ते क्रमशोऽशेषाण्यात्महितानि साधयितुं समर्था भवेयुः।"

"एवंविधात्मशासनपद्धति र्हि नास्माभिः स्वेच्छयावलम्बिता, किन्तु समयेनैव वयमत्र नियोजिताः स्मः। परमेतदप्यवश्य-मवगन्तव्यं यदिदानीं यथा भारतीय-पृथक्-प्रदेशानां पृथग्-रूपैवावस्था तथैवेयमात्मशासनपद्धतिर्न सर्व्वैकरूपा किन्तु प्रजानामवस्थानुसारतः प्रदेशविशेषेषु विशेषरूपैव भविष्यति। यत्र तु विद्यार्ज्जनादिना प्रजानां समधिकबाह्याभ्यन्तरावस्थो-न्नतिर्जाता, तत्र तासां हस्ते विपुलकार्य्यन्यासः; यत्र तु न तादृगुन्नतिस्तत्र स्वल्पकार्य्यविन्यासो भविष्यति; यत्र तु प्रजा घोरासभ्यावस्थायामवतिष्ठते तत्र नात्मशासनपद्धतेः प्रवृत्तिरेव भविष्यति।"

"यत्र चात्मशासनप्रवृत्तिरपि भविष्यति, तत्रापि भारत-शासितॄणां न सम्पूर्णमौदासीन्यं भवेत्, किन्तु तेऽधिगतकार्य्य-भाराणां तासां प्रजानां स्खलितेषु दत्तावधानास्तिष्ठेयुः।"इत्यादि

भारतशासयितुरेवं प्रजावात्सल्येन हिमालयात् कुमारिका-पर्य्यन्तं विस्तृतमखिलमिदं भारतराज्यं तदाकृष्टचित्तं सर्व्वदैव निगृणाति तदमलकीर्त्तिम्। राजपुरुषैस्तु प्रजासु सम्यगनु-ग्रहः कृतः, किन्तु प्रजास्तादृगनुग्रहं कीदृशं व्यवहरिष्यन्तीति चिन्तास्मान् बाधते साम्प्रतम्।

# धूमकेतु-प्रलपितानि ।

वर्त्तमानवत्सरसमुदितधूमकेतुमवलोक्य बहुभिर्बहूनि वचनान्युपन्यस्तन्ते । केचित् कथयन्त्ययमेव धूमकेतु र्युधिष्ठिरस्यावस्थानकाले महाभारतयुद्धप्रारम्भे समुदयमाप । यतोऽस्य सहचरः कुरुक्षेत्रयोगोऽप्यस्मिन् वर्षे समुदितः । अपरे तु धूमकेतुरेष नुया-नामकस्यावस्थानकाले जलप्लावनसमये समुदितोऽभूदिति कथयन्ति । केषाञ्चिन्मते अयमेव धूमकेतुरितः पञ्चदशवत्सरानन्तरं प्रबलवेगेन सूर्य्यस्याभ्यन्तरे निपत्य महाप्रलयकरकल्पान्तानलमुत्पाद्य निखिलेन जगन्मण्डलेन सह स्वयमेव नंक्ष्यति । यतोऽस्य गतिः क्रमशः सूर्य्यसमीपवर्त्तिनी भवति, वेगस्य चाधिक्यं दृश्यते ।

इत्थं विविधभयङ्करवचनैः समाकुलिते जगन्मण्डले नास्माकं किमपि वचनं प्रसरति । भवतु यदि पञ्चदशवत्सरपर्य्यन्तं जीवितं तिष्ठेत्, तदा तादृशं महाप्रलयमवलोक्य वृद्धे वयसि पौत्रप्रपौत्रेभ्यः प्रलयवर्णनं कृत्वा तेषां विस्मयमुत्पादयिष्यामः ।

---

श्रीं Registered No 12.

# विद्योदयः

## ( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसामनसामभिनन्दिनी ॥
नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १२] जानुयारि १८८३ [१ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नम् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# संस्कृत-श्रुतबोधः ।



## अवतरणिका ।

महाकविकालिदासकृतित्वेन प्रसिद्धः श्रुतबोधो नाम छन्दोग्रन्थ आदिमरसोद्दीपनसम्बोधनपदबाहुल्यान्न बालानां सम्यगध्ययनोपयोगित्वमर्हतीति तत्संस्करणमावश्यकम्मन्यमानैरस्माभिरेतदनुष्ठाने प्रवृत्तिः कृता। संस्करणञ्च केवलं सम्बोधनपदानामुपकल्पितम्। प्रकृतग्रन्थसम्बोध्या या युवत्याः स्थले ससागरधराधीशो विक्रमादित्योऽभिहित इत्यर्थः। तथा सम्बोधनपदविपरिणामेन क्वचिदपि ग्रन्थापरावयवानाञ्च परिवर्त्तनं कृतम्।

सत्यं कालिदासस्योपरि लेखनीसञ्चालनेन न केवलमस्माकमतिसाहसिकत्वं प्रकाश्यते यावत् ग्रन्थसौन्दर्य्यहानिरपि, तथापि तादृशादिमरसबाहुल्यसम्बोधनपदपरिहारेण बालविद्यार्थिनां तदध्यापकानाञ्च महानुपकारो भविष्यतीत्यत्र न कोऽपि सन्देहः।

किञ्च श्रुतबोधस्यातिसंक्षिप्तावयवतया छन्दःशास्त्रीयावश्यज्ञातव्याः परिभाषादयो नात्र समुल्लिखिताः, येन हि श्रुतबोधोक्तच्छन्दःस्वपि बालानां न सम्यगभिज्ञा वर्त्तनेऽतस्तानप्यत्र निवेशयामः।

संस्कृतसाहित्यं हि गद्यपद्यभेदाद् द्विविधं । तत्र पद्यं—चतुष्पदी, सापि द्विविधा—वृत्तं, जातिश्च । वर्णसंख्यातं वृत्तम्, मात्रासंख्याता जातिः । * वृत्तमपि त्रिविधं सममर्द्धसमं विषमञ्च । तेषां लक्षणानि यथा वृत्तरत्नाकरे ।

"अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते ॥
यस्य पादचतुष्कोऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥" इति

श्लोकस्य चतुर्थांऽशः 'पादः' । अत्र समवृत्तेष्वेकाक्षरादारभ्य

---

* छन्दःशास्त्रेषु त्रिवर्णात्मका अष्टौ गणा विद्यन्ते । यथा—मः ( त्रिगुरुवर्णात्मकः ), यः ( आदिलघुत्रिवर्णात्मकः ), रः (मध्यलघुत्रिवर्णात्मकः), सः ( अन्त्यगुरुत्रिवर्णात्मकः ), तः ( अन्त्यलघुत्रिवर्णात्मकः ), जः (मध्यगुरुत्रिवर्णात्मकः), भः ( आदिगुरुत्रिवर्णात्मकः ), नः (त्रिलघुवर्णात्मकः), गः (एको गुरुवर्णः), लः (एको लघुवर्णः) । मकारादीनां चिह्नाकारो यथा—म=ऽऽऽ, य=।ऽऽ, र=ऽ।ऽ, स=।।ऽ, त=ऽऽ।, ज=।ऽ।, भ=ऽ।।, न=।।।, ग=ऽ, ल=। ; मकारप्रयोगात् लक्ष्मीलाभः, यप्रयोगाद् समुदयलाभः, रप्रयोगात् शत्रुलाभः, सप्रयोगात् विदेशगतिः, तप्रयोगात् राज्यलाभः, भप्रयोगात् कीर्त्तिलाभः, जप्रयोगात् रोगलाभः, नप्रयोगात् स्वर्गलाभः । ह्रस्वो वर्णो एकमात्रिकः, दीर्घो द्विमात्रिकः, जातिच्छन्दःसु चतुर्मात्रिका पञ्च गणा भवन्ति । १मः सर्व्वगुरुः ऽऽ, २यः आदिगुरुः ऽ।।, ३यो मध्यगुरुः ।ऽ।, ४र्थोऽन्त्यगुरुः ।।ऽ, ५मश्चतुर्लघुः ।।।।।

षड्विंशत्यक्षरपर्य्यन्तमेकैकाक्षरवर्द्धनेन सम्भवति। तेषाञ्चोक्थेत्यादिसंज्ञा। *

जिह्वाया इष्टविश्रामस्थानं 'यतिः'; सा च विश्रामविरामाद्यैः पदैरभिधीयते।

अन्यशास्त्रे यथाब्ध्यादिशब्दाः चतुरादीनां वाचकाः, अत्रापि तथा। अब्धि=४, भूत=५, रस=६, मुनि=७, वसु=८, ग्रह=९ इत्यादि।

श्रीहृषीकेश शर्म्मा
विद्योदय सम्पादकः।

---

* एकाक्षरावृत्तिः साधारणं नाम उक्था, द्व्यक्षराया अत्युक्था, त्र्यक्षराया मध्या, चतुरक्षरायाः प्रतिष्ठा, पञ्चाक्षरायाः सुप्रतिष्ठा, षडक्षराया गायत्री, सप्ताक्षराया उष्णिक्, अष्टाक्षराया अनुष्टुप्, नवाक्षराया बृहती, दशाक्षरायाः पंक्तिः, एकादशाक्षराया स्त्रिष्टुप्, द्वादशाक्षराया जगती, त्रयोदशाक्षराया अतिजगती, चतुर्द्दशाक्षरायाः शक्करी, पञ्चदशाक्षराया अतिशक्करी, षोड़शाक्षराया अष्टिः, सप्तदशाक्षराया अत्यष्टिः, अष्टादशाक्षराया धृतिः, ऊनविंशत्यक्षरायाः अतिधृतिः विंशत्यक्षरायाः कृतिः, एकविंशत्यक्षरायाः प्रकृतिरित्यादि।

## ग्रन्थारम्भः ।

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तदहं कथयिष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥

संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥

### मात्रा-छन्दः—जातिः ।

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥ ३ ॥

आर्य्यापूर्व्वार्द्धसमं द्वितीयमपि भवति यत्र चारुमते ! ।
छन्दोविदस्तदानीं गीतिं ताममलभाव ! भाषन्ते ॥ ४ ॥

आर्य्योत्तरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तञ्चेत् ।
भूमिप ! तामुपगीतिं प्रकाशयन्ते महाकवयः ॥ ५ ॥

---

(२) सङ्गेति-संयुक्ताद्यवर्णाः पूर्व्वस्यापि विकल्पेन गुरुत्वं । पादान्तस्य विकल्पेन लघुत्वं यथा "अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥" ग्रपूर्व्वस्य—"ग्रहीतप्रत्युद्गमनीयवस्त्रा"; ह्रपूर्व्वस्य,—"प्रमनाभिह्रदमज्जनमाशु" ।

(३) आर्य्याया: प्रथमार्द्धे त्रिंशन्मात्राः, द्वितीयार्द्धे तु सप्तदश मात्राः—इत्येव निष्कर्षः ।

(४) चारुमते अमलभाव इति पदद्वयं राज्ञः सम्बोधनपदम् ।

(५) भूमिप इति राज्ञः सम्बोधनपदम् ।

# समवृत्तानि ।

पञ्चाक्षरा वृत्तिः ।

आदिचतुर्थं पञ्चमकं चेत् ।
यत्र गुरु स्यात् साक्षरपंक्तिः ॥ ६ ।

षडक्षरा वृत्तिः ।

अगुरु चतुष्कं भवति गुरू द्वौ ।
सुविमलकीर्त्ते ! शशिवदनासौ ॥ ७ ।

सप्ताक्षरा वृत्तिः ।

तुर्य्यं पञ्चमकं चेद् यत्र स्याल्लघु सैषा ।
विद्वद्भिर्वरवीर प्रोक्ताश्चिन्मदलेखा ॥ ८ ।

अष्टाक्षरा वृत्तिः ।

पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
षष्ठं गुरु विजानीयादेतत् पद्यस्य लक्षणम् ॥ ९ ।
श्लोके षष्ठं गुरु ज्ञेयं सर्व्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ।

---

(६) भगौग् = ऽ । । ऽ ऽ, अन्यत्र पंक्तिरिति नाम ।

(७) शशिवदना न्यौ—नय = । । । । ऽ ऽ, सुविमलकीर्त्ते इति राज्ञः सम्बोधन पदं, सुविमला कीर्त्तिर्यस्य तत्सम्बोधने ।

(८) वरवीर इति राज्ञः सम्बोधनपदं । मसृग् = ऽ ऽ ऽ । । ऽ ऽ,

आदिगतं तुर्यगतं पञ्चमकञ्चान्त्यगतम् ।
स्याद्गुरु चेत्तत् कथितं माणवकक्रीडमिदम् ॥ ११ ।

द्वितुर्य्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ १२ ।

सर्व्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्भूमीपाल ! व्याख्याता सा विद्युन्माला ॥ १३ ।

नवाक्षरा वृत्तिः ।

आदितुरीयं पञ्चमकं षष्ठमथान्त्यं स्याद्गुरु चेत् ।
इन्द्रियवेदैश्छेदिरतिस्तन्मणिबन्धं प्राह फणी ॥ १४ ।

दशाक्षरा वृत्तिः ।

भूप ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् ।
इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला ॥ १५ ।

---

(१२) अन्यत्र प्रमाणिकेति नाम, जरौ लगौ = ।ऽ। ऽ।ऽ ।ऽ, लगस्थितिर्निरन्तरा ।

(१३) मौ मौ गौ गौ विद्युन्माला = ऽऽऽ ऽऽऽ ऽऽ, भूमीपाल इति राज्ञः सम्बोधन पदं । चतुर्थेऽष्टमे चाक्षरे यतिः (वेद = ४) ।

(१४) भूतश्रुतबोधग्रन्थे प्रथमं दशाक्षरां चम्पकमालामुक्त्वा पश्चात् "चम्पकमाला यत्र सवेदत्यविहीना प्रेमनिधे । छन्दसि दशा ये कथयत्मणिबन्धं ने ब्रूवते" इति मणिबन्धस्य लक्षणं कृतं, तदतीव सन्दर्भविरुद्धमिति मणिबन्धस्य प्राचीनलक्षणमत्रोद्धृतम् । भमसाः = ऽ।। ऽऽऽ ।।ऽ, पञ्चमे नवमे चाक्षरे यतिः (इन्द्रिय = ५) ।

(१५) अन्यत्र रुक्मवतीति नाम, भमसगाः = ऽ।। ऽऽऽ ।।ऽ ऽ, भूप इति राज्ञः सम्बोधनपदम् । पञ्चमे दशमे चाक्षरे यतिः (बाण = ५) ।

दीर्घा वर्णाः प्रथमनिहितास्तलारस्त्वदथ तु लघवः ।
पञ्चान्त्यः स्याद् गुरुरपि तथा सैवा हंसी भुवनविदिता ॥ १६ ।

एकादशाक्षरा वृत्तिः ।

ह्रस्वो वर्णो जायते यत्र षष्ठो
राजन् ! पूर्व्वैस्तद्वदेवाष्टमान्त्यः ।
विश्रामः स्याद्भूप ! वेदैस्तुरङ्गै-
श्छन्दोविद्भिः प्रोच्यते शालिनीयम् ॥ १७ ।
आद्यचतुर्थमहीशसुबुद्धे !
सप्तमकं दशमञ्च तथान्त्यम् ।
सर्व्वधरेश्वर यत्र गुरु स्यात्
तत् कथितं ननु दोधकवृत्तम् ॥ १८ ।

---

(१६) मूलश्रुतबोधग्रन्थे हंसीवृत्तस्य लक्षणं मन्दाक्रान्तासंघटितत्वादतीव कठिन-मासीदतोऽस्माभिः परिवर्त्तितम् । एतदर्थस्तु— यत्र प्रथमं चत्वारो दीर्घा वर्णा निहिताः, तदनु पञ्च लघवः, तथान्त्यो गुरुश्च स्यात् सा भुवनविदिता हंसी । ममनगाः— ऽ ऽ ऽ ऽ । । । । । ऽ, मूलश्रुतबोधलक्षणन्तु "मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे भवति यदि सा । तद्विद्भिर्भुवनभिहिता त्वं या हंसी कमलवदने ॥"

(१७) राजन्, भूप इति राज्ञः सम्बोधनपदद्वयं, पूर्व्वैश्छन्दोविद्भिरियं शालिनी प्रोच्यते इत्यन्वयः । चतुर्थे एकादशे च यतिः (तुरङ्ग=७) । म त त ग गाः— ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ.

(१८) महीशसुबुद्धे इति राज्ञः सम्बोधनपदं, महीशस्य (अनन्तस्य) इव शोभना बुद्धिर्यस्य सः । सर्व्वस्या धराया ईश्वर सम्बोधनपदं । भ भ भ ग गाः— ऽ । । ऽ । । ऽ । । ऽ ऽ, दोधकमिच्छति भत्रितयाद्गौ ।

यस्यां त्रिषट्सप्तममक्षरं स्याद्
ह्रस्वं सुमेधो ! नवमञ्च तद्वत् ।
कीर्त्या विलक्षीकृतहंसकान्ते !
तामिन्द्रवज्रां ब्रुवते मुनीन्द्राः ॥ १९ ॥

यदीन्द्रवज्राचरणेषु पूर्वं
भवन्ति वर्णा लघवः सुकान्ते ! ।
सुमङ्गलाभ्यासरते ! तदानी-
मुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥ २० ॥

उपजातिः ।

यत्र द्वयोरप्यनयोस्तु पादा
भवन्ति चास्याब्जजितेन्दुकान्ते ! ।
विद्वद्भिराद्यैः परिकीर्त्तिता सा
प्रयुज्यतामित्युपजातिरेषा ॥ २१ ॥

---

(१९) कीर्त्या विलक्षीकृता मलिनीकृता हंसकान्तिर्येन । पदमेतत् राज्ञः सम्बोधनपरं । तौ जगौ गः—ऽऽ। ऽऽ। ।ऽ। ऽऽ.

(२०) शोभना कान्तिर्यस्य स सुकान्तिः, सुमङ्गलाभ्यासे रतिर्यस्य सः । पादद्वयं राज्ञः सम्बोधनपरं । ज त ज ग गाः—।ऽ। ऽऽ। ।ऽ। ऽऽ.

(२१) आस्याब्जेन मुखपद्मेन जिता इन्दोश्चन्द्रस्य कान्तिर्येन तत्सम्बुद्धौ । सम्बोधनपदं ।

आख्यानकी स्यात् यदर्थिसार्थ !
यदीन्द्रवज्राचरणः पुरा स्यात् ।
उपेन्द्रवज्राचरणास्तथोऽन्ये
मनीषिणोक्ता विपरीतपूर्वा ॥ २२ ।

आद्यमक्षरमतस्तृतीयकं
सप्तमञ्च नवमं तथान्तिमम् ।
दीर्घमिन्द्रसम ! यत्र जायते
तां वदन्ति कवयो रथोद्धताम् ॥ २३ ।

अक्षरञ्च नवमं दशमञ्च
व्यत्ययाद्भवति यत्र सुनीते ! ।
आकर्णेयदि धराधर सैव
स्वागतेति कविभिः कथितासौ ॥ २४ ।

द्वादशाक्षरा वृत्तिः ।

सद्वतीयकषष्ठमरुद्धगते !
नवमं विरतिप्रभवं गुरु चेत् ।

(२२) उपजातिविशेषा नान्यत्र गणिताः । हे अर्थिसार्थं सदय ।

(२३) इन्द्रसम राज्ञः सम्बोधनपदं । रात् परैर्नरलगैरथोद्धता = र न र ल गाः = ऽ।ऽ ।।। ऽ।ऽ ।ऽ.

(२४) धराधर सुनीते ( शोभना नीतिर्यस्य सः ) इति राज्ञः सम्बोधनपदद्वयं । स्वागता रनभगैर्गुरुणा च = ऽ।ऽ ।।। ऽ।। ऽऽ.

बुधदेवगुरुप्रमतीक्ष्णमते !
ननु तोटकवृत्तमिदं कथितम् ॥ २५ ।

द्वादशाक्षरा वृत्तिः ।

कृशो वर्णः स्यात् सप्तमो यत्र राजन् !
तद्वद्भूमीश ! न्यस्तएकादशाद्यः ।
वाणैर्विश्रामो यत्र चेदा तुरङ्गैः
नाम्ना निर्दिष्टा तत्र सा वैश्वदेवी ॥ २६ ।
यदाद्यं चतुर्थं तथा सप्तमञ्चेत्
तथैवाक्षरं ह्रस्वमेकादशाद्यम् ।
शरच्चन्द्रविद्वेषिवक्त्राब्जकान्ते !
तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥ २७ ।
यदि तोटकस्य गुरु पञ्चमकं
विहितं धराधर ! तदक्षरकम् ।

(२५) विरतिप्रभवं अन्त्याक्षरं ; अकुण्ठा (अव्याहतप्रतिहता) मतिर्यस्य सः, बुधः सोमात्मजः, देवगुरुर्बृहस्पतिः, तयोरिव तीक्ष्णा मतिर्यस्य सः पदद्वयं सम्बोधनपरं । तोटकमब्धिसकारयुतं = । । ऽ । । ऽ । । ऽ । । ऽ·

(२६) राजन् भूमीश सम्बोधनपदद्वयं । पञ्चमे द्वादशे चाक्षरे यतिः (बाण: = ५, तुरङ्ग = ७), म म य याः = ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ·

(२७) शरच्चन्द्रविद्वेषिवक्त्राब्जकान्ते राज्ञः सम्बोधनपदमेतत् । भुजङ्गप्रयातं चतुर्भिर्यकारैः = । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ·

रससंख्यकं गुरु न चेदिह सा
प्रमिताक्षरेति कथिता कविभिः ॥ २८ ।

भुवनमोहन ! यत्र चतुर्थकं
गुरु च सप्तमकं दशमन्तथा ।
विरतिजञ्च तथैव विचक्षणै-
र्द्रुतविलम्बितमित्युपदिश्यते ॥ २९ ।

उपेन्द्रवज्राचरणेषु सन्ति चे-
दुपान्त्यवर्णा लघवः कृता यदि ।
अपाङ्गभङ्ग्या विजिताखिलावने !
वदन्ति वंशस्थमिदं तदा बुधाः ॥ ३० ।

यस्यामवज्ञाजितवैरिसन्तते !
वंशस्थपाद्या गुरुपूर्ववर्णकाः ।
आस्यारविन्दाश्रितशुद्धभारते !
तामिन्द्रवंशां कवयः प्रचक्षते ॥ ३१ ।

---

(२८) धराधर सम्बोधनपदं । स ज स साः = । । ऽ । ऽ । । । ऽ । । ऽ.

(२९) हे भुवनमोहन ; विचक्षणैः पण्डितैः । द्रुतविलम्बितमाह नभौ भरौ = । । । ऽ । । ऽ । । ऽ । ऽ.

(३०) अपाङ्गभङ्ग्या कटाक्षेण विजिता अखिला अवनिर्येन सः तत्सम्बोधनं । जतौ जरौ = । ऽ । ऽ ऽ । । ऽ । ऽ । ऽ.

(३१) अवज्ञया जिता वैरिणां सन्ततिर्येन सः तत्सम्बोधनम् । आस्यारविन्द' आश्रिता आस्यारविन्दाश्रिता शुद्धा भारती यस्य तत्सम्बोधनं । ततौ जरौ = ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ.

त्रयोदशाक्षरा वृत्तिः।

यस्यामिह प्रथमकमक्षरद्वयं
तुर्यं तथा गुरु नवमं दशान्तिमम्।
सान्त्यं भवेद् यदि विरतिर्युगग्रहैः
सा खञ्जताक्षसहमते! प्रभावती॥ ३२।

आद्यं चेत्त्रितयमथाष्टमं नवान्त्यं
चोपान्त्यं गुरु विरतौ सुभाषित! स्यात्।
विश्रामो भवति महेशनेत्रदिग्भि-
र्विज्ञेया ननु नृपते प्रहर्षिणी सा॥ ३३।

चतुर्दशाक्षरा वृत्तिः।

आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
यत्राष्टमञ्च दशमान्त्यमुपान्त्यमन्त्यम्।
सद् सर्वदैत्यशोभितचन्द्रकान्ते!
राजन्! वसन्ततिलकां किल तां वदन्ति॥ ३४।

(३२) चतुर्थेऽनिमे च यतिः (युग = ४, ग्रह = ९) त भ स ज गाः = ऽऽ। ऽ।। ।।ऽ ।ऽ।, ऽ. खञ्जताक्षसहमते! सम्बोधनपदम्।

(३३) सुभाषित, नृपते इति सम्बोधनपदद्वयं। तृतीये दशमे च यतिः (महेशनेत्र = ३, दिक् = १०)। म न ज र गाः = ऽऽऽ ।।। ।ऽ। ऽ।ऽ ऽ.

(३४) शोभितं यद् सततात्मस्येन वर्तितं विभूतिं नीतं यद्यशस्तेन जिता चन्द्रकान्ति-र्येन सः तत्सम्बोधनं। तभजा जगौ गः = ऽऽ। ऽ।। ।ऽ। ।ऽ। ऽऽ.

पञ्चदशाक्षरा वृत्तिः ।

प्रथममगुरु षट्कं विद्यते यत्र राजन् !
तदनु च दशमं चेदक्षरं द्वादशान्त्यम् ।
गिरिभिरथ तुरङ्गैर्यत्र च स्याद्विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ॥ ३५ ।

सप्तदशाक्षरा वृत्तिः ।

नृवर ! लघवः पञ्च प्राद्यास्ततो दशमान्तिमं
तदनु नमितारातं ! वर्णौ यदि त्रिचतुर्दशौ ।
भवति च पुनर्यत्रोपान्त्यस्तदा धरणीपते !
यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥ ३६ ।
यदा ह्रस्वः पूर्वः स्थिरतरमते ! षष्ठकपरा-
स्ततो वर्णाः पञ्चाखिलनृपगुणाधार ! लघवः ।

---

(३५) अष्टमेऽन्तिमे च यतिः (गिरि=८, तुरङ्ग=७) ननमययुतेयं मालिनी—
। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ.

(३६) हे नृवर ! हे नमितारातं ! ( नमिता स्ववशीकृता अरातयो येन सः )
हे धरणीपते ! इति सम्बोधनपदत्रयं । षष्ठे दशमेऽन्तिमे च यतिः (रस=६, वेद=४,
अश्व=७)। न स म र स ल गाः=। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ.

त्रयोऽन्ये चोपान्त्या बुधगुणिजनैकप्रियसुहृत्
रसैरीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥ ३७ ।

द्वितीयमवनीपते ! यदि षडष्टमं द्वादशं
चतुर्दशमथापि चेद्गुरु समस्तविद्यानिधे !
सपञ्चदशमान्तरजं तदनु यत्र राजन् ! यति-
र्गिरीन्द्रफणिभृत्कुलैर्भवति भूप ! पृथ्वी हि सा ॥ ३८ ।

चत्वारः प्राक् क्षितिप ! गुरवो द्वौ दशैकादशौ चेत्
राजन् ! वर्णौ तदनु भुवनानन्दन ! द्वादशान्त्यौ ।
तद्वचान्त्यौ युगरसहयै यंत्र च स्याद्विरामः
मन्दाक्रान्तां प्रवरकवयः सौम्य तां संगिरन्ति ॥ ३९ ।

---

(३७) हे स्थिरतरमते ! हे अखिलनृपगुणाधार, हे बुधगुणिजनैकप्रियसुहृत् (बुधश्च गुणिजनाश्च तेषामद्वितीयः प्रियसुहृत्) इति सम्बोधनत्रयं । षष्ठेऽन्तिमे च यतिः (रसः = ६, ईशः = ७) रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी = ।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।। ।ऽ.

(३८) अवनीपते ! राजन् ! भूप ! इति सम्बोधनत्रयं । अष्टमेऽन्तिमे च यतिः । (गिरीन्द्र = ८, फणिभृत्कुलं = ९) । जसौ ज स य ला गः = ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽऽ ।ऽ.

(३९) राजन्, क्षितिप, सौम्य इति सम्बोधनत्रयं, चतुर्थे, दशमे अन्तिमे च यतिः । (युग = ४, रस = ६, हय = ७) । म भ न त त ग गाः = ऽऽऽ ऽ।। ।।। ऽऽ। ऽऽ। ऽऽ.

ऊनविंशत्यक्षरा वृत्तिः ।

आद्यास्चेद्गुरवस्त्रयो नरपते ! षष्ठस्तथा चाष्टमः
सन्तोरकादशतस्त्रयस्तदनु चेदष्टादशाद्यौ परौ ।
मार्त्तण्डैर्मुनिभिश्च यत्र विरतिः साम्भोधिपृथ्वीपते !
तद्‌वृत्तं प्रवदन्ति काव्यरसिका शार्दूलविक्रीड़ितम् ॥ ४० ।

एकविंशत्यक्षरा वृत्तिः ।

चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोड़शाद्यौ वररुचिरतनो ! षोड़षान्त्यौ तथान्त्यौ ।
आस्याभानिर्ज्जितेन्दो ! मुनिमुनिमुनिभि र्दृश्यते यद्विरामो
राजन् ! वन्द्यैः कवीन्द्रैः सुचरित! गदिता स्रग्धरेयं प्रसिद्धा ॥४१

---

(४०)नरपते! साम्भोधिपृथ्वीपते ! (ससागरधराधिपते) इति सम्बोधनपदद्वयं। द्वादशे-ऽन्तिमे च यतिः। मः सजौ सततगाः=ऽऽऽ ।।ऽ ।ऽ। ।।ऽ ऽऽ। ऽऽ। ऽ.

(४१) आस्यस्य मुखस्य आभया कान्त्या निर्जिता इन्दुर्येन सः तत्सम्बोधनं; राजन्! सुचरित! इति सम्बोधनपदद्वयं। सप्तमे चतुर्दशेऽन्तिमे च यतिः (मुनि:= ७)। म्रभ्नैर्यानां त्रयेण=ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ।ऽऽ ।ऽऽ.

## अर्द्धसमवृत्तम् ।

प्रथमाक्षरमाद्यतृतीययो-
र्द्रुतविलम्बितकस्य च पादयोः ।
अपि चेन्न तदा पृथिवीपते !
सुकविभिः कथिता हरिणप्लुता ॥ ४२ ।

इति संस्कृत-श्रुतबोधः ।

---

(४२) प्रथमार्द्धसमं यस्य तृतीयचरणं भवेत् । द्वितीयं तुर्य्यवत् वृत्तं तदर्द्धसममुच्यते ॥ विषमे सगणत्रितयं लगावथ समे नगणौ भगणौ च रः । विषमे = प्रथम-तृतीयपादयोः, ।।ऽ ।।ऽ ।।ऽ ।ऽ, समे = द्वितीय-चतुर्थपादयोः— ।।। ऽ।। ऽ।। ऽ।ऽ·

अर्द्धसमवृत्तेषु पुष्पिताग्रा-सुन्दरी-च्छन्दसी बहुधा व्यवह्रियेते, न जायते कथं तयोर्लक्षणं न कृतम् । पुष्पिताग्रालक्षणं यथा "अयुजि नयुगरेफतोयकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा"॥ अयुजि प्रथम-तृतीय-पादयोः—।।। ।।। ऽ।ऽ ।ऽऽ, युजि = द्वितीय-चतुर्थ-पादयोः—।।। ।ऽ। ।ऽ। ऽ।ऽ ऽ, उदाहरणं "अथ परिमलजामवाप्य लक्ष्मीमवयवदीपितमण्डनश्रियस्ताः" भारविः । सुन्दरीलक्षणं "अयुजोर्यदि सौ जगौ, युजोः सभरा-लगौ । अयुजोः प्रथम-तृतीयपादयोः—।।ऽ ।।ऽ ।ऽ। ऽ, युजोः द्वितीय-चतुर्थ-पादयोः—।।ऽ ऽ।। ऽ।ऽ ।ऽ, उदाहरणं "यदवोचदवेक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा" भारविः ।

श्री Registered No. 12.

# विद्योदयः

## ( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भी-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १३ ] डिसेम्बर १८८४ [ १२ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्न् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# साहित्यदर्पणः ।

अलङ्कारपरिच्छेदः ।

**अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात् सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमालङ्कारमाह । (१)**

---

(१) अर्थालङ्कारान्निरूपयितुम् अवसरे प्राप्ते उपमानिरूपणस्य प्राथमिकत्वे हेतुमाह अथेति शब्दालङ्कारनिरूपणानन्तरमित्यर्थः, अवसरप्राप्तेषु अवसरसङ्गत्या निरूपणयोग्येषु अर्थालङ्कारेषु मध्ये सादृश्यमूलेषु सादृश्यप्रतिभोत्थापितेषु रूपकादिषु लक्षितव्येषु निरूपणीयेषु, तेषां सादृश्यमूलालङ्काराणामुपजीव्यत्वेन उत्थापकत्वेन प्राधान्यात् प्रथममुपमां निरूपयति, प्रधानस्य सर्व्वाग्रस्थानभागित्वं योग्यमेव । अत्र यावन्तोऽर्थालङ्कारास्ते सर्व्वे प्रायः सादृश्यमूलास्ततश्चोपमोपजीविनः, तथाहि का कथा रसनोपमा-मालोपमादीनाम् अनन्वयोपमेयोपमे तूपमाभेदावेव, स्मृतिश्चोपमानगतोपमेयसादृश्यमनुभूयोपमेयस्य स्मरणं । रूपकमुपमानोपमेययोरभेदोपन्यासः, उपमानेनोपमेयस्य सम्भावनमुत्प्रेक्षा, उपमेये चोपमानस्य प्रतिभोत्थितः संशयः सन्देहः, उपमेयं निषिध्योपमानस्य स्थापनमपह्नुतिः, उपमानादुपमेयस्य व्यतिरेके व्यतिरेकः, अभवन्वस्तुसम्बन्ध उपमापरिकल्पको निदर्शना, श्लिष्टविशेषणादिभिर्व्यङ्ग्येनाप्रकृतेन प्रकृतस्योपमानोपमेयभावस्थापनात् समासोक्तिरित्याद्यन्यत्राप्यूहनीयम् । ते चार्थालङ्कारा:—"उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः । उत्प्रेक्षाऽथ ससन्देहे, रूपकाऽपह्नुती तथा । श्लेषस्तथा समासोक्तिः, प्रोक्ता चैव निदर्शना । अप्रस्तुतप्रशंसाऽतिशयोक्ती परिकीर्त्तिते । प्रतिवस्तूपमा, तद्वद्दृष्टान्तो, दीपकं तथा । तुल्ययोगितया, चैव व्यतिरेकः प्रकीर्त्तितः । आक्षेपो, वि-भावना, च विशेषोक्तिस्तथैव च । यथासंख्य-मर्थान्तरन्यासः, स्यात्तो विरोधवत् । स्वभावोक्तिस्तथा, व्याजस्तुतिः प्रोक्ता सहोक्तिवत् । विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत् । पर्य्यायोक्तमुदात्तञ्च समुच्चय उदीरितः । प्रत्यनीकानुमानञ्च प्रोक्तः परिकरस्तथा । व्याजोक्ति-परिसंख्ये च विज्ञेये हेतुमालया । अन्योन्य-मुत्तरं, सूक्ष्म-सारौ, तद्वदसङ्गतिः । समाधिश्च समेन स्यात् विषमस्त्वधिकेन च । प्रत्यनीकं मीलितञ्च स्यातामेकावली-स्मृती । भ्रान्तिमांश्च प्रतीपेन, सामान्यञ्च विशेषवत् ।

**साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः ।[१]**

**रूपकादिषु साम्यस्य व्यङ्ग्यत्वं, व्यतिरेके च वैधर्म्यस्याप्युक्तिः, उपमेयोपमायां वाक्यद्वयं, अनन्वये च एकस्यैव साम्योक्ति-रित्यस्या भेदः । (२)**

---

तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः । संसृष्टिसङ्करौ चैवमेकषष्टिरुदीरिताः" । इति काव्यप्रकाशे प्रदीपः । साहित्यदर्पणे त्वेकोनाशीतिरर्थालङ्कारा विद्यन्ते, तत्र पूर्वोक्तेभ्यो रसनोपमा-मालोपमाधिकारूढवैशिष्ट्यरूपक-परिणामोल्लेख-निश्चय-निषेधा-भास-विध्याभास-विचित्र-मालादीपक-रसवत्-प्रेय-ऊर्जस्वि-भावोदय-भावसन्धि-भावशब-लाख्याः सप्तदश अधिका वर्तन्ते । सरस्वतीकण्ठाभरणे पूर्वोक्तेष्वलङ्कारेषु उप-मादयः कति शब्दार्थोभयालङ्कारमध्ये परिगणिताः । यथा शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते । विशिष्टोऽर्थः कवीनां स उभयालङ्क्रिया मता ॥ उपमा, रूपकं, साम्यं, संशयोक्तिरपह्नुतिः, समाध्युक्तिः, समासोक्तिरुत्प्रेक्षाप्रस्तुतस्तुतिः, स तुल्य-योगितोल्लेखः, स-सहोक्तिः, समुच्चयः, साक्षेपार्थान्तरन्यासः, सविशेषा, परिष्कृतिः, दीपक-क्रम-पर्यायाऽतिशय-श्लेष-भाविकाः, संसृष्टिरिति निर्दिष्टास्ताश्चतुर्विंशतिर्बुधैः । अर्थालङ्कारास्तु—'अलमर्थमलङ्कर्तुं यद्व्युत्पत्त्यादिवर्त्मना । ज्ञेया जात्यादयः प्राज्ञैस्ते-ऽर्थालङ्कारसंज्ञया । जातिर्विभावना, हेतुरहेतुः, सूक्ष्ममुत्तरम्, विरोधः, सम्भवो-ऽन्योऽन्यं परिवृत्तिर्निदर्शना, भेदः, समाहितं, भ्रान्तिर्वितर्को, मीलितं, स्मृतिः, भावः, प्रत्यक्षपूर्वाणि प्रमाणानि च जैमिनेः । जैमिनेः प्रत्यक्षानुमानागमवचनानि प्रमाणानि । नवीनास्तु शब्दपरिवृत्तिसहत्वमेवार्थालङ्कारप्रयोजकमित्यभिदधति, तत-स्तेषामयं शब्दानां सहकारित्वेऽप्युपमादौ केवलस्यार्थालङ्कारत्वस्य प्रसक्तिर्नोभया-लङ्कारत्वस्येत्यलम् ।

(२) साम्यमिति वाक्यैक्ये (वाक्यस्य आकाङ्क्षायोग्यतासत्तियुक्तपदोच्चयस्य ऐक्ये एकतायाम् एकस्मिन्नेव वाक्ये इत्यर्थः) द्वयोः (उपमानोपमेययोः) अवैधर्म्यं (विरुद्ध-धर्मोक्तिशून्यं) साम्यं (साधर्म्यं, समानगुणक्रियादिसम्बन्धरूपं) [समानः (एकः तुल्यो वा) धर्मः (गुणक्रियादिरूपः) ययोः (उपमानोपमेययोः) तयोर्भावः साधर्म्यमिति व्युत्पत्तिः] (सादृश्यापरनामकः सम्बन्धविशेष इति केचित्) वाच्यं (अभिधया बोध्यम् स्फुटप्रतीति-विषयमिति यावत् यत्र भवेदिति शेषः, सा 'उपमा' उपमानामकः प्रसिद्धोऽलङ्कार इति

शेषः, तथाहि वैधर्म्यविषयकैकवाक्यविषयत्वं श्रौतीवादिवाच्यमुभयसम्बन्धि साधर्म्यमुपमेति फलितम्। अत्र सामान्यतोनिर्द्दिष्टयोर्द्वयोरित्यनेनोपमानोपमेययोरेव लाभो भवति, यतः साधर्म्यं सम्बन्धविशेषः, सम्बन्धश्चैकप्रतियोगिकोऽपरानुयोगिक एव नियतः, यस्य यः सम्बन्धः स तस्य सम्बन्धस्य प्रतियोगी, यत्र च स सम्बन्धः स तस्यानुयोगी यथा मनुष्यस्य आसने यः संयोगः सम्बन्धस्तस्य संयोगस्य मनुष्यः प्रतियोगी, आसनं अनुयोगि एवमन्यत्र। साधर्म्यसम्बन्धस्य तु उपमानोपमेये परिहाय नान्यत्र प्रतियोग्यनुयोगिता सम्भवति किन्तूपमानोपमेययोरेवेति द्वयोरित्यनेन तयोराक्षेपः।

उपमालक्षणघटितवाच्यादिपदचतुष्टयस्य व्यावृत्तिमाह रूपकादिष्विति। यदि वाच्यपदस्योपादानं न क्रियेत "साम्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः" इत्येवंरूपं लक्षणं क्रियेत, तदा रूपकादावप्युपमायाः प्रसक्तिरतिव्याप्तिर्भवेत्, रूपकादावित्यादिपदेन परिणामातिशयोक्तिप्रभृतीनामभेदारोपमूलकानां संग्रहः। तथाच उपमानोपमेययोरभेदो रूपकं, अभेदश्च साधर्म्यातिशये सत्येव भवति, अत्यन्तासदृशस्याभेदप्रतीत्यसम्भवात्, किन्तु तत्र तत् साधर्म्यं वाच्यं न भवति, यथा रूपकोदाहरणे मुखचन्द्रमित्यत्र (मुखं चन्द्र एव) इत्यभेदप्रत्ययानन्तरं मुखं चन्द्रसाधर्म्यवदिति व्यञ्जनया साधर्म्यप्रतीतिरिति भावः। ननु यत्र लुप्तोपमायां औपम्यवाचकस्येवादेः औपम्यहेतुभूतधर्मस्य मनोज्ञत्वादेश्च निर्द्देशो नास्ति तत्र विधवति मुखाब्जं, मुखाब्जं विधुरिवाचरति मनोज्ञं भवति इत्यादौ साम्यस्य गम्यत्वात् कथं लक्षणगमनमिति चेन्न। दध्यानयेत्यादौ लुप्तादेवाभात् प्रतिसन्धानात् कर्म्मतादेरिव लुप्तप्रत्ययप्रतिसन्धानात् साम्यस्य वाच्यत्वाङ्गीकारात्। एवं समासेऽप्युपमावाचकः। यदि लक्षणं "साम्यं वाच्यं वाक्यैक्ये उपमा द्वयोः" एवं स्यात् अवैधर्म्यमिति परित्यक्तं स्यात्, तदा व्यतिरेकेऽप्युपमालक्षणगमनादतिव्याप्तिः स्यात्। उपमानादुपमेयस्याधिक्ये न्यूनतायां वा व्यतिरेकालङ्कारो भवति, अत्र व्यतिरेकपदेनैकवाक्यगतव्यतिरेक एव ग्राह्यः, यथा "अकलङ्कि मुखन्तस्य न कलङ्की विधुर्यथा" इति अनाकलङ्कित्वमुपमानस्य कलङ्कित्वमुपमेयस्य वैधर्म्यं। नन्वत्र साम्यस्य वाच्यत्वेऽपि तस्य नञा मुखे सम्बन्धाऽभावबोधादुभयसम्बन्धित्वमेव नास्ति कथमत्रोपमाप्रसक्तिरिति चेन्न, मुखे चन्द्रसाधर्म्यबाधासम्भवेन नञा मुखस्योत्कर्षातिशयप्रतीतिमात्रं तात्पर्य्यात्। न चाप्यत्रोपमाव्यतिरेकयोः साङ्कर्य्यम् भेदप्रतीतिवैचित्र्येण साहश्यप्रतीतिश्चमत्कारवैचित्र्यस्य

सा पूर्णा यदि सामान्यधर्म्म औपम्यवाचि च।

उपमेयञ्चोपमानं भवेद्वाच्यम्—[ २ ]

सा उपमा, साधारणधर्म्मो द्वयोः सादृश्यहेतुगुणक्रिये मनोज्ञत्वादिः, औपम्यवाचकमिवेत्यादि, उपमेयं मुखादि, उपमानं चन्द्रादि। ( २ )

---

तिरोहितत्वात्। यदि उपमालक्षणे "वाक्यैक्ये" इत्यस्योक्तिर्न भवेत् तदा उपमेयोपमायां लक्षणगमनादतिव्याप्तिर्भवेत्, यत्र कस्यचिदेकस्य वाक्ये उपमानत्वं वाक्यान्तरे उपमेयत्वं उपमेयोपमालङ्कारो भवति यथा "मतिरिव, कमला कमलेव मति"रित्यादि अत्र श्रीमत्योस्तुल्यत्वं साधर्म्यं वाक्यद्वयेन प्रतिपद्यते। तथा अन्वये एकेत्यस्यानुक्तौ अनन्वये ऽप्युपमासम्भवादतिव्याप्तिर्भवेत्। "एकस्यैवोपमानोपमेयत्वमनन्वयः" यथा "चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यतः" इत्यादि, अत्रैकस्यैव चन्द्रस्यातन्द्रत्वं साधर्म्यमितरमन्द्रं न प्रतिपाद्यते। इत्थमप्यलङ्कारत्वे सतीति विशेषणमस्यमुपयोजनीयमथवानुक्तमपि तत् प्रकरणात् प्राप्तमेव, तेन गौरिव गवय इत्यादौ सदपि साधर्म्यं नोपमालङ्कारः वैचित्र्याभावात्। ततश्च साधर्म्यपदेन वैचित्र्यजनकं साधर्म्यं ग्राह्यम्, अतएव रसगङ्गाधरे "सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः" इत्युपमालक्षणे सुन्दरमिति सादृश्यविशेषणमुपन्यस्तम्, सौन्दर्यं चमत्कृत्याधायकत्वं, चमत्कृतिश्चानन्दविशेषः इति व्याख्यातञ्च, वैचित्र्यस्यालङ्कारजनकत्वे च रूपकादिस्थले नोपमालङ्कारप्रसङ्गः, तत्र रूपकादिवैचित्र्यस्यैव चमत्कारातिशयजनकतया तेनोपमावैचित्र्यस्य तिरोधानात्।

(२) उपमास्थले च उपमानं उपमेयं साधारणोधर्मः औपम्यवाचकञ्चेति चतुष्टयमपेक्ष्यते। उपमीयतेऽनेनेत्युपमानं साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः चन्द्रादिः, उपमीयते यत् तदुपमेयं, साधारणधर्मवत्तया वर्णनीयं वस्तु मुखादि, उभयत्र उपमाने उपमेये च सङ्गतोधर्मः साधारणधर्मः यस्य धर्मस्य सम्बन्धादुपमा क्रियते इत्यर्थः, स च गुणक्रियादिरूपः यथा मनोज्ञत्वादिः। औपम्यवाचकञ्च इवादि। तथाच कमलमिव मुखं मनोज्ञमित्यत्र कमलमुपमानं, इव औपम्यवाचकं, मुखं उपमेयं, मनोज्ञत्वं साधारणोधर्मः, मनोज्ञत्वधर्मसम्बन्धात् तत्तया प्रसिद्धेन कमलेन मुखमनुमीयते। यत्र उपमायां साधारणधर्मादिचतुष्टयं वाच्यम् (शब्दोपात्तं) भवेत् सा पूर्णोपमा। अन्यत् स्पष्टम्।

## वत्सरगणना।

अहो गतः पुनरनेन डिसेम्बरमासेन सहापरः पञ्चषष्ठ्यधिकत्रिशतदिवसात्मकः संवत्सरनामा समवस्थांशविशेषः खृष्टधर्म्मावलम्बिनां विद्योदयस्य च। विद्योदयोहि आर्य्यभाषारचित आर्य्यधर्म्मानुगतश्च, तत् कथं वत्सरगणनायां खृष्टधर्म्मिणामनुकारी, कथं वा शाकसंवत्प्रभृत्यस्मद्देशप्रचलितेष्वपि बहुषु संवत्सरेषु तान् प्रति विद्योदयस्य मन्दत्यनास्था, एवं बहुधा पृष्टा अपि वयं विद्योदयमद्यापि खृष्टसंवत्सरानुसारत एव प्रकाशयामः। एतत्कारणन्तु वत्सरगणना सर्व्वथा लौकिक्येव, सा च सर्व्वत्र राजप्रवर्त्तितैव मान्या भवति। यस्य यदा राजता तदनुसारिण्येव वत्सरगणना प्रबला भवति। रामेण या वत्सरगणनारीतिः प्रवर्त्तिता युधिष्ठिरसमये सा विलुप्ता, युधिष्ठिरसमये च या प्रवृत्ता विक्रमादित्यराजतायां सापि विलुप्ता ; एवं क्रमेण मान्धातुरारभ्य नानाविधैव वत्सरगणनास्मिन् भारते प्रवृत्ताभवत्, तथा सर्व्वत्रैव सामयिक-राजप्रचलितैव समादृता जाता, तदस्माभिरपि कथं शिष्टाचारस्यात्रक्री भवेत्।

किञ्च येन केनचित् राज्ञा प्रचारिता हि वत्सरगणना तत्तद्राजशक्त्यादीनामभावे काले विलुप्ता भवति, यथा रामादीनां वत्सरगणनाविलोपः। खृष्टीयवत्सरगणना तु धर्म्म-

भूत्वा ततः शीघ्रं तद्विलोपसम्भावनापि न येन कदाचिदपि विद्योदयस्य समयभ्रान्तिर्भवेत्।

अपिच वत्सरगणना हि सूर्य्यं परिवेष्टुः पृथिव्याः पृथिवीं वा परिवेष्टु सूर्य्यस्य सकृद्भ्रमणानुसारत एव क्रियते। तत्र च येन पथा पृथिवी सूर्य्यं परितो भ्राम्यति सूर्य्यो वा पृथिवीं स राशिचक्रमिति कथ्यते, स च राश्यनुसारतो द्वादशधा नक्षत्रानुसारतश्च सप्तविंशतिधा विभक्तः। तत्र प्रथमो राशिर्मेषः, प्रथमं नक्षत्रं अश्विनी, एतयोः प्रथमत्वमवलोक्येदमनुमीयते यत् पूर्व्वं कस्मिन्नपि समये मेषाश्विन्यौ एकत्रैवाश्रितेऽभूताम्, परमिदानीं तयोः षाण्मासिकमन्तरं जातम्। आश्विनमासिक-पौर्णमास्यां सूर्य्योऽश्विनीमभिप्रैति वैशाखे च मेषम्। ततश्च राशेर्व्यापकत्वादेव इदानीं मेषादारभ्य वत्सरगणना क्रियते न त्वश्विनीतः। श्रूयते उत्कलप्रदेशे इदानीमपि अश्विनीत एव वत्सरगणना क्रियत इति। भवत्वेवं स्थिते यदा यदाश्विनीतो मेषस्यान्तरमभवत् तदा तदैव वत्सरगणनारम्भोऽपि समयभेदमगमत्। इत्थं कदाचिदग्रहायणोऽपि संवत्सरप्रवर्त्तकमास आसीदिति तन्नामतस्तथा "मासानां मार्गशीर्षोऽहं" इति गीतावाक्यतश्च प्रतीयते। अथवा अग्रहायण इत्यस्य यदि हायनस्य वत्सरस्य पूर्व्ववर्त्ती मास इत्येवम् अर्थः क्रियेत तदा पौषाद्वत्सरगणना न सम्यक् शास्त्रविरुद्धा।

---

# मानवधर्म्मशास्त्रम् ।

(पूर्व्वप्रकाशितानन्तरम्)

## दायतत्त्वम् (अवतरणिका) ।

उद्वाहतत्त्वमाकर्ण्य नारदो मुदितोऽवदत् ।
साधु साधु महाभाग ! चरितार्था मम श्रुतिः ॥
एतद्धि शास्त्रं परमम् एष धर्म्मः सनातनः ।
श्रेयश्च परमन्त्वेत-दनुगानां मतिर्मम ॥
परमत्र तु सन्देहा बहुधा ये समुत्थिताः ।
महर्षे ! कृपया तान् मे छेत्तुमर्हसि साम्प्रतम् ॥
एवमुद्वाहितानान्तु भविष्यन्ति च ये सुताः ।
कीदृशी भविता तेषां गतिस्तद्वद सुव्रत ॥
जातिः का भविता तेषां गोत्रशाखे च के पुनः ।
वंशश्च कीदृशो ब्रह्मन् ! मर्य्यादा चैव कीदृशी ॥
संस्काराः कीदृशाश्चापि कति वा वद मे पुनः ।
संस्काराणाञ्च कर्त्ता को विधिश्च कीदृशो भवेत् ॥
कस्तान् विवर्द्धयेत् बाल्ये, शिक्षयेच्छैशवेऽपि वा ।
तारुण्ये कुत्र तिष्ठेयुर्हरेयुः कस्य वा धनम् ॥
श्राद्धादिकञ्च यत् सर्व्वं कार्य्यं वै पैतृकं स्मृतम् ।
निर्द्दिष्टजनकाभावे कुर्य्युस्ते कथमत्र वा ॥

धर्म्मशास्त्रस्य वचनं पिण्डं दत्त्वा धनं हरेत् ।
अदत्त्वा च पुनः पिण्डं कः कस्य धनभाग्भवेत् ॥
वार्द्धक्ये च तथा पित्रो रोगापज्जड़तादिषु ।
कस्तौ सेवेत विप्रेन्द्र निवसेताञ्च कुत्र तौ ॥
स्त्रीणां गर्भाद्यवस्थासु कथं वा परिपालनम् ।
भविता वद वेदज्ञ स्थिरमेकं पतिं विना ॥
का वा स्वाभाविकी तासां जीविका तव सम्मता ।
यामाश्रित्य वर्त्तयेयुः स्वैरिण्यः क्लेशमन्तरा ॥
एते चान्ये च बहवः सन्देहा मम चेतसि ।
समुत्पन्ना महाभाग कृपया छिन्धि साम्प्रतम् ॥
श्रुत्वैतन्नारदवचो भृगुः स तपतां वरः ।
उवाच साधु साध्विति गिरः सञ्चालयन् मुहुः ॥
एते प्रश्ना गभीरार्थाः पृष्टा येऽद्य त्वयानघ ।
सर्व्वेषामुत्तरं दातुं न मे शक्तिश्च विद्यते ॥
तथापि गौरवात्तात तवैव मुनिपुङ्गव ।
मयाद्य कथ्यते किञ्चिद्यथाशक्त्यवधीयताम् ॥

[क्रमशः ।

## बालबोधनी ।

(पूर्व्वप्रकाशितानन्तरम्)

गुणिगणगणनारम्भे न पतति कठिनी सम्भ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद बन्ध्या कीदृशी भवति ॥

अन्वयः—गुणिगणगंणनारम्भे (गुणवतां संख्यानप्रसङ्गे) सम्भ्रमात् (त्वरया) यस्य कठिनी (खटिका) न पतति (भूमाविति शेषः, यमुद्दिश्य भूमौ कठिनीपातो न क्रियते इत्यर्थः) तेन (पुत्ररूपेणेति शेषः) अम्बा (माता) यदि सुतिनी (पुत्रिणी) (भवेदिति शेषः), तदा बन्ध्या (अजातपुत्रा) कीदृशी (किंविधा) (भवति), वद (कथय)।

भावार्थः—अस्मिन् विपरिवर्त्तिनि संसारे नियतमेव कति-कति-मनुजानां जलबुद्बुदवदुत्पत्तिर्विनाशश्च भवति कस्तान् गणयति। योहि मनुष्यशरीरमधिगत्य न मनुष्यत्वप्रतिपादकान् दया-दाक्षिण्य-बुद्धिमत्ता-शास्त्ररति - विवेचकत्वादिधर्म्मरूपान् गुणान् लभते, न स मनुष्यमध्ये गण्यते। तथाच "आहार-निद्रा-भय-मैथुनञ्च सामान्यमेतत् पशुभिर्नराणां, धर्म्मो हि तेषामधिको विशेषो धर्म्मेण हीनाः पशुभिः समानाः।" धर्म्मशब्देनात्र मनुष्यत्वं तत्प्रतिपादका गुणा वा ग्राह्याः, गुणविहीना हि

मनुजाः पशव एव, न तेषां कापि गणना क्रियते। गणना हि गुणवतामेव भवति, गुणिगणमध्ये यस्य गणना न भवति, स मनुष्योऽपि न, अतएव समुत्पन्नेन तेन माता न कथमपि पुत्रवतीति कथयितुं शक्यते, अपत्यं प्रसूयापि सा विशिष्टपुत्राभावतया वन्ध्यासमाना एव भवति, मूर्खपुत्रेण न कोऽप्युपकारो भवतीति भावः।

वाच्यपरिवर्त्तनं—गुणिगणगणनारम्भे न पत्यते कठिन्या सम्भ्रमाद् यस्य। तेनाम्बया यदि सुतिन्या (भूयेत) उच्यतां वन्ध्यया कीदृश्या भूयते।

व्युत्पत्तिः—गुणिगणगणनारम्भे (गुणिनां गणः (समूहः) तस्य गणनाया आरम्भः (उपक्रमः) तस्मिन्); न (अव्य, निषेधार्थकं); पतति (क्रि, कर्त्री कठिनी, पत + लट् ति; लिटि पपात, लुङि अपप्तत्, लङि अपतत्, विधिलिङि पतेत्, लृटि पतिष्यति, लोटि पततु, भावकर्म्मणोः लटि पत्यते, लिटि पेते, लुङि अपाति, लङि अपत्यत, विधिलिङि पत्येत, लृटि पतिष्यते, लोटि पतग्रताम्) ; तेन (धान्येन धनवानितिवदभेदे तृतीया) ; अम्बा (कर्त्री, भवेदिति क्रियापदमूह्यम्); यदि (अव्य); सुतिनी (अम्बा-वि, सुतो विद्यतेऽस्या इति इन्+ततो ङीप्), वद (क्रि, कर्त्ता त्वमिति अह्यम्, वद + लोट् हि, लटि वदति, लिटि उवाद, लुङि अवादीत्, लङि अवदत्, विधिलिङि वदेत्, लृटि वदिष्यति, लोटि वदतु; भावकर्म्मणोः लटि

उद्यते, लिटि ऊदे, लुङि अवादि, लङि औद्यत, विधिलिङि उद्येत, लृटि वदिष्यते, लोटि उद्यताम्) ; वन्ध्या (कर्त्री, क्रिया भवति); कीदृशी (वन्ध्या वि, क इव दृश्यते या सा किम्+दृश +टक्ङीप्) ; भवति (क्रि, भू+लट् ति ; लिटि बभूव, लुङि अभूत्, लङि अभवत्, विधिलिङि भूयात्, लृटि भविष्यति, लोटि भवतु, भावकर्म्मणोः क्रमेण भूयते, बभूवे, अभावि, अभूयत, भूयेत, भविष्यते, भूयताम्।

अस्मिन् श्लोके आर्य्याच्छन्दः, तस्याः पूर्व्वार्द्धे त्रिंशन्मात्राः, परार्द्धे सप्तविंशतिर्मात्राः भवन्ति, परमस्मिन् पूर्व्वार्द्धे ऊनत्रिंशन्मात्रा इति छन्दोभङ्गः "गुणिगणगणनारम्भे न हि पतति कठिनी सम्भ्रमाद् यस्य, यद्वा गुणिगणगणनारम्भे निपतति कठिनी न सम्भ्रमाद् यस्य, अथवा गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमं यस्य" इति कृते न कश्चिद्दोषो भवति।

[क्रमशः।

---

## पुस्तकप्राप्तिः ।

वयमतीव-कृतज्ञहृदयेन भट्टपल्लीनिवासि-श्रीयुक्त-रामचन्द्र-भट्टाचार्य्य-प्रणीतस्य भरतविलाप-नामकस्य वङ्गभाषा-विरचितस्य कस्यापि नाटकस्य प्राप्तिं स्वीकुर्म्मः। अस्य नाटकस्य वस्तु महत्, महत्तरैश्च कविपुङ्गवैः समालोचितपूर्व्वम्, नायकश्च स प्रसिद्ध-धीरोदात्तो रघुपती रामचन्द्रः भारतीयानामिष्टदेवः। तेनास्माकं हृदयमेवमाकृष्टं यथा तन्नामश्रवणेनैव हृदयमार्द्रीभवति। एवं स्थिते नाटकस्यास्य समालोचनं न सम्यक् सम्भाव्यते। किन्तु नाटकमिदमेतेषु दिवसेषु यान्यपराणि सहस्राणि दृश्यकाव्यानि वङ्गरङ्गाङ्गणे दर्शितानि भवन्ति तेभ्यो न कथमपि हीनपदवीमर्हति। अत्र गर्भाङ्क-नेपथ्य-स्वगताद्यावश्यक-नाट्याङ्गानि सर्व्वाण्येव सन्ति, विदूषकश्च वर्त्तते, भाषा च ग्रन्थकर्त्तुर्मातृभाषा, तदस्मिन् न किञ्चिदपि न्यूनत्वं दृश्यते, अस्ति च क्वचित् क्वचित् अन्येभ्योऽपि किञ्चिदाधिक्यम्। वस्तुतः ग्रन्थकर्त्तुरियं प्रथमा कृतिरित्यत्र सर्व्वथा निर्दोषत्वं न कथमपि सम्भवति, ग्रन्थकारश्चास्माकं सुपरिचित इति विदितमस्ति स प्रथमे वयसि वर्त्तते इति, अत आशास्महे यदा पुनःपुनरनुशीलनेन तस्य रचनाभ्यासो वयश्च परिपाकमेष्यति, तदास्य लेखनीतः साधुकाव्यानामाविर्भावो भविष्यतीत्यलम्।

—०—

# लिङ्गव्यूहः ।

## (एकार्थकानां रूपभेदे भिन्नलिङ्गतोदाहरणानि)

| शब्दानां | पुंलिङ्ग-रूपाणि | स्त्रीलिङ्ग-रूपाणि | क्लीबलिङ्ग-रूपाणि | पुं.स्त्री-रूपाणि | पुं.क्ली-रूपाणि | स्त्री.क्ली-रूपाणि | त्रिलिङ्ग-रूपाणि | अव्ययं | वक्तव्यविशेषाः |
|---|---|---|---|---|---|---|---|---|---|
| अंशु(किरण)-वाचकानां | किरण, उस्र, मयूख, अंशु, गभस्ति, घृणि, रश्मि, घृष्णि, वृष्णि, पृश्नि, भानु, कर । | दीधिति | ० | मरीचि | ० | ० | ० | ० | द्वयोर्मरीचिः किरणादिति त्रिकाण्डशेषः । मरीचिर्मरीचिभेदे ना गभस्तावनपुंसकमिति मेदिनी। |
| अंस(स्कन्ध)-वाचकानां | स्कन्ध | ० | भुजशिरः | ० | अंस | ० | ० | ० | ० |
| अंहति(दान)-वाचकानां | त्याग | अंहति | विहापन, दान, उत्सर्जन, विसर्जन, विश्राणन, | ० | ० | ० | ० | ० | ० |

| शब्दानां | पुं. | स्त्री. | क्ली. | पुं.स्त्री. | पुं.क्ली. | स्त्री.क्ली. | त्रिलिङ्गपाथि | अव्ययं | भ्रमव्यविशेषाः |
|---|---|---|---|---|---|---|---|---|---|
| | | | वितरण,<br>स्पर्शन,<br>प्रतिपादन,<br>प्रादेशन,<br>निर्वपण,<br>अपवर्जन। | | | | | | |
| अंहस्(अंघस्<br>—पाप)<br>वाचकानां | पाप्मा | ० | पाप,<br>किल्बिष,<br>कल्मष,<br>कलुष<br>वृजिन,<br>एन, अघ,<br>अंहस्,<br>(अंघस्),<br>दुरित,<br>दुष्कृत। | ० | पङ्क | ० | ० | ० | ० |
| अक्षवती(द्यूत)-<br>वाचकानां | पण | अक्षवती | कैतवं | ० | द्यूत | ० | ० | ० | ० [क्रमशः। |

# प्राप्तपत्रम् ।

---

## प्रवासिलिपिः ।

राकासुधाकरमयूख-विदूनचित्ता
सन्तापिता मलयसम्भव-शीतवातैः ।
कच्चित् कपोलकलितालसपाणिवल्ली
संस्मृतत्र मां व्रजसि दैन्यमहस्वरूपे ! ॥ १ ।

यस्याः पतिः प्रियसखि ! प्रतिवासरान्तं
दूरस्थितः स्मरति मामतिमात्रखेदः ।
किं युक्तमङ्गपरिभूषणमद्य तस्याः
ब्रूपे प्रसाधनकरीमिति किं वयस्याम् ॥ २ ।

रात्रौ निरन्तरमदीयविभावनायां
निद्रासुखे चणमुपस्थित एव कस्मात् ।
स्वप्नाहितप्रियवपुःपरिरम्भणार्थं
किं व्योम्नि बाहुलतिकां क्षिपसि प्रमुग्धे ! ॥ ३ ।

एकाकिनी शयनसद्मनि मां विलिख्य
भूमौ विमुग्धहृदये ! हृदये निधातुम् ।
किमूद्यता प्रियसखीचणशङ्कया वा
निर्यासि तन्निलयतस्त्वपया सकम्पा ॥ ४ ।

हस्ते निधाय वदनं नयनं धरायां
मत्पूर्व्वचिन्तिततनुं हृदयेऽद्य काचित् ।
संस्मृत्य तत् सुखदिनं विरहाग्निदग्धम्
आर्द्रीकरोपि हृदयं नयनोत्थनीरैः ॥ ५ ।

किं वा प्रिये ! नयनवर्त्म-नितान्तदूरं
याते मयि स्मरसि तन्नहि सौख्यगर्व्वात् ।
मत्प्रेमपूर्णहृदयं हृदयस्थिते ! ऽद्य
प्रेमास्पदे सुजनता भुवि दुर्लभा यत् ॥ ६ ।

त्वच्चिन्तया मम निरन्तरमेवमङ्गं
शोषं प्रयाति नितरां किमहं तवापि ।
प्रक्षामदेहलतिकां पुनरप्यनेन
गाढं कदापि परिपीड्य मुदं प्रयामि ॥ ७ ।

एवं विचिन्त्य बहुधा निशि वीतनिद्र-
श्चित्ते निधाय तव मूर्त्तिमनल्पकान्तिम् ।
आशाजलैर्विरहवह्निमलं निषिच्य
प्राणान् कथञ्चिदपि सम्प्रति धारयामि ॥ ८ ।

श्रीमन्मथनाथ-काव्यतीर्थात् ।

## विज्ञापनम् ।

प्राकृतव्याकरणमिङ्गलण्डीयानुवादसहितं मुद्रितमभूत् ।

मूल्यं १॥)

(लाहौर-संस्कृतपुस्तकालयाध्यक्ष-लालामेहरचन्दसमीपे प्राप्तव्यं, ग्रहणेच्छुभिस्तत्रावेदनं कार्य्यम् ।)

---

## विशेषद्रष्टव्यम् ।

सम्प्रति २४-परगणान्तर्गत-नैहाटी-समीपस्थ-भट्टपल्ली-ग्रामा-द्विद्योदयः प्रकाश्यते, इतःपरं पत्रादिकं भट्टपल्ल्यां सम्पादकसमीपे प्रेषणीयम् ।

### विद्योदयस्य मूल्यादीनां नियमः ।

वार्षिकमूल्यं प्रथमदेयं ... ... ... १।/०

,, पश्चाद्देयं ... ... ... २।/०

(प्रत्येकखण्डं ।० परिमितमूल्येन प्राप्तव्यम् ।)

विज्ञापनस्य प्रत्येकपंक्तिः /० परिमितमूल्येन मुद्रिता भविष्यति ।

---

## नूतन-पुस्तकम् ।

संस्कृतश्रुतबोधः (छन्दोग्रन्थः) ... मूल्यं २ आने

(कलिकातास्थ-गिरिश-विद्यारत्न-यन्त्रे प्राप्यः)

হিন্দীব্যাকরণ (বাঙ্গালীদিগের হিন্দী শিক্ষা করিবার প্রধান উপযোগী)

কলিকাতা ক্যানিং লাইব্রারীতে প্রাপ্য) ... ... মূল্য ॥০ আনা

ডাকমাশুল ৵০

---

प. बालकृष्ण

श्रीः Registered No. 12.

# विद्योदयः

## ( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १३ ] नवेम्बर १८८४ [ ११ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# साहित्यदर्पणः ।

अलङ्कारपरिच्छेदः ।

अस्य चेति अस्य च चित्रालङ्कारस्य, तथाविधस्य पद्मादिसद्दशस्य लिपीनां वर्ण-संस्थानानां सन्निवेशविशेषस्य रचनाविशेषस्य वशेन चमत्कारविधायिनां वर्णानां तथा-विधः श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसम्बन्धविशेषसद्दशेन चमत्कारविधायिभिः श्रोतृविस्मयकारिभिर्वर्णैरभेदेनोपचारात् (एकरूपतयावभासनात्) पद्माद्याकारसन्नि-वेशविशेषमालोक्य वक्त्रा ये वर्णा उच्चार्यन्ते तैरेव श्रोतृणां श्रोत्रे पद्माद्याकारवर्णस्तोमो जन्यते, कार्य्यकारणयोरभेदोपचारेण जन्यवर्णानामपि चित्रालङ्कारसम्भव इत्यर्थः।

मारमेति—सा वामा (मनोहारिणी स्त्री) मे (मम) अस्तु रमा लक्ष्मीः मा (अस्त्विति शेषः) कीदृशी सा मारमासुषमा मारस्य मा लक्ष्मीः तस्या इव सुषमा (परमा शोभा) यस्याः सा, चारुरुचा (मनोहरकान्त्या) मारवधूत्तमा मारवध्वा रतेरप्युत्तमा, मात्तधूर्त्त-तमावासा (अगृहीतधूर्त्तगृहा) इत्यन्वयः। एषोऽष्टदलपद्मबन्धः दिग्दलेषु (पूर्वादि-दिक्षु स्थितेषु पत्रेषु)निर्गमप्रवेशाभ्यां (अनुलोम-विलोम-पाठाभ्यां)वर्णः श्लिष्टः एकरूपाक्षरः, विदिग्दलेषु (कोणस्थितेषु पत्रेषु) अन्यथा (क्वचित् प्रवेशः क्वचिन्निर्गमस्तेन तेषु वर्णो न श्लिष्टः) कर्णिकास्थितमक्षरन्तु श्लिष्टं (एकरूपमेव)। अष्टदलपद्मबन्धप्रयोगो यथा "अष्टसु दिक्षु विततादष्टदलं पद्मं, लेख्यम्, तत्कर्णिकायां श्लोकस्य प्रथमक्षरं लेख्यं, ततश्च पूर्वादिदलेषु प्रदक्षिणक्रमेण द्वौ द्वौ वर्णौ लेख्यौ, एवं सप्तदशभिरक्षरैः पद्मं भवति। तत्र कर्णिकान्तस्थवर्णोपक्रमेण प्राच्यदले पश्चात् प्रवेशेन दक्षिणदले निर्गमप्रवेशाभ्यां नैऋतदले निर्गमेण पश्चिमदले प्रवेशनिर्गमाभ्यां वायव्यदले प्रवेशेन उत्तरदले निर्गम-प्रवेशाभ्यां ईशानदले निर्गमेन प्राच्यदले पश्चात् प्रवेशेन श्लोकः पाठ्यः। कर्णिका-वर्णस्य त्वष्टावृत्त्या पाठः। तदुक्तं—वर्णद्वयेन चैकैकदलभूतदलाष्टकम्, सर्व्वोत्तराद्यवर्णेन पद्मं स्यात् कृतकर्णिकमिति।

---

"काव्यान्तर्गड्डुभूता या सा तु नेह प्रपञ्च्यते।
रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका॥
उक्तिवैचित्र्य-मात्रा सा च्युत-दत्ताक्षरादिका॥"

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च। उदाहरणं—

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।
किं करोतु कुरङ्गाक्षी वदनेन निपीड़िता॥"

अत्र रसाल इति वक्तव्ये "साल" इति रच्युतः। "वने" इत्यत्र "यौवन" इति 'यौ' दत्तः। "वदनेने"त्यत्र मदनेनेति 'म' च्युतो 'व' दत्तः। आदिशब्दात् क्रियाकारक-गुप्त्यादयः। तत्र क्रियागुप्तिर्यथा—

"पाण्डवानां सभामध्ये दुर्य्योधन उपागतः।
तस्मै गाञ्च हिरण्यञ्च सर्व्वाण्याभरणानि च॥"

अत्र 'दुर्य्योधन' इत्यत्र 'अदु' 'र्यो' 'ऽधन' इति अदुरिति क्रिया गुप्ता। एवमन्यत्रापि(१)।

---

(१) काव्यान्तः (काव्यानां मध्ये) या गड्डुभूता विषमग्रन्थिरूपा, अकिञ्चित्करीत्यर्थः, इह (काव्यालङ्कारविचारप्रकरणे) सा तु न प्रपञ्च्यते (प्रपञ्चेन विस्तरेण कथ्यते), रसस्य परिपन्थित्वात् विलम्बेन बोधजनकत्वात् प्रहेलिका अलङ्कारो न अलङ्कारमध्ये गणयितुं न योग्य इत्यर्थः। ननु तत् कथमन्यैरलङ्कारमध्ये गणिता सा इत्याशङ्क्याह, सा प्रहेलिका उक्तिवैचित्र्यमात्रा, उक्तेर्वचनस्य विचित्रतामात्रप्रतिपादिका न तु विचित्रास्वादजनिका इति। ततश्च यत् किमपि वैचित्र्यमलङ्कारत्वमभिदधानानाम्मतेऽस्यालङ्कारत्वमिति भावः। तस्या भेदानाह च्युतदत्ताक्षरादिका च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा च।

प्रहेलिकायाः सामान्यलक्षणं यथा काव्यादर्शटीकायाम्—प्रहेलिका तु सा ज्ञेया वचः संवृतिकारि यत्। अभिप्रेतार्थसंवरणकारिवचनविन्यासः प्रहेलिकेति सामान्यलक्षणम्।

सरस्वतीकण्ठाभरणे प्रहेलिकाया लक्षणं भेदाश्च यथा—

"प्रहेलिका सकृत्प्रश्नः सापि षोढ़ा च्युताक्षरा ।
दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥
क्रीड़ागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥

च्युतदत्ताक्षरादीनामुदाहरणानि तु मूल एव प्रदर्शितानि, अवशिष्टानां तथाणां भेदानामुदाहरणानि दर्श्यन्ते, तत्राक्षरमुष्टिर्यथा—

"अतिः, अतिः, अन्न, अलं, प्रीय, रय, लय, फय ।
मेला, मेला, मेलं, मेलं, फस, फस, फस, फस ॥

इयमक्षराणां मुष्टिरित्यक्षरमुष्टिका । अत्र पादशश्चतुष्पङ्क्तिलिखितायां चतुर्भिर्मुरज-बन्धैः श्लोक उपतिष्ठति, स यथा—

"अद्य मे सफला प्रीतिरद्य मे सफला रतिः ।
अद्य मे सफलं जन्म अद्य मे सफलम् फलम् ॥

बिन्दुमती यथा "तवाश्ववादः प्रत्यब्धिपताका प्रतिसङ्गरम् ।
फलं प्रत्यद्भुतोपायं यशांसि न तु न क्वचित् ॥

एतच्छ्लोकार्थस्य श्लोकान्तरेण प्रकाशनार्थं केनचित् यथास्थितस्वरानुस्वारविसर्जनीय-संयोगैर्बिन्दुभिरेव श्लोकान्तरस्य सूचनाक्रमः कृतः । यथा—

०ु००ा ०ु००ा ०ा०ा ०ं०ु०ॆ ०ं०ु०ॆ ००ः ।
०ा००ॆ ०ा००ॆ ि०ि०ः ००ं० ०० ०ी०ं०ः ॥

निर्भेदः — उदधावुदधावाज्ञा संयुगे संयुगे जयः ।
साहसे साहसे सिद्धिः सर्व्वत्र तव कीर्त्तयः ॥

अर्थप्रहेलिका यथा

उत्तप्तकाञ्चनाभासं संदष्टदशनच्छदम् ।
सरसं चुम्बते हृष्टैर्हंसैरपि किमुज्ज्वलम् ॥

सूचितस्यैव पक्वाम्रफलमित्यस्य ह्यर्थपदप्रयोगेणावगतेरर्थप्रहेलिका ।

अन्येऽपि प्रहेलिकाभेदास्तत्र दर्शिता यथा—

क्रिया-कारक-सम्बन्ध-पादाभिप्राय-वस्तुभिः ।
गोपितैः षड्विधं प्राहुर्गूढं गूढ़ार्थवेदिनः ॥

तत्र क्रियागुप्तस्योदाहरणं मूले प्रदत्तमपि अन्यत् दर्श्यते

स्तन जघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।
कथमिह सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥

अत्र जघनभराभिराममन्दं मदिरारुणेक्षणाया गमनं विलोकयन्तो हे युवानः कथमिह यूयं मदनशरज्वरजर्जरा न 'स्त' इति सम्बन्धः, स्त इति क्रियापदं गुप्तं, स्तनशब्देन जघनसान्निध्यात् गोपितेन क्रियागूढमिदम् । कारकगूढं यथा

"पिबतसे शराविव वारि कह्लारशीतलम् ।
केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ ॥

हे पथ ! कह्लारशीतलं वारि पिबतसे हृदये केन दुर्विदग्धेन इमौ शरौ विनिवेशितौ इति सम्बन्धः । अत्र शराविति कर्मकारकस्य गूढत्वात् कारकगूढम् । सम्बन्धगूढं यथा

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥

हे आलोहितेक्षणे मे आगः (अपराधः) न, चेतः रसाभिज्ञं, कस्मात् (हेतोः) प्रकुप्यसि ? एभिः अस्थानरुदितैः अलम् इति सम्बन्धः । अत्र 'मे' इत्यस्य सम्बन्धिपदस्य 'आग' इत्यस्य योगात् मयेति तृतीयाभ्रान्त्या गोपितत्वादिदं सम्बन्धगूढम् ।

पादगूढं यथा "युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे—

अत्र पूर्व्वार्द्धस्थितैर्द्वितीयप्रथमसप्तमपञ्चमैकादशनवमत्रयोदशषोड़शाक्षरैश्चतुर्थपादो गूढ-स्त्याज्यः, यथा विद्युतामिव संहतिरितीदं पादगूढम् ।

वस्तुगूढं यथा "पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि न दास्यसि पिबाम्यहम् ॥"

हे कमललोचने त्वत्तः पानीयं पातुं इच्छामि, यदि दासी असि न इच्छामि, यदि न दासी असि तदा अहं पिबामि इति सम्बन्धः । अत्र दास्यसीत्यत्र दासी असीति छेदात् दासीलक्षणस्य वस्तुनो गूढत्वादिदं वस्तुगूढम् ।

काव्यादर्शे प्रहेलिकाप्रकाराश्चादुष्टादुष्टाश्चेति द्विविधाः कल्पिताः । तत्रादुष्टाश्च वञ्चिता-प्रमुषिता-परुषा-नामान्तरिता-निभृताद्याः षोड़शभेदाः सोदाहरणं दर्शिताः, दुष्टाश्चैवं कथितम् "दुष्टप्रहेलिकाश्चान्याः सन्त्यधीताश्चतुर्दश" तैः पूर्व्वाचार्य्यैरेव । अन्याः च्युताक्षरा-दत्ताक्षरा-च्युतदत्ताक्षरा-बिन्दुमतीप्रभृतयः इति केचित् । शुभादीनामप्यत्रै-वान्तर्भाव इत्यन्ये । अधीताः पठिता इति तट्टीका । काव्यादर्शे वञ्चितादीनां लक्षणोदा-हरणानि द्रष्टव्यानि, प्रहेलिकाप्रपञ्चस्य चमत्कृतोऽनभिमतत्वाद् वयं तूष्णीं भवामः ।

इति शब्दालङ्कारविवेकः ।

# अनुकृतिः।

इह खलु क्रमविकाशव्यसने निरन्तरपरिवर्त्तिनि जगती-मण्डले यदुन्नतेः प्रधानमुपकरणमितरङ्गीक्रियते विचक्षण-सार्थेन, अधुना च तिरोभूतायां यस्य विधानरीताविदमेव त्रिलोकीचक्रमापद्यते प्राचीनतमाम् पाशवप्रधानामवस्थाम्, अभूतपूर्व्वामज्ञातचरीमचिन्त्यपूर्व्वाञ्च कामपि नवीनां वा, यच्च बालकानामुपाध्यायः, असभ्यानामाचार्य्यः, नीचानामुत्-कर्षसोपानम्; हन्त भोस्तस्यैवानुकरणस्य साम्प्रतमवलोक्य विषयापकर्षमनुचिकीर्षापरमविद्येषु शिक्षितवङ्गीययुवसु, दुनो-तितरामस्माकं चेतः। परन्त्वनुकरणसामान्यमेव जुगुप्समानाः सुतरामस्य चाविधेयताम्प्रतिपादयन्तः प्रौढ़िवादमात्रपराः यदन्तरेण बुद्धिः, विद्या, वाणिज्यं, योगाभ्यासः, किं बहुना वाक्‌शक्तिरपि न परिस्फुरति, यच्च मूलभित्तिरङ्गलीयाना-मभ्रंलिहस्य सभ्यताप्रासादस्य, यच्च बीजं जर्म्मनीयपाण्डित्य-महापादपस्य, तदिदं किमनुकरणमिति न मन्यन्ते, मन्यन्ते चेद् कथङ्कारमात्मीयमेकदेशदर्शित्वदोषमनुवर्त्तमाना (स्वाव-दन्धायन्ते) नावलम्बन्ते तूष्णीम् इति चित्रम्। हन्त शिक्षित-

वङ्गीयतरुणाः ! चिन्ताशीलता श्रमसहिष्णुता नैपुण्यमध्यवसायश्चानुक्रियन्तामितरेवमादयो गुणा युष्माभिरङ्गलीयानाम् ।

सति च तथा को नाम युष्मासु दोषमुपन्यस्तुमलम्भविष्णुर्न्यायदर्शी । अधुना तु कथितगुणानुकरणं सुदूरपराहतमेव, परमनुक्रियन्ते अस्मदपकर्त्तारो भोजनपानपरिच्छदाः । तत्र शीतप्रधानदेशीय-भोज्य-गोमांसादि - भोजन-मासवादि-सेवनञ्च महानिष्टपरम्पराप्रवर्त्तकमितयत्र तु सर्व्ववादिनामविप्रपत्तिः ।

तथा ईदृशपरिच्छदप्रावृतवपुषां श्वीवसारमेय-दुष्टभुजङ्गमदंशन-जनित-मरणभीतिर्न वाधत इत्युपन्यस्यन्तः किल परमभीताः केचन साहवपरिच्छदानुकारिणः "नन्वये असाधुज्ञाः ! विशालतरङ्गिणीवक्षसि पतने हि दैवदुर्व्विपाकात् सत्वरमपनेतुमशक्यतया निस्यूतवसनसन्तानस्य अपगतप्रतीकविक्षेपादिव्यापाराणां तथैव कशानुक्रान्तितश्च सुलभो युष्माकं मरणसमागम इति किमनुष्ठीयते" एवं विनीयन्ते । किञ्च केचिदात्मनः प्रकटयन्तो मितव्ययितामनुकरणप्रियताञ्चापह्नुवानाः एवंविधपरिच्छदव्यवहारे देशीयवसनव्यवहारात् व्ययलाघवमतो व्यवहार्य्यः सर्व्वथैवेदृशपरिच्छद इति कीर्त्तयन्तः सस्मितमिति प्रतरभिधीयन्ते "यदहो सुचतुराः ! युष्माभिरपि साधु वुद्धं वोधितास्तथा वयं, यदि व्ययलाघवमेव युष्माभिः परममभीप्सितं तदा अवस्थीयतां नग्नीभूय तमःसन्ततिक्रान्ते निकेतने तावत् तत् साधु साधु" इति । किञ्च पूर्व्वेषां तापपवन-

सर्य्यपोषितानि यादृशानि बभूवुः शारीराणि आधुनिकवङ्गीया-नामपि तादृशान्येव प्रायेण, एवञ्च साम्प्रतं प्रतिषिद्धे स्वपद्दि परिपोषकतापपवनस्पर्शे सम्भाव्यते कियानपकारः शारीरः। तदेवमवश्यानुकरणीयेष्वपि वर्त्तमानेषु बहुविषयेषु परमपकृष्ट-विषयानुकरणेनाविवेकमूढ़तामात्मनः प्रतिपादयन्ति, अपि च सममेव गुणदोषाननुकुर्व्वतां श्रेयसामपि पशूनां प्रवृत्ति-सम्पत्तिमलभमानाः, क्षीरराशिमुत्सृज्य क्षतमनुसन्दधाना मक्षिका इव, प्रतिभान्ति नूनं वङ्गवासिनः। इति मौनम्।

---

## बालबोधनी।

(पूर्व्वप्रकाशितानन्तरम्)

अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः।
सकृदुःखकरावाद्यावन्तिमस्तु पदे पदे॥

अन्वयः—अजातमृतमूर्खाणां (अनुत्पन्न-विनष्ट-जड़ानां—पुत्राणां सामान्यतो मनुष्याणां वा) आद्यौ (अजातमृतौ) वरं (ईषत्प्रियौ मूर्खापेक्षयेति शेषः), अन्तिमः (मूर्खः) न (वर-मिति शेषः)। आद्यौ (अजातमृतौ) सकृदुःखकरौ (एकशः क्लेशदायिनौ) तु (पुनः) अन्तिमः (मूर्खः) पदे पदे (प्रतिपदं, नियतं यावज्जीवमिति यावत् दुःखकर इति शेषः)।

व्युत्पत्तिः—अजातमृतमूर्खाणां (जन + क्त कर्त्तरि = जातः, न जातः = अजातः नञ्तत्, मृ + क्त कर्त्तरि = मृतः, ततः अजातश्च मृतश्च मूर्खश्च (द्वन्द्व) अजातमृतमूर्खाः तेषां अजात-पुत्रे मृते च सति "अस्ति मम पुराकृतं महत्तरं दुष्कृतं येन कथमप्युत्पद्य पुत्रोमृतः" इति विवेकतः पुत्रनाशजनितमपि दुःखं कालेन विलीयते। परं मूर्खः पुत्रस्तु सर्व्वदा धर्म्मविरुद्धाचरणेन पितरं मातरञ्च यावज्जीवं क्लिश्नाति, मूर्खो हि प्रायेण काम-क्रोध-लोभमोहानां वशीभूतो भवति, कामादिवशस्य च न हिताहितविवेको वर्त्तते, सोऽहितमेव हितं मन्यते, सहि प्रतिवेशिनः पितरौ च प्रति असद्व्यवहारं करोति येन पित्रोः सर्व्वदैव महान् क्लेशो जायते इति। केचित्तु श्लोकमिममेवं पठन्ति—"अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरं। यतस्तौ स्वल्पदुःखाय यावज्जीवं जड़ो दहेत्॥. तदर्थस्तु—अजातमृत-मूर्खेभ्यः (अनुत्पन्न-विनष्ट-जड़ेभ्यः तानपेक्ष्य इत्यर्थः) मृता-जातौ (विनष्टानुत्पन्नौ) सुतौ (पुत्रौ) वरं (मनाक्प्रियौ), यतस्तौ (मृताजातौ) स्वल्पदुःखाय (अतस्वल्पकालस्थायिदुःख-हेतवे भवत इति शेषः), जड़ः (मूर्खः) यावज्जीवं (यावज्जीवति तावत् मरणपर्य्यन्तमिति भावः) दहेत् (विविधोत्पीड़नं कृत्वा जनान् पितरौ च क्लिश्नाति)। अत्र प्रथमार्द्धस्य पाठो न सम्यग्रुचिकरो यतस्तत्राजातादजातो वरं मृतान्मृतो वर-मितरवार्थः प्रतीयते।

भावार्थः—यदि पुत्री न जायेत तदा केवलं पुत्राभावजन्यं दुःखं भवति, तद्धि दुःखं "नास्ति मम तादृक् पुराकृतं पुण्यं येन पुत्रलाभो भवे"दित्याद्यविवेकोदयात् कालेन विलुप्तं भवति। एतन्मूर्खाणां निर्द्धारणे षष्ठी)। वरं (ईषत् प्रियं, तथा च देवात् वृते वरः, श्रेष्ठे त्रिषु, क्लीवे मनाक्प्रिये इत्यमरः)। आद्यो (आदौ भवो आदि+यत्+१मा, २व,)। अन्तिमः (अन्ते भवः अन्त+डिमच् १मा, १व,)। दुःखकरो (दुःखं कुरुत इति पचादेरच् दुःख+कृ+अच्+१मा, २व)। पदे पदे (वीप्सायां द्वित्वं)।

—०—

## विजयोत्सवभाणः।

(पूर्व्वप्रकाशितानन्तरम्)

(श्रुतिमभिनीय) किं कथयसि गुरुरयं पैतृको गृह-स्वामिनो गुरुपुत्रः, अस्य पूर्व्वपुरुषः कोऽपि महान् पण्डितः शुद्धाचारश्च जातः, तेनैवास्य गृहस्वामिनः कोऽपि पूर्व्वजो दीक्षितः, ततः प्रभृत्युभयोर्वंशयोर्गुरुशिष्यभावरूपसम्बन्धोऽजनि। गुरुवंशे ततः प्रभृति न केनापि पुस्तकस्पर्शोऽकारि, आचारस्तु पुरुषत्रयं यावत् अकृत्रिम एवासीत्, साम्प्रतन्तु यथा पाण्डि-त्यस्य तथैव सदाचारस्य विलोपो जातः, परं किन्तेन

"अविद्यो वा सविद्यो वा गुरुरेव न संशयः" गुरुवंशे यः कोऽपि मूर्खो वा प्रमत्तो वा बुद्धिहीनो वा इन्द्रियासक्तो वा द्यूतकरो वा मद्यपो वा परस्त्रीकातरो वा मिथ्याभाषी वा खलो वा किम्बहुना महापातकाश्लिष्टसर्व्वाङ्गः कृष्णकायः साक्षात् पाप-पुरुषो वा यथा तथा समुत्पद्येत गुरुरेव सः, शीलेन तृणापेक्षया लघुरपि गुरुरेव सः, वृत्तेन चण्डालापेक्षया नीचोऽपि गौरवं तस्मिन्नव्याहतमेव तिष्ठेदिति।

साधु भ्रातः साधु, एतावतैव परितृप्तोऽस्मि। मातर्वङ्ग-भूमि। किमस्त्यन्यदपीदानीं द्रष्टव्यं यः स्वयं धर्म्माधर्म्मविवेक-रहितः, बलवद्विषयासक्तः, घोरतमसाच्छन्नहृदय ऐहिकतत्त्व-मपि सम्यङ् न वेद, स कथं परलोकस्य पथप्रदर्शको धर्म्मोपदेष्टा भवेत्। न ज्ञायते अपरं वा किं भविष्यति। एवं स्थिते ये धर्म्मलोपमनुशोचन्ति तएव मूढतयानुशोचनीयाः। एतादृश्यव-स्थायां यदि धर्म्मलोपो न भवेत् तदा धर्म्मशास्त्रमेव मिथ्या स्यात्, भवत्वन्यत एव गमिष्यामि।

(पदान्तरे सदृष्टिक्षेपमाकाशे) अये क एष वेशचेष्टाकृतिभि-र्वाह्याभ्यन्तरीणदरिद्रतायाश्चरमसीमां प्रदर्शयन् मूर्त्तिरिवानुत-साहस्य, अनिपुणकृतप्रतिमेवाश्र्यपाण्डित्यस्य, अवलम्बनयष्टिरिव लोभस्य, प्रधानोपासक इवेर्ष्यायाः, आकर इवालसतायाः, प्रधा-नामात्य इवानुद्योगस्य, प्रचारक इव वक्रविषवादस्य, पुष्प-बिल्वदलहस्तः पूगखण्डरोमन्थपरो द्रुतपदमित एवायाति?

(श्रुतिमभिनीय) किं कथयसि ग्रामाध्यापकोऽयं ग्राममूर्धन्येभ्य-आशिषो दातुं गच्छतीति, गच्छत्वयं वराकः, नाहं संस्कृता-ध्यापकान् प्रति दृष्टिपातं करिष्ये, ते हि साम्प्रतं लक्ष्म्या सरस्वत्या च परित्यक्ता राजपुरुषैश्चानादृताः शोकस्यैव विषयी-भूताः, यद्यस्ति रोदनस्य कश्चित् प्रकृतदृष्टान्तः स्यात्तत् सं-स्कृताध्ययनमेव। पण्ड एवेदानीं संस्कृतशास्त्राध्ययनपरिश्रमः। पुस्तकस्पर्शमन्तरेणापि बहवः केवलं धनिनामुपासनाभिर्विद्वत्-पूजामुपभुञ्जते, अन्ये तु कृतश्रमा अपि तादृशोपासना-शक्तिविरहात् दरिद्राणां मनोरथा इव स्वयं विलीयन्ते। इदानीं विद्यावत्तया नाध्यापकता किन्त्वध्यस्ततया, अतएव परं शोचनीयावस्थामापन्नायां संस्कृताध्यापकतायां सङ्कुचितेव मे दृष्टिर्न प्रसरति संस्कृताध्यापकेषु। इदानीं किं करोमि, एतावतैव तूष्णीम्भवामि, अथवान्यतो गमिष्यामि, अथवा यामिनीयं प्रौढ़त्वमापन्ना, शङ्के इदानीं मद्यपानरता अपरे सामाजिकास्ततस्तेषां समीपगमनमनुचितमेव। तथाहि—

दृष्ट्वा नव्यान् परमविदुषोऽप्युन्नताशाविभाव्यान्
वेश्यस्त्रीभिः सह सुमुदितान् वारुणीं सेवमानान्।
मन्दं मन्दं नभसि विचरन् एष चन्द्रः कलङ्की
निःशङ्कं तां* भजति, रजनीं गाढ़माश्लिष्य मध्याम्॥

---

* वारुणीम्।

दृष्ट्वात्मजान् गुणवतोऽपि च विस्मृतस्वान्
सम्भाव्य भव्यरहितां स्वदशाञ्च घोराम् ।
एषा धरा भरतरामयुधिष्ठिराणां
लज्जावती किमु मुखं तमसाऽऽवृणोति ॥

---

## पञ्चनद-महाविद्यालयस्य ।

सम्प्रति वर्त्तमानमासस्य पञ्चदशदिवसे डक्टर-श्रीयुक्त-लाइट्नर-महोदय-प्रयत्न प्रतिष्ठापितस्य पञ्चनद-महाविद्यालयस्य परीक्षोत्तीर्णेभ्यश्छात्रेभ्यः प्रतिष्ठापत्र-पारितोषिक-दानादिकार्य्यं महोत्सवेन संवृत्तम् । तत्र श्रीमान् पञ्चनदाधिपतिः सभापतिरासीत् । तस्मिन्नवसरे गुणग्रहणैकव्रतोऽयं महाविद्यालयः सामयिक-राजप्रतिनिधिभ्यः श्रीमद्भ्यः लर्डरिपनमहोदयेभ्यः डि, ओ, एल (Doctor of Oriental Learnig) इत्युपाधिं समर्प्य महदौदार्य्यं प्रकाशयामास, यतः रिपन-सदृशभारतबन्धुः कदाचिदेव लभ्यते । इदानीं श्लोककतिपयैः रिपनमहोदयाः स्तूयन्ते ।

महाभाग !

आ मान्धातुः कति कति नृपाः प्रापुरत्राधिपत्य-
मेकच्छत्रं स्वभुजदलिताशेषसापत्नवर्गाः ।
किन्त्वेतेषां प्रकृतिरमणास्त्वादृशा ये धरायां
संख्या तेषां परिमिततया गण्यते पुण्यकीर्त्ते ! ॥

अध्वक्लान्तस्तपनकिरणोत्तप्तदेहो निदाघे
प्राप्याश्वत्थं पथि ननु यथा मोदते पान्थसार्थः ।
राजन् ! सर्व्वे वयमिह तथोत्तप्तचित्ताश्चिरेण
त्वामाश्रित्योच्छलितहृदयाः सर्व्वसौख्यं भजामः ॥

सदाचार-ज्योतिःद्युतिभिरनभिज्ञानतिमिरे
तिरोभूतप्रेतावलि-विकटनर्म्मावगमयन् ।
अये चौणीनाथ (राजन् रीपन्) त्वमसि नितरां भारतभुवां
हृदाकाशोद्भासी चिरतिमिरनाशी शशधरः ॥

उदारैराचारैः स्वहृदयसमैरुज्ज्वलतरैः
करैरामैः कामं सुजनकुमुदालीर्व्विकचयन् ।
अये चौणीनाथ (राजन् रीपन्) त्वमसि नितरां भारतभुवां
हृदाकाशोद्भासी चिरतिमिरनाशी शशधरः ॥

अचिरभववियोगखेद-मूका
नरवर ! केवलमन्तरात्मना ते ।
कुशल ! कुशलमर्थये विनम्राः
सकलजगत्प्रभविष्णु (विष्णुपादे) पादपद्मे ॥

किमास्ते वास्माकं परचरणसेवाप्रणयिनां
यशो वा लक्ष्मीर्वा हृदयमथवा प्रीतिविमलम् ।
यदास्ते राजंस्त्वद्गमनसमये भक्तिविशदं
त्वहाणैतद्दत्तं सदयमनसा नेत्रसलिलम् ॥
इदं याचे स्वामिन् तव मधुरवाचा शुभदया
वयं दुःखैस्तप्ताः सुखसरसि नीतावतरणम् ।
विकृष्यैतान् घोरे व्रजसि निजदेशेऽसुखमरी
स्मृतौ तत्रापीयं शुभद ! तव भूयात् नृप ! कथा ॥
विधातुं येऽनेके नरपतिपदे भारतभुवः
क्षिताग्रश्मुर्वीकान् सुखिन इह चेष्टां नृपवर ।
परं तेषां याने भवतइव नाभूदतितरां
प्रजाशोकोद्भूतैर्नयनसलिलैर्वर्त्म कलुषम् ॥
हिमाद्रेरत्तुङ्गे जलदपटलैः शृङ्गनिचये
निधिर्वारामङ्के पवनहतवीचिस्वनमतेः ।
यशोगीतिस्तेऽसहदनजयनादैश्च नितरां
विमूर्च्छद्गाम्भीर्यां दिशतु रिपुसार्थे बधिरताम् ॥

—

# आम्रपत्रम् ।

## जाती ।

आभासि शोभातिशयेन जाति !
वनेऽत्र पुष्पेषु विकाशितेषु ।
तारास्वनेकास्वपि सुप्रसन्ने
नभस्तले चान्द्रमसीव लेखा ॥ १ ॥
सुखायसे त्वं मधुरं रुवद्भिः
पुंस्कोकिलैः पल्लव-नद्ध-गात्रैः ।
शुभ्रांशुकाच्छादित-निन्द्य-देहै-
र्गायद्विदग्धैरिव वारनारी ॥ २ ॥
समीरणोऽयं सुखदः सुरूपा-
मरुच्चमालिङ्ग्य सुहासिनीं त्वाम् ।
प्रतिक्षणं चुम्बति भावलोलां
कामीव कान्तां रहसि प्रपन्नाम् ॥ ३ ॥
भ्रमत्यलिस्त्वामुपसेवमानः
पिबंश्च हृष्टो मधुरं विरावी ।
मुखासवं सौरभलोलुपोऽलम्,
धन्यः स कान्ता वशमेति यस्य ॥ ४ ॥

स्वयौवनालीकरुचिप्रगल्भा
न याहि मूढेव सुखातिभूमिम् ।
सुहृत्सहायापि सुवासिनी त्वम्
त्रातुं न शक्ता च्यवतः स्वदेहम् ॥ ५ ॥
कालो नियन्ता जगताममीषा-
मवीक्ष्य-चेष्टो ननु सर्व्व-हर्त्ता ।
सर्व्वत्र पर्य्यटति दण्ड-हस्त-
स्ततो विहातुं न हि कोऽपि शक्तः ॥ ६ ॥

श्रीप्रियनाथ वसोः ।
नन्दनपुरात् खुलनान्तर्गतात् ।

श्री Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसां मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरं भुवि ॥

खण्डं १३ ] सेप्टेम्बर १८८४ [ ९ सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन मुद्रितः ।

# साहित्यदर्पणः ।

अलङ्कारपरिच्छेदः ।

यदि "सकलेत्यादौ शब्दश्लेषतया नोपमा, तत् किमपराद्धं "मनोज्ञ"मित्यादावर्थश्लेषेण, "स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु, आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः" इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्यैवोपमाप्रयोजकत्वात् । ननु गुणक्रियासाम्यस्यैव उपमाप्रयोजकता युक्ता तत्र साधर्म्यस्य वास्तवत्वात्, शब्दसाम्यस्य तु न तथा

---

सन्ति पूर्णोपमोदाहरणानि इति चेन्न, अत्राप्यर्थश्लेष एव मनोज्ञत्वस्य उपमानोपमेययोश्चन्द्रमुखयोर्भेदेन भिन्नतया श्लिष्टत्वात्, अतो यत्र यत्र साधारणधर्मस्तत्र न क्वापि र्थश्लेषव्याख्यानात् पूर्णोपमाया विषय एव नास्तीति । गुणक्रियासाम्यस्यैवोपमाप्रयोजकत्वेन शब्दसाम्यमकिञ्चित्करमित्यत्रोपमैव नास्तीत्याशङ्कां निराकरोति स्फुटमित्यादिना, सामान्यमुभयत्रैकरूपं शब्दमात्रमवलम्ब्य शब्दसाम्येऽप्युपमा सम्भवतीत्यर्थः । यद्यपि सकलकलमित्यादौ एकप्रयत्नेन शब्दयोरुच्चारणात् शब्दसाम्यं कर्तुं न सम्भवति तथापि आनुपूर्व्यवच्छिन्नत्वेन शब्दयोरेकत्वमिति भावः ।

ननु गुणस्य क्रियाया वा साम्यमेवोपमाप्रयोजकं भवितुमर्हति, तत्र गुणक्रियासाम्यप्रयुक्तोपमायां साधर्म्यस्य वास्तवत्वात् वस्तुधर्मत्वात् प्रकृतत्वादिति चेत्

तत्र साधर्म्यस्यावास्तवत्वात्, ततश्च पूर्णोपमाया अन्यथानुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोपमाविषयता युक्ता न तु "सकले"त्यादौ शब्दसाम्यस्येति चेन्न 'साधर्म्यमुपमा' इत्येवाविशिष्टस्य उपमालक्षणस्य शब्दसाम्याद्व्यावृत्तेरभावात्। यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकं, तदा कथं "विद्वन्मानसे"त्यादौ आधारभूते

---

शब्दसाम्यस्य न तथा उपमाप्रयोजकता इति भावः, अत्र शब्दसाम्यप्रयुक्तोपमायां साधर्म्यस्य शब्दरूपसामान्यस्य धर्मस्य अवास्तवत्वात् उपमानोपमेयरूपवस्तुनोरसमवेतत्वात् ततश्च शब्दसाम्यस्योपमाप्रयोजकत्वायोगाच्च पूर्णोपमाया गुणक्रियासाम्यमपहाय अन्यथावस्थितेरभावात् श्लेषस्य तु शब्दसाम्यादौ स्थितिसम्भवात् गुणक्रियासाम्यस्थले पूर्णोपमाऽर्थश्लेषं बाधयित्वा प्राधान्येन व्यपदिश्यत इति चेन्न "साधर्म्यमुपमा" इत्यविशिष्टस्य वास्तवत्वरूपविशेषरहितस्य उपमालक्षणस्य शब्दसाम्याद्व्यावृत्तेरभावात् येन केनापि सम्बन्धेन साधर्म्यमस्तु उपमा भवेदेव इत्येव लक्षणार्थस्तत् कथं शब्दसाम्ये उपमा न भवेत् शब्दस्योपमाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वं नोपमाप्रयोजकत्वादिति भावः। यदि हि शब्दसाम्ये साधर्म्यस्यावास्तवत्वात् वस्तुसमवेतत्वाभावात् न उपमाप्रयोजकम् भवेत् तदोपमानोपमेययोरभेदप्रतीत्यात्मकरूपकस्यापि न प्रयोजकं भवितुमर्हति तथा च विद्वन्मानसेत्यत्र विदुषां मानसं (चित्तं) एव मानसं (सरः) इति उपमानोपमेयभूतयोर्मानसमानसयोः (चित्तसरोवरयोः) वास्तवसाधर्म्याभावादनुपयुज्यमानोऽभेदारोपः कथं राजादेर्हंसाद्यारोपरूपस्य हेतुर्भवेत्। ननु श्लिष्टशब्दनिबन्धनपरम्परितरूपकस्यान्यथानुपपत्त्या अवास्तवमपि साधर्म्यमुपमानोपमेययोरभेदं कल्पयतु नतूपमायामिति

चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपरूपरूपकप्रयो-
जकः। किञ्च यदि वास्तवसाम्य एवोपमाङ्गीकार्य्या, तदा कथं
त्वयापि सकलकलेत्यादौ बाध्यभूतोपमाङ्गीक्रियते। किञ्चात्र
श्लेषस्यैव साम्यनिर्व्वाहकता न तु साम्यस्य श्लेषनिर्व्वाहकता,
श्लेषवशतः प्रथमं साम्यप्रासभवादित्युपमाया एवाङ्गित्वेन
व्यपदेशो ज्यायान् प्रधानेन व्यपदेशा भवन्तीत्युक्तनयात्। ननु
शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत् कथमत्र
श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेन्न, अर्थानुसन्धानविर-

---

वेदाश्च किञ्चेति। किञ्च यदि वास्तवसाम्यस्यैवोपमाप्रयोजकता भवन्मते तदा कथं
'सकलकल'मित्यादौ उपमाप्रतिभोत्पत्तिहेतुः श्लेष इति बाध्यभूतोपमाङ्गीक्रियते भवता
विरुद्धभाषित्वं भवतः। 'सकलकल'मित्यादौ श्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतु-
त्वेन प्राधान्यं यदुक्तं तदपि दूषयति किञ्चात्रेत्यादिना। किञ्च अत्र 'सकलकल'
मित्यादौ श्लेषस्य एव साम्यसम्पादकत्वं साम्यं प्रति श्लेषस्यैव कारणत्वं यतः श्लेषवशतः
पूर्व्वं पुरचन्द्रबिम्बयोर्न किञ्चिदपि सादृश्यमलभ्यत अलङ्कारेषु साधकस्याप्राधान्यं
साध्यस्य च प्राधान्यमिति उपमाया एवाङ्गित्वेन साध्यतया प्रधानत्वेन व्यपदेशः प्रख्यापनं
ज्यायान्, श्लेषस्य, प्रथमोपस्थापितत्वेऽपि साधनत्वेनाप्रधानतया, व्यपदेशो नोचितः
प्रधानेन व्यपदेशा भवन्तीति न्यायात्। तथानङ्गीकारात् अङ्गाङ्गिभावसङ्करानङ्गी-
कारात्, अन्यत् स्पष्टं, श्लेषस्य तु शब्दालङ्कारत्वेऽप्यर्थानुसन्धानसापेक्षत्वादुपमाङ्गत्वमपत

ह्यित्यनुप्रासादाविव तथाङ्गीकारात् एवं दीपकादावपि ज्ञेयम् ।

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।

निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥"

अत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमात् दुर्य्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः । इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयस्यार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न च श्लेष इति सर्व्वमवदातम् ।

---

यतोऽर्थानुसन्धानविरहिणामनुप्रासादीनामर्थालङ्कारैर्नाङ्गाङ्गिभावोऽस्तीति भावः । एवमिति यथा एवशब्दत्वेन उपमा स्वीकृता तथा एव प्रधानत्वेन व्यापदेशस्तथा दीपकादाविव्यर्थः । आदिपदात्तुल्ययोगितापरिग्रहः ।

सत्पक्ष इत्यादौ केचिदुपमाध्वनिं केचिच्च श्लेषं स्वीकुर्व्वन्ति तदुभयमपि नोचितमित्याह सत्पक्षा इति । धार्त्तराष्ट्रा धृतराष्ट्रपुत्राः हंसाश्च सन्तः पक्षाः सहायाः पक्षे पक्षाश्च येषां ते, प्रसाधिताः स्वायत्तीकृताः पक्षे अलङ्कृता आशा दिशो यैः ते, मदेन गर्व्वेण पक्षे शरत्कालजातचित्तविकारविशेषेण आरम्भा युद्धाडम्बराः पक्षे शब्दाः येषां ते ; कालवशात् शरत्कालवशात् पक्षे समयनियन्त्रणात् ; हंसा वर्षासु मानसे स्थित्वा शरदि पृथिवीमागच्छन्ति, धृतराष्ट्रपुत्रा मृताः पृथिव्यां निपतन्ति । अनेकार्थस्य शब्दस्य प्रकरणादिवशादेकस्मिन्नर्थे नियमितेऽन्योऽर्थः शाब्दीव्यञ्जनयैव ज्ञातो भवति । इति शब्दशक्तिमूलवस्तुध्वनिः ।

## त्रयाणां पान्थानाम्।

कस्याञ्चित् पान्थशालायां त्रयः संस्कृतज्ञा अन्ये च बहवो यूरोपीयशास्त्रेषु कृतविद्या अकृत-विद्या वा विविधजातीयाः पान्थाः समागतास्तिष्ठन्ति। अथ तेषु मध्याह्नकृत्यं समाप्य तत्रत्ये कस्मिंश्चिन्महति मण्डपे ताम्बूलचर्व्वणादिभिर्विश्राम सुखमनुभवत्सु, कश्चित् संस्कृतज्ञस्तैलाञ्चलेन पाथेयमुद्रां नि बध्नन्नुवाच "आपदर्थे धनं रक्षेदिति," तत् श्रुत्वापरः संस्कृतज्ञ उवाच "दारान् रक्षेद्धनैरपि," ततोऽपरः संस्कृतवित् स्ववक्ष स्ताड़यन् वदति "आत्मानं सततं रक्षेद्दारैरपि धनैरपि।" तेषामेवं सानुबन्धवचनविन्यासमाकर्ण्य सर्व्वे विस्मयोत्फुल्ल लोचनास्तेषां मुखमवलोकयितुमारेभिरे। ततस्तत्र कश्चित् यूरोपीयपक्षपाती दशनज्योत्स्नाभिर्जनतामाधवलयन्नुवाच "नमस्ते, कोऽर्थोऽस्य श्लोकस्य ?" ततोऽन्तिमो विद्वान् कथयति "आपदर्थे आपत्प्रतीकाराय धनं रक्षेत्, यावद्धनानि तावत् स्वजनाः, आपत्समये यदि धनानि स्युस्तदैव स्वजनसाहाय्य-लाभो भवेत्, निर्द्धनस्य तु 'भोजनं यत्र तत्रैव (कदाचिन्नैव), शयनं हट्टमन्दिरे (वृक्षतलादौ च), मरणं गोमतीतीरे', अतएवावश्यककार्य्यजातानि उपेक्ष्यैव धनसञ्चयः कार्य्य इति संक्षेपः। "दारान् रक्षेत् धनैरपि" इत्येतत्तु स्पष्टमेव। शेषार्द्धस्या र्थस्तु "आत्मनि जीविते पितुर्नामेति लौकिकीं गाथामनुसृत्य

बोद्धव्यः, दस्युभिर्यदि वनान्याक्रान्तानि भवेयुर्लम्पटैर्वा स्वस्त्री, तदा पलायनमेव श्रेयः, जीवन् जनः पुनरेव भद्रशतानि द्रष्टुं शक्नुयात् मृतस्तु न किञ्चिदपि। तथाह्युक्तं "अन्ये मृतस्य क्रीड़न्ति दारैरपि धनैरपीति"। अतएव आत्मरक्षणमेव सर्व्वथोचितमिति तात्पर्य्यं।" एवमुक्तवति तस्मिन् प्रश्नद्वितीयोवाच, "एवमेव, सत्यमभिहितं भवता, येषां नीतिशास्त्रेष्वेवं हृदयदौर्ब्बल्यकारिवचनपरम्परावकाशः कुतस्तेषां तेषामुन्नतिः सम्भवति? एतद्धि केनापि वङ्गीयचाणक्येन विरचितं भवेत्, ये हि रात्रौ स्त्रिया अञ्चलमधृत्वा न वहिर्गन्तुं समर्थाः, भयाक्रन्दितां प्रणयिनीं परिहायात्मरक्षार्थं पलायनं तेषामुचितमेवोपदिष्टं, न जाने कीदृशि शुभलग्ने उच्चारितमेतत् "आत्मनि जीविते पितुर्नामेति वचनं"!!!, भस्मीक्रियन्तामधैर्य्योद्दीपकानि वचनानि।" एतदाकर्ण्य अपरः संस्कृतविदाह "महाभाग! अहमपि किञ्चिद्वक्तुमिच्छामि परं न वचनावकाशो दृश्यते"। ततः स यूरोपीयपक्षपाती ब्रूते "अवहितोऽस्मि, कथयतु भवान्।" स आह, "साम्प्रतं वर्त्तमानसभ्यतानुसारेण एतच्छ्लोकार्थस्त्वस्माभिरेवमेव क्रियते—यथा आपदर्थे धनं रक्षेदित्यत्र तु समान एव अर्थः, दारान् रक्षेद् रपि इत्यस्यार्थस्तु धनानि प्रियाण्यपि स्त्रीणां सन्तोषार्थं [illegible] व्ययं कुर्य्यात्, तैर्धनैर्यथेप्सितवस्त्रालङ्कारादिकं वितीर्य्य गृ[illegible] गृहे रक्षेत्, अन्यथा तासां गृहस्थितिर्दुर्लभैव स्यात्; इदा[illegible] हि स्त्रियो न धर्म्मं, दाम्पत्यप्रेम वा, किन्तु केवलं ध[illegible]

वस्त्राणि विविधानि भूषणानि चाभिलषन्ति, अतएव गार्हस्थ्यं चिकीर्षुभिः विपत्प्रतीकारचिन्तां परिहाय स्त्रीणामलङ्कारादिषु स्वसाध्यातिरिक्तान्यपि धनानि दातव्यानि, आपदि तेषां क्षतिः कारावासो वा भवतु तत्र न कापि क्षतिरस्ति। आत्मानं सततं रक्षेद्दारैरपि धनैरपि इत्येतस्यार्थबोधे तु मनसः किम-प्यौन्नत्यमावश्यकं भवति। यत्र हि समाजे स्त्रीणां स्वातन्त्र्य-मस्ति तत्रैव वचनमेतत् सदुपदेशं वितरति, यथा कस्यामपि स्वस्य दुःखावस्थायामापतितायां तन्मोचनसमर्थानां समीपे स्त्रीप्रेरणमात्रेणैव सर्वदुःखनिवृत्तिर्भवति, तत्र न कोऽपि सन्देहो वर्त्तते; सन्ति च समुन्नतसमाजे बह्न्युदाहरणानि स्त्रीप्रभावादुन्नतपदप्राप्तीनां विपन्मोचनस्य, परं यदि कश्चि-न्महत्तर एवमुन्नतमना स्यात् यस्तां स्वयमभिसारिणीं केवलां स्त्रियमालोक्यापि न गलितो भवेत्, तदा तमुपदादिच्छलेन धनान्यपि प्रेरयित्वा सन्तोषयेदिति। किं बहुना वागाडम्ब-रेण।" एतदाकर्ण्य सर्व्वैर्हीहीकृतम्, जिज्ञासुश्च किंचि-द्विमतिभीऽभवत्। अथ तृतीयः संस्कृतज्ञोऽवदत् "आपदर्थे ला; रक्षेत् इत्येतस्यार्थस्तु केवलम् आपत्प्रतीकारायैव धनं सञ्चि-नुयात्, न तु धर्म्मकार्य्यादिकं विहाय पुत्रपौत्राणां विनाशाय अत भोगवञ्चितः सञ्चिनुयादित्यर्थः। दारान् धनैरपि रक्षेत, संवीनाम गार्हस्थ्यस्य मूलभित्तिस्तस्याः प्रतिपालनं सर्व्वथा कार्य्यं, यदि ...न आपत्प्रतीकारार्थं धनं न रक्षितं भवेत् का क्षतिः।

आत्मानं सततं रक्षेद्दारैरपि धनैरपि इत्यस्यार्थस्तु धनेषु दारेषु वा नैकान्तत आसक्तो भवेत्, यदि स्त्री दुष्टा भवेत् धनानि च पापोत्तेजकानि, तदा तेषां संसर्गं परित्यज्यात्मा रक्षितव्य इति। एतदुदाहरणं रामचरिते स्पष्टमेव, तथाच रामः सीतायाः कलङ्कमाकर्ण्य भ्रातृनाहूय वदति—"रक्षोवधान्तो न च मे प्रयासः, व्यर्थः स वैरप्रतिमोचनाय," पूर्व्वं सीताया-मपहृतायां मया समुद्रं विलङ्घ्य रावणवधे यः प्रयासः कृतः स केवलं निजकापुरुषत्वदूरीकरणाय। साम्प्रतन्तु कलङ्कितां— "त्यक्ष्यामि वैदेहसुतां, पुरस्तात् समुद्रनेमिं पितुराज्ञयेव" "यदर्थिता निर्हृतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः" इत्यादीनि रघुवंशे द्रष्टव्यानि। ततः सर्व्वैः साधु साध्वित्युक्तम्।

---

## जन्मभूमिः।

(भाषा)

इह खलु ये केचन वर्त्तन्ते परिस्फुटबोधशक्तयः प्राणिनः, सर्व्वेषामेव तेषां समधिका प्रीतिर्जन्मभूमौ; अपिच साम्प्रतिकाः प्रायेणैव जन्मभूमिहितकाम्यया समीहन्ते बद्धपरिकराः सुसभ्या अर्द्धसभ्याश्च। तदत्रावसरे जन्मभूमिविषयकमस्माभिरपि समुच्यते किञ्चित्। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" अहो वचनमाधुरी! न खलु विमूढेन मया सम्प्रधार्य्यते

तावदर्थगौरवमेतावतो महावाक्यस्य, श्रवणमात्रेणैव च केवलं विह्वलीभूयतितरामानन्दतश्चित्तेन। अनिशमित्येव विभाव्यते यदहो आर्य्याः! येषामास्यकुहरादेतन्महावाक्यं निःसृत्य हृदय सारवत्तायाः सर्व्वथा परिचयमापादयतीति, तदस्य पर्य्या लोचनासमाकुलस्य मे विस्मृतनिजावस्थस्य स्वतन्त्रप्रवृत्तिमन्तो नेनम् आमेरिकायां फ्रान्से इंलण्डे रुषियायां चीनादौ च तत्तज्जन्मभूमौ यावन्निपतदुन्नतौ सुखे हर्षे गौरवे च समति शयतया नितरां बभूव सुप्रीतं, तावदेव—हा हा भारतभूत धात्रि! तावदेवातिमहत्तरागाकलितस्य सर्व्वेषामातिशय्य दर्शनलोलुपं त्वयि परपादप्रहारजनितमूर्च्छान्धकारायां स्रत रत्नाभरणायां निपतदहो स्मारयामास दशामात्मनः। प्रचण्ड वाताघातेनेव दीपलेखा सहसैव विच्छिन्ना मदीयाशामणिमा लिका, विघूर्णमानमस्तकश्चाहं जगदेतन्नरकविवरमिव निचि काय। अथ कथं कथमपि स्वां प्रकृतिमापन्नः सुखस्य परिवर्त्तन दुःखं हर्षस्य च विषादं उन्नतिदेव्या मधुरमूर्त्तेश्च अवनति राक्षस्याः करालमुखकुहरं प्रफुल्लतायाश्च मालिन्यमन्वभूवम्। अपि च मातस्त्वदुपरितने गगनतले हलाहलमिव चन्द्रं तप्त लौहशलाकाप्रकरमिव तारागणं त्वदुपरि च सञ्चरति मलय मरुति मल्लिकादिकुसुमसौरभं पूतिगन्धमिव शीतलताम्र तप्तायःस्पर्शमिव आवाससुखं कारागारवेदनामिव राजपथं कान्तारमिव उभयतो मार्गं दीयमानं दीपशिखास्तम्भं श्मशान



यूपमिव आत्मवर्गमपि मूर्त्तिमन्तमिव निर्व्वेदं, प्रत्यक्षमुपस्थितमिव विषादं, क्षतविग्रहग्रहमिव दुःखं, यन्त्रणारूपान्तरमिव चाकल्यम्। कथमेताद्दृशक्लेशावतारः, नास्माकं हि वर्त्तते परश्रीकातरत्वं येन यूरोपीयादीनां जन्मभूमेरवलोक्य सुखादिकमेवं स्यात्। अपि च युज्यते समस्पर्द्धिष्वीर्ष्यादिकं प्रायशः। नास्माकञ्च ते समस्पर्द्धिनस्तथाच न खलु तेषामिवास्माकमाहारः न परिच्छदः नोपासनारीतिः न व्यवहारः न धर्म्मः न वा किञ्चिदन्यत्। एतावति क्लेशावतारे प्रतिभाति कारणतयाऽस्माकं वर्त्तमानदारिद्र्यं स्मृतिश्च कविकल्पितः तादृशसुखसम्भोगस्येति। अत्र च विषये कस्यचित् कवेराभाणकः "सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम्। सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति" इत्यस्मद्वाक्यं प्रमाणयतितराम्। अहो कल्पनायाश्चातुर्य्यम्! नाममात्रतएव प्राक्तनसुखादिकस्य कल्पनया राजाधिराजाशोकस्य शतशतजयस्तम्भगात्रचोदिताः पठन् सनन्दालिपीः तस्य च राजधान्यां पाटलिपुत्रे पुण्यसलिलायास्त्रिस्रोतसः फेनधवलासु तीरभूमिषु सञ्चरन्, अशेषराजकुलचक्रचूड़ामणेः सार्व्वभौमविक्रमादित्यस्य सदसि कालिदासस्य मधुरकवितासमुच्छ्वासम् अमरसिंहस्य वररुचेर्घटकर्परस्य च पाण्डित्यपटहघोषमतितरामाकर्णयन् धन्वन्तरेर्भैषज्यकुशलतां क्षपणकशङ्कु-वेतालभट्टानां शास्त्रार्थवैलक्षण्यं वराहमिहिरस्य च ज्योतिर्म्मतां

मनसि समान्दोलयन् उज्जयिन्याश्च सिप्रासलिलशीतलमरुता श्रङ्गनिर्व्वृतिमधिगच्छन्, चक्रवर्त्तिनो भोजराजस्य राज्यशासन-रीतिं विदग्धसम्मानकौशलं च प्रशंसन् धारायाश्च परिखासु समुद्रत्वमारोपयन् सकलमार्त्तण्डवंशावतंसस्य बाप्पानृपते-र्वीरत्वख्यातिश्रवणेन हृष्यन्, प्रथमानङ्गपालस्य यशस्तोमतेजः-सञ्चयैः सुखायमानः तस्य च राजधान्या हस्तिनाया विद्रुत-तमालपंक्तेरिव निविड़प्रावृषेण्यजलदजालसमुत्पत्तिखनेरिव निसर्गरमणीयाया यमुनाया लहरिलीलामालोकयन् अपिच तेषां प्रतीहारोपस्थितैर्हूणतुरुष्कपारस्यादिनानादेशराजप्रति-निधिभिरानीतैः कररत्नादिभिर्नितरामानन्दमाप्नुवन् उदयनस्य नास्तिकवादखण्डनकथां शृण्वन् कुमारिलस्य मीमांसाहृदया-धिदैवत्वं विचारयन् शङ्करस्य बौद्धमतविपर्य्यासवादेन शङ्करः शङ्करः साक्षादित्यनेन सहसोद्भूतेन च निनादेन नितरां प्रीत्या युज्यमानः वाचस्पतेर्दर्शनपाटवं विमृशन्नात्मानं तेषां समसाम-यिकत्वेन परिणमयामास, दरिद्रस्य धनस्वप्नो बभूव, पङ्गो-र्गिरिलङ्घनध्यानमभूत्, मूर्खस्य आत्मनि पण्डितभ्रमो जातः, अन्धस्य जगदालोकनवेदनं वहति, तृषार्त्तस्य मरीचिकासलिल-प्राप्तिर्निरपादि। समधिकोन्नतमोऽजनि कल्पनाप्रसारः, सर्व्वेषामेव भारतीयसम्राजां पुराणविदुषां च प्रत्येकं नीति-विस्तारं पाण्डित्यं चावलोकयन् चन्द्रमिव करगतं अमृतमिव स्वादितं पारिजातगन्धमिव घ्रातं मेने।

अत्रैवावसरे पाशवीमनुष्ठातुं वृत्तिं वैवसात्त्वक्रियमाणायाः प्रहारजर्ज्जरितस्य भर्त्तुः सकरुणमाननमवलोकयन्त्या अचमेण च दरिद्रेण भर्त्रा तथैव निरीक्ष्यमाणायाः कुलयोषितः सुकरुणरार्त्तनादेन कलनैकसहायस्य दरिद्रविप्रस्येव भग्नघटी भग्नः सहसा भावनावेगः, क्व पुनरसामान्यरमणीयताविभूषणं नन्दनवनं, क्व चेदं कुम्भीपाकदारुणं विषमस्थलं, नैतन्निर्णेतुमहं प्रशाक। इति प्रतिपादितमस्माभिः क्लेशकारणं जन्मभूमिः। हा हन्त कदाचित् किमेतावतो दुःखराशेरपसरः स्यात्, पुनः किं जन्मभूमेः प्रफुल्लमुखकमलं पश्येम, पुनः किमियमस्माकं सवित्री पूर्व्ववद्विराजेत, किमस्माकं मनोरथः परिपूर्णो भवेत्, मातर्मातर्भारतवसुन्धरे पुनस्त्वं किं जगदुच्चसिंहासनमधिकुर्य्याः। अहो आशाया विलासः अस्मिन्नपि भारतदुर्द्दिने सूचयति शारदपूर्णिमायामिनीसमुत्पादमन्तः। इदानीं दुःखशामिणीदमुच्यते, हंहो भारतीयाः साम्प्रतं दुर्ब्बलहृदयानामप्यस्माकं जन्मभूमिहितकाम्यया शिक्षायाः स्वदेशप्रेमिकतायाः ऐक्यस्य उत्साहस्य अध्यवसायस्य च सत्ता नितरामावश्यकी, ततश्चाधुना ये हि कापुरुषा निर्द्धना दासाः परमुखापेक्षिण इति श्रूयन्ते बहुधा वैदेशिकैस्ते एवाचिरेण समाराध्यचरणा भविष्यन्ति इति।

श्रीपञ्चानन शर्म्मणः।

# कौतुक-रत्नाकरः ।

( प्राप्तः )

एकाधिकाष्टादशशततम-शकसंवत्सरे प्रतिष्ठिता नाम संस्कृतोपाधिपरीक्षा पण्डितवरेण श्रीमता संस्कृतकलेजाध्यक्षेण । [illegible]यता च कालेन बहुला समुन्नतिरजनि तस्याः, ततश्च संस्कृतशास्त्राणामिति सर्व्वैरेव स्वीकार्य्यं तत्त्वज्ञैः ।

अपि चैतदवलोक्यते सगर्व्वमालोक्यमानक्षितलेतवः (सार्टिफिकेट् होल्डार्स्) प्रतिवर्षं वर्द्धन्तेतरां विचित्र-विचित्रोपाधिधारिणः । पूर्व्वं पूर्व्ववत्सरेषु च परीक्षितानामुपाधयस्तुल्या एवासन् प्रायशः प्रचलितोपाधिभिरित्यनधीतशास्त्रेऽपि प्रचलितोपाधिधारिणि परीक्षोत्तीर्णोऽयमिति भ्रमापनोदनाय वर्त्तमानवर्षात् प्रभृति प्रचलितेभ्यो हि तर्कालङ्काराद्युपाधिभ्यो वैलक्षण्यमापादयितुं परीक्षितशास्त्राणामुपाधीनां काव्यतीर्थन्यायतीर्थेत्यादिरूपेण निर्व्वाचिताः खलूपाधयः श्रीमता परीक्षितानाम्, इत्येवमस्माभिश्चिन्तितं प्राक् । अद्य तु तावदधीयमानसांख्यदर्शनस्य मे "उपाधिर्भिद्यते न तु तद्वान् (१५१)" इति कापिलसूत्रं "उपाधिरेव नाना न तु तद्वान् उपाधिविशिष्टोऽपि नानाभ्युपेयः" इति च तद्भाष्यमाकलय्य समजनि कस्यचिदवबोधो निगूढ़भावस्य । तथाहि—न केवलं तेन परीक्षितशास्त्राणामुपाधीनां प्रचलितोपाधिभ्यो वैलक्षण्य-

मापादितं, किन्तु काव्यतीर्थत्यादिरूपेणैकेनोपाधिना बहूनलं-कुर्व्वाणेन "उपाधिरेव नाना न तु तद्वान्" इति वदतः पुराण-विदुषो दूषितमपि मतं विज्ञानभिक्षोर्लाघवानुसन्धायि-नैया-यिकसुलभत्वातुर्थ्या। कापिलसूत्रस्य तु "उपाधिः (विशेषणं, काव्यतीर्थत्यादिरूपश्च) न भिद्यते तु (किन्तु) तद्वान् (उपाधि-विशिष्टः, जीवः; परीक्षितास्च छात्राः)" अयमर्थः समीचीन इति न भूलासंगतिरित्यहो दुरवगममेव तावत् पण्डित-मात्राणां।

श्रीपञ्चानन तर्करत्नः।

---

## बालबोधनी।

(पूर्व्वप्रकाशितानन्तरम्)

एवं विद्यां प्रशस्य विद्याभावस्य निन्दां करोति कतिपयैः श्लोकैः।

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्म्मिकः।
काणेन चक्षुषा किं वा चक्षुः पीड़ैव केवलम्॥

अन्वयः—यो न विद्वान् (पूर्व्वोक्तरूपया विद्यया (न युक्तः धार्म्मिकः च (अपि) न (धर्म्मपथानुसारी च न) एतादृशेन पुत्रेण (आत्मजेन) जातेन (उत्पन्नेन सता) कोऽर्थः किं प्रयोज-नम् न किमपीत्यर्थः। दृष्टान्तं दर्शयति काणेन (पीड़ादि-वशान्नष्टसामर्थ्येन) चक्षुषा किं (किं प्रयोजनं न किमपीत्यर्थः) वा अथवा चक्षुः (काणमिति शेषः) केवलं पीड़ैव (पीड़ाकर-मेव क्लेशहेतुकमेवेत्यर्थः)।

भावार्थः—यथा काणं चक्षुर्न किमपि प्रयोजनं साधयति किञ्च सुखशोभामपि न जनयति प्रत्युत दर्शनाभावजनितान्

क्लेशानुत्पादयति च, तथैव मूर्खोऽधार्म्मिकश्च पुत्रः कस्मैचि-दप्युपकाराय न वर्त्तते, न वा कुलप्रतिष्ठां करोति, परं सर्व्वदा-ऽहितमाचरन् स्वयं क्लिश्यति, अपरांश्चात्मीयान् प्रतिवेशिनश्च क्लेशयति। मूर्खपुत्रापेक्षया सर्व्वथा पुत्राभावः श्रेयानिति परमार्थः। अत्र दृष्टान्तालङ्कारः।

व्युत्पत्तिः—अर्थः (अर्थ्यते प्रार्थ्यते य इति कर्म्मणि घञ् =प्रयोजनं, अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु, अत्र स्यादिति क्रियापदमूह्यं तस्य कर्त्ता अर्थः), जातेन (पुत्र-विण, जन+क्त (कर्त्तरि)+३या १व,), पुत्रेण (पुन्नाम्नः नरकात् त्रायते इति पुत्+त्रा+क ततोऽर्थशब्दयोगेन तृतीया), विद्वान् (विद+क्वसु, स्त्री विदुषी), धार्म्मिकः (धर्म्मं चरतीति ठक्), काणेन (चक्षुः-विण), चक्षुषा (किंयोगे तृतीया), पीडैवेत्यनन्तरं भवतीति क्रियापदमूह्यम्।

[क्रमशः।

---

## प्रातरुद्बोधनं।

(प्रासम्)

प्रातर्नवीनकिरणैः परितः स्फुरद्भि-<br>
र्बालोष्णरश्मिरुदयाद्रितटादुदेति।<br>
तत्स्निग्धभासपरिरञ्जितशेखरश्री-<br>
र्वृक्षावलिर्भवति काञ्चनमण्डितेव॥ १॥

सम्पर्कतो रविकरैः रजनीप्रसूतं<br>
नीहारजालजडितामलपत्रजातम्।<br>
पङ्केरुहां कुलमिदं परिजृम्भमाणं<br>
दाक्षिण्यशीतपवनं सुरभीकरोति॥ २॥

सद्यो विहाय रजनीतिमिरौघचेलं
बालार्करागरुचिरावरणा धरैषा ।
आभाति सङ्गततनुर्हिमबिन्दुजालैः
सूर्योदये नवबधूः कृतमज्जनेव ॥ ३ ॥

मुक्ताविनिन्दितमनोज्ञतुषारबिन्दु-
संभूषितां नवतृणोद्गमकान्तकान्तिम् ।
दूर्वाभुवं हरिणगत्य मनःप्रसादैः
सद्यः समुत्प्लुतगतिः परिनृत्यतीव ॥ ४ ॥

कान्तो दिवाकर इमां नलिनीं कराग्रै-
रुद्बोधयत्ययमितीव नवीनयूनः ।
अङ्काहितप्रियतमान् शिथिलाङ्गयष्टीन्
सङ्केतगुञ्जनवचो मधुपा वदन्ति ॥ ५ ॥

शेषेऽधुनापि दयिते ! प्रणयी जनोऽयं
त्वन्नपद्मपरिबोधनबद्धकामः ।
त्वामद्य सुप्तनलिनीमभिशङ्कमानः
सूर्यः करैर्मृदुतरैः स्पृशतीव पश्य ॥ ६ ॥

मिथ्यैव फुल्लनलिनीं मधुपानमत्ता
भृङ्गाः स्वगुञ्जनरवैर्यदिह स्तुवन्ति ।
उन्मील्यतां नयनपङ्कजमत्र कान्ते !
यातु क्षयं विकचवारिजगर्वजातम् ॥ ७ ॥

इत्यादि चाटुवचनैरनिशं निशान्ते
रात्रौ निरन्तररतश्रमजातनिद्राः ।
उद्बोधयन्त्यशिथिलीकृतबाहुबन्धा
मुग्धाः प्रियाः प्रियतमास्तरलायताक्षीः ॥ ८ ॥

श्रीप्रमथनाथ काव्यतीर्थ ।

श्रीः

Registered No. 12.

# विद्योदयः

( मासिक-संस्कृत-पत्रम् )

श्रीहृषीकेश भट्टाचार्य्येण शास्त्रिणा सम्पादितः

भट्टपल्लीतः प्रकाशितश्च ।



चरतु राजकुलं प्रकृतिप्रियं भवतु वेदविदां परिवर्द्धनम् ।
जयति सा विशदाम्बुजवासिनी सुमनसाम्मनसामभिनन्दिनी॥

नानाशास्त्रकथारम्भो-लोकवृत्तानुशीलनः ।
विद्योदयो निराकुर्य्या-दविद्यातिमिरम्भुवि ॥

खण्डं १३ ] अक्टोबर १८८४ [ १० सङ्ख्या

सूची





कलिकाता-राजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन्,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिचन्द्र कविरत्नेन मुद्रितः ।

# मानवधर्म्मशास्त्रम् ।



## प्रथमः अध्यायः ।

उपोद्घातम् ।

श्रीवर्त्तौ हिमशैलाग्रे शक्रासनविघूर्मिते ।
उपविष्टं महाभागं भृगुं पप्रच्छ नारदः ॥
महर्षे ! श्रोतुमिच्छामि मानवं धर्म्ममुत्तमम् ।
न तु तं मनुना प्रोक्तं यो मानवहितोऽपि न ॥
तत्रोक्ता बहवो धर्म्माः साम्प्रतं सभ्यगर्हिताः ।
सभ्यदेश-सदाचार-विरुद्धा युक्तिवर्ज्जिताः ॥
"स्वातन्त्र्यं प्रतिषिद्धं यत् स्त्रीणां सर्व्वत्र सर्व्वदा ।
विधवावेदनञ्चैव स्वाध्यायश्च द्विजेतरैः ॥"
एवं बहुविधा धर्म्मा न्याय-युक्ति-विगर्हिताः ।
सभ्याचारविरुद्धाश्च कथिता मनुना मुने ! ॥
पराशरादिभिरपि धर्म्मा ये कथिताः पुरा ।
ते न सम्यङ्मम मते विधवावेदनं विना ॥
एवमादिनिमित्तौघैर्न मे धर्म्मभृतां वर ! ।
रोचन्ते धर्म्मशास्त्राणि प्रणीतानि पुरर्षिभिः ॥
तस्मै ब्रूहि महाभाग ! धर्म्मं सत्सभ्यसेवितम् ।
नौस्थानीयं यः स्यान्मज्जतां दुःखसागरे ॥

एवमुक्तो महाभागो भृगुः स तपतां वरः ।
पीत्वा आच्छयाः ग्लासमेकं नारदायापरं ददौ ॥
अथास्यामोदविकला आननं परितः स्थिताः ।
मक्षिका रञ्जयन् चञ्चत्करायनखरांशुभिः ।
घूर्णयन्नरुणे नेत्रे चूर्णयन् टेबिलं पुरः ।
स्मरन् हृदि हृषीकेशं भृगुर्धर्म्ममुवाच ह ॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्त्वात्मवञ्चनम् ॥
अत्यासक्तिर्न कर्त्तव्या त्वेतेष्वेकत्र कुत्रचित् ।
सेवेतैतानि च तथा न यथा कार्य्यरोधनम् ॥
कार्य्यमेकं नृणां सेव्यं कार्य्यं मानवजीवनम् ।
कार्य्याहते मनुष्याणां मृत्युरेव न संशयः ॥
तस्मात् कार्य्यपरो भूयादालस्यं नाचरेत् क्वचित् ।
कार्य्यासक्तत्वमत्रैकं महत्त्व-परिचायकम् ॥
कार्य्यासक्तावपि पुनर्देहं रक्षेत् प्रयत्नतः ।
शरीरेण समं सर्व्वं नाशमन्यद्धि गच्छति ॥
न जन्मना जातिभेदः कर्म्मणा कस्यचिन्मते ।
जन्यः स्याज्जातिभेदश्चेन्नोद्वाहे न च भोजने ॥
सन्त्यत्र बहुधा विप्र ! विधयो धर्म्मसम्मताः ।
हितं संसारिणस्तत्र मुख्यं वैवाहिकं शृणु ॥
ब्राह्मार्षाद्या अष्टविधा विवाहा ये तु दर्शिताः ।
तत्र गान्धर्व्वमेकं हि श्रेष्ठः केवलमुच्यते ॥

तेनैव विधिना सर्व्वैः कर्त्तव्यं पाणिपीड़नम् ।
परं स बन्धनं न स्याद्यावज्जीवं कयोरपि ॥
गावस्तृणमिवारण्ये पुमांसः स्त्रिय एव वा ।
नवं नवमभीप्सन्ति द्वन्द्वं खल्वात्मनः प्रियम् ॥
अतो न बन्ध एकेन चिराय श्रुतिसम्मतः ।
नवरागिणि संसारे क्वापि न स्थिररागिता ॥
दुर्लभं चैकरागित्वं संसारे खलु, तत् कथं ।
एकेन तु चिरोद्वाहः सम्भवेन्मनुनोदितः ॥
काममङ्गीकृते यत्तु न रतिः स्थिरताभजेत् ।
डाइवोर्सादिप्रयोगश्च कुतस्तत्रैकनिष्ठता ॥
यदा यस्मिन् भवेद्रागस्तिष्ठेद्वा यावदेव सः ।
विहरेदमुना तावत् स्त्री पुंसेति मतिर्मम ॥
एवं पुंसा वर्त्तितव्यं स्त्रिया सह द्विजोत्तम ।
अन्यथा व्यभिचारस्य न निवृत्तिः कदाचन ॥
एकप्रेमनिवृत्तिश्चेन्निवृत्तं बन्धनं भवेत् ।
अन्यथा सहनीयः स्याद्व्यभिचारः परेण वै ॥
कन्याश्वश्रूस्नुषाभ्रातृजायादिगमनं भुवि ।
दृश्यते व्यभिचारो यस्तत्र हेतुर्हि बन्धनम् ॥
आत्मापरादिसम्बन्धविवेको बन्धनान्मुने ! ।
अबन्धने तु का भार्य्या स्नुषा भ्रातृवधूश्च का ॥
यथा पशूनां सर्व्वत्र सत्वमव्याहतं स्थितम् ।
मनुष्याणां तथैवास्ति प्रकृत्या हि समावुभौ ॥

भ्रूणहत्यादिपापानि व्यभिचारभवानि वै ।
क्रियन्ते व्यापकं सत्वमज्ञात्वाज्ञैर्हि लज्जितैः ॥
जातिभेदविचारो हि विवाहे तु विडम्बनम् ।
दृश्यते विप्रकन्यानां चाण्डालपुरुषे रतिः ॥
न धनेन कुलेनैव विद्यया ज्ञानतोऽपि वा ।
वरत्वं जायते लोके गुणैः कर्म्मभिरेव वा ॥
गुणवान् निर्गुणो वापि धनी निर्धन एव वा ।
यो यस्याः स्यात् प्रियो लोके स तस्या वर उच्यते ॥
अनुरागो भवेद्यत्र विवाहे समयो हि सः ।
अर्पयित्री स्वयं कन्या मन्त्राद्याद्युवचांसि च ॥
इत्थं हि विधवा न स्यात् न वा प्रोषितभर्त्तृका ।
अलाभे कुलयोग्यस्य पात्रस्य चिरकन्यका ॥
बाल्योद्वाहो बह्वद्वाहोऽयोग्योद्वाहस्तथा पुनः ।
अन्यानि यानि पापानि तानि न स्युर्द्विजोत्तम ॥

इति श्रीमानवधर्म्मशास्त्रे उद्वाहतत्त्वकथने प्रथमोऽध्यायः ।

[समाप्तः ।

---

# विजयोत्सव-भाणः ।

(नान्दी)

आनेतुं नगनन्दिनीं मम गृहे भूयो मनुष्यालयात्
नन्दिन् मन्दगतिं नयाशु वृषभं मा त्वं विलम्बं कृथाः ।
इत्थं शैवगिरो निशम्य वृषभो "वीफष्टिकं" संस्मरन्
नर्द्दन् वो भवतात् डिसेषु विविधा भोज्याकृतिः साम्प्रतम् ॥

(नान्द्यन्ते) सूत्रधारः । अलमतिविस्तरेण । अद्य खलु विजयानन्दविघूर्णितारुणनयनैः कैश्चिदङ्गयुवसामाजिकैः समादिष्टोऽस्मि, यथाद्य खलु शारदीयमहामहोत्सवे विजयानिशि केनापि भणनप्रधानेन नाट्येनाराधयितव्येयं प्रमत्तपरिषदिति, तत् प्रियसहचरीमाहूय विज्ञापयामि ; आर्य्ये इतस्तावत् ।

नटी । (प्रविश्य) । इयम्हि, आणवेदु अज्जो कधं अज्ज चिरादो सुमरिदाम्हीति । (१)

सूत्र । प्रिये अद्य खलु विजयानिशि कैश्चित् कुलपुत्रैः किमपि भणनप्रधानं नाट्यमभिनेतुमादिष्टोऽस्मि, तत् कथय किमभिनीयाराधयाम्येनाम् परिषदम् ।

नटी । (सखेदमिव) । अज्ज जइ नच्चसि नच्च तुमं, नाहं वड्ढे नच्चामि, तहिं खु सांपदं एवेद बालविलासिनीओ काला-

(१) इयमस्मि, आज्ञापयतु आर्य्यः कथमद्य चिरात् स्मृतास्मीति ।

कुसलाओ न, किंदु कहिं कहिं कुलकामिनी जना वि णाडआहिणअं कुणंदित्ति सुणीअदि, अच्छंदिअ केवि तत्थ णूअणसम्पदाइआ ये खु अपवित्तोत्ति कदुअ वेसाणं अहिणअं दट्ठुमणिच्छुआ ताणं थलेसु अप्पमहिला पेरइदुं अहिलसंदि एव्वं णाम रङ्गभूमिट्ठिदासुं दासुं विलासकुसलासुं भद्दमहिलासुं कुदो अम्हेसुं सामाजिआणं आअरो ? । (२)

सूत्र । (सस्मितं) । अयि अनात्मज्ञे ! कुतस्त्वयि अनादरावकाशः, वङ्गे इदानीं कुलस्त्रीपक्षपातिनां संख्या स्वल्पीयसैव, दृष्टं मया बहुशः कृतविद्याग्रणीनामपि वाराङ्गनाभिः सहोद्यानपानगोष्ठीषु नृत्यम् । भवतु, नास्ति खलु भाणाभिनये तवापेक्षा न वा स्त्रीजातेः, तदत्र निश्चिन्ता भव, एतत्तु पृच्छामि किमभिनीयाराधयाम्येनां विजयोत्सवगोष्ठीम् ?

नटी । (सस्मितं) । तेण हि तुमं चिरं जीव । णं सुदं मए

(२) आर्य ! यदि नृत्यसि नृत्य त्वं, नाहं वङ्गे नृत्यामि, तत्र खलु साम्प्रतं केवलं वारविलासिन्यः कलाकुशला न, किन्तु कुत्र कुत्र कुलकामिनीजना अपि नाटकाभिनयं कुर्वन्तीति श्रूयते, सन्ति च केऽपि तत्र नूतनसाम्प्रदायिका ये खलु अपवित्र इति कृत्वा वेश्यानामभिनयं द्रष्टुमनिच्छुकाः तासां स्थलेषु आत्ममहिलाः प्रेरयितुमभिलषन्ति, एवं नाम रङ्गभूमिस्थितासु तासु विलासकुशलासु भद्रमहिलासु कुत अस्मासु सामाजिकानाम् आदरः ।

अज्जेन कुदोवि दैववशादो को वि विजयुस्सवभाणो समा-सादिदो त्ति, ता तस्सेवाहिणओ करीअदु। (१)

सूत्र। साधु स्मारितं, अस्मिन् खलु शारदीयपूजामहोत्सवे वङ्गवासिभिरिव विस्मृतं मया सर्व्वमात्मगतम्।

तवैव वचसानेन स्मृतिर्मे पुनरागता।
यथा कैलासशिखरे भवानी विजयानिशि॥

(नेपथ्ये) मैवं भोः मैवं, न कैलासशिखरे, किन्त्वभसि, तथाहि—

लक्ष्मीं वीक्ष्य सरस्वतीञ्च वशगां ख,ष्टानुगानां स्वयं
सङ्गाद्वङ्गभुवामतीव कदलीं प्रागल्भ्यमाप्तां पुनः।
भुक्तञ्चापि शिखावलं स्वजनुषः पादायुधभ्रान्तितो
वङ्गैः, सिंहमहो नरेन्द्रविधृतं, दुर्गा निमग्नाम्भसि॥

अपिच

सिद्धिदाता गणेशोऽपि यूरोपायां गतस्ततः।
रेनल्डेन नियुक्तश्च स्वक्ततीनां विलेखने॥

सूत्र। (नेपथ्याभिमुखमवलोक्य)। अये! इत एवागच्छ-त्येष प्रियसुहृन्मे मदकलनामा विटस्तन्न युक्तमस्माकमन्तरायी-भवितुमस्य वाग्व्यापारस्य, तदेहि अन्यतो गमिष्याव:।

इति निष्क्रान्तौ प्रस्तावना।

(१) तेन हि त्वं चिरञ्जीव। ननु युष्मया आर्य्येण कुतोऽपि दैववशात् कोऽपि विजयोत्सवभाणः समासादित इति तत् तस्यैवाभिनयः क्रियताम्।

विटः। (प्रविश्य)। मैवं भोः मैवं, न कैलासशिखरे किन्त्वम्भसि, तथाहि लक्ष्मीमित्यादि पुनः पठति।

अतएव शून्यमद्य कैलासशिखरं, केवलं शिवस्तत्र मर्त्त्या-गमनभीतं बलीवर्द्दं सान्त्वयतीति वार्त्ता गङ्गायां तड़िता समानीता, श्रुतञ्च तत्रैव शक्रासनधूमपानावसक्तेन मया; तन्नास्त्यत्र कोऽपि सन्देहः; अलमतः परं शून्यतयाऽदृष्टपूर्व्वस्य कैलासशिखरस्य चर्च्चया, मर्त्त्यलोकं तावदालोकयामः।

(आकाशे) अये! क एते ताड्यमानविविधानकपटहादिवाद्य-तालैः प्रक्षिप्तपादयुगला आनन्दकोलाहलैर्दिगन्तं प्रतिध्वन-यन्तः प्रमत्ताइव नदीतीरान्नगरान्तः समायान्ति, किमेतेषां महान् शत्रुर्निहतो, लब्धं वा सुबृहत् साम्राज्यम्? (श्रुतिमभिनीय) किं कथयसि, एते खलु वङ्गवासिनः स्वाराध्यदेवप्रतिमां स्रोतसि विसर्ज्ज्य गृहं प्रत्यागच्छन्तीति। (कर्णौ पिधाय) शान्तं पापं! शान्तं पापं! भद्र! न त्वया कथितं न च मया श्रुतमेत-द्धृदयविदारि वाग्वज्रम्!! अयि भो वङ्गवासिनः! कि-मापतितं युष्मासु यदयं रोदनस्थाने हर्षातिशयः, गृहलक्ष्मीं स्वेष्टदेवतां स्रोतसि निक्षिप्य युष्माकमेवमानन्दनिर्भरः! न जाने कीदृशी विषमा भविता परिणतिरीदृशस्य व्यामोहस्य; अथवा एषः वः पुरुषानुक्रमिको व्यामोहः, श्रुतम्मया केचन वङ्गसमाजमूर्द्धन्याः स्वावस्थामनभिनन्दन्तो दुष्टाशाप्रणोदिता अभीष्टदेवीं स्वमातरं जन्मभूमिमपि वैदेशिकहस्ते समर्प्य

मद्यान्तमुत्सवमकार्षुः, यत्फलमिदानीं युष्माभिः प्रतिमुहूर्त्तं प्रत्येकमनुभूयते, तथापि न चैतन्योदयो जातः, गच्छन्तु भवन्तः क्रमशोऽधस्तलमहमप्यन्यत्र गच्छामि।

(स्थानान्तरं गत्वा आकाशे) अये कथमत्र बाला वृद्धा युवतयो युवानश्च स्वस्वविभवाधिकवेशचेष्टादिभिश्च यथायोग्यं परस्परं हिंसाद्वेषाभिमाननिभृतस्नेहादिमनोगतभावान् व्यञ्जयन्त आपादगलदेशं सर्व्वमेव कलेवरं वाससा समाच्छाद्य नतेन मूर्द्ध्ना केनचिन्मूर्त्तिमतेव धार्ष्ट्येन निक्षिप्यमाणा उदकविप्रुषो गृह्णन्ति? (श्रुतिमभिनीय) किं कथयसि? एषा नाम शान्त्युदकग्रहणगोष्ठी, अत्रैते शान्तुरदकं गृह्णन्तीति। भो भ्रातः! पृच्छामि तावत् किं नाम शमयतीदं शान्तुरदकं, किमनेन मानवसमाजमुन्मूलयतामीर्ष्याद्वेषकामक्रोधलोभमोहानां शान्तिर्भवति, किं वा रात्रिन्दिवं जाज्वल्यमानस्य बालविधवाहृदयानलस्य? अथवानवरतं सगर्व्वनिक्षिप्यमाणपरचरणताड़नवेदनानां, किं वा परापहृतोद्धृतकवलानामेषां जठरानलस्य? प्रतिक्षणं पक्षपातिन्यायदर्शनैरसह्यतामापन्नस्य दासत्वदुःखस्य वा? किं कथयसि? नैषां कस्यापि, 'मैलेरिया'ज्वरस्यापि नेति। अहो भ्रातः, तत् किमनेन वृथाड़म्बरेण, तत् कथं वृथैव गृह्णासि शान्तेर्नाम। भवत्वन्यतो गच्छामि।

(स्थानान्तरं गत्वा आकाशे) अये! कोऽयं शुष्कालिङ्गनाड़म्बरः? नास्ति प्रेम, नास्ति स्नेहः, न बन्धुत्वं, नापि भक्तिः, न वा

सदाशयता, केवलं मुखेन मधुरं स्मयमान एको विषपूर्णहृदयेन तादृक् स्मयमानस्यापरस्य तथाविधं हृदयं परिष्वजते। (श्रुति-मभिनीय) किं कथयसि? एष दैशिकः समुदाचारः, सभ्यदेशे-ष्वप्येवं रीतिर्वर्त्तत इति। भद्र! नमोऽस्तु देशाचाराय प्रवञ्चन-प्रभवे महाव्यालाय, सत्यं सभ्यदेशेष्वप्येवं प्रवञ्चनपद्धतिः, पर-मस्ति च तदन्तर्गूढ़तमं किमप्यैकतासूत्रम्, इलवर्टविलव्यापार एवाऽत्र निदर्शनम्। भवत्वन्यत्र गच्छामि।

(स्थानान्तरं गत्वा चाकाशे) का नामैषा 'सिद्धिं देहि' इत्युच्चैः शब्दायमाना बालयुवस्थविरसङ्कुला महती गोष्ठी? अत्र किंविधा सिद्धिः प्रार्थ्यते? किमणिमादीनां, किं वा-पवर्गस्य, अथवान्यविधैहिकसुखाभिलषितानाम्? (श्रुतिमभि-नीय) किं कथयसि? न तथाविधा कापि, किन्तु संविदेति प्रसिद्धं किमपि मादकद्रव्यमिति?। अहो राजपुरुषप्रसादात् प्रतिधाम 'खीलाभांटि'स्थितावपि एवमाग्रहेण सिद्धिः प्रार्थ्यते, गरीयसीव मादकतृष्णा वङ्गीयानां, ये खलु प्रतिवर्षं प्रतिनगरं प्रतिकूर्द्दं प्रतिव्यक्ति मादकसेवनस्य महानिष्टकरं फलमव-लोकयन्तोऽपि न तस्माद्विरमन्ति, प्रत्युत मादकद्रव्याणां प्रकारान् वर्द्धयन्ति, को नामैषोऽवनतिसागरे प्लवमानानां तेषां मादकसेवनावसरः, मादकं हि वीरैर्विजेतृपुरुषैश्च सेव्यते, परचरणैर्लुण्ठितसर्व्वशरीराणां सारमेयवत् परोच्छिष्टपुष्टानां वङ्गयूनां न वीरत्वं न वा विजेतृत्वं, तेषां खलु मादकसेवा केवलं

गृहे नर्द्दनाय, पय:प्रणाल्यां (नर्दमायां) पतनाय, सर्व्वतोऽध:-पतनाय च। गच्छन्तु नामैते महारौरवम् अहन्त्वन्यत्र गच्छामि।

(पदान्तरं गत्वा सदृष्टिक्षेपमाकाशे) अये क एष एकहस्तेनोद्-कुम्भमपरेणाम्रपल्लवं गृहीत्वा, स्वगतभाषणेऽप्यास्यदुर्गन्धैर्धरा-तलं रौरवयन्, नातिक्षीणो नातिपुष्टोऽवतारइव धृष्टतायाः, जङ्गमा मूर्त्तिरिव चाटुवादस्य, विग्रह इव दम्भस्य, एकाश्रय-इव मिथ्यावादस्य, आराम इव मूर्खतायाः, वासभूमिरिव परचित्तानुवर्त्तनस्य, उत्तमाङ्ग इव याच्ञायाः, ललाटे वञ्चनायाः पताकामिव भ्रूमध्यादाशिखं लम्बमानं तिलकं दधानः, मस्तके च प्रतिक्षणमनुष्ठिताकार्य्यशतसम्मार्ज्जनीमिव दीर्घशिखां सन्दोलयन्, अन्तःपुरान्निर्गच्छति? (श्रुतिमभिनीय) किं कथयसि? एष खलु पुरोहितः शान्त्युदकदानच्छलेनार्थं प्रार्थयमानः नामश्रावको भिक्षुकविशेष इव शुद्धान्तान्तः प्रतिकक्षं परिभ्रम्ये-दानीं गृहस्वामिनमुपासितुं धारावाहिकचाटुवचनकुसुमा-वलीभिराशुपुष्पभाजनं पूरयित्वा वहिरायातीति। स्थाने खल्वेवंविध-याजकाविर्भावे धर्म्मस्य सुतरां विलोपः; पुरोहित-ममुं पुरोऽहितमिव पश्यामि; एषां वाह्याकृतिरेवैतेषां सर्व्वथा सारशून्यस्य हृदयस्य गाढ़मालिन्यमभिव्यनक्ति; सुष्ठूक्तं भगवता संहिताकारेण यमेन "पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च। आद्यवर्णं समादाय धाता चक्रे पुरोहितम्" इति। 'कथापि खलु पापानामलमश्रेयसे यतः'; भवतु पुरोहितमिमं परि-

छायान्वितो गमिष्यामि ; गमनसमये च लुप्तप्रायं वर्णाश्रमधर्म्मं पुनरुज्जीवयितुमुद्यतान् प्रतीयमेकैव मे प्रार्थना यत्तैः स्वकार्य्या-रम्भात् प्राक् पुरोहितानामुपरि दृष्टिर्निधातव्या ; एते नाम धर्म्ममहामण्डपस्य प्रधानस्तम्भाः, एतेष्वशोधितेषु धर्म्मशोधन-प्रयासो हि "मूलं छित्त्वा शिखरे जलसेचनमिव" इत्यवगन्तव्यम्।

(पदान्तरे गत्वा सदृष्टिक्षेपमाकाशे) अये क एष "स्वच्छन्द-भोगी न नृपो न योगी सीतावियोगी न च रामचन्द्रः" तैल-कारतिलमर्द्दनबलीवर्द्द इव महामांसलो न ह्रस्वो न दीर्घो मध्यमाकृतिः प्रौढ़वया दुग्धफेननिभनिर्म्मलकौषेयवासाः पुरुषो वाग्जालैर्युगपदेव बुद्धिमत्त्वात्मनो मूर्खतामर्थितं चाटुकारित्वं निःसारतामन्यानपि तथाविधान् दोषानभि-व्यञ्जयन् अबुद्धिमत्सु च तैरेव देवत्वं, सर्व्वज्ञत्वम् असाधारण-पाण्डित्यं निस्पृहत्वमेवमादिगुणांश्च प्रकटयन्, प्रतिपादक्षेपं नीचचेष्टितेष्वपि सत्कुलतामदं निजाज्ञतायामपि बुद्धिमत्त्वं संस्थापयन्, शाचविक्षेपैरात्मन्यसभ्यताप्रवाहस्रोत्सत्वमभिसूच-यन्, दृष्टिपातैरान्तरीणं दौर्म्मनस्यं नीचताञ्च विनिष्क्रामयन्; पूर्व्ववदेव ध्वजसम्मार्ज्जन्यलङ्कृतोत्तमाङ्गः प्रायश्चित्तोन्मुखमहा-पातकीव मुण्डितमुण्डः स्वस्वामिप्रदर्शितपथेनान्तःपुराभिमुखं प्रयाति ?

[क्रमशः ।

# साहित्यदर्पणः ।

अलङ्कारपरिच्छेदः ।

काव्यप्रकाशे श्लेषस्य लक्षणं यथा—"वाच्यभेदेन भिन्ना यत् युगपद्भाषणस्पृशः । श्लिष्यन्ति शब्दाः, श्लेषोऽसावक्षरादिभिरष्टधा ॥" वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति (भिन्नं स्वरूपमपह्नुवते), स श्लेषः । स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा इति तदर्थः ।

वामनमते श्लेषनामा न कोऽपि शब्दालङ्कारो वर्त्तते, तत्र शब्दगुणेषु "मसृणत्वं श्लेषः" मसृणत्वं नाम यस्मिन् सति बहूनि पदान्येकवद्भासन्ते, यथा अस्त्युत्तरस्यां दिशि देवतात्मेत्येकः श्लेषः, अर्थगुणेषु चापरः श्लेषो विद्यते यथा "घटनाश्लेषः" क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटना, * यथा "दृष्टैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात्" इत्यादि, अन्यस्यार्थालङ्कारेषु "सधर्म्मेषु तन्त्रप्रयोगे श्लेषः" उपमानेनोपमेयस्य धर्म्मेषु गुणक्रियाशब्दरूपेषु न तत्त्वारोपमन्त्रप्रयोगे तन्त्रेणोच्चारणे सति श्लेषः । यथा "आकृष्टामलमण्डलाग्ररुचयः सन्नद्धवक्षःस्थलाः सोष्माणो व्रणिता विपक्षहृदयप्रोन्माथिनः कर्कशाः । उद्वृत्ता गुरवश्च यस्य शमिनः श्यामायमानाननाः योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्यान्जिनः ॥" परमेतेषु त्रिविधेषु श्लेषेषु न कोऽपि शब्दश्लेषतुल्यत्वमभजते ।

वाग्भटालङ्कारेऽपि न कश्चिच्छब्दश्लेषो वर्त्तते, तत्र गुणेष्वेकः श्लेषोऽस्ति, तल्लक्षणन्तु "श्लेषो यत्र पदानि स्युः स्यूतानीव परस्परम्", अन्यस्यार्थालङ्कारमध्येऽर्थश्लेषो विद्यते । तल्लक्षणमर्थालङ्कारप्रस्तावे द्रष्टव्यम् ।

सरस्वतीकण्ठाभरणे शब्दश्लेषस्य लक्षणं भेदाश्च यथा—"एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः । तन्त्रेण यत् स शब्दज्ञैः श्लेष इत्यभिशब्दितः । प्रकृतिप्रत्ययोत्थौ द्वौ विभक्तिवचनाश्रयौ । पदभाषोद्भवौ चेति शब्दश्लेषा भवन्ति षट् ॥ तत्र प्रकृतिश्लेषः "आत्मनश्च परेषाञ्च प्रतापस्तव कीर्त्तिनुत् । भयकृन्नृपते बाहुर्द्विषाञ्च सुहृदाञ्च ते ॥" अत्र कीर्त्तिनुदित्यत्र नौतिनुदत्योर्भयकृदित्यत्र करोतिकृन्तत्योश्च प्रकृत्योः क्विपि तुल्यम् रूपमिति । लिङ्गश्लेषोऽपि प्रकृतिश्लेषएव, यथा "कुवलयदलद्युतासौ दृशा च वपुषा च

* क्रमः क्रियासन्ततिः, कौटिल्यं विदग्धचेष्टितं, अनुल्वणत्वम् अप्रसिद्धवर्णनाविरहः, उपपत्तिः उपपादकयुक्तिविन्यासः, एषां योगः सम्मिलनं, स रूपं यस्याः घटनायाः ।

कं न दर्शयति" इत्यादौ द्युतेत्यस्य ह्रस्वपुर्योर्विशेषणत्वेऽपि तुल्यरूपता। प्रत्ययश्लेषो द्विविधः सौभेदो निरुभेदश्च, तत्राद्यो यथा "तस्या विनापि हारेण निसर्गादेव हारिणौ। जनयामासतुः कस्य विस्मयं न पयोधरौ।" अत्र "हारिणौ" इति इनिणिनिप्रत्यययोरेकरूपत्वाद्विनापि हारेणेति च मत्वर्थीयोर्भेदात् सभेदः प्रत्ययश्लेषोऽयम्। द्वितीयो यथा "त्वदुद्भूतामयस्यानन्दद्रवणक्षिणाकृतिः। विभाति हरिणीभूता शशिनी लाञ्छनच्छविः।" अत्र हरिणीभूतेति च्वेः ङीपश्च तुल्यरूपतायां सदुभेदो नास्तीत्यनुभेदः। विभक्तिश्लेषो द्विधा भिन्नजातीययोरभिन्नजातीययोश्च। तत्राद्यो यथा "विषं निजगले येन वभ्रे च भुजगप्रभुः। देहे येनाङ्गजो दग्ध्रे जाया च स जयत्यजः।" अत्र येन विषं निजगले (गल + लिट ए कर्मणि) तथा निजगले भुजगप्रभुः बभ्रे। अपि च येन अङ्गजः (कामः) देहे (दह + लिट् ए कर्मणि) तथा निजदेहे जाया दध्रे इत्यन्वयः। अत्र लिङात्मनेपदप्रथमपुरुषैकवचनसप्तम्येकवचनान्तयोरेकरूपत्वाद्विभिन्नार्थत्वात् भिन्नजातीय-सुप्तिङ्विभक्तिश्लेषोऽयम्। द्वितीयो यथा "त्वमेव धातुः पूर्वोऽसि त्वमेव प्रत्ययः परः। अनाख्यातं न ते किञ्चिन्नाथ केनोपमीयसे।" धातुरिति प्रथमान्तस्य षष्ठ्यन्तस्य चैकरूपत्वाद्भिन्नार्थत्वाच्चाभिन्नजातीयसुब्विभक्तिश्लेषोऽयम्। वचनश्लेषो द्विधा सभेदो निरुभेदश्च, यत्रैकत्वेकवहुवचनादिश्लेषं दृष्टान्तत्रापि तथाविधः श्लेष उक्तियते तत्र सभेदः, यथा "प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः। सुखात्मनः शिवं नेमिरनेऽपि ददतां जिनाः।" अत्र नेमिरित्यर्थेऽपीति एकवचनबहुवचनाभ्यां ददतामित्यत्र तिङन्ते प्राज्यप्रभावः प्रभव इत्यादिषु च सुबन्तेष्वेकवचनबहुवचनयोरुभेदइत्ययं सभेदनामवचनश्लेषः। निरुभेदो यथा—"तनुत्वरमणीयस्य मध्यस्य च भुजस्य च। अभवन्नितरां तस्याः वलयः कान्तिवृद्धये॥" अत्राभवन्निति वलय इति पदयोस्तिङन्तसुबन्तयोरेकवचनबहुवचने अनुद्भिन्ने एव श्लिष्येते इत्ययं निरुभेदो नाम वचनश्लेषः। वर्णश्लेषस्तु पदश्लेष एव इति न पृथगुक्तम्। काव्यादर्शे एकेनैव वाक्येन शब्दार्थश्लेषयोर्लक्षणं कृतं यथा—"श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमिति द्विधा॥" अनेकार्थं (अभिधया वृत्त्या युगपदनेकार्थप्रतिपादकवत्) तथा एकरूपान्वितम् (अर्थभेदेन भिन्नत्वेऽपि युगपदुच्चारणविषयताम् आपन्नं नैकेन स्वरूपेण युक्तं) वचः (वाक्यं) श्लिष्टं (श्लेषालङ्कारवत्) इत्यन्वयः, श्लिष्टवाक्यं हि सर्वेष्वपवक्तारि शोभातिशयजनकतया कविभिरभिलषितं

यथा वक्ष्यति "श्लेषः सर्व्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्। भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्। श्लेषश्च एकतावभासहेतुर्निरन्तरसम्बन्धविशेषः, स च प्रकृते शब्दयोरेकप्रयत्नोच्चार्य्यत्वरूपः, अर्थयोश्चैकप्रयत्नोच्चार्य्यमाणशब्दे नैककालबोध्यत्वरूपः, स चाभिधया वृत्त्या युगपदनेकार्थप्रतिपादनेनैव सम्भवति, यत्र त्वनेकार्थसङ्केतितस्यापि शब्दस्य शक्तिसङ्कोचकसंयोगविप्रयोगादिप्रतिबद्धतयाभिधया एकस्यैवार्थस्य प्रतीतौ जातायां पश्चात् व्यञ्जनयार्थान्तरप्रतीतिः तत्र न श्लेषः अभिधया युगपदर्थद्वयप्रतीतेरभावेन वैचित्र्याभावात् तथाविधस्थले ध्वनित्वमेव। यथा—

> भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
>
> यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥

अपिच—

> कुवेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
>
> दिग् दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज्ज॥

एवञ्च—

> आच्छादितायतदिगम्बरमुच्चकैर्गा-माक्रम्य संस्थितमुदग्रविशालशृङ्गम्।
>
> मूर्द्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-मुद्वीक्ष्य को भुवि न विस्मयते नगेन्द्रम्॥

इत्यादौ न श्लेषः किन्तु ध्वनिरेव। कुवलयानन्दकारेण तु "नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः" इति चन्द्रालोकीयकारिकाव्याख्यानावसरेऽनेकार्थशब्दविन्यासः श्लेषः—स च त्रिविधः, प्रकृतानेकविषयः, अप्रकृतानेकविषयः, प्रकृताप्रकृतानेकविषयश्चेत्येवं व्याख्यायोपन्यस्तं, यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः तत् प्रकृताप्रकृताभिधानमूलकस्योपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायं न त्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम्, अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्याभिधेयत्वावश्यम्भावेन व्यञ्जनानपेक्षणादिति, तन्न विचारसहम् अभिधामूलव्यञ्जनाया अवकाशविरहात्।

पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ॥

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः। अस्य च तथाविधलिपिसन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम्। तत्र पद्मबन्धो यथा मम—

"मारमा सुषमा चारुरुचा मारवधूत्तमा।
मात्तधूर्त्तमा वासा सा वामा मेऽस्तु मारमा ॥"

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः किन्तु विदिग्दलेष्वन्यथा, कर्णिकाक्षरन्तु श्लिष्टमेव। (१)

(१) वर्णानां (पद्मान्तर्गतानामक्षराणां लिप्यात्मकानामित्यर्थः) पद्माद्याकारहेतुत्वे (पद्माद्याकारवर्णसंघटनत्वे) चित्रं (चित्रालङ्कारयुक्तं काव्यमित्यर्थः) उच्यते (कथ्यते बुधैरिति शेषः)। सरस्वतीकण्ठाभरणे चित्रकाव्यस्य लक्षणं यथा—"वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः। नियमस्तद्बुधैः षोढा चित्रमित्यभिधीयते ॥" "वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम्" इति अलङ्कारसर्वस्वम्, स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकं चित्रवचनम् इति तदर्थः। पद्मादीत्यादिशब्दात् खड्ग-मुरज-चक्र-गोमूत्रिकादयः, गोमूत्रिकादय इत्यादिपदेन सर्व्वतोभद्रार्द्धगोमूत्रिकार्द्धमुरजशृङ्गाटकव्योमचित्रव्यञ्जनद्विव्यञ्जनैकव्यञ्जननिरौष्ठ्यनिर्मूर्द्धन्यादयः प्रभूततमाश्चित्रभेदाः सरस्वतीकण्ठाभरणादिषु द्रष्टव्याः तत्रैकस्याष्टदलस्यैव त्रिप्रकारो भेदो दर्शितः। तत्र गोमूत्रिकालक्षणं काव्यादर्शे "वर्णानामेकरूपत्वं च त्वेकान्तरमर्द्धयोः, गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा"। सरस्वतीकण्ठाभरणे "गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव, गोमूत्रिकेति तत् प्राहुर्दुष्करं चित्रवेदिनः"। मुरजबन्धस्य लक्षणम् यथा सरस्वतीकण्ठाभरणे "यत्र पादचतुष्केऽपि क्रमशः परिलेखिते। श्लोकपादक्रमेण [illegible] मुरजमयी ॥" सर्व्वतोभद्रलक्षणं यथा तत्रैव "चाहुरङ्गमं नाम श्लोकार्द्ध[illegible] सर्व्वतोभद्रं सर्व्वतोसमं यदि ॥" परं सर्व्वेषां लक्षणम् [illegible]र्शमनेव [illegible]